# ॥ यशवन्तयशोभूषणग्रन्थः ॥

स च

मरुमण्डलमुकुटमणि-महाराजाधिराज
राजराजेश्वर जी. सी. एस्. आई.

**यशवन्तसिंहस्य**

आज्ञानुसारेण

**कविराजमुरारिदानेन**

विरचितः

---

**सुब्रह्मण्यशास्त्रिणा**

गीर्वाणगिरायामनूदितः

मरुमण्डलमुकुटमणि-महाराजाधिराज-राजराजेश्वर

**सरदारसिंहस्य**

आज्ञया

दाधीच-आसोपा-पण्डित-बलदेवात्मज

**पण्डित-रामकर्णेन**

संशोधितः

---

काश्मीरीपण्डित–निरञ्जननाथप्रबन्धेन
"मारवाड़स्टेटप्रेस" नामकयन्त्रालये
मुद्रितः

---

योधपुरम्
संवत् १९५८

॥ श्री ॥

वद मे सरसकवीन्द्र
ख्यातं मर्मविदत्र किं लोके ॥
अबुधश्लाघनमपरं
बुधजनमौनं च भूपाल! ॥ १ ॥

॥ श्रीजगदम्बायै नमः ॥

॥ श्रीगणाधिपतये नमः ॥



# मरुधराधीशराजचिन्हम् ॥




राजचिन्हे वंशबोधार्थं भगवान्सूर्यः। मरुधराधीशस्य सूर्यवंश्यत्वात्। कान्यकुब्जराज्यास्थितौ राजराजेश्वरपूर्वजाः स्वदानपत्रेषु स्वान्सूर्यवंश्यानलेखिषुः ॥

इष्टबोधार्थं च श्येनः। एषां कुलदेवी मनसानाम्नी बभूव। मनसाशब्दश्च भाषायामिच्छापरपर्यायः। अस्याभिप्रायश्च 'निजेच्छया संसारस्रष्ट्री। सा च विन्ध्याचलवासकरणाद्विन्ध्यवासिनीतिनाम्ना प्रसिद्धिम-

गमत्। ततश्च तथा कदाचिच्छ्येनरूपं विधाय राष्ट्ररक्षाऽकारीति राष्ट्रश्येनेति नाम्ना प्रख्यायते स्म। मेदपाटदेश एकलिङ्गनामा भगवान्पार्वतीपतिर्विराजते। यस्य वरदानतो गहलोतजातीयो बापानामक्षत्रियो विक्रमीयचतुरशीत्यधिकसप्तशते वर्षे चित्रकूटाधिपतिरभवत्। एकलिङ्गमहिमद्योतक एकलिङ्गमाहात्म्यनामकः प्राचीनो ग्रन्थो विद्यते। तस्यैकादशाध्यायस्य षोडशे श्लोके राष्ट्रश्येनाशब्दस्य निरुक्तिरुक्ता—

श्येनारूपं सम्यगास्थाय देवि !
राष्ट्रं त्राहि त्राद्यतो वज्रहस्ता ॥
दुष्टान्दैत्यान्राक्षसान्वै पिशाचान्
भूतान्प्रेतान्योगिनीजृम्भकेभ्यः ॥ १ ॥

तत्रैव च तस्यैवाध्यायस्य द्वाविंशे पद्येऽपि—

राष्ट्रश्येनेति नाम्नीयं मेदपाटस्य रक्षणम् ॥
करोति न च भङ्गोऽस्य यवनेभ्यः परागपि ॥१॥

मेदपाटदेश एकलिङ्गस्य मन्दिरात्क्रोशद्वयान्तरे भगवत्या राष्ट्रश्येनाया मन्दिरमस्ति। अधुना च राष्ट्रश्येनाशब्दस्यापभ्रंशतया सैव देवी लोके राठासणेति राठासेणेति वा नाम्ना निगद्यते। तत्र चेयं राष्ट्रवराणां कुलदेवीति सुप्रख्याता। कुलदेव्या राष्ट्रश्येनाया बोधार्थमेव राष्ट्रवराणां ध्वजे श्येनचिन्हम्॥ राजराजेश्वरपूर्वजो रावधूहड़नामा मरुदेशस्य खेड़नामपुरातनराजधानीतः स्वस्य कुलदेव्या राष्ट्रश्येनायाः पादाब्जमवलोकयितुं दक्षिणाशामियाय। दक्षिणस्यां च दिशि राष्ट्रवराः पूर्वं बहूनि हायनानि राज्यमकार्षुः। धूहड़रावो भगवत्याश्चरणावभिमृश्य तां मूर्तिं शकट आरोप्य मरुदेशमानिनाय। स च शकटो मरुदेशान्तर्गतनागांनानामकग्रामे चलन्नवरुद्धः। नागांनाग्रामश्च खेड़ग्रामादीशान्यां पञ्चदशक्रोशे, योधपुराच्च पश्चिमायामाशायामष्टादशक्रोशे विद्यते। शकटचालनार्थमनेक उपाया विहिताः, तेषु सर्वेषु विफलेषु च भगवत्यास्तत्रैव स्थितिमभिलषितां विदित्वा तां तत्रैवातिष्ठिपत्। पुरा मरुदेशे नागवंशीयाः क्षत्रिया राज्यमकुर्वन्। तन्निर्मितोयं नागांनाग्रामः। गुर्जरभाषायां संबन्धसूचको "ना" प्रत्ययः। नागांनाग्रामसंबन्धाच्च राष्ट्रश्येना-

नाम नागांनेचीति पर्यवर्तत। नागांनेचीशब्दोप्यधुनाऽपभ्रश्य नागणे-चीति कथ्यते। दक्षिणदेशे तु संबन्धसूचकः"ची"प्रत्ययोस्ति॥

स्वस्य मुख्यशस्त्रस्य बोधार्थं खड्गः॥ कार्यस्य जातेश्च बोधार्थं "रणवंकाराठौड़" इति जनश्रुतिः। संज्ञा तु स्वेष्टदेवस्य कार्यस्य प्रधानपुरुषस्य देशस्य च संबन्धाद्भवति। तत्रराजराजेश्वरकुलं सूर्यवंश्यम्। सूर्यवंशे च रघोरतिप्रसिद्धत्वेनैतत्कुलं राघवमित्यपि भण्यते। अस्य च कुलस्य राष्ट्रश्येनेष्टदेवीति राष्ट्रश्येनाया इदं राष्ट्रश्येनीयमिति व्युत्पत्त्या राष्ट्रश्येनोपासकत्वादेनद्राष्ट्रश्येनीयमिति च कथ्यते। नामैकदेशे नामग्रहणमिति न्यायात् "भीमो भीमसेनः,रामो रामचन्द्रः"इतिवद्राष्ट्रश्येनीया राष्ट्रा इति प्रसिद्धिमागताः। ततश्च त एव सुष्ठु कार्यकरणान्महाराष्ट्राः, राष्ट्रकूटाः, राष्ट्रवरा इति संज्ञाविशेषमधिगताः। राष्ट्रवर्यशब्दश्च राष्ट्रवरापरपर्यायः। वर-मणि-महत्-छत्र-तिलक-शिखर-दीपक-अवतंसादयः शब्दाः श्रेष्ठत्वबोधकाः। यथा—महादेवः, मुनिवर इत्यादिशब्देषु। शिखरशब्दश्च कूटापरपर्यायः। महाराष्ट्राणां शिलालेखा अनुमानतो द्विसहस्रवर्षीयाः "भाजा-गुफा-कार्लीगुफा-नानाघाटादिस्थानेषु दक्षिणस्यां दिश्यद्याप्युपलभ्यन्ते। राष्ट्रकूटानां बहवः प्राक्तनाः शिलालेखा दानपत्राणि च वरीवृतति। राष्ट्रवराणां च क्वचित्क्वचिच्छिलालेखा बहूनि च दानताम्रपत्राणि प्राप्यन्ते। राष्ट्रवरशब्दस्यापभ्रंशो राठौड़ेति शब्दः॥ वैक्रमे भूशरयुगचन्द्रेऽब्दे (१२५१) शाहबुद्दीनगौरीयवनेन सह युद्ध्यमानो गजारूढो जयचन्द्रमहाराजो मूर्धच्छेदानन्तरं शरवृष्टिकरणात्कबन्धसंज्ञामवाप। तत एव च तद्वंश्याः कबन्धजसंज्ञामलभन्त। कबन्धजसंज्ञापभ्रंशः कमधजेति शब्दः। मस्तककर्त्तनानन्तरं युद्धक्रियाकारि कलेवरं कबन्ध उच्यते। तदुक्तममरकोषकारेण "कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्" इति॥ देशसंबन्धाच्च राजराजेश्वरस्य कुलं "कन्नौजा-खेड़चा-मंडोवरा-जोधपुरा-मारवाड़ा" इतिसंज्ञया प्रोच्यते॥



# ॥ प्रस्तावना ॥



अस्थिरेऽस्मिन् संसारे स एव श्लाघ्यजन्मा जनो यन्नाम स्थिरीभवेत् ॥ नाम्नः स्थिरीभावे च मारवीयं जनश्रुतिः। "गीतड़ा कै भींतड़ा" इति ॥ गीतड़ेति काव्यम्। भींतड़ेति देवालयजलाशयदुर्गादिनिर्माणम्। संसारस्यानादित्वादत्रावताराश्चक्रवर्तिमहाराजाश्चासंख्या एव बभूवुः। अवताराणामसंख्यत्वं च श्रीमद्भागवते प्रतिपादितम्—

"अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः ॥" इति ॥

श्रीमद्भगवद्गीतायां स्वयं भगवता श्रीकृष्णेन चाज्ञापितम्—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत! ॥
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ १ ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ॥
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ २ ॥" इति ॥

न चाधुनोपलभ्यन्ते खलु तेऽसंख्यावताराश्चक्रवर्तिमहाराजाश्च। वाल्मीकीयरामायणग्रन्थाद्रघुकुलकेतोर्दशरथसुतस्य श्रीरामचन्द्रावतारस्य, श्रीमद्भागवतग्रन्थाद्यदुवंशशिरोमणेर्वसुदेवसूनुश्रीकृष्णचन्द्रावतारस्य, महाभारतग्रन्थात्कौरवकुलकलशमहाराजयुधिष्ठिरस्य च नामाद्यापि सकुटुम्बस्य स्थिरत्वमायातं स्थास्यति च सर्वकालम्। एवमन्येषामपि। इममेव सिद्धान्तं पोषयन्मेदपाटेश्वरमहाराणाराजसिंहो लोकभाषायां षट्पाद्वृत्तं विरचय्य मेदपाटदेशे स्वनिर्मापितराजसमुद्रतडागतटप्रासादगवाक्षे शिलायां लेखयामास। तद्विषयं पद्यमिदम्—

रामः क्वापि च लक्ष्मणः क्व च हली कृष्णश्च रामायणे
श्रीमद्भागवते च चेन्न कवयेद्व्यासश्च वल्मीकभूः ॥
को ध्यायेदनयोः* स्वरूपमथवा संपूजयेद्वेद वा
नाम स्थावरयद्भिरत्र सुजनैः पूज्याः कवीशाङ्घ्रयः ॥ १ ॥"

---

* रामकृष्णयोः

प्राङ्मौर्यवंशक्षत्रिया बभूवुः। मौर्यशब्दापभ्रंशो 'मोरी' इति लोके प्रथितः॥ तेषु च चित्राङ्गमौर्येण स्वनाम्ना चित्राङ्गाभिधो दुर्गो निर्मापितः। स च लोकभाषायां 'चित्तौड़' इति नाम्ना प्रसिद्धः। मौर्याश्चित्तौड़मालवादिजनपदेषु सुचिरं राज्यमशासुः। तत्र मानमौर्येण विक्रमार्कस्य सप्तत्युत्तरसप्तशततमे (७७०) वर्षे चित्राङ्गदुर्गे मानसरोवराभिधं सरो निर्मापितम्। सांप्रतं मौर्याणां निःशेषत्वेऽपि तन्निर्मितदुर्गसरोवराभ्यां चित्राङ्गमानमौर्ययोर्मौर्यवंशस्य चाद्यापि नाम्नः स्थिरत्वमनुभूयते, स्थास्यति च चिरम्॥ उत्तमजना निजनामस्थैर्याभिलाषिण इत्यस्मत्स्वामिना महाराजाधिराजराजराजेश्वरयशवन्तसिंहेनालंकारविषयकनवीनग्रन्थनिर्माणसूचनं व्यधायि। तदाज्ञया च मया नवीनग्रन्थनिर्माणारम्भ एव चिन्तितम् "गीर्वाणभाषायां नरभाषायां चालंकारविषयकानेकग्रन्थसत्त्वात्पिष्टपेषणं व्यर्थमिति कापि नूतनैव युक्तिरुन्नेया, येन विद्वांसोऽस्य ग्रन्थस्यावलोकने दत्तचित्ताः, विद्यार्थिनश्चास्य पठनाद्विलक्षणलाभभाजो भवेयुः" इति। ततश्च राजराजेश्वरस्य पुण्यप्रभावाच्चन्द्रालोकस्य

"स्यात्स्मृतिभ्रान्तिसंदेहैस्तदङ्कालंकृतित्रयम्॥"

एतत्कारिकास्मरणादियं स्फूर्तिरुद्भूता "इतरकवयोऽलंकाराणां नामान्येव लक्षणानीति नाबोधिषुः। तत एव च सर्वे नामातिरिक्तलक्षणानि व्यदधुः। केवलं जयदेवकविः स्मृतिभ्रान्तिसंदेहेत्यलंकारत्रिकस्यैव नामरूपलक्षणमज्ञासीत्। परंतु "तदङ्कालंकृतित्रयम्" इति कथनाज्जयदेवमतेऽपि तदतिरिक्तालंकाराणां नामरूपलक्षणं नेति सिद्धम्॥ कुत इति चेच्छास्त्रकाराणामयं सिद्धान्तः, यस्मिन्विषये येषां गणना क्रियते तेषां तस्मिन्विषये नियमो भवतीति। यथा पृथिव्यप्तेजोवाय्वाकाशाः पञ्च महाभूतानि। अत्र पृथिव्यादीनां महाभूततविषये पञ्चत्वेन गणने पृथिव्यादिपञ्चसु महाभूततया नियमनादन्यत्र वर्जनमर्थसिद्धम्, षष्ठे महाभूतता नास्तीति। किं च जयदेवस्येदं मतमतोऽपि सिध्यति, एतदलंकारत्रिकस्य नामरूपलक्षणमुक्त्वा तदतिरिक्तसमस्तालंकाराणां नामेतराणि लक्षणानि कथितानि" इति॥ ततश्च प्रत्येकालंकारस्यानेकोदाहरणदर्शने नाम्नामवयवार्थविचारे च श्रीपरमेश्वरप्रसत्तेः सिद्धं नः संकल्पितेन॥ समस्तालंकाराणां नामान्येव लक्षणानीति सिद्धमित्यर्थः॥

यद्यपि साहित्यशास्त्ररहस्यानभिज्ञेन केनचित् "काव्यालापाँश्च वर्जयेत्" इत्युक्तम् । तथापि साहित्यशास्त्रे ब्रह्मानन्दसदृशपरमानन्दप्राप्तेस्तस्यातीवादरणीयत्वम् ॥ उक्तं रसप्रकरणे "ब्रह्मानन्दसहोदरः" इति ॥ इदं च प्रत्यक्षम्, पश्यन्तु रसिकजनाः स्वानुभूत्यैव तत् । साहित्यशास्त्रे तत्क्षणमेव परमानन्दप्राप्तेरनेकजन्मसाधनलभ्यब्रह्मानन्दापेक्षयाऽऽधिक्यं च । ब्रह्मानन्दस्यानेकजन्मसाधनलभ्यत्वं च श्रीमद्भगवद्गीतायाम्—

"अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥" इति ॥

साहित्यशास्त्रे परमानन्दस्य तत्क्षणप्राप्तिविषये काव्यप्रकाशगतकारिकायां "सद्यः परनिर्वृतये" इत्युक्तम् । अत्र प्राचीनं पद्यमपि—

"सत्कविरसनासूर्पीनिस्तुषतरशब्दशालिपाकेन ॥
तृप्तो दयिताधरमपि नाद्रियते का सुधादासी ॥ १ ॥"

यशवन्तयशोभूषणस्य सप्ताकृतयो भवन्ति । तत्र प्रथमाकृतावुपोद्घातः, द्वितीयाकृतौ काव्यस्वरूपम्, तृतीयाकृतौ शब्दालंकारः, चतुर्थाकृतावर्थालंकाराः, पञ्चमाकृतौ रसवदाद्यलंकाराः, षष्ठाकृतावन्तर्भूतालंकाराः, सप्तमाकृतौ च ग्रन्थसमाप्तिः समकालिकभूपालगणना पारितोषिकं चेति वर्णितम् ॥

अत्र विषयनामान्यतिस्थूलाक्षरेषु, अन्यग्रन्थकारलक्षणान्यस्मन्नामार्थांश्च ततः सूक्ष्माक्षरेषु, उदाहरणानि ततः सूक्ष्माक्षरेषु, गद्यबन्धस्ततोपि सूक्ष्माक्षरेषु, टिप्पणं च रेखाधस्तात्ततोऽपि सूक्ष्माक्षरेषु लिखितम् । रसिकविद्वांसो गुणग्राहकदृशेमं प्रबन्धं पश्येयुरिति सप्रश्रयमाशासे ॥

"अखिलानामपि महतां
खण्डनकरणापराधमपहाय ॥
पश्यन्तु पक्षरहिताः
प्रबन्धमेतं हि कविराजाः ॥ १ ॥"

कविराजा—मुरारिदानः ॥

## ॥ सूचीपत्रम् ॥

### प्रथमाकृतिः

## द्वितीयाकृतिः

## ॥ तृतीयाकृतिः ॥



| विषयः | पृष्ठम् | पङ्क्तिः |
|---|---|---|

## ॥ चतुर्थाकृतिः ॥

॥ पञ्चमाकृतिः ॥





॥ षष्ठाकृतिः ॥



॥ सप्तमाकृतिः ॥

॥ श्रीजगदम्बायै नमः ॥

॥ श्रीमहागणाधिपतये नमः ॥

# ॥ अथ यशवन्तयशोभूषणग्रन्थः ॥



वन्दे वाञ्छितदातारं विघ्नहर्तारमीश्वरम् ॥
अर्चितं सुरनाथाद्यैर्गजाननमहर्निशम् ॥ १ ॥
श्रीमान्राष्ट्रवरोत्तंसो यशवन्तनरेश्वरः ॥
चिरं शास्तु महीं ध्यायँश्चन्द्रचूड़पदाम्बुजे ॥ २ ॥
आस्ते मरुमहेन्द्रस्य सभायां प्रतिभायुतः ॥
ख्यातः सर्वगुणोपेतो मुरारिः कविशेखरः ॥ ३ ॥
यशवन्तयशोभूषणनामा योऽलंकृतिग्रन्थः ॥
कविना तेन विचित्रो नरभाषायां व्यधायि सुमनोज्ञः ।४।
सुब्रह्मण्यो नरेशस्य शासनात्सुरभाषया ॥
अनुवादं करोत्यस्य सर्वदेशप्रसिद्धये ॥ ५ ॥
आसोपेत्युपनामा दाधीचो रामकर्णाख्यः ॥
बलदेवस्य तनूजः शुद्धं चैनं व्यधत्त सद्ग्रन्थम् ॥६॥
बहवो बहुधोपास्यँ यस्य पारं न लेभिरे ॥
वन्दे तं परमानन्दं मुरारिः कविराडहम् ॥ ७ ॥

कुले कवीनां किल चारणाना-
मवातरद्या नवलक्षधा प्राक् ॥
शक्तिस्ततोऽभूत्करणीति नाम्ना,

---

यमिति कर्मपदमध्याहार्यम् ।

चकार वीकाख्यमियं नृपालम् ॥ ८ ॥
प्रमादेनावकाशो मे बोधः सिद्धान्तदर्शनैः ॥
दत्तो यैः पण्डितैः प्राच्यैर्वन्दे तानुपकारिणः ॥ ९ ॥
या शास्तीङ्गलमेदिनीं वसुमतीं या भारतीं शास्ति च,
भानुर्गच्छति यत्र यत्र धरणी सा सा च यस्या वशे ॥
नैवं पूर्वभवाः प्रजाः सुखभुजोऽभूवन्यथा साम्प्रतं,
विक्टोर्या नृपतीश्वरी विजयते सेयं प्रजाभाग्यतः ॥ १० ॥
यस्याः श्रीयशवन्तसिंहनृपतिः सेनागणैर्भ्रातृभिः,
साहाय्यस्य विधिं विधातुमनिशं बद्धादरो वर्तते ॥
सा चायं मरुवल्लभश्च जगतां रक्षाविधौ दक्षिणौ,
भूयास्तां पृथिवीतले चिरतरं यावच्छशाङ्को रविः ॥ ११ ॥

## तत्रादौ राजवंशवर्णनम् ॥

जगतामवतंसोऽसौ रविवंशो विराजते ।
अवातरद्रमाकान्तो यत्र रामात्मना पुरा ॥ १२ ॥
दैवाद्रघुकुलादस्मादयोध्यानगरं च्युतम् ।
धारयित्वा श्येनरूपं राष्ट्ररक्षा कृता यतः ॥ १३ ॥
मनसाकुलदेव्या[†]स्तु राष्ट्रश्येनाऽभिधाऽभवत् ॥
जाताश्च राष्ट्रश्येनीयास्ततो रघुकुलोद्भवाः ॥ १४ ॥
नामैकदेशग्रहणे नाम्नो हि ग्रहणं भवेत् ।
ततस्तु राष्ट्रश्येनीयाः प्रसिद्धा राष्ट्रनामतः ॥ १५ ॥
पुनः प्राप्ता विशेषत्वं राष्ट्राः सत्कार्ययोगतः ।

---

* विक्रमार्कस्य षोडशे शतक आदिशक्तिः करणीनाम्ना चारणजातावंशेनावततार । सा च योधपुराधिपरावजोधासकाशात्तस्य कुमारं वीकाख्यमर्थयित्वा निनाय। त च स्वप्रभावेण जाङ्गलदेशाधिपतिमकार्षीत् । तेनावासितं वीकानेरनामकं नगरं तद्वंशीया अद्यावधि प्रशासति । तस्मान्नगरादष्टक्रोशे देशणोकसञ्ज्ञके ग्रामे करणीदेव्या मन्दिर वरीवर्ति । सन्ति च वीकानेरभूपालास्तस्या भक्ताः ॥

† मनसानाम्नी कुलदेवी, तस्या ॥

केचित्तत्र महाराष्ट्रा राष्ट्रकूटाः परेऽभवन् ॥ १६ ॥
मरुदेशेऽस्ति नगरी हस्तिकुण्डीतिनामतः।
राष्ट्रकूटशिलालेखस्तत्र प्राप्तः पुरातनः ॥ १७ ॥
आसन्राष्ट्रवरेत्याख्या मरुदेशशपूर्वजाः ॥
तेषु राष्ट्रवराः केचिन्निर्ययुर्दक्षिणां दिशम् ॥ १८ ॥
तत्र कोङ्कणकर्णाटौ देशावाक्रम्य वीर्यतः ॥
कल्याणीनगरे राज्यमकुर्वन्निश्चलाश्चिरम् ॥ १६ ॥
अन्यानपि बहून्देशाँश्चक्रुः स्वस्य वशे नृपाः ॥
ख्यातिभिर्दानपत्रैश्च येषां नामानि भूभुजाम् ॥ २० ॥
ज्ञातानि तेषां लिख्यन्ते नामानि क्रमशो मया ॥
आसीदस्मिन्कुले श्रीमान्यशोविग्रहभूपतिः ॥ २१ ॥
तनयोऽस्य महीचन्द्रस्ततो राज्यमपालयत् ॥
प्रतापतापितारातिः श्रीचन्द्रस्तत्सुतो बली ॥ २२ ॥
कन्नोजपत्तनं लेभे भूमाविन्द्रपुरोपमम् ।
पश्चान्मदनपालोऽभून्मदनेन समाकृतिः ॥ २३ ॥
ततो गोविन्दचन्द्रोऽभूद्गोविन्दप्रतिमो नृपः ।
सूनुर्विजयचन्द्रोऽस्य विजयप्रतिमो बले ॥
शासन्वसुमतीमासीद्धार्मिकाणां शिरोमणिः ॥ २४ ॥
जयचन्द्रमहाराजस्तनयस्तस्य भूभुजः ।
बहून्देशान्समाक्रामद्बलादाखण्डलोपमः ॥ २५ ॥

निवेशदेशावधि निर्गमस्थला-
त्प्रयाणकाले दलमस्य पङ्गुवत् ।
जगाम संलग्नतया निरन्तरं
पदं ततोऽभूद्दलपङ्गुलाभिधम् ॥ २६ ॥

* जयचन्द्रमहाराजो दलपङ्गुलेतिपदभाग्बभूव । अस्यार्थस्तु दल पङ्गुरिव यन्येति। अस्यायनभिप्राय ।

कलौ युधिष्ठिरान्येन राजसूयो महाक्रतुः ।
न कृतस्तं विधायैष वेदशास्त्रविदां वरः ॥ २७ ॥
अनेकांस्तर्पयामास मखभुग्द्विजवन्दिनः ।
तेन ख्यातिं परां भेजे सर्वत्र जगतीतले ॥ २८ ॥
युग्मम् ।
सुल्तानपदमापन्नानष्टौ यवनभूपतीन् ।
प्रगृह्यैकदिने पश्चात्तत्याजोग्रपराक्रमः ॥ २९ ॥
अतो हेतोरयं राजा सुल्तानग्रहमोचनः ।
इतीह पदवीं प्राप दुर्लभामितरैर्नृपैः ॥ ३० ॥
इन्दुबाणाक्षिशीतांशुमिते (१२५१) विक्रमवत्सरे ।
बलवाञ्शाहबुद्दीनयवनो योद्धुमागतः ।
संमुखोऽस्य बभूवासौ करीन्द्रस्येव केसरी ॥ ३१ ॥
तत्रार्द्धचन्द्रबाणेन कृत्तमूर्धा भवन्नपि ।
निषङ्गावकरोद्रिक्तौ कंचित्कालं गजे स्थिरः ॥ ३२ ॥
कबन्धेतिपदं लेभे ततोऽसौ धरणीपतिः ।
ततः कबन्धजान्प्राहुर्वंश्यानस्य महीपतेः ॥ ३३ ॥
च्युताः कन्नोजनगरादेतदीयाः समाश्रयन् ।
गोविन्ददुर्गमद्यैतच्छमशावादिति कथ्यते ॥ ३४ ॥
वरदायिश्येन[1]नामा जयचन्द्रात्मजोऽभवत् ।
मृतः कौमार एवासौ पश्चाद्वेति न निर्णयः ॥ ३५ ॥
सेतुरामाभिधस्तस्य तनयः सनयोऽभवत् ।
न चोपलब्धं चरितं चिरकालतयैतयोः ॥ ३६ ॥

---

यथा, अपङ्गोः पादेन चलने व्यवधानं भवति तथा पङ्गोश्चलने न भवति । पङ्गुस्तु भूमिं स्पृष्ट्वैव सर्पति, अतोऽविच्छिन्नैका रेखा संपद्यते । तथैव जयचन्द्रमहाराजस्य सेनाधिक्येन निर्गमस्थलान्निवेशस्थानपर्यन्तमविच्छिन्नैकश्रेणिरासीदिति ॥

[1] एतन्नामार्थस्तु राष्ट्रश्येनादेव्या लप्स्यमानवरः । अत्रापि राष्ट्रश्येनानाम्न एकदेशस्य ग्रहणम् । राष्ट्रेत्यत्र पूर्वार्द्धस्य ग्रहणमत्र तूत्तरार्द्धस्य । विग्रहस्तु वरदायिनी श्येना यस्मै स वरदायिश्येनः ॥

सीहामहीपतिः पश्चादासीत्सिंहपराक्रमः ।
चक्रे दिग्विजयं वीरो द्वारकायात्रया सह ॥ ३७ ॥
पश्चादास्थान*भूपालः पालीपुरमपालयत् ।
ततो गोहिलभूपालान्निराकृत्य मरुस्थले ॥ ३८ ॥
राज्यं संस्थापयामास खेड़पुर्यामयं निजम् ॥
नियुद्ध्य यवनैः पाल्यामार्पयच्छंभवे शिरः॥३९॥
ततो धूहड़भूपालः साभिमानोऽतिविक्रमः ॥
कन्नोजनगरं गत्वा युयुधे यवनैः सह ॥ ४०॥
ततो मण्डोवराधीशैः प्रतीहारैर्महाबलैः ॥
क्षत्रियैः सह संयुद्ध्य जगाम स सुरालयम्॥ ४१ ॥
रायपालस्ततो राज्यं चकारातुलविक्रमः ॥
रक्षन्प्रजाः स दुर्भिक्षे भूमाविन्द्रपदं गतः॥ ४२॥
कनपालोऽथ जालन्सीसंज्ञश्च पृथिवीभुजौ॥
युद्धे यवनभूपानां स्वस्वकाले दिवं गतौ ॥४३॥
चाहुमाननरेशेन युध्वा छाडामहीपतिः ॥
त्यक्त्वा देहमितः स्वर्गमारुरोह महाबलः ॥ ४४॥
अलाउद्दीनयवनः समायादुग्रविक्रमः ॥
सिवानादुर्गमादातुं चाहुमानधरापतेः॥ ४५ ॥
साहाय्यार्थं तदा तस्य गतस्तीडामहीपतिः ॥
युध्वा बहुविधं तत्र त्रिदिवेशालयं ययौ ॥ ४६ ॥
ततः सलखभूपालं सामन्तः शरणं गतः ॥
कृतापराधो दिल्लीशे तदर्थं सोऽत्यजच्छिरः ॥ ४७
ततो वीरमभूपालं दल्लेतियवनाधिपः ॥

---

* अस्ति मरुदेशे पालीनामक नगरम् । तत्रत्या प्रजा स्वरक्षार्थं प्रतिगृहाच्छुल्कदानेनास्थानमात्मपालकमङ्गीचकार । तेन च तत्रैव निवसता गोहिलजातीयान्क्षत्रियान्निहत्य खेड़नगरमवापि । गोहिलक्षत्रियाणा राज्यमधुना गुर्जरदेशे भावनगरपालीताणामध्ये वर्तते ॥

जगाम शरणं तस्य रक्षाहेतोरयं नृपः ॥ ४८ ॥
स्वस्य देशं परित्यज्य तत्प्रसङ्गान्महाबलः ॥
रणाङ्गणे प्रसुप्तोऽभूद्बाणाविद्धमृगेन्द्रवत् ॥ ४९ ॥
निहत्य यवनानींदाजातीयाः क्षत्रिया निजम् ॥
दुर्गं मण्डोवरं नाम प्राप्नुवन्बलशालिनः ॥
चूण्डानृपाय तच्चादुः सहर्षं सुतया सह ॥ ५० ॥
मण्डोवराभिधं दुर्गं भाग्याच्चूण्डा*महीपतिः ॥
संप्राप्य बहुलां भूमिमार्जयद्बाहुविक्रमात् ॥ ५१ ॥
ततो गत्वा महावीरः स्वस्य नागोरपत्तनम् ॥
मुल्तानसेनया सार्धं युध्वा देवपुरं ययौ ॥ ५२ ॥
ततोऽभूद्रणमल्लाख्यः क्षत्रियाणां शिरोमणिः ॥
हितार्थं भागिनेयस्य मोकल्रांणामहीपतेः ।
रणमल्लमहीपालो महमूद्यवनं बलात् ॥ ५३ ॥
दुर्धरं दुर्मदं क्रूरं कालान्तकसमद्युतिम् ।
अजयन्मालवाधीशं संगरे भूरिविक्रमः ॥ ५४ ॥

युग्मम् ।

हन्तारौ भागिनेयस्य मेराचाचकनामकौ ।
संक्रुद्धः प्रेषयामास द्रुतं वैवस्वतान्तिकम् ॥ ५५ ॥

---

* मण्डोवरदुर्गं मुलतानाधिपयवनैराक्रान्तमभवत् । प्रतीहारक्षत्रियेष्वेका “ईंदा” इति शाखा वर्तते । तदधिकारेऽधुनापि मण्डोवरात्पश्चिमप्रदेशेऽष्टचत्वारिंशद्ग्रामा विद्यन्ते । यवनैर्विष्टिप्रभृतिभिरर्दिता ईंदाजातिया: क्षत्रियाः स्वावसरमासाद्य यवनान्निहत्य मण्डोवरदुर्गमासेदुः । पुनश्च यवनसेनाया समागतायां न वयमत्र दुर्गे स्थातु शक्ता इति विमृश्य तदग्रणी रायधवलः सालोड़ीग्रामे चूडासकाशमुदन्त प्रेपयामास । तस्मिन्समये चूण्डापितृव्यो मल्लीन्नाथः खेड़राज्यं शशास । खेड़राज्यस्य सीमा योधपुरात्क्रोशसप्तके सालोडीग्रामपर्यन्तमासीत् । सालोड़ीग्रामे च मल्लीनाथनिदेशेन चूण्डावीरो बहुभिर्योधैः सह सीमारक्षार्थमास्ते । तदुदन्त च “अस्माभिर्मण्डोवरदुर्गं यवनेभ्य आच्छिन्नम् । तच्च मत्कन्यापाणिग्रहणे भवता यौतुकत्वेन संप्राप्स्यते” इति । चूण्डावीरेण च तच्छ्रवणसमकालमेव मण्डोवरमासाद्य रायधवलसुता सादर स्वीकृता । रायधवलश्च तस्मै कन्यया सह मण्डोवरदुर्गमर्पयामास । तात्कालिकं पद्यमिदम् ॥

कवन्धजा नैव हि विस्मरेयुरींदाकृतां सूपकृतिं कदाचित् ॥
मण्डोवरं वेदिगताय चूण्डामहीभृते ये प्रददुः सहर्षम् ॥ १ ॥

कुम्भकर्णं ततो बालं मोकलूराणाधरापतेः ॥
कृत्वा चित्तोड़भूपालं प्रबन्धमकरोत्स्वयम् ॥ ५६ ॥
अभूदसुव्र्ययस्तत्र तेनैवास्य महीपतेः ॥
सतां सर्वाणि वस्तूनि परार्थाय भवन्ति हि ॥ ५७ ॥
तदात्मजो योधासिंहो मरुभूमौ स्वकीर्तये ॥
स्वनाम्ना[†] नगरं दुर्गं कारयामास यत्नतः ॥ ५८ ॥
गयायात्रां[‡] विधायैष करांस्तीर्थेषु धर्मवित् ।
मोचयामास शौर्येण युद्धं च बहुधाऽकरोत् ॥ ५९ ॥
सूजारावस्तनूजोऽस्य हर्षनिर्भरमानसः ।
द्विवारं यवनैर्युध्वा बभूव क्षतविग्रहः ॥ ६० ॥
बाघनामा सुतस्तस्य व्याघ्रतुल्यपराक्रमः ।
अधृत्वैव सितच्छत्रं गतः कर्मवशाद्दिवम् ॥ ६१ ॥
अहरद्गुर्जराधीश ईडराख्यपुरीं बलात् ।
बन्धुभ्यो गङ्गभूपालस्ततो हृत्वा पुनर्ददौ ॥ ६२ ॥
तुरङ्गाणामसंख्यानामसेयाया भुवस्तथा ।
ईश्वरो मालदेवो[§]ऽभूत्तेजसा भास्करोपमः ॥ ६३ ॥
एतदन्ता महीपालाः स्वतन्त्रा राज्यशासनम् ।
कुर्वन्तोऽनेकदेशेषु न्यवसँस्तदनन्तरम् ॥ ६४ ॥
संसेव्योदयसिंहाख्यः दिल्लीशं त्वक्बराभिधम् ॥
गतं देशं पुनः प्राप लेभे राजपदं ततः ॥ ६५ ॥
सवाय्राजपदं प्राप सूरसिंहः प्रतापवान् ॥

---

[*] राणाकुम्भकर्णो वैक्रमे पञ्चदशशततमे ( १५०० ) वर्षे शुचिमासे चित्तोडदुर्गे निशि सुप्त रावरिडमल्ल छुरिकाभिरच्छेदयामास ॥

[†] रावयोधसिंहो वैक्रमे पञ्चदशोत्तरपञ्चदशशततमे ( १५१५ ) वर्षे स्वनाम्ना योधपुरं नाम नगरमावासयामास । दुर्गं च व्यदधात् ॥

[‡] गयायात्राया योधसिंहोऽध्वनि दिल्लीशेन सह समागतः, युद्धे च सहायोऽभवत् । तदुपकारप्रतीकारे गयागन्तृभिर्देय दिल्लीशयवनकर सर्वकाल मोचयामास ॥

[§] मालदेवोऽष्टायुता ८०००० ऽश्वाधिपतिरभवत् ॥

राज्येऽस्मिँस्तत्कृतैरद्यापि प्रबन्धैः प्रवृत्यते ॥ ६६ ॥
गजसिंहस्ततो राजा गजेन्द्रान्प्रददौ बहून् ॥
द्विपञ्चाशद्रणेष्वेष विजयाद्विश्रुतोऽभवत् ॥ ६७ ॥
कदाचित्कवचं नैव दधौ विक्रमसागरः ॥
पदं दिल्लीश्वराल्लेभे दलस्तम्भनसंज्ञकम् ॥ ६८ ॥
दत्त्वा कविवरेभ्योऽसौ ग्रामाँश्च विभवान्बहून् ॥
सदृशान्स्वेन तान्कृत्वा ख्यातोऽभूद्धरणीतले ॥ ६९ ॥
यशवन्तमहाराजः संजातस्तदनन्तरम् ॥
आसन्सुरालयास्तावत्स्थिरा यावज्जिजीव सः ॥ ७० ॥
स्वमतस्य प्रचारार्थमवरङ्ग*धरापतेः ॥
उद्योगः सफलो नाभूत्तद्बाहुबलविक्रमात् ॥ ७१ ॥
खड्गेन बलवानेष काबुल्देशवसुंधराम् ॥
कृतवान्पान्थसंचारयोग्यां दिल्लीशशासनात् ॥ ७२ ॥
दिल्लीयवनभूपानां स्थापनोत्थापने क्षमः ॥
अव्याहतमनोवृत्तिरजमल्ल†महीपतिः ॥ ७३ ॥
प्राप बाहुबला‡देष देशदुर्गे गते पुनः ॥
दिल्लीश्वरात्पदं चाप राजराजेश्वरेत्यसौ ॥ ७४ ॥
अत्यक्तहिन्दुधर्माणां जेजया§नामकं करम् ॥
मोचयामास धर्मात्मा बलाद्यवनकल्पितम् ॥ ७५ ॥
वख्तासिंहस्ततश्चासीन्निपुणो न्यायनिर्णये ॥
मितव्ययी महाबुद्धिः शत्रूणामन्तकोपमः ॥ ७६ ॥
ततो विजयसिंहोऽभूद्धरिभक्तो दयानिधिः ॥

---

* औरङ्गजेबनामको दिल्लीशो मुगल्जातीयो यवन आसीत् ॥

† अजीतसिंहः

‡ महाराजयशवन्तसिंहे पिशावरपत्तने दिवं गते दिल्लीशेन योधपुरमाच्छिन्नम् । अजीतसिंहेन च बाहुबलेन तत्पुनरात्तम् ॥

§ यवनधर्ममस्वीकुर्वद्भ्यः स्वधर्मरक्षार्थं यो वार्षिकः कर आदीयते सोऽरबीभाषायां "जेज़्या" इत्युच्यते ॥

आत्मवत्सर्वभूतानि पश्यन्हिंसाविवर्जितम् ॥ ७७ ॥
निजं जनपदं चक्रे पुत्रवत्पालयन्प्रजाः ।
उपमा* तेन कालेन लोकैरद्यापि दीयते ॥ ७८ ॥
सूनुर्गुमानसिंहोऽस्यानभिषिक्तो दिवं गतः ।
ततः शशास वसुधां मानसिंहस्तदात्मजः ॥ ७९ ॥
आबाल्यादेष भूपालः स्वदेशपरदेशयोः ।
अकरोत्सङ्गरक्रीडां मत्तमातङ्गसंनिभः ॥ ८० ॥
ऋणावशेषवान्नाभूत्सुहृदामथ विद्विषाम् ।
कुरुराजसमो माने दाने कर्णसमस्तथा ॥ ८१ ॥
अदाद्ग्रामान्गजानश्वान्कवीन्द्रेभ्यो यथेप्सितम् ।
संगीतादिसमस्तानां गुणानां रसिकः परम् ॥ ८२ ॥
कर्ता† नवीनग्रन्थानां राजनीतिविचक्षणः ।
ददौ नागपुरेशाय‡ चेन्दोरनगरेशितुः ॥ ८३ ॥
अवरोधवधूभ्य§श्च शरणं धैर्यसागरः ।
अन्ते संन्यस्य धर्मात्मा कृतवान्सफलां जनिम् ॥ ८४ ॥
औरसापेक्षया भक्तः पितुस्तख्त¶नरेश्वरः ।
दत्तपुत्रोऽदधाच्छत्रं मानसिंहादनन्तरम् ॥ ८५ ॥
योधामात्यकवीन्द्राणां प्रियोऽभून्नितरामसौ ।
कलौ कृष्णावतारोयमितिख्यातोऽत्र मण्डले । ८६ ।
यानि यानि च भोग्यानि निखिलान्यत्र भूतले ।
तानि तानि सुभुक्तानि राज्ञानेन सुरैरिव ॥ ८७ ॥

---

* यत्र सुराज्यं वरीवर्त्ति तत्रेदमुच्यते "त्रिजैवारा वरते है" इति । अस्यार्थस्तु विजयवेला वर्तत इति ।

† अनेन महाराजेन नाथचरित्रनामकोऽतिमनोहरो भाषाग्रन्थो निर्मितः । अन्ये च सहस्रशो गीतकवितदोहागजलरेखताख्यालठुमरीटप्पाप्रभृतय. प्रणीताः । राजराजेश्वरमानसिंह. कवितायां स्वाभिधानं रसराज इति लिलेख ॥

‡ नागपुरस्य राजा महाराष्ट्रो मधुराजदेवो भौसलाजातीय आसीत् ॥

§ इन्दोरनगरस्य राजा जसवन्तरावो हुल्करजातीयः, तस्य भार्याया अभिधा "तुलछाबाई" इति ॥

¶ तख्तसिंहनृपः ॥

महाशक्तगवर्न्मेंण्टराज्येप्यस्य नरेशितुः ।
बाहुवीर्येण सर्वेषां राज्ञां मानं सुरक्षितम् ॥८८॥
विस्तराद्गतभूपानां वर्णने ग्रन्थविस्तरः ।
भवेदतः प्रसङ्गेन संक्षेपाद्गणना कृता ॥ ८९ ॥

अब्ध्यङ्कदिक्पालनिशाधिनाथ-
मिते १८९४ शुभे विक्रमराजवर्षे ।
इषे सिते शंभुतिथौ* हि जातो
महीमहेन्द्रो यशवन्तसिंहः ॥ ९० ॥
ग्रहाक्षिरत्नेन्दुमिते १९२९ तु वर्षे
छत्रं सितं फाल्गुनमास्यधत्त ।
बहून्बहुभ्यः प्रददाति चादा-
दसौ गजग्रामतुरङ्गमादीन् ॥ ९१ ॥
निवार्य चौराञ्जगतो निरास्य-
द्धीतिं करानप्यमुचद्बहूँश्च ।
बहूँस्तडागान्विरचय्य देशे
मरुस्थलं वै सजलं करोति ॥ ९२ ॥
कृत्वा सभां न्यायविनिर्णयार्थं
वाष्पस्य योगाच्छकटं प्रयान्तम् ।
तन्त्रीमिरं वृत्तनिवेदिनीं च
कृत्वा स्वदेशं व्यदधात्कृतार्थम् ॥ ९३ ॥
व्यधत्त मैत्रीं निखिलैर्नृपालै-
रुदारतायामयमद्वितीयः ।
रिक्तो न यात्येनमुपेत्य कोऽपि
वसुंधरा कामधुगस्य जाता ॥ ९४ ॥
प्रतापसिंहोऽस्य सहोदरस्तु
कायेन वाचा मनसा धनेन ।

---

* अष्टम्याम् ॥

कुर्वन्सदा स्वामिहितं बलाढ्यो
　धीमानमात्योऽस्ति नरेश्वरस्य ॥ ९५ ॥
अदाद्दयालुः परमेश्वरोऽस्मै
　पुत्रं गुणाढ्यं सरदारसिंहम्।
धनागमो वृद्धिमुपैति नित्यं
　मनोरथः कोऽपि न चावशिष्टः ॥ ९६ ॥
कदापि सामन्तकवीन्द्रमन्त्रि-
　संवेष्टितो राजसभानिविष्टः।
धृतातपत्रः सितचामराभ्यां
　संवीज्यते वासववाञ्छितश्रीः ॥ ९७ ॥
कदाप्यमात्यैः सह संनिविष्टः
　कार्यं स्वराज्यस्य करोति नीत्या।
कदाप्यभिज्ञैः कविभिः सभायां
　प्रमोदते काव्यरसै रसज्ञः ॥ ९८ ॥
कदापि वेगे मरुता समानं
　संकोचिताङ्गं हरिणेन तुल्यम्।
आरुह्य चापल्यगुणप्रसिद्धं
　हयं मनोज्ञं परितोषमेति ॥ ९९ ॥
कदापि नावा निजकारितेषु
　ह्रदेषु लीलां विहरन् करोति।
कदापि चारामविहारशीलो
　दधाति शोभां कुसुमायुधस्य ॥ १०० ॥
कदापि मल्लाऽऽजिनिरीक्षणेच्छुः
　कदापि युद्धे करिणां प्रहृष्टः।
कदापि हर्म्येषु सुरेन्द्रतुल्यं
　करोति रम्यां मधुपानलीलाम् ॥ १०१ ॥

कदापि संगीतकलां शृणोति
कदापि नृत्यं च निरीक्षतेऽसौ ।
आलोक्य यच्चित्रतरं नभस्था
ह्रीणा भवन्त्यप्सरसोऽतिमात्रम् ॥ १०२ ॥
कदापि कान्तारमहीधरेषु
भ्रमन् मृगेन्द्रैश्च वराहयूथैः ।
आखेटलीलां रचयन्बलाढ्यो
मनोविनोदं कुरुते महीशः ॥ १०३ ॥
कदापि सेनाभटवीरकेलिं
पश्यत्ययं वीररसे निलीनः ।
कदापि देशेष्वटनं विधाय
जानाति सर्वस्य रहस्यवृत्तम् ॥ १०४ ॥
इत्थं कृतार्थानि दिनानि कुर्व-
न्नित्यं प्रजापालनतत्परोऽस्ति ।
यस्योपमानं कविभिः प्रदातुं
न शक्यतेऽसौ सुचिरं हि जीयात् ॥ १०५ ॥



राजराजेश्वर जी. सी. एस. आई. महाराजाधिराज-
श्रीयशवन्तसिंहस्य सभार्हवेषचित्रम्.



राजराजेश्वरं जी. सी. ऐस. आई. महाराजाधिराज-
श्रीयशवन्तसिंहस्य साधारणवेषचित्रम्.



खबाणनेत्राङ्कमितैरिदानीं ( ९२५० )
क्रोशैरुपेतास्ति वशेऽस्य भूमिः।
खव्योमशून्येषुयुगेषुनेत्रै- ( २५२५००० )
र्मिताः प्रजाः सन्ति मरुस्थलेऽस्य ॥ १०६ ॥
आयोऽस्य सर्वदेशस्य द्वे कोटी प्रतिवत्सरम् ॥
अस्त्यस्य योधनगरं राजधानी सुशोभना ॥ १०७॥

जयचन्द्रकुलोद्भूता असंख्याः सन्ति मानवाः।
वर्धन्ते च महावीरास्तेऽद्यापिकृपयेशितुः ॥ १०८॥

अवस्थयाल्पोऽपि गुणैरनल्पै-
र्महामनीषी सरदारसिंहः।
अस्ति प्रशस्तो गुणिनां पुरस्ता-
द्धराधिनाथस्य तनूभवोऽस्य ॥ १०९ ॥

महाराजकुमारश्रीसरदारसिंहस्य चित्रम्



| | |
|---|---|
| १ यशोविग्रहः | २० चूण्डोः |
| २ महीचन्द्रः | २१ रणमल्लः |
| ३ श्रीचन्द्रः | २२ जोधोः |
| ४ मदनपालः | २३ सूजोः |
| ५ गोविन्दचन्द्रः | २४ वाघोः |
| ६ विजयचन्द्रः | २५ गांगोः |
| ७ जयचन्द्रः | २६ मालदेवः |
| ८ वरदायिश्येनः | २७ उदयसिंहः |
| ९ सेतुरामः | २८ सूरसिंहः |
| १० सीहाः | २९ गजसिंहः |
| ११ आस्थानः | ३० यशवन्तसिंहः |
| १२ धूहड़ः | ३१ अजीतसिंहः |
| १३ रायपालः | ३२ वख्तसिंहः |
| १४ कनपालः | ३३ विजयसिंहः |
| १५ जालनसीः | ३४ गुमानसिंहः |
| १६ छाडोः | ३५ मानसिंहः |
| १७ तीडोः | ३६ तख्तसिंहः |
| १८ सलखोः | ३७ यशवन्तसिंहः (वर्तमानः) |
| १९ वीरमः | ३८ सरदारसिंहः (महाराजकुमारः) |

# अथ ग्रन्थनिर्माणकारणम् ॥



भाषाभूषणसंज्ञस्य ग्रन्थस्य नृपसन्निधौ ।
एकस्मिन्दिवसे जातः प्रस्तावो मां तदा नृपः ॥ ११० ॥
ऊचे कीदृक्प्रबन्धोयं कविराज! तदाऽवदम् ।
मरुनाथेन पूर्वेण यशवन्त* महीभुजा ।
भाषाभिज्ञजनानां वै बोधार्थं निर्मितः स्वयम् । १११ ।
भाषायां प्रथमो ग्रन्थो भरतस्य मतेऽस्त्यसौ ।
अनेनालंकृतेर्बोधः साक्षान्नैव भवेदिति ॥ ११२ ॥
उत्तराकर्णनात्प्राह हसन्मरुमहेश्वरः ।
तदान्यं रचय ग्रन्थं नवं कविवरेति माम् ॥ ११३ ॥
वत्सरैः पञ्चदशभिः शनैः कृत्वा श्रमं मया ।
निर्मितो निर्मलग्रन्थ आज्ञया मरुभूपतेः ॥ ११४ ॥
अनेके रचिता ग्रन्था आकल्पादधुनावधि ।
अल्पायुरहमेकोऽतः कथं सर्वं निरूप्यते ॥ ११५ ॥
प्रबन्धानां प्रसिद्धानां सारं संगृह्य यत्नतः ।
स्वस्य निर्मलया बुद्ध्या निर्धार्यायं विनिर्मितः ॥ ११६ ॥
सन्ति बालप्रबोधार्थं प्रबन्धा वहवो भुवि ।
अयं विबुधबोधार्थो भवेदेव न संशयः ॥ ११७ ॥
संदर्श्यालंकारान्यशवन्तयशोऽत्र वर्णितं यस्मात् ।
यशवन्तयशोभूषणमित्यभिधाऽस्य व्यधायि निर्णीय । ११८ ।
यतो भूषणसंज्ञाऽस्य सप्तभिस्तु ततो मया ।
पूर्तिराकृतिभिर्नीता ह्यौचित्येन नराधिप ॥ ११९ ॥
प्रथमं भूमिका पश्चात्काव्यरूपं निरूपितम् ।

* पूर्वयशवन्तसिंहमहाराजो वैक्रमे त्र्यशीत्यधिकषोडशशततमे वर्षे (१६८३) समुत्पन्नः । उरछा-नृपस्य रामसिंहस्य कनिष्ठो भ्रातेन्द्रजिदाख्य आसीत् । तस्य कविना केशवमिश्रेण भाषाया कविप्रियानामको ग्रन्थोऽष्टपञ्चाशदधिकषोडशशततमे वर्षे ( १६५८ ) निर्मितः । स च भाषाभूषणग्रन्थात्प्राचीनः । तस्मिँश्चालकारप्रकरणमपि विद्यते । पर तु कविप्रियाग्रन्थो न भरतमतानुसारी ॥

ततश्च शब्दालंकारा अर्थालंकृतयस्ततः ॥ १२० ॥
निरूपितास्ततः पश्चाद्रसवत्प्रमुखा नृप ।
अलंकृतीनां कथितो ह्यन्तर्भावस्ततः परम् । १२१ ।
पूर्णाकृतौ विधिः पूर्तेर्ग्रन्थस्य समयस्तथा ।
वर्त्तमाननृपा भूप! कथितं पारितोषिकम् । १२२ ।

## कविवंशवर्णनम् ॥



मदीयमपि वृत्तान्तं किंचिल्लोकप्रथावशात् ।
संक्षेपेण लिखाम्यत्र ग्रन्थकर्त्तृत्वहेतुना ॥ १२३ ॥
मुरारिदाननामाहं जातिर्मे चारणाव्हया ।
ख्यातेयं त्रिषु लोकेषु गणिता देवजातिषु ॥ १२४ ॥
श्रीमद्रामायणे साक्ष्यं भारते च प्रदृश्यते ।
तद्वदन्यपुराणेषु श्रीमद्भागवतादिषु ॥ १२५ ॥
उत्पत्तिस्थानमस्यास्तु हिमवान् पर्वतोत्तमः ।
पूज्यते दानमानाद्यैरद्यापि क्षत्रियैरियम् ॥ १२६ ॥
यशवन्तनृपालोऽति दत्वा ग्रामगजादिकान् ।
करोति हितमस्यास्तु जीयाद्बहुयुगावधि ॥ १२७ ॥
आसियाकुलमस्माकं भीमोऽत्र प्रथितः पुमान् ॥
पदं वलहठमल्लेति प्रापान्नस्य प्रदानतः ॥ १२८ ॥
पितामहो मम ख्यातो वांकीदासः कवीश्वरः ॥
अभूदयाचकश्चासौ मानसिंहमहीपतेः ॥
कविराजपदेनास्मै लक्षमेकं ददौ नृपः ॥ १२९ ॥

---

* आसानामकः कश्चिन्मूलपुरुषो बभूव । तद्वंश्याः "आसिया" इति कथ्यन्ते ।

† मरुभाषाया "वल" इति शब्दो भोज्यवस्त्वपरपर्यायः "हठशब्दो हठार्थकः" ॥ मल्लशब्दो बलवद्वाची । "वलहठमल्ल" इति समुदायार्थस्तु लोकान्भोजयितु हठकरणे बलवान् ॥

‡ अत्र ल्यब्लोपे पञ्चमी, तेन मानसिंह परित्यज्येत्यर्थो बोध्यः । मानसिंहादन्य न याचत इत्यर्थः ॥

अमानीद्वारतीदाननामानं कविवल्लभम् ॥
तख्तसिंहमहाराजः पितरं मम विश्रुतम् ॥ १३० ॥
मह्यं मुरारिदानाय यशवन्तनरेश्वरः ॥
राज्याभिषेकवेलायां प्रादाल्लक्षमुदारधीः ॥ १३१ ॥

चारणशब्दव्युत्पत्तिस्तु "चारयन्ति कीर्तिम्" इति चिन्तामणिकोषे दर्शिता। "देवानां स्तुतिपाठकाः" इति चोक्तम्। अस्य निष्कृष्टार्थस्तु कीर्तिप्रचारकाश्चारणा इति। चारणानां देवेषु गणना प्रसिद्धा। आदित एते देवानां स्तुतिपाठकाः। क्षत्रियाश्च देवांशाः। राज्ञो नाम देव इति प्रसिद्धमेव। अत एव चारणाः क्षत्रियातिरिक्तं न याचन्ते। चारणानामभिजनो हिमालयः। तत्र च रावणस्य दिग्विजयप्रस्तावे वाल्मीकीयरामायणस्योत्तरकाण्डीयपञ्चमसर्गस्य—

"अथ गत्वा तृतीयं तु वायोः पन्थानमुत्तमम् ॥
नित्यं यत्र स्थिताः सिद्धाश्चारणानां मनस्विनः ॥
दशैव तु सहस्राणि योजनानां तथैव च ॥"

इति चतुर्थपञ्चमश्लोकौ प्रमाणम्। पृथिव्या एतावदुच्चस्थानं तु हिमालय एव भवितुमर्हति। पुनश्च गौतम ऋषिः स्वभार्यायै शापं दत्त्वा स्वाश्रमत्यागं कृतवाँस्तत्प्रसङ्गे रामायणस्य बालकाण्डेऽष्टचत्वारिंशत्तमसर्गस्य त्रयस्त्रिंशत्तमे श्लोके स्पष्टमुक्तम्—

"एवमुक्त्वा महातेजा गौतमो दुष्टचारिणीम् ॥
इममाश्रममुत्सृज्य सिद्धचारणसेविते ॥
हिमवच्छिखरे रम्ये तपस्तेपे महातपाः ॥" इति ॥

"हिमालय एव मनुष्याणामुत्पत्तिस्थानम्" इतीतिहासकर्तृभिः सिद्धान्तितम्। अत्रैवं शङ्का न कर्त्तव्या, चारणा देवाश्चेद्भूमौ कथमागता इति? कुत इति चेत्स्वर्गस्थानां भूमिष्ठानां च परस्परं गमनागमनसंबन्धः प्रसिद्धः। अयोध्याधिपतिर्दशरथ इन्द्रसाहाय्यार्थं मनुष्यशरीरेण, पाण्डुसूनुरर्जुनोऽपि विद्यापठनार्थं मनुष्यशरीरेण स्वर्गं गतः। लङ्काधिपो रावणः स्वर्गं लुलुण्ठ। देवाश्च राज्ञां यज्ञेषु पृथिव्यां समागच्छन्ति स्मेति पुराणेषु प्रसिद्धम्। अनादिकालाच्चारणानामिष्टदेवता तु देवी ॥ तच्च भारते भी-

[1] आघृणीयत्वाद्विभाषितो णिच् ॥

ष्मपर्वण्येकविंशतितमेऽध्याये युद्धसमये श्रीकृष्णाज्ञयाऽर्जुनेन देव्याः स्तुतिः कृता तत्र षोडशे श्लोक उक्तम्—

तुष्टिः पुष्टिर्धृतिर्दीप्तिश्चन्द्रादित्यविवर्धिनी ॥
भूतिर्भूतिमतां संख्ये वीक्ष्यसे सिद्धचारणैः ॥

दाशरथेः सेतुबन्धनसमये रामायणस्य युद्धकाण्डस्य द्वाविंशतितमे सर्गे चतुरशीतितमे श्लोके—

तदद्भुतं राघवकर्म दुष्करं
समीक्ष्य देवाः सह सिद्धचारणैः ॥
उपेत्य रामं सहसा महर्षिभि-
स्तमभ्यषिञ्चन्सुशुभैर्जलैः पृथक् ॥ १ ॥

तथा महाभारतान्तर्गतगजेन्द्रमोक्षस्याष्टषष्टितमे श्लोके च

गुह्याय वेदनिलयाय महोदराय
सिंहाय दैत्यनिधनाय चतुर्भुजाय ।
ब्रह्मेन्द्ररुद्रमुनिचारणसंस्तुताय
देवोत्तमाय विरजाय नमोऽच्युताय ॥ १ ॥

ब्रह्मेन्द्ररुद्रमुनिभिः सह चारणानां गणना कृता । स्तुत्या चैतेषां परमात्मनो माहात्म्यं च सूचितम् । एवं भारतरामायणादिषु बहुष्वार्षग्रन्थेषु चारणानां देवतात्वेन सादरकथनमस्ति । अत्र तु ग्रन्थविस्तरभयात्संक्षेपेणोक्तम् ।

— —

ग्रन्थकर्तुश्चारणजातीयकविराजमुरारिदानस्य चित्रम् ॥



# नामलक्षणविचारः ॥

---

अहमस्मिन्ग्रन्थे प्राचां लक्षणानि खण्डयित्वा धुरंधराणां नामरूपाण्येव लक्षणानि स्थापयिष्ये, ततस्तद्विषये किंचिल्लिख्यते ॥ परमात्मा लोकसृष्टौ प्रथमं पदार्थानसृजत् । पश्चाच्च तन्नामानि निर्ममे॥तदेव मनुस्मृतौ प्रथमं सृष्टिक्रममभिधायोक्तम् ॥

"सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥" इति ।

* सस्थाः व्यवहारान्.

ततश्च शास्त्रकारैस्तेषां पदार्थानां लक्षणानि निर्मितानि। तथैव साहित्ये प्रथममुदाहरणानि विद्यन्ते। तदनन्तरं च कविभिस्तेषु चमत्कारं संलक्ष्य संलक्ष्यालंकाररसादीनां नामानि स्थापितानीत्यनुभवसिद्धम्। यथा गानस्य श्रवणे सामान्यज्ञानमात्रेणाप्यानन्दो भवति, परं तु सौराष्ट्रकालिङ्गादिरागाणां विशेषस्वरूपज्ञान आनन्दाधिक्यं भवति; तथैव काव्यार्थस्य सामान्यज्ञानेनाप्यानन्दो भवति, परं तूपमाद्यलंकाराणां शृङ्गारादिरसानां च विशेषज्ञानेनानन्दाधिक्यं भवति। न्यायादिशास्त्राणां प्रसिद्धाचार्यैर्गौतमादिभिरीश्वरकृतपदार्थानां लक्षणानि निर्मितानि। तथैव शैल्या साहित्यशास्त्रस्य प्रसिद्धाचार्येण भरतमुनिनाऽलंकारादीनां लक्षणानि निर्मितानि। भगवान् भरतमुनिर्नाट्यशास्त्रनामकग्रन्थे मूलभूतानुपमादींश्चतुर एवालंकारान्मन्यते स्म। तत्र तेषां चतुर्णां लक्षणान्युक्तानि। अपि च "ये शेषा लक्षणे नोक्ताः" इति कण्ठरवतोप्युक्तम्। ताश्च कारिका लक्षणानि चाग्रे लेखिष्यन्ते। भावादीनां लक्षणान्यपि भरतेनोक्तानि। ततश्च वेदव्यासप्रभृतयो भरतशैल्यनुसारेण लक्षणानि कुर्वन्ति स्म। परमात्मा सर्वान्पदार्थान्विरचय्य तेषां नामानि व्यवहारमात्रप्रयोजनेन स्थापयामास, न तु कविकर्मणा। अत एव तेषु केवलरूढनामान्यपि सन्ति। परमेश्वरकृतानि नामानि कविकमर्णा न सन्ति, अतः परमात्मकृतपदार्थविवेचकानां न्यायादिशास्त्रकाराणां तेषां पदार्थानां साक्षात्स्वरूपप्रकाशनार्थं नामातिरिक्तलक्षणनिर्मितेरावश्यकता प्राप्ता। यथा "वातीति वायुः" इति व्युत्पत्त्या पवनस्य वायुरिति नाम स्थापितम्। परं त्वनेन नाम्ना पवनस्य साक्षात्स्वरूपं तथा स्पष्टं न भवति, यथा "रूपरहितः स्पर्शवान्वायुः" इति लक्षणेन भवति। गत्यर्थकानामन्येषामपि वस्तूनां सत्त्वात्। परं त्वलंकारादीनां नामानि तु कविनिर्मितानि। तानि च कविकर्मणा स्थापितानि। अतः कवीनां तु नामभिरेव तेषां स्वरूपस्य स्पष्टीकरणमुचितम्। लक्षणशब्दार्थस्तु "लक्ष्यतेऽनेनेति लक्षणम्" इति व्युत्पत्त्या येन वस्तुपरिज्ञानं भवति तत्। संज्ञाशब्दार्थस्तु "सम्यग्ज्ञायतेऽनयेति संज्ञा" इति व्युत्पत्त्या यया सम्यग्ज्ञानं भवति सेति। संज्ञा च नाम्नः पर्यायः। एवं रीत्या नामलक्षणयोः प्रयोजनमेकमेव। तथा च नाम्नाऽलंकारस्वरूपं बोधयित्वा पुनश्च लक्षणेन ज्ञापने कवीनां पुनरुक्ति-

दोषापातः । प्रथमं यैर्यैः कविभिरलंकाराणां नामानि स्थापितानि तानि तु तत्स्वरूपाणां साक्षात्प्रकाशकत्वात्तथैव यौगिकानि सन्ति । तच्च तत्तदलंकारप्रकरणे स्पष्टीकरिष्यते । प्रथमं नामस्थापकैरन्यन्न किमपि लक्षणं निर्मितम् । कुत इति चेन्नामभिरेवालंकाराणां स्वरूपे स्पष्टेऽन्यलक्षणकथनस्य न तेषामावश्यकत्वम् । लक्षणानि त्वन्यैः कृतानि, अत एव कानिचित्साक्षात्स्वरूपस्याबोधकानि । कानिचिच्चाव्याप्त्यादिदोषग्रस्तानि । तेषां खण्डनं तु तत्तदलंकारप्रकरणे करिष्यते । साहित्यशास्त्रस्य मुख्यप्रयोजनं तु मनोरञ्जकत्वम् । अतो मनोरञ्जकनवीनस्य कस्यचिद्विषयस्य कथने, यन्मनोरञ्जकं न भवति तस्य खण्डने वा न कश्चिद्दोषः । उक्तं च नीतिशास्त्रे—

"युक्तियुक्तमुपादेयं वचनं बालकादपि ।
अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मयोनिना ॥" इति ।

भगवता वेदव्यासेनाप्युक्तमग्निपुराणे—

"अपारे काव्यसंसारे कविरेव प्रजापतिः ।
यथा वै रोचते विश्वं तथेदं परिवर्तते ॥" इति ॥

प्रथमं यः कविर्यमलंकारं ज्ञात्वा नाम स्थापितवान्, तस्य मया धुरंधर इति संकेतः कृतः । धुरंधर एक एवेति न; किं तु बहवः । अलंकाराणामसंख्यत्वात् । स चेदानीमपि भवितुमर्हति ॥ नन्वलंकारनामस्थापकेन लक्षणं न कृतमिति भवन्मतम्, त्वयैव चाङ्गीकरिष्यते, विकल्पालंकारः सर्वस्वकृतैव प्रथमं लक्षित इति । पुनश्च सर्वस्वकृता किमर्थं लक्षणं विहितमिति नाशङ्कनीयम् । कुत इति चेद्विकल्पवस्तु तु पुरातनम् । तच्च वेदे व्याकरणशास्त्रे च प्रसिद्धतरम् । सर्वस्वकारेण तु विकल्पेऽलंकारता लक्षिता । अपि च सर्वस्वकृता विकल्पस्य नामार्थातिरिक्तं लक्षणं न कृतम्, किं तु लक्षणकरणप्रचलितरीतिमनुसरता नामार्थ एव स्पष्टीकृतः । मम त्वयं सिद्धान्तः, कविकल्पितं नाम वस्तुनः साक्षात्स्वरूपलक्षकमेव भवति । नामेतरलक्षणकरणे चाव्याप्त्यादयो दोषा आपद्यन्ते । अपि च लक्षणरूपेण नाम्नोऽर्थकरणेपि पुनरुक्तिदोषापातः, अतोस्माभिरनुमीयते नामस्थापकेन धुरंधरेण लक्षणानि

न कृतानीति। यदि कश्चिदन्यः कविर्नामैतरल्लक्षणं विदध्याच्चेत्तस्य प्रमाद एव। अपि च स्वयं धुरंधर एव नामेतरल्लक्षणं विदध्याच्चेत्तस्यापि स प्रमाद एव। उपमोत्प्रेक्षोल्लेखाद्यलंकाराणां नामानि तु तत्तदलंकारलक्षक-धुरंधरैरेव दत्तानि। परिकरपरिणामपरिसंख्यादीनां पदार्थानां नामानि स्रष्टृभिरन्यैः शास्त्रकर्तृभिर्वा दत्तानि। परं तेषु पदार्थेष्वलंकारत्वमङ्गीकुर्व-द्भिर्धुरंधरैरेतान्येव नामानि तत्तदलंकारस्वरूपाणां स्पष्टप्रकाशकत्वादङ्गी-कृतानि॥ अलंकारग्रन्थकारैः कोषकारैश्चालंकारनाम्नामर्थाः कृताः, परं तु केषांचिन्नाम्नां साक्षादन्वयवार्था न जाताः, केषांचिदन्येऽर्थाः कृताः, ते तत्त-दलंकारस्वरूपाणि न भवन्ति। केषांचिन्नाम्नां साक्षादर्था अपि कृताः, परं तु तेषां तात्पर्यं स्पष्टं न जातम्। इदं तत्तदलंकारप्रकरणे स्फुटीभवि-ष्यति। येषां ग्रन्था इदानीमुपलभ्यन्ते. तेषु कोऽपि नामार्थं लक्षणं न स्थापित-वान्। एको जयदेवश्चन्द्रालोकग्रन्थे स्मृतिभ्रान्तिसंदेहानां नामान्येव लक्षणानि प्रदर्शितवान्। तदुक्तम्—

"स्यात्स्मृतिभ्रान्तिसंदेहैस्तदङ्कालंकृतित्रयम्॥" इति॥

विद्वद्वृन्दसेवितभोजमहाराजेनाप्यलंकारनाम्नां साक्षादर्था न ज्ञाताः। अतस्तेनालंकाराणां नामानि रूढान्यपि स्वीकृतानि। तदुक्तं निजनिर्मितसरस्वतीकण्ठाभरणग्रन्थेऽर्थालंकारलक्षणे—

"अलमर्थमलंकर्तुं यद्व्युत्पत्त्यादिवर्त्मना।
ज्ञेया जात्यादयः प्राज्ञैस्तेऽर्थालंकारसंज्ञया॥" इति॥

अत्रादिपदेन रूढिमार्गस्य परिग्रहः। व्युत्पत्तिरहिताः शब्दा रूढा इत्युच्यन्ते। उक्तं च कोषकृता—

"व्युत्पत्तिरहिताः शब्दा रूढा आखण्डलादयः"॥ इति॥

न च वाच्यं त्वयापि नामसु रूढिरङ्गीकरिष्यत इति? कुत इति चेन्मया तु योगरूढिरङ्गीकरिष्यते। तत्र विवक्षितार्थे योगोऽस्त्येव। रूढि-स्त्वन्यत्र प्रवृत्तिनिरोधार्थं स्वीकृता॥

शुद्धरूपानुसारेण नामान्याह धुरंधरः।
अलंकृतीनां तत्स्पष्टं करिष्यामि पदे पदे॥ १॥
धुरंधरोक्तालंकारनामान्येवात्र लक्षणम्।
अलंकारस्वरूपं यत्स्पष्टं तैरेव जायते॥ २॥

अत्यन्तस्फुटताहेतोर्नाम्नामर्थान्प्रचक्ष्महे ॥
लक्षणत्वेन ते नैव बोध्याः श्रीमरुनायक! ॥ ३ ॥
संस्कृतग्रन्थकर्तृणां खण्डनानि कृतान्यतः ।
भाषाग्रन्थविनिर्मातृखण्डने न दृगर्पिता ॥ ४ ॥

लक्षणं द्विप्रकारकं भवति । स्वरूपलक्षणं तटस्थलक्षणं च । स्वरूपं त्वाकारस्वभावरूपवस्तुस्थितिः । तटस्थशब्दार्थस्तु तीरस्थित इति । अत्रेदं विवक्षितं, स्वरूपाद्भिन्नमिति । चतुर्भुजत्वमिति विष्णोर्लक्षणमाकाररूपत्वात्स्वरूपलक्षणम् । चक्रपाणित्वमिति विष्णोर्लक्षणं विष्णोराकाराद्भिन्नमिति तटस्थलक्षणम् । सच्चिदानन्दात्मकत्वमिति ब्रह्मणो लक्षणं स्वभावरूपत्वात्स्वरूपलक्षणम् । जगत्कर्तृत्वमिति ब्रह्मणो लक्षणं स्वभावाद्भिन्नमिति तटस्थलक्षणम् । जगत्कर्तृत्वं ब्रह्मणो न स्वरूपं, किं तु कार्यमतस्तटस्थलक्षणम् । मम तु मतं, वस्तुनः साक्षाज्ज्ञानं स्वरूपलक्षणाद्भवति, तादृक्तटस्थलक्षणान्न भवति, । अतः स्वरूपलक्षणं मुख्यमिति । तथा च नाम तु स्वरूपलक्षणम् । लक्षणेन चातिव्याप्त्यव्याप्त्यसंभवदोषरहितेन भाव्यम् ॥

अतिव्याप्त्यादिदोषाणां नामान्येव हि लक्षणम् ।
गौरीं,मनोहरां, भीतिजनिकां विद्धि नायिकाम् । १ ।

"लक्ष्यातिरिक्ते लक्षणत्वेनाभिमतस्य
व्यापनमतिव्याप्तिः ॥"

यथा—

"नायिकाया मनोहरत्वं लक्षणम् ॥"

इत्युक्ते मनोहरत्वस्य नायकादिपदार्थान्तरेष्वपि सत्त्वादतिव्याप्तिः।

"लक्ष्यैकदेशावर्तनमव्याप्तिः ॥"

यथा—

"नायिकाया गौरवर्णत्वं लक्षणम् ॥"

इत्युक्ते श्यामवर्णायां नायिकायां गौरवर्णत्वस्याव्यापनादव्याप्तिः । शृङ्गारालम्बनत्वात्तस्या अपि नायिकात्वमिष्टमेव ॥

यथा—

"श्यामेयं सुन्दरी नारी भुजगीव नरान्दशेत् ॥"

अपि च श्यामवर्णवतः कृष्णस्य शृङ्गाररसे मुख्यतयाऽऽलम्बनत्वं सुप्रसिद्धम् ॥

"लक्ष्येऽत्यन्तासत्त्वमसंभवः ॥"

यथा—

"भयजनकत्वं नायिकाया लक्षणम् ॥"

इत्युक्तेऽस्य लक्षणस्य कस्यांचिदपि नायिकायामसत्त्वादसंभवः। भयोत्पादिकायाः स्त्रिया न नायिकात्वम्। शृङ्गारालम्बनसुन्दर्या एव नायिकात्वव्यवहारात्। नामरूपलक्षणानामुक्तदोषत्रयरहितत्वमेवं रीत्या भवति। कविर्यस्य यन्नाम करोति तन्नाम तत्र यौगिकं भवत्येव। न च स नवीनं रूढनाम निर्मातुर्महतीति नासंभवशङ्कावकाशः। क्वापि सजातीये वस्तुनि नाम्नोऽवयवार्थस्य प्रवृत्त्यभाव उपलक्षणतया तस्यापि संग्रहो भवति। उपलक्षणं तूपादानलक्षणा। लक्षणाबीजं त्वन्वयबाधस्तात्पर्यबाधो वा ॥

"गङ्गायां घोषः ॥"

इत्यत्र गङ्गाशब्दस्य मुख्यार्थः प्रवाहः, तत्र घोषस्थितेरसंभवात्प्रवाहे घोषस्यान्वयबाधः, अतो गङ्गातीरे लक्षणा क्रियते ॥

"काकेभ्यो दधि रक्ष्यताम् ॥"

इत्यत्र पदार्थानां परस्परमन्वयस्य न बाधः, तथापि वक्तुस्तात्पर्यं त्वेवं, दध्युपघातकेभ्यः सर्वेभ्यो दधिरक्षणं कर्त्तव्यमिति। न तु काकमात्राद्दधिरक्षणं कर्त्तव्यम्, मार्जारादिभ्यो रक्षणं न कर्त्तव्यमिति। तथा च यथाश्रुतवाक्यार्थस्वीकारे वक्तुस्तात्पर्यस्य बाधान्मार्जारादीनामपि काकशब्देनोपादानलक्षणया संग्रहो भवति। "गङ्गायां घोषः" इत्यत्र गङ्गाशब्दवाच्यार्थप्रवाहस्य त्यागः, तटमात्रस्य च ग्रहणमस्तीति लक्षणलक्षणा। "काकेभ्यो दधि रक्ष्यताम्" इत्यत्र वाच्यार्थकाकत्यागमन्तरा मार्जाराद्यन्यार्थस्य ग्रहणमस्तीत्युपादानलक्षणा भवति। अत्र यथाश्रुतवाक्यार्थ एव विश्रामकरणे मार्जारादिभ्यः सर्वदध्युपघातकेभ्यो

रक्षणं कर्त्तव्यमिति वक्तुस्तात्पर्यस्य बाधो भवति। मार्जारादिरूपलक्ष्यार्थस्य काकरूपवाच्यार्थेन सह दध्युपघातकत्वसंबन्धोऽपि वर्तते। प्रयोजनं तु लाघवेन बोधनम्। मार्जारादीनां सर्वेषां दध्युपघातकानां पृथक्पृथक्परिगणने गौरवात्। साहित्यशास्त्र एवमुपलक्षणतया संग्रहस्य स्वीकार आवश्यकः। यतः कवीनां रचनाऽपारा नवा नवा च भवति। तदेवोक्तं केशवकविना—

वागीश्वरीयं जगतामधीशा
त्वौदार्यमस्या वदितुं क्षमः कः।
देवा मुनीन्द्रा ऋषयश्च सिद्धाः
श्रान्ता हि निर्वर्ण्य वहुप्रकारम्॥१॥
पिता चतुर्भिर्वदनैर्जगौ यां
जगौ सुतः पञ्चभिराननैर्याम्॥
षड्भिर्मुखैर्यां प्रजगौ च पौत्रो
नवा नवैवास्ति तथापि सेयम्॥२॥

एवं रीत्या नामार्थरूपलक्षणस्य सर्वसंग्राहकत्वादव्याप्तिदोषराहित्यम्। यदि क्वापि विजातीयवस्तुषु योगार्थस्य प्रवृत्तिर्भवति, सा योगरूढ्योर्मिश्रितताङ्गीकारेण निरुद्धा भवति॥ शब्दस्त्रिविधः यौगिको, रूढो, मिश्रितश्चेति॥
क्रमेण यथा—

"सुधांशुः॥"

इति चन्द्रस्य यौगिकं नाम। "सुधामया अंशवो यस्य स सुधांशुः" इति विग्रहात्॥

"डित्थः॥"

इति काष्ठमयगजस्य नाम॥
"श्यामरूपो युवा विद्वान्सुन्दरः प्रियदर्शनः।
सर्वशास्त्रार्थवेत्ता च डित्थ इत्यभिधीयते॥"

इति लक्षणलक्षितपुरुषस्य च । उक्तं चिन्तामणिकोषकारेण "डित्थः काष्ठमये गजे, विशेषलक्षणयुक्ते पुरुषे च" इति । अयं च डित्थशब्दस्यावयवार्थो न भवति, किं तूक्तपदार्थेषु रूढ्यास्य संकेतः ॥

"वारिजम् ॥"

इति कमलस्य नाम योगरूढम् । "वारिणो जायते" इत्यवयवार्थस्तु यौगिकः । जलाच्च शङ्खशुक्तिकाप्रभृतयोपि जायन्ते, परं तु न तेषु वारिजनाम्नः प्रवृत्तिः । वारिजनाम्नः प्रवृत्तिस्तु कमलेष्वेवेतीयं रूढिः । एवं रीत्या कमलस्य वारिजमिति नाम योगरूढिमिश्रितत्वाद्योगरूढम् । अत्रान्यत्र प्रवृत्तेरभावे निमित्तं तु नामस्थापकस्येच्छैव । यथा वाचकशब्दाद्वाच्यार्थबोधे निमित्तं संकेतशक्तिः । एवं नामार्थरूपलक्षणप्रवृत्तेर्विजातीयेष्वभावादतिव्याप्तिदोषराहित्यम् । उक्तरीत्याऽतिव्याप्त्यादिदोषनिवृत्तिसिद्धान्तस्तु नामार्थमेव, न तु लक्षणार्थम् । अत एव लक्षणेषूक्तदोषवारणाय शास्त्रकाराणां प्रयासः ॥ मुक्तावल्यां यौगिकशब्दस्येदं लक्षणम्—

"यत्रावयवार्थ एव बुध्यते तद्यौगिकम्" इति ॥

रूढशब्दस्येदं लक्षणम्—

"यत्रावयवशक्तिविषये समुदायशक्तिमात्रेण बुध्यते तद्रूढम्" इति ॥

योगरूढशब्दस्येदं लक्षणम्—

"यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिरप्यस्ति तद्योगरूढम्" इति ॥

योगरूढशब्दे रूढ्यङ्गीकारस्य प्रयोजनं तु "रूढिज्ञानस्य केवलयौगिकार्थज्ञानप्रतिबन्धकत्वम्" इत्युक्तम् । वारिजमित्यत्र "वारिणो जातं वारिजम्" इति व्युत्पत्त्या यौगिकार्थेन जलजातमात्राणां शङ्खशुक्तिकादीनां सर्वेषामपि ज्ञानं भवेत् । तत्र रूढ्या पद्मेतराणां शङ्खशुक्तिकादीनां ज्ञानं निरुध्यते । यौगिकनाम्नां लक्षणभावे तु न कश्चिद्विवादः । रूढशब्दविषये मतद्वयम् । कतिचनाचार्या उणादिसिद्धाः शब्दा यौगिका इति मन्यन्ते । कतिचन च रूढा इति । तदेवोक्तम् "उणादयो व्युत्पन्ना अव्युत्पन्नाश्च" इति । तथा चोणादिसिद्धशब्दानां रूढत्ववादिनो यद्येवं वदेयुः "रूढ-

नाम्नोऽवयवार्थस्तु नास्त्येव, ततो लक्षणभागः पृथगेव भविष्यति। रूढनामानि लक्षणानि नैव भवेयुः" इति चेन्न। यतो रूढनामान्यपि निरर्थकानि न भवन्ति। समुदायशक्त्या तान्यपि सार्थकानि। वयमेकाशीत्यलंकारान्वदिष्यामः, तत्र त्रीणि नामानि रूढानि। अल्पं मुद्रा सूक्ष्मं चेति। अल्पं तु स्तोकम्। तथा च यत्राल्पत्वं चमत्कारकारि तत्राल्पालंकारः। मुद्राशब्दार्थः प्रत्ययकारिणी नामाङ्कितमुद्रा। यत्र मुद्रान्यायश्चमत्कारकारी तत्र मुद्रालंकारः। यथा दीपकन्यायेन दीपकालंकारः। सूक्ष्मशब्दार्थो यथान्यो न विजानीयात्तथा स्वेष्टसूचनम्। तथा च यत्र सूक्ष्मत्वं चमत्कारकारि तत्र सूक्ष्मालंकारः। चमत्कारश्च शोभाकरत्वम्। तच्चालंकारनामलभ्यम्। एतन्नामभिरप्येतदलंकाराणां स्वरूपं तु स्फुटं बुध्यते। किं च बृहद्यौगिकनामापेक्षया लघुरूढनामभिरलंकारबोधस्तु लाघवातिशयेनाधिकमुपयुज्यते। एवं मा वद, योगरूढनाम्नामर्थबोधस्तु योगशक्त्यैव भवति, रूढिस्तु केवलमेतदर्थमङ्गीक्रियते, योगरूढशब्देषु क्वचिद्योगजन्योर्थः संकुच्यते, क्वचिच्च विस्तार्यत इति। यथा नीरधिशब्दस्य योगार्थो जलाधिकरणम्। परं तु रूढिरेतदर्थमङ्गीक्रियते घटादीनां व्यावृत्तिः क्षीरसमुद्रादिष्वपि च नीरधिशब्दस्य प्रयोगो भवेदिति। घटादिषु नीरधिशब्दस्य व्यावृत्तिं कृत्वा समुद्रे नियमनं तु योगार्थस्य संकोचः। विस्तारस्तु नीरधिशब्दस्य क्षीरनीरधिरिति क्षीरसमुद्रेपि प्रयोगः। तथा चालंकाराणां योगरूढनामस्वर्थस्तु योगजन्य एव क्रियते, तेषु च किंचिल्लक्षणं तु निःसरति, परं तु सर्वं लक्षणं न निःसरति। अस्मिन्नामार्थे यावानंशो नायातस्तस्य लक्षणवाक्ये लेखनं विना कार्यं न सिद्ध्येदिति? कुत इति चेद्योगरूढनाम्नाऽवयवार्थविशिष्टो रूढिबोध्योर्थो बुध्यते; इदं मुक्तावलीलक्षणात्स्पष्टतरम्। वाचस्पत्यकोषकारेणाप्युक्तम् "योगरूढोऽवयवशक्त्या समुदायशक्त्या चार्थबोधके पङ्कजशब्दादौ। तत्र ह्युभयशक्त्या पङ्कजन्मकर्तृत्वरूपावयवार्थविशिष्टपद्मत्वविशिष्टस्य बोधः। उभयार्थबोधनाच्च पङ्कजाते कुमुदादौ स्थलजाते पद्मे च न तत्पदप्रयोगप्रसङ्गः" इति॥ किं च क्षीरनीरधिरित्यत्र योगार्थप्रतीतिमनपेक्ष्य केवलरूढिबोध्यसमुद्ररूपोर्थः प्रतीयते, तत्र कारणं तु नीरधिशब्देन सह क्षीरस्यान्वयानुपपत्तिः। एवं निष्कलङ्कशशिकनकसौधसुरभूरुहादिशब्दा बोध्याः। योगरूढनामानि चानेकानि भवन्ति। पाणिग्रहणनाम्नो योगार्थ-

स्तु करग्रहः। करग्रहश्च विवाहावलम्बनाकर्षणादिषु सर्वत्र वर्तते ॥
यथा—

रत्यर्थं निबिडवने रिपुरमणीनां करग्रहं शबराः।
चक्रुर्युगपत्तासामासीद्ग्लानिर्भयं तथा कोपः ॥

परं त्वन्यत्रातिव्याप्तिवारणार्थं विवाहेर्थे रूढिः। उक्तं चिन्तामणिकोषकारेण "पाणिग्रहणं विवाहे। विवाहो भार्याप्राप्तिहेतौ" इति ॥ पाणिग्रहणनाम्नो योगार्थे विवाहेत्यंशो नायातः। पाणिग्रहणं चैकं विवाहाङ्गम्। परं तु रूढ्या भार्याप्राप्तिहेतुरूपपाणिग्रहणमित्यर्थो बुध्यते। इदं नाम क्रियावाचि। त्रिफलानाम्नो योगार्थस्तु त्रयाणां फलानां समुदाय इति। स च फलत्रयसमुदाये सर्वत्र वर्तते। परं त्वन्यत्रातिव्याप्तिवारणार्थं हरीतक्यामलकीबिभीतकरूपफलत्रयसमुदाये रूढिः। उक्तं चिन्तामणिकोषकारेण "त्रिफला हरीतक्यादिफलत्रिके" इति। त्रिफलानाम्नो योगार्थे हरीतक्यामलकीबिभीतकेत्ययमंशो नायातः, परं तु रूढ्या हरीतक्यामलकीबिभीतकेतिफलत्रयसमुदायरूपोर्थो बुध्यते। एवमुपमालंकारनाम्नो योगार्थस्तु "उप सामीप्यात्कृतं विशेषज्ञानमिति"। परं तु सामीप्यान्न्यूनाधिकसमत्वानां सर्वेषां बोधेऽपि समतायां रूढिः। अतिशयोक्त्यलंकारस्य नाम्नो योगार्थस्तु लङ्घनस्योक्तिरिति। लङ्घनं चाज्ञासमुद्रपर्वतलोकसीमादिषु सर्वत्र वर्त्तते। परं त्वन्यत्रातिव्याप्तिवारणार्थं लोकसीमालङ्घने रूढिः। अत्र योगरूढ्योर्मिश्रणाल्लोकसीमालङ्घनरूपार्थस्य बोधः। अतिशयोक्तिनाम्नो योगार्थे लोकसीमेत्यंशो नायातः, परं तु रूढ्या लोकसीमातिलङ्घनमित्येतावानर्थो बुध्यते। किं चास्यालंकारस्य स्वरूपबोधेऽस्मादतिरिक्तः कोप्यंशो नावशिष्यते, अतोऽन्यलक्षणनिर्माणमनावश्यकम्। अप्रस्तुतप्रशंसालंकारस्य नाम्नो योगार्थोऽप्रस्तुतकथेति। अप्रस्तुतकथा तु कस्यचित्प्रसङ्गेऽप्रसङ्गे वा सर्वत्र कथ्यते ॥

यथा—

रामो नाम बभूव हुं तदबला सीतेति हुं तौ पितु-
र्वाचा पञ्चवटीवने निवसतस्तामाहरद्रावणः।

कृष्णेनेति पुरातनीं निजकथामाकर्ण्य मात्रेरितां
सौमित्रे! क्व धनुर्धनुर्धनुरिति व्यग्रा गिरः पान्तु वः ॥ १ ॥

परं त्वत्रातिव्याप्तिवारणार्थं प्रसङ्गकथितायामप्रस्तुतकथायां रूढिः। अत्र योगरूढ्योर्मिश्रणात्प्रसङ्गकथिताप्रस्तुतप्रशंसारूपोर्थो बुध्यते। अप्रस्तुतप्रशंसानाम्नो योगार्थे प्रसङ्गकथितेत्यंशो नायातः, परं तु रूढेर्मिश्रणात्प्रसङ्गकथिताप्रस्तुतकथेत्येतावानर्थो बुध्यते। किं चास्यालंकारस्य स्वरूपबोधेऽस्माद-तिरिक्तः कोप्यंशो नावशिष्यते, अतोन्यलक्षणनिर्माणमनावश्यकम्। नामकर्तुरिच्छानुसारेण प्रसिद्धी रूढिरित्युच्यते। एवमपि मा भण, येन कस्यचित्कथनेन कोशेन वा पाणिग्रहणमिति नाम विवाहार्थकं स्मर्यते तस्यैव पाणिग्रहणशब्दाद्विवाहरूपार्थस्य बोधः, अन्यस्तु करग्रहरूपार्थमेव ज्ञास्यत इत्यादि। तथा च नामैव लक्षणं तदोपपद्येत यदा नामार्थ एव सर्वविषयसमावेशः स्यात्। उपरिष्टात्किमपि वक्तुं नावशिष्येत। अन्यथा यदेवोपरिष्टाद्वक्ष्यते तस्यैवांशस्य लक्षणे निवेशः कर्तव्यः स्यात्? कुत इति चेद्वृद्धात्कोषाद्व्याकरणाद्वा श्रवणमन्तरा तु रूढयौगिकशब्दयोरपि न कथमपि बोधः। जनन्यादेः सकाशाच्छ्रवणं विना मनुजो मनुजवाणीमप्युच्चारयितुं न शक्नोति। किं चालंकारेषु योगरूढनामसु रूढेरातिरिक्तः कोप्यर्थ उपरिष्टान्नानीयते। न च वाच्यं यत्र वाक्यार्थेऽन्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा भवेत्तत्र वाक्यार्थेऽन्वयादिग्रहणार्थं[*] लक्षणा क्रियते। संज्ञा त्वेकमेव पदम्। अस्याः कल्पनायाः समयेऽन्वयानुपपत्त्यादेर्न प्रसङ्गः। यथा "काकेभ्यो दधि रक्ष्यताम्" अस्मिन्वाक्ये काकशब्देन दध्युपघातकमात्रस्य ग्रहणं भवति। "काको रौति" अस्मिन्वाक्येऽथवा केवलकाकशब्दप्रयोगे काकमात्रस्य ग्रहणं भवति। कुत इति चेदुपलक्षणेऽन्वयबाधाभावाद्वाक्यस्य नावश्यकत्वम्। अत्र तु तात्पर्यबाधोस्ति। उपमादिनामानि धुरंधरकविभिः काव्यशोभाकरधर्मरूपालंकाराणां कृतानि। तत्र च तत्तन्नामार्थसंबन्धिकाव्यशोभाकरधर्मरूपचमत्कारस्योपलक्षणेन ग्रहणाभावे तु कवेस्तात्पर्यबाधो भवति। धुरंधरेण प्रत्यनीकन्यायेन प्रत्यनीकालंकारः स्वीकृतः। अस्यावयवार्थस्तु वक्ष्यमाणप्रत्यनीकालंकारप्रकरणे कथयिष्यते। अत्र पक्षे चमत्कारः। अस्य-

[*] योजनार्थम्.

वाच्यार्थस्त्वनीकं प्रति करणम् । तथा चात्रैव विश्रामे तु पक्षसंबन्धिपक्षं प्रति करणं, पक्षस्य करणं, पक्षसंबन्धिपक्षस्य करणमित्यादिपक्षसंबन्धि चमत्कारग्रहणाभावाद्वक्तुस्तात्पर्यबाधो भवति। पक्षसंबन्धिपक्षं प्रति करण-मित्यादिर्लक्ष्यार्थः । पक्षतासम्बन्धः । प्रयोजनं तु लाघवेन कथनम् । सर्व-गणने गौरवापत्तेः । न च वाच्यं, धुरंधरस्यैतदेव तात्पर्यं चेत्सूक्ष्मा-दिवदस्यालंकारस्य पक्ष इत्येव नाम किमिति नाभिहितम् ? कुत इति चेत्तस्मिन्विषये कोपि प्रसिद्धन्यायश्चेत्तेन तत्तदलंकारप्रदर्शनं सुष्ठु हृदयं-गमं भवति । अत एव मुद्रान्यायेन मुद्रालंकारो दीपकन्यायेन च दीप-कालंकारः प्रदर्शितः । एवमन्येपि। किं च साहित्यशास्त्र उपलक्षणेन सजा-तीयचमत्कारस्य संग्रहो भवत्येव । ननु त्वयोच्यते कविनिर्मितनामानि तु लक्षणरूपाण्येव भवन्तीति । न्यायज्योतिषव्याकरणादिशास्त्रकारैर्नवीन-वार्तां परिकल्प्य समवायविभक्त्युपसर्गकुज्याऽग्राचरज्योन्मण्डलादीनि शतशो योगरूढनामानि नवीनानि परिकल्पितानि। न च तेषु कस्मिंश्चि-दपि नाम्नि लक्षणार्होऽर्थ उपलभ्यते; इति चेन्न । मम तात्पर्यं त्वलंकार-नाम्नां लक्षणभावे । अलंकाराणां नामानि च समस्तान्यपि लक्षणरू-पाणि विद्यन्त एवेति न काचित्क्षतिः । न च वाच्यं, प्रथममलंकारनाम-निर्मातॄणां नास्त्येव लक्षणकथनतात्पर्यमिति केन प्रमाणेन निश्चित-मिति ? कुत इति चेत्सकलालंकाराणां नामान्येव लक्षणानि विद्यन्त इति प्रत्यक्षं प्रमाणम् । अपि च लाघवस्य सर्वमान्यत्वात्साहित्यशास्त्रप्रसिद्धस-हृदयहृदयस्य साक्ष्यमपीह प्रमाणम् ॥ "भोजमहाराजस्यालंकारनाम्नां रूढत्वाङ्गीकारो न समीचीनः" इति यत्पूर्वमुक्तं तदुणादिसिद्धशब्दानां व्युत्पत्तिपक्षमादायोक्तम् ॥ धुरंधरैरलंकारनामान्युदाहरणानुसारेण स्था-पितानि । तानि त्वव्याप्त्यादिदोषरहितानि । अपि च भरतादिभिर्लक्ष्यो-दाहरणानुसारेण तेषामेवालंकाराणां लक्षणानि निर्मितानि, परं त्वमूनि तु प्रायोऽव्याप्त्यादिदोषसहितानि । धुरंधराणां नामरूपसर्वसंग्राहकलक्षणैरे-वालंकाराणां साक्षात्स्वरूपे स्पष्टे सति पुनरितरेषां लक्षणानां निर्मितिस्तु भरतादीनां प्रमाद एव ॥

भरतादिप्रमादो यो भोजकाले* न निर्गतः ॥
यशवन्तमहाराजभाग्यादद्य विनिर्गतः ॥ १ ॥
प्रवादोऽनादिमानेष यशो भाग्यवशादिति ।
वच्येऽन्यामीदृशीं वार्तां यशवन्तमहीपतेः ॥ २ ॥

## ॥ मरुदेशराज्यपरिवर्त्तनम् ॥



सरित्पञ्जाबदेशीया† स्वच्छवारिमनोहरा ।
मण्डोवरपुरोपान्ते स्वच्छन्दं प्रावहत्पुरा ॥ ३ ॥
चिन्हानि च प्रदृश्यन्ते तत्र तत्र स्थलेऽधुना ।
श्रीमदावड़शक्त्याख्या संजाता चारणान्वये ॥ ४ ॥
तस्याः शापवशात्काले विक्रमस्य महीपतेः ।
त्यक्त्वा मण्डोवरोपान्तं नदी दूरं विनिर्गता ॥ ५ ॥
तेन मण्डोवरप्रान्तो बभूव जलवर्जितः ।
मरुस्थलीति संज्ञास्य देशस्यासीत्ततः परम् ॥ ६ ॥
मण्डोवरपुराधीशा बभूवुर्बहवो नृपाः ।
उत्तरोत्तरमुत्कृष्टा भोगभाजो महाबलाः ॥ ७ ॥
भुक्त्वा भोगान्स्वके काले महीं त्यक्त्वा दिवं गताः ।
कंचित्कालं दधुश्छत्रं क्षत्रिया नागवंशजाः ॥ ८ ॥
ततो हेतोरयं शैलो नागाद्रिरिति कथ्यते ।
परमारनराधीशा राज्यं चक्रुस्ततः परम् ॥ ९ ॥
बभूव तेषां धरणीवराहो,

---

* भोजमहाराजः परमारजातीयः क्षत्रियो धारानगरीपतिर्बभूव । तस्य समीपे कालिदासादयो बहवोऽत्युत्तमा विद्वास आसन् । तस्य समये संस्कृतविद्याया अतिशयितोन्नतिर्बभूव । प्रसिद्ध चैतत्, नवीनपद्यरचयिता तस्माल्लक्षमुद्राः प्राप्नोतिस्मेति । अस्य प्रशंसावचनत्वेपि तस्य बहुद्रव्यदानं स्फुटमनुमीयते । अपि च संस्कृतविद्यापठनादृते न कश्चित्तस्य धारानगर्यां वासं लभतेस्म ॥

† पञ्जाबदेशस्य सरिन्मण्डोवरोपकण्ठे भूत्वा पश्चिमसमुद्रं गच्छतिस्म । तस्यास्तीरे पाषाणमयानीक्षुपीडनयन्त्राण्यद्यापि क्रमेणोपलभ्यन्ते । अस्या आपगाया वारि भिन्नस्वरनरवच्छब्दं करोतिस्म । तत इयं हाकडासमुद्र इति ख्यातिमापेदे । मरुदेशभाषाया भिन्नस्वरनरो हाकड़ा इत्युच्यते ॥

महाप्रभावो मरुभूमिनाथः ।
यो ह्यर्बुदादीन्नव[*]रम्यकोटान्
विभक्तवान् दिङ्मितसोदरेषु ॥ १० ॥
नवकोटीति विख्याता तेन लोके मरुस्थली ।
भुक्त्वा भोगान्सुविपुलाल्लीनास्तेऽपि नृपा भुवि ॥ ११ ॥
प्रतिहारनृपाः[†] पश्चाच्छशासुर्मरुमेदिनीम् ।
तेषु नाहड़रावाख्य आसीद्भूपालभूषणम् ॥ १२ ॥
येन पुष्करतीर्थस्य विख्यातस्य महीतले ।
जीर्णोद्धारविधानेन प्राप्तं पुण्यमनुत्तमम् ॥ १३ ॥
गुहिलान्वयसंजातो राहपश्चित्तोड़नायकः ।
दुर्गं जहार भूमिं च युध्वा राणापदं तथा ॥ १४ ॥
चित्तोड़दुर्गपतयः पूर्वं रावल्पदं दधुः ।
प्रतिहारजयादूर्ध्वं राणापदभुजोऽभवन् ॥ १५ ॥
षष्ट्यशीत्योरन्तराले शतके तु चतुर्दशे ।
वैक्रमे राहपो राजाऽभवद्भूरिपराक्रमः ॥ १६ ॥
पश्चान्मुल्तानदेशीयं सैन्यं यवनभूपतेः ।
आगत्य गुहिलाजन्हे दुर्गं वसु वसुंधराम् ॥ १७ ॥
शतके विक्रमार्कस्य लेभे पञ्चदशे ततः ।
चूण्डानरेशो मण्डोरदुर्गं राठौड़वंशजः ॥ १८ ॥
तदाप्रभृति राठौड़वंशीयाः क्षत्रियोत्तमाः ।
मण्डोवरपुराधीशा बभूवुर्बलशालिनः ॥ १९ ॥

---

* धरणीवराहादिभिर्दशभिर्भ्रातृभिरेवं प्रकारेण नव कोटा विभक्ताः । यथा १ मण्डोवरः सामन्तस्य । २ अजमेरुः सिद्धस्य । ३ पुङ्गलाख्यो गजमल्लस्य । ४ लोद्रवाख्यो भाणाख्यस्य । ५ अर्बुदाचलोऽल्हपल्हयोः । ६ जालन्धरो भोजराजस्य । ७ धाटाख्यो योगराजस्य । ८ पारकराख्यो हांसूनाम्नः । ९ किराडू-नामा धरणीवराहस्य भागः । एते विभागाः प्रातिलोम्येन विहिताः । सर्वेभ्यः कनिष्ठः सामन्तस्तस्य विभागे प्रधानकोटो मण्डोवरः । सर्वेभ्यो ज्येष्ठो धरणीवराहस्तस्य विभागे किराडूनामकः कोटः ।

† अस्यापभ्रंशः पड़िहार इति ।

सहस्रद्वयसंख्याके कालेऽस्मिन्पर्वता इमे ।
अत्रैव सरितश्चेमा अवर्तन्त समन्ततः ॥ १९ ॥
निर्जलं सजलं कर्तुमुद्योगं चक्रिरे नृपाः ।
सर्वे तथापि नो कश्चित्कृतार्थोऽभून्महीपतिः ॥ २० ॥
यत्र यत्र कृतो यत्नो यशवन्तमहीभुजा ।
प्रावर्तत जलं तत्र स्थातुं स्थिरतयाऽधुना ॥ २१ ॥
अद्यावधि मरुस्थाने तडागाः सप्त निर्मिताः ।
अन्यानपि च निर्मातुं यत्नोस्ति बहुलोऽधुना ॥ २२ ॥
प्राच्यां दिशि योधपुरात्क्रोशानामेकविंशतेः पूर्तौ ।
आस्ते महाँस्तडागो यशवन्तसमुद्रइत्यभिख्यातः ॥२३॥
त्र्यधिका चत्वारिंशत्स्मृतं कराणामथास्य गाम्भीर्यम् ।
पञ्चदश क्रोशानां प्रमिता चैव प्रदक्षिणा भणिता ॥ २४ ॥
त्रयोदशानां लक्षाणामद्य यावद्व्ययोऽभवत् ।
न स पूर्णो न वा जाता प्रासादानां विनिर्मितिः ॥ २५ ॥

## ॥ प्राचीनग्रन्थतत्कर्तृनामानि ॥



तर्कविद्यायाः प्रसिद्धाचार्यौ गौतमकाणादौ । व्याकरणस्य प्रसिद्धाचार्याः पाणिनिप्रभृतयः। तथैव साहित्यशास्त्रस्य प्रसिद्धाचार्यो भरतमुनिः; अत एवामुं भगवानिति वदन्ति बहवो ग्रन्थकाराः। लिखन्ति च "इति भगवतो भरतस्य" इति। अयं महान्प्रतिष्ठितमुनिः । एनमात्रेयप्रभृतयो मुनयोपि भगवन्निति ब्रुवन्ति स्म । लिखितं हि नाट्यशास्त्रारम्भे—

समाप्तजप्यं व्रतिनं स्वसुतैः परिवारितम् ।
अनध्याये कदाचित्तं भरतं नाट्यकोविदम् ॥ १ ॥
मुनयः पर्युपास्यैनमात्रेयप्रमुखाः पुरा ।
पप्रच्छुस्ते महात्मानो नियतेन्द्रियबुद्धयः ॥ २ ॥

योऽयं भगवता सम्यक्कथितो वेदसंमितः ।
नाट्यवेदः कथं चायमुत्पन्नः कस्य वा कृते । ३ । इति ।

अत्र नाट्यकोविदमिति विशेषणस्वारस्याद्भरतमुनिः केवलनाट्य एव कुशल इति न बोध्यम् । कुत इति चेन्नाट्यवृत्तान्ताभिलाषिमुनीनां प्रश्न एवं कथनं तु वक्ष्यमाणोल्लेखालंकारस्य विषयः । काव्यप्रकाशादयः सर्वे साहित्यग्रन्था भरतमतानुसारेण प्रणीताः । भरतस्य लक्षणकरणशैल्येतैः सर्वैः प्राचीनैरनुसृता । अपि च बहुषु स्थलेषु भरतवचनं प्रमाणत्वेनोपन्यस्तम् । एषां प्राचां खण्डनमण्डनयोरनुधावनं भरतपर्यन्तं बोध्यम् ॥

भरतप्रणीतो नाट्यशास्त्रनामको ग्रन्थ उपलभ्यते । काव्यप्रकाशादिप्राचीनग्रन्थेषु कुत्रचिन्नाट्यशास्त्रस्य सूत्राणि, कुत्रचिच्च कारिका लिखिताः । परं तु भरतप्रणीतः केवलकाव्यमतीयो ग्रन्थोऽद्यावधि न काप्युपलब्धः ॥ जयपुरनिवासिना सीतारामनामकविदुषा पञ्चाशीत्यधिकाष्टादशशततमे वैक्रमे वर्षे काव्यप्रकाशगतकारिकाणां लक्षणचन्द्रिका नाम्नी व्याख्या कृता । तदारम्भे "भारतीः कारिकाः सर्वा विवृणोमि यथामति" इति काव्यप्रकाशगतकारिका भरतकारिकात्वेनोक्ताः । भरतस्य साहित्यशास्त्रस्य प्रसिद्धाचार्यत्वात्काव्यप्रकाशगतकारिका भरतमतानुसारेण त्ववश्यं सन्ति, परं तु न भरतनिर्मिताः । कुत इति चेद्रसप्रकरणे काव्यप्रकाशकारः—

व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ।

इतीमां कारिकां लिखित्वाऽस्याः प्रमाणत्वे "उक्तं हि भरतेन" इत्यभिधाय "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति भरतसूत्रमुपन्यस्तवान् । काव्यप्रकाशगतकारिका भरतप्रणीताश्चेत्काव्यप्रकाशकारो भरतप्रमाणं न दद्यात् । काव्यप्रकाशगतकारिकावलीरसप्रकरणे काश्चन कारिका नाट्यशास्त्रस्य सन्ति खलु । रीतिश्चेयं, ग्रन्थकाराः क्वचनान्यग्रन्थकारिका अपि लिखन्तीति । भरतमुनिप्रणीतनाट्यशास्त्रस्य षोडशेऽध्याये—

"उपमा दीपकं चैव रूपकं यमकं तथा ।
काव्यस्यैते ह्यलंकाराश्चत्वारः परिकीर्तिताः॥१॥"

इति चतुरोऽलंकारानुक्त्वा तेषामेव लक्षणोदाहरणानि प्रदर्शितानि। अस्य कथनस्य चेदं तात्पर्यं न भवति, एतद्व्यतिरिक्ता इतरेऽलंकारा न सन्तीति । किं त्वस्येदं तात्पर्यं, अन्ये सर्वेऽलंकारा एष्वेव चतुर्ष्वलंकारेष्वन्तर्भवन्तीति । एतद्व्यतिरिक्तानामर्थालंकाराणां तूपमारूपकदीपकेष्वन्तर्भावः । अन्येषां शब्दालंकाराणां च यमकेऽन्तर्भावः । यथा रुद्रटः स्वभावोक्त्यादयश्चत्वार एवालंकारा इत्यङ्गीकृत्येतरानलंकारांस्तेष्वेवान्तर्भावितवान्—

"अर्थस्याऽलंकारा वास्तवमौपम्यमतिशयः श्लेषः ।
एषामेव विशेषा अन्ये तु भवन्ति निःशेषाः॥"

इत्युपमाप्रकारानुक्त्वा भरतमुनिनोक्तम्—

"उपमाया बुधैरेते भेदा ज्ञेयाः समासतः ।
ये शेषा लक्षणेनोक्तास्तेग्राह्याःकाव्यलोकतः।२।" इति।

"काव्यलोकतः" अर्थात् काव्याल्लोकाच्च, कविकृतवर्णनाल्लोकव्यवहाराच्चेति भावः। अलंकारादयो हि कविरचनारूपोदाहरणैर्लोकव्यवहाररूपोदाहरणैश्च लक्षिताः । ते चानन्ताः । यद्वा साहित्यशास्त्रस्य प्रसिद्धाचार्येण भगवता भरतेन काव्यलोकनामकः कश्चिच्छ्रव्यकाव्यग्रन्थोऽपि प्रणीतश्चेत् "काव्यलोकतः" इत्यस्येदं तात्पर्यम्। काव्यलोकग्रन्थादवशिष्टा भेदा ग्राह्या इति । अस्मिन्पक्षे काव्यलोकनाम्न इयं व्युत्पत्तिः । काव्यं लोक्यते यत्र स काव्यलोकः । काव्यं हि शब्दार्थगुणालंकाररसादिरूपं भवति ॥ चिन्तामणिकोषकारेण "इति भरतः" इति भरतनाम्ना लीलाहावस्य लक्षणमलेखि। तच्च वक्ष्यमाणद्वितीयाकृतौ भावप्रकरणे लेखिष्यते। न च तद्भरतप्रणीतनाट्यशास्त्रस्य । नाट्यशास्त्रे त्वन्यदेव लक्षणमुपलभ्यते । अत एतत्सिद्ध्यति, तल्लक्षणं भरतप्रणीतकाव्यलोकग्रन्थस्थमिति ।

प्राचीनाः संस्कृतग्रन्थकर्तारः स्वकीयग्रन्थेषु शकसंवत्सरसंख्यां न लिखन्ति, तस्माद्भरतमुनेः समयो निर्णेतुं न शक्यते । परं तु भगवान्

वेदव्यासोऽग्निपुराणस्य रीतिनिरूपणनामके चत्वारिंशदधिकत्रिशततमेऽध्याये—

"भरतेन प्रणीतत्वाद्भारती रीतिरुच्यते ॥"

इत्याह । तेन भरतमुनिर्व्यासात्प्राक्तन इति सिद्ध्यति ॥ १ ॥

भगवान्वेदव्यासोऽग्निपुराणस्य चतुश्चत्वारिंशदधिकात्रिशततमेऽध्याये शब्दालंकारस्य तदुत्तरेऽध्यायेऽर्थालंकारस्य, तदुत्तरे चोभयालंकारस्य निरूपणं कृतवान् । कृष्णद्वैपायनो भगवान्वेदव्यासः पाण्डुपुत्रस्य युधिष्ठिरमहाराजस्य समय आसीदिति प्रसिद्धमेव । महाराजयुधिष्ठिरस्य समयादनुमानतोऽद्ययावत्पञ्चसहस्रसंख्याकाः संवत्सरा व्यतीताः ॥ २ ॥

"दण्ड्याचार्यकृतः काव्यादर्शनामको ग्रन्थः । अयं महाकविर्वैक्रमे षष्ठशतक आसीदिति वेबरपण्डितः स्वीकरोति ॥ ३ ॥

भोजमहाराजस्य स्वनिर्मितः सरस्वतीकण्ठाभरणनामकग्रन्थो वर्तते। भोजमहाराजो धनपतिभट्टाय वीराणकनामकं ग्रामं ददौ। तद्दानपत्रं मुम्बईनगरएज्यूकेशन्सोसाईटीयन्त्रालये मुद्रितम् । तत्र पत्रेऽष्टसप्तत्युत्तरसहस्रसंख्याको (१०७८) विक्रमवत्सरो लिखितः । तस्माद्भोजमहाराजस्य समयः स एवेति सिद्धम् ॥ ४ ॥

ध्वन्यालोकग्रन्थस्य कर्ता राजानकश्रीमदानन्दवर्धनाचार्यः कश्मीरमहाराजस्यावन्तिवर्मणः समय आसीत् । अवन्तिवर्मा वैक्रमे सप्तपञ्चाशदधिकनवशततमे (९५७) वर्ष आसीत् । इदं राजतरङ्गिणीग्रन्थात्सिद्धम् । तस्माद्ध्वन्यालोकग्रन्थो भोजमहाराजसमयात्पूर्वं निर्मित इति सिद्ध्यति ॥ ५ ॥

काव्यालंकारसूत्रग्रन्थकर्ता वामनो ध्वन्यालोकात्प्राक्तनः। कस्मादित्युक्तौ ध्वन्यालोकस्य प्रथमोद्योते "वामनाभिप्रायेणायमाक्षेपः" इत्युक्तम् । अपिचायं वामनो विक्रमार्कस्याष्टमशतकादर्वाक्तनः । कुत इत्युक्तौ, विक्रमार्कस्याष्टमे शतके कन्नोजनगरस्य राजा यशोवर्मा बभूव । तस्य पण्डितो भवभूतिर्नाम कविरभवत् । तन्निर्मित उत्तररामचरितनामकग्रन्थो वर्तते । तत्रत्यश्लोकं वामनः स्वीयग्रन्थ उदाजहार। अयं वामनः कश्मीराधिपस्य जयापीडस्य मन्त्री बभूव ॥ ६ ॥

काव्यालंकारग्रन्थस्य कर्ता रुद्रटः। सोपि भोजमहाराजात्प्राक्तनः। कुत इत्युक्तौ काव्यालंकारग्रन्थस्थं पद्यं भोजमहाराजः स्वनिर्मितसरस्वतीकण्ठाभरणनामकग्रन्थ उदाहृतवान् ॥ ७ ॥

वाग्भटकृतो वाग्भटालंकारनामकग्रन्थो वर्तते ॥ ८ ॥

जयदेवकृतश्चन्द्रालोकनामकग्रन्थो वर्तते ॥ ९ ॥

भानुदत्तकृतोऽलंकारतिलकनामको ग्रन्थोऽस्ति ॥ १० ॥

एतेषां ग्रन्थानां समयनिर्णायकं नोपलभ्यते किंचित् ॥

भोजमहाराजस्य पश्चात्काव्यप्रकाशो मम्मटेन प्रणीतः। यतः काव्यप्रकाशकार उदात्तालंकारप्रकरणे—

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ॥
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥ १ ॥

इति भोजयशोवर्णनपद्यमुदाजहार। काव्यप्रकाशोऽतीव प्रसिद्धः प्रतिष्ठितश्च ग्रन्थः। अस्यैकविंशतिष्टीका उपलभ्यन्ते। कथ्यते च लोकैरस्य द्विपञ्चाशट्टीका विद्यन्त इति। काव्यप्रकाशग्रन्थस्तु मम्मटप्रणीत एव। परं कारिकास्तु कस्यचिदन्यस्यैव ग्रन्थस्य सन्ति। कुत इति चेत्काव्यप्रकाशस्य प्रारम्भे मम्मट एव "ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत्परामृशति" इत्युक्त्वेमां कारिकां लिलेख—

"नियतिकृतनियमरहितां
ह्लादैकमयीमनन्यपरतन्त्राम् ॥
नवरसरुचिरां निर्मिति-
मादधती भारती कवेर्जयति ॥१॥"

यो ग्रन्थकारो निजनिर्मितकारिकाव्याख्यानं करोति स उक्तरीत्या न लिखति। एवं लेखनं त्वितरग्रन्थीयकारिकार्थमेव भवितुमर्हति। अन्यच्चैतत्कारिकाकारः केवलं लक्षणान्येवाह, उदाहरणानि नादात्, अत एवासु कारिकासु क्रमशो निरन्तरं लक्षणान्येवोपलभ्यन्ते ॥

यथा—

"उपमानोपमेयत्व एकस्यैवैकवाक्यगे ॥
अनन्वयो विपर्यास उपमेयोपमा तयोः ॥ १ ॥" इति॥

मम्मटेनासां कारिकाणां व्याख्या कृता । उदाहरणानि च प्रदत्तानि । अत एव मम्मटः कारिकाः खण्डशो लिखितवान् ॥

"उपमानोपमेयत्व एकस्यैवैकवाक्यगे ॥
अनन्वयः" ॥

एतावल्लिखित्वाऽनन्वयस्योदाहरणं प्रददौ । तदनन्तरं च विपर्यासोपमार्थं ॥

"विपर्यास उपमेयोपमा तयोः" ॥

इति लिखित्वोदाहरणमदात् । एवं बहुषु स्थलेष्वस्ति । काव्यप्रकाशे लक्षणकारिका न मम्मटप्रणीताः, किं त्वन्यग्रन्थोद्धृताः । अतो वयं प्रायस्तु "काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्" इति लेखिष्यामः । क्वचिच्च लाघवार्थं "काव्यप्रकाश इदं लक्षणम्" इति लेखिष्यामः ॥ ११ ॥

राजानकरुय्यककृतोऽलंकारसर्वस्वग्रन्थः ॥ १२ ॥

शोभाकरकृतोऽलंकाररत्नाकरग्रन्थः ॥ १३ ॥

राजानकजयरथकृताऽलंकारसर्वस्वटीका विमर्शिनी ॥ अयं जयरथः कश्मीरदेशभूपतिराजराजस्य मन्त्री बभूव ॥ १४ ॥

अप्पयदीक्षितकृतः कुवलयानन्दनामकग्रन्थः । अयं चातीव प्रसिद्धतरः । अस्मिन्ग्रन्थे लक्षणोदाहरणकारिकाः प्रायश्चन्द्रालोकग्रन्थस्यैव । उक्तं च कुवलयानन्दकारेणैव—

"येषां चन्द्रालोके दृश्यन्ते लक्ष्यलक्षणश्लोकाः ॥
प्रायस्त एव तेषामितरेषां त्वभिनवा विरच्यन्ते।" इति।

किं चाप्पयदीक्षितकृत एव चित्रमीमांसानामको ग्रन्थो वर्तते।स च समाप्तो न जातः ॥ १६ ॥

विश्वनाथकृतः साहित्यदर्पणनामको ग्रन्थः ॥ १७ ॥

गोविन्दठक्कुरकृतः काव्यप्रदीपनामको ग्रन्थः ॥ १८ ॥

हेमाचार्यकृतोऽलंकारचूडामणिनामको ग्रन्थः ॥ १९ ॥

विद्यानाथकृतः प्रतापरुद्रीयनामको ग्रन्थः। अयं प्रतापरुद्रस्तैलङ्गदेशै-

कप्रदेशे हनुमत्कोण्डानामकनगरस्य राजाऽऽसीत्। तन्नाम्ना विद्यानाथेनायं ग्रन्थो रचितः। तैलङ्गभाषायां "कोण्डा" इति पर्वतस्य नाम। "हनुमत्कोण्डा" इति शब्दसमुदायार्थस्तु हनुमत्पर्वत इति ॥ २० ॥

विश्वेश्वरकृतोऽलंकारकौस्तुभग्रन्थः ॥ २१ ॥

यशस्ककृतोऽलंकारोदाहरणग्रन्थः ॥ २२ ॥

विश्वनाथदेवकृतः साहित्यसुधासिन्धुनामको ग्रन्थः ॥ २३ ॥

केशवमिश्रकृतोऽलंकारशेखरग्रन्थः ॥ २४ ॥

त्रिशूल्युपनामकजगन्नाथकृतो रसगङ्गाधरनामकग्रन्थः ॥ २५ ॥

इमे सर्वे ग्रन्थाः काव्यप्रकाशस्य पश्चात्प्रणीताः। अयं जगन्नाथपण्डितस्तैलङ्गदेशीय आसीत्। अयं दिल्लीश्वरस्य शाहजहांनामकयवनस्य पण्डित आसीत्। दिल्लीशोऽस्मै महाकविराजपदवीं महापात्रपदवीं च ददौ। दिल्लीशोऽनेकवारमेनं सुवर्णेन तोलयित्वा सुवर्णमस्मै प्रददौ। एवमनेकवारममूल्यरत्नैर्मुखमस्य पूरयामास। अयं जगन्नाथोऽष्टादशे विक्रमशतक आसीत् ॥

उपरि लिखितपञ्चविंशतिसंख्याकग्रन्थान्विचार्य मयायं ग्रन्थो निर्मितः। भाषायां तु भरतमतानुसारेण चन्द्रालोकग्रन्थस्य च्छायया भाषाभूषणनामकः साहित्यग्रन्थः सर्वेभ्यः पूर्वं मरुपतिराष्ट्रवरपूर्वमहाराजयशवन्तसिंहेन निर्मितः। अयं महाराजो वैक्रमे त्र्यशीत्यधिकसप्तशततमे (१७८३) वर्षे माघकृष्णचतुर्थ्यामजनि ॥

"मूलं तु वेदास्तत्पश्चाद्भरतो बादरायणः।  
भोज इत्यादयश्चक्रुर्व्याख्यानं बहुविस्तरम् ।१।  
प्रथमो लोकभाषायां यशवन्तधराधिपः।  
भाषाभूषणनामानं ग्रन्थं चक्रे महामतिः ।२।"

विरुद्धमतीयैर्बहवः संस्कृतग्रन्था विनाशिताः। अतो नाट्यशास्त्राऽग्निपुराणातिरिक्ता अतिप्राचीनग्रन्था नोपलभ्यन्ते। विद्यायां सहायता तु यूरोपदेशीयमहाशयैः कृता ॥

धन्या यूरोपदेशीया जीर्णोद्धारविधायकाः ॥  
ग्रन्थानां हितकर्तारश्चिरं शासतु मेदिनीम् ॥ १ ॥

केचनालंकाराः कैश्चिद्ग्रन्थकारैर्नोक्ताः। तस्य कारणानि त्रीणि

भवितुमर्हन्ति । पूर्वं तावत्तेषामलंकाराणामनुपलब्धिः। उपलब्धौ वा तन्मत्या तेषु चमत्काराभावः । अलंकारान्तरेऽन्तर्भावबुद्धिर्वेति । येन ग्रन्थकृता नवीनोऽलंकारो लक्षितः, तेन चोक्तमेवायमलंकारो मया लक्षित इति । यथा विकल्पविधानस्यानादित्वेपि तत्रालंकारत्वं सर्वस्वकारेणैव लक्षितम्। अतस्तेन स्वकीयग्रन्थे "पूर्वैरविवेचितोयमलंकारो मया दर्शितः" इत्युक्तम् ॥

# साहित्यशास्त्रप्रयोजनम् ॥



इदं साहित्यशास्त्रमनेकप्रयोजनकत्वादत्यन्तमादरणीयम् । उक्तं च—

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यःपरनिर्वृतये कान्तासंमिततयोपदेशयुजे ।" इति।

उपदेशस्त्रिविधो भवति । प्रभुसंमितो मित्रसंमितः कान्तासंमितश्चेति । जगदनित्यत्वविषय इदं वेदस्य वचनम्—

"यो वै भूमा तदमृतं अथ यदल्पं तन्मर्त्यम् ।" इति ॥

अयमुपदेशो राजाज्ञासदृशः । अवश्यकर्तव्यत्वात् । महाभारतस्येदं वचनम्—

"अहन्यहनि भूतानि प्रविशन्ति यमालयम् ।
शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्यमतः परम् ।" इति ॥

अयं मित्रोपदेशतुल्यः । कुत इत्युक्तौ विविच्य कथनात् । साहित्यस्येदं वचनम्—

यो नक्षत्रगणैर्वृतो यदभितो जाता चकोरस्तुति-
र्यस्तापं च तमश्च दूरमकरोद्योऽवर्षदत्रामृतम् ।
यं दृष्ट्वापि शिला द्रुता किमपि यः कस्मात्कदाप्यंशुभि-
र्नाकर्षत्तटमद्य याति जलधेरेकः स चन्द्रः प्रगे ॥

अयमुपदेशः कान्तोपदेशसदृशः। मनोरञ्जकत्वात्। ईदृशमुपदेशमतीव मन्यते मनः॥ उपदेशप्रयोजनं स्वङ्गीकारकारयितृत्वम्॥

संध्यासमये शयनकर्ता दरिद्रो भवतीतिधर्मशास्त्रवचनम्। दिवसनिशयोः संधिः संध्येत्युच्यते। लिङ्गपुराणस्योपरिभागे षष्ठाध्यायस्य पञ्चषष्टितमे श्लोकेऽलक्ष्मीपातिदुःसहं प्रति मार्कण्डेयमुनेरुक्तिः—

"पादशौचविनिर्मुक्ताः संध्याकाले च शायिनः।
संध्यायामश्नुते ये वै गेहं तेषां समाविश॥ १॥" इति॥

अयं प्रभुसंमितोपदेशः। एतद्धर्मशास्त्राज्ञानुसारेण चोक्तं केनचिद्विदुषा—

"संध्याकाले तु राजेन्द्र! कर्माण्येतानि वर्जयेत्।
आहारं मैथुनं निद्रां स्वाध्यायं च विशेषतः॥ १॥
आहारे तु भवेद्रोगो मैथुने दुष्टसंततिः।
निद्रायां च दरिद्रत्वं स्वाध्याये जड़ता भवेत्॥ २॥" इति॥

अयं स एवोपदेशो मित्रसंमितः। इममेवोपदेशं रघुवंशकाव्ये प्रातरजराजानं जागरयन्वन्दी करोति—

"निद्रावशेन भवताप्यनवेक्ष्यमाणा
पर्युत्सुकत्वमबला निशि खण्डितेव।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः॥ १॥" इति॥

अयमुपदेशः कान्तासंमितः। मनोहरत्वात्। अन्य उपदेशा मनोहरा न भवन्ति। उक्तं हि केनचिन्नीतिविदा—

"हितं मनोहारि च दुर्लभं वचः॥" इति॥

"यदि सूर्योदयात्प्राङ्न जागरिष्यसि चेद्दरिद्रो भविष्यसि" इत्येवमेवोक्तेऽयमुपदेशो महानरुचिकरो भवति। अरुचिकरोपदेशस्य तु न साफल्यम्। अत्र धर्मशास्त्रोपदेशस्य पर्यायेण कथनात्पर्यायोक्त्यलंकारः॥

"सुतीव्रां कुरुते बुद्धिं विचारं चातिनिर्मलम्।

अतः सकलशास्त्रेभ्यः साहित्यं हितकृन्मतम् ॥”

वाणीं[1] विना जगद्व्यवहार एव न प्रसरेत् । तदुक्तं दण्ड्याचार्येण

“वाचामेव प्रसादेन लोकयात्रा प्रवर्तते ॥” इति ॥

पुनरप्यूचे—

“इदमन्धं तमः कृत्स्नं जायते भुवनत्रयम् ॥
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥” इति ॥

सा वाणी अलंकारमन्तरा रम्या न भवति । तदुक्तमग्निपुराणस्यार्थालंकाराणामारम्भसमये भगवता वेदव्यासेन—

“अलंकरणमर्थानामर्थालंकार इष्यते ॥
तं विना शब्दसौन्दर्यमपि नास्ति मनोहरम् ॥
अर्थालंकाररहिता विधवेव सरस्वती ॥” इति ॥

अनेन व्यासवचनेन वाङ्मात्रस्यालंकारस्यावश्यकत्वे सिद्धे वेदवचनस्यापि तत्सिद्धम् । वेदवचनेप्यलंकारग्रहणमस्ति । यत्र यत्र वेदवचस्यलंकारो वर्तते तत्र तत्र रमणीयता वर्तते ॥

यथा—

“अस्माकमुत्तमं कृधि श्रवो देवेषु सूर्य ॥
वर्षिष्ठं द्यामिवोपरि”। इति ॥

अस्य भावार्थस्त्वयम् । हे मनुष्याः ! यथाऽऽकाशे सूर्यो महांस्तथा विद्याविनयोन्नत्योत्तमैश्वर्यमुत्पादयध्वम् । अत्रोपमालंकारः ।

“आत्मानं रथिनं विद्धि शरीरं रथमेव तु ॥
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ १ ॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ॥
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ १ ॥” इति ॥

अत्र च वेदवचने “रूपकविन्यस्तगृहीतेः” इति वेदान्तसूत्रेण भगवता वेदव्यासेन रूपकालंकारः प्रदर्शितः ॥

---

[1] आकृति

[*] वाणी

## ॥ संकेतः ॥

अन्यनिर्मितकाव्योदाहरणे "इदमेतस्य" इति लेखिष्यामः । काव्यकर्तृनामापरिज्ञाने तु "इति कस्यचित्कवेः" इति लेखिष्यामः ॥

## ॥ छन्दोविचारः ॥

छन्दसां मानं तु जिह्वा । उक्तं च केनचिच्छन्दोविदा—

"जिब्भा जाणादि छन्दो ॥
जिह्वा जानाति च्छन्दः ॥"

अपि च च्छन्दसां तुला श्रवणम् । उक्तं च केनचिच्छन्दोविदा—

"तिलार्धेऽपि समा तिष्ठेन्न तुला स्वर्णतोलने ॥
छन्दोभङ्गं तथा श्रोत्रं सहते न मनागपि ॥"

प्रथमं जिह्वाया मानेन च्छन्दसां रचना जाता । ततश्च च्छन्दोऽनुसारेण मात्रावर्णगणान्विचार्य च्छन्दसां लक्षणानि विहितानि । न तु पूर्वं लक्षणानि विरच्य च्छन्दांसि विहितानीति । इदं त्वनुभवसिद्धम् । शब्दानुसारेण शब्दसाधनं, न तु शब्दसाधनानुसारेण शब्दा इति । अष्टाक्षरचरणं छन्दोनुष्टुबित्युच्यते । तत्र च श्लोकच्छन्दसः श्रुतबोधे कालिदास इदं लक्षणमाह—

"श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् ॥
द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥" इति ॥

एतदनुसारेण—

"विधुशरीरसंदर्शाज्जगदाप परां मुदम् ॥"

अत्र षष्ठो गुरुः, पञ्चमो लघुः, प्रथमचरणे सप्तमो गुरुः, इति श्लोकलक्षणस्य सत्त्वेऽपि ॥

"विधुमण्डलसंदर्शाज्जगदाप परां मुदम् ॥"

इत्यस्योच्चारणवन्न सम्यगुच्चारणं भवति । न च श्रवणसहत्वम् । तस्माच्छन्दोरचनाभिज्ञा जिव्हा, साक्षी च श्रवणमिति समीचीनोऽयं पन्थाः ॥

इतिश्रीमन्मरुमण्डलमुकुटमणिमहाराजाधिराजराजराजेश्वर जी, सी, एस, आई, यशवन्तसिंहाज्ञानुसारेण कविराजमुरारिदानविरचिते यशवन्तयशोभूषणनामकग्रन्थे भूमिकानिरूपणं नाम प्रथमाकृतिः समाप्ता ॥ १ ॥



श्रीगणेशाय नमः ॥
श्रीजगदम्बायै नमः ॥

# अथ काव्यस्वरूपनिरूपणालङ्कृतिः ॥



कविरिति वेदैर्गीतं ध्यात्वा साक्षात्परात्परं देवम् ॥
काव्यस्वरूपमधुना निरूप्यते भूभुजाधीश ॥ १ ॥

## काव्यस्वरूपम् ॥



काव्यस्यालंकारा निरूपयिष्यन्ते, ततः संक्षेपतः काव्यस्वरूपं लक्षयामः ॥ कुङ्धातोरिप्रत्यये कृते कविशब्दो निष्पन्नः। "कुङ् शब्दे" इति शास्त्रेण कुङ्धात्वर्थः शब्दः। कविशब्दार्थस्तु शब्दकर्ता। शब्दो द्विविधः। ध्वन्यात्मको वर्णात्मकश्च। ध्वन्यात्मको वीणानादादिः। वर्णात्मकस्तूच्चार्यमाणान्यकाराद्यक्षराणि। तावपि पृथग्द्विविधौ। रमणीयावरमणीयौ च। तथा च रमणीयवर्णात्मकशब्दकर्तरि कविशब्दस्य रूढिः। कवेस्तादृशं कर्म काव्यम्। परमेश्वरोपि कविः। तत्र प्रमाणं तु—

"कविर्मनीषी परिभूः स्वयंभूः ॥"

इति श्रुतिः। एवं च परमेश्वरस्य कवित्वात्तत्कृतवेदोपि काव्यमिति सिद्धम्। अपि च सर्वव्यापीत्यादिविशेषणैः परमेश्वरं स्तुवन्वेदः परमेश्वराय कविरिति विशेषणमपि दत्तवान्। अनेनेदमपि सिद्ध्यति, कविरत्यन्तश्लाघनीय इति। रामायणमहाभारतभागवतादयोपि काव्यानि। रामायणे तु प्रतिसर्गं "आदिकाव्ये" इति समाप्तौ लिखितमेव। एषां काव्यत्वादेतन्निर्मातारः कवय इति स्फुटमेव। उक्तं च प्राचीनैः—

"जाते जगति वाल्मीकौ कविरित्यभवद्ध्वनिः।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥१॥" इति॥

मनुष्यच्छायानुसारेण काव्यनिरूपणं कुर्वन्तः केचन प्राचीनाः "शब्दः शरीरमर्थ आत्मा" इति मन्यन्ते। तदेवोक्तं सहृदयधुरंधरध्वनिकारेण—

"अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः॥
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ॥१॥" इति॥

अभिधेयार्थो वाच्यप्रायत्वाल्लक्ष्यार्थश्चोभावपि वाच्यावेव। प्रतीयमानस्तु व्यङ्ग्यार्थः। केचन प्राचीनाः शब्दार्थयोरुभययोः काव्यस्य शरीरत्वं व्यङ्ग्यस्य चात्मत्वं मन्यन्ते। तदाह प्रतापरुद्रीयग्रन्थे विद्यानाथः—

"शब्दार्थौ मूर्तिराख्यातौ जीवितं व्यङ्ग्यवैभवम्।
हारादिवदलंकारास्तत्र स्युरुपमादयः॥ १ ॥" इति॥

मम तु मतं, विद्यानाथस्य मतं समीचीनमिति। निरर्थकः शब्दः काव्यं न भवति, अतः शब्दार्थौ मिलित्वा काव्यम्। न च वाच्यं, त्वयैव "रमणीयार्थप्रतिपादकः शब्दः काव्यम्।" इति काव्यलक्षणं स्वीकरिष्यते, पुनश्चात्र शब्दार्थौ मिलित्वा काव्यं भवतीति कथमुच्यते इति? कुत इति चेन्न तत्र केवलशब्दस्य काव्यत्वविवक्षा, किं तु रमणीयार्थं प्रतिपादयञ्छब्दः काव्यमिति। शब्दवाच्यार्थयोः शरीरवत्स्थूलत्वाच्छरीरत्वम्। लक्ष्यार्थोऽपि च वाच्यार्थतुल्य एव। यथास्थिमांसादिसंयोगाच्छरीरस्थितिस्तथैव च शब्दार्थसंयोगात्काव्यनिष्पत्तिः। वाच्यार्थलक्ष्यार्थापेक्षया व्यङ्ग्यार्थस्य सूक्ष्मत्वाज्जीवमयत्वम्। एवं मा वद, व्यङ्ग्यस्य जीवत्वेऽव्यङ्ग्यकाव्यस्य निर्जीवत्वान्मृतवत्परिहरणीयता स्यादिति। कुत इति चेत्, लोके पाषाणादिमयी निर्जीवमूर्तिरपि रमणीयत्वेन ग्राह्या भवति। लोके कतिचिच्छ्लाघनीयपदार्था ये सजीवमूर्तावुपलभ्यन्ते, ते निर्जीवमूर्तौ नोपलभ्यन्ते। तथैव कतिचिच्छ्लाघनीयपदार्था ये निर्जीवमूर्तावुपलभ्यन्ते ते सजीवमूर्तौ नोपलभ्यन्ते। तदेतत्प्रत्यक्षसिद्धम्। साहित्यशास्त्रे सजीवमूर्तिरिव निर्जीवमूर्तिरपि रमणीयतया ग्राह्या भवति। उक्तं चासमालंकारोदाहरणे प्राचीनैः—

"न तन्मुखस्य प्रतिमा चराचरे॥" इति॥

यथावा—

"न काचिन्मन्दिरे मूर्तिः न राजान्तःपुरेऽबला ।
यादृश्युदयपूर्मध्ये काचिद्बाला विलोक्यते ॥ १ ॥"

अनेनैवाभिप्रायेण विद्यानाथः काव्यस्य शरीरमुक्तश्लोके मूर्तित्वेनोक्तवान् । व्यङ्ग्यं विनापि काव्यत्वं तु रमणीयतामात्रेण सिद्ध्यति ॥ यथा—

"औन्निद्र्यान्निशि राधिका सुशयिता प्रातस्तदा व्युत्क्रमा-
दास्योरःस्थलनाभिजानुचरणाङ्गुष्ठे सुसक्तामृजुम् ॥
वेणीं चम्पककार्मुके शिथिलितां मौर्वीं द्विरेफैः कृतां
मन्ये शंभुजयं विधाय बलिना कामेन युद्धेऽधुना ॥ १ ॥"

"शब्दार्थौ मूर्तिराख्यातौ व्यङ्ग्यं वै काव्यजीवितम् ॥
गुणदोषौ तु तौ[1] वेवालंकारोऽलंकृतिर्नृप ॥ २ ॥"

यथा मनुष्य उदारतादयो गुणाः सन्ति, तथा काव्ये प्रसादादयो गुणा भवन्ति। गुणशब्दार्थस्तु स्वाभिमुखीकरणम् । उक्तं च चिन्तामणिकोषकारेण "गुण आमन्त्रणे" इति । काव्यस्य प्रसादादयो गुणा अपि सहृदयान्स्वाभिमुखीकुर्वन्ति । काव्ये गुणस्यावश्यकताप्रदर्शनार्थं भगवान् वेदव्यास इदमाज्ञापयामासाग्निपुराणे—

"अलंकृतमपि प्रीत्यै न काव्यं निर्गुणं भवेत् ।
वपुष्यललिते स्त्रीणां हारो भारायते परम् । २। "इति।

यथा मनुष्ये शारीराः पङ्गुतादयो दोषा आत्मविषयकाश्च कृपणतादयो दोषाः सन्ति, तथा काव्ये श्रुतिकट्वादयः शब्ददोषा अपुष्टार्थादयश्चार्थदोषा भवन्ति । ते च सर्वथा वर्जनीयाः । दोषनिवृत्तेरावश्यकताप्रदर्शनार्थं भगवान्वेदव्यासो दोषस्येदं स्वरूपमाह—

" उद्वेगजनको दोषः सभ्यानां स च सप्तधा। " इति।

---

* निशि औन्निद्र्याद्राधिका प्रात सुशयिता । तदा प्रात आस्योरःस्थलनाभिजानुचरणाङ्गुष्ठे व्युत्क्रमादृजु सक्ता वेणीं बलिना कामेन युद्धे शंभुजय विधाय द्विरेफैः कृतां मौर्वीं चम्पककार्मुके शिथिलिता (शिथिलीकृता)मिति मन्य इत्यन्वय ॥

[1] तौ गुणदोषौ ॥

हारादिवच्छोभाकरत्वादुपमादयोऽलंकारा भवन्ति । ननु काव्यस्य शरीरत्वकल्पनं तूपमाद्यलंकाराणां लोकालंकारन्यायेनालंकारत्वसंपादनायादृतम् । यदि शब्दस्य वाच्यार्थलक्ष्यार्थयोश्च शरीरत्वं व्यङ्ग्यार्थस्य चात्मत्वं स्वीक्रियते तदा व्यङ्ग्यार्थस्य शोभाकराणां शब्दालंकाराणामर्थालंकाराणां च लोकालंकारन्यायेनालंकारता न स्यात्; लोकेऽलंकारव्यवहारस्तु शरीरशोभाकराणां, न त्वात्मशोभाकराणामिति ? चेच्छृणु । एवं सूक्ष्मविचारकरणे तु मनुष्यशरीरं त्वस्थ्यादिमयं भवति । लौकिकालंकाराश्च रत्नसुवर्णादिमया भवन्ति । किं चानुप्रासोपमाद्यलंकारास्तु काव्यस्य शरीरात्ममया एव भवन्ति; अर्थाच्छब्दार्थमया एव भवन्ति । एवं च लौकिकालंकारसाम्यमुपमाद्यलंकाराणां न घटते । तस्माद्यत्किंचित्साम्यमादाय काव्यस्य मनुष्येण साम्यमुपपादनीयम् । आह च भगवान् वेदव्यास उपमाप्रकरणे—

"किंचिदादाय सारूप्यं लोकयात्रा प्रवर्तते ।" इति ॥

दण्ड्याचार्येणाप्युक्तम्—

"यथाकथंचित्सादृश्यं यत्रोद्भूतं प्रतीयते ।
उपमा नाम सा ॥" इति ।

रसगङ्गाधरकारः काव्यस्येदं लक्षणमाह—

रमणीयार्थप्रतिपादकः शब्दः काव्यम् " ॥ इति ॥

"शब्दो रमणीयार्थप्रतिपादक इह हि कथ्यते काव्यम् ।
लक्षणमेतच्छ्रेष्ठं प्रदृश्यते मरुधराधीश ॥ १ ॥"

## ॥ काव्यप्रकाराः ॥



काव्यप्रकाशगतकारिकाकारेण काव्यप्रकारा उक्ताः ।

"इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः ॥"

वाच्याद्व्यङ्ग्येऽतिशयिनि सतीदं काव्यमुत्तमम् । उत्तमं काव्यं बुधैर्ध्वनिरित्युच्यते । उक्तकाव्यस्य ध्वनिमत्त्वाद्ध्वनिरिति व्यवहारः ॥

"अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ॥"

व्यङ्ग्ये वाच्यादनतिशायिनि, अर्थात्समे न्यूने वासति मध्यमं काव्यम्। इदं काव्यं गुणीभूतव्यङ्ग्यत्वाद्गुणीभूतव्यङ्ग्यमित्यप्युच्यते ॥

"शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥"

व्यङ्ग्यं विना शब्दचित्रत्वे वाच्यार्थचित्रत्वे वाऽवरं काव्यम्।

"अवरश्चरमः" इति चिन्तामणिकोषकारः । अत्रावरशब्दस्तृतीयकक्षावचनः। मध्यमकाव्यं त्वनयोर्मध्यवर्ति । भगवान्भरतस्तूत्तमकाव्यस्येदं लक्षणमाह—

"मृदुललितपदाढ्यं गूढशब्दार्थहीनं
जनपदसुखबोध्यं युक्तिमन्नृत्ययोज्यम् ॥
बहुकृतरसमार्गं संधिसंधानयुक्तं
स? भवति शुभकाव्यं नाटकप्रेक्षकाणाम् ॥२॥" इति ॥

शब्दस्य तस्यां भाषायामप्रचलितत्वं गूढत्वम्। "बहुकृतरसमार्गम्" इत्यस्यायमाशयः। यस्मिन्काव्ये स्थले स्थले रसः क्षरति। यथा पुष्कलजलपर्वतात्स्थले स्थले निर्झराः क्षरन्ति। अत्र रसशब्देन त्वानन्दमात्रस्य विवक्षा। न तु ब्रह्मानन्दसहोदरानन्दस्य । अन्यथा शृङ्गारादिरसरहितवाण्यां काव्यत्वहानिः प्रसज्येत । उक्तं हि भगवता वेदव्यासेनाग्निपुराणे—

"लक्ष्मीरिव विना त्यागान्न वाणी भाति नीरसा" इति।

अत्रापि नीरसशब्देन सामान्यानन्दाभावविवक्षा ॥ "नृत्ययोज्यम्", इत्यस्येदं प्रयोजनं, नृत्यसमये तालादिभिः सामञ्जस्यं यथा स्यात्। नाटके संधेरिदं लक्षणम्—

"अन्तरैकार्थसंबन्धः संधिरेकान्वये सति ॥" इति ॥

यथा शरीरमेकः पदार्थः, तस्मिन्नस्थ्नामनेके संधयः। तदुक्तं योगवासिष्ठे—

"इदं शरीरं शतसंधिजर्जरं
पतत्यवश्यं परिणामदुर्वहम्।
किमौषधं पृच्छसि राम दुर्मते

निरामयं ब्रह्म रसायनं पिब ॥ १ ॥ ” इति ॥

नाटके पञ्च संधयो भवन्ति । मुखं प्रतिमुखं गर्भो विमर्ष उपसंहृतिश्चेति । अत्र प्रयोजनाभावादेषां लक्षणानि न प्रदर्शितानि । काव्यं हि द्विविधम् । दृश्यं श्रव्यं च। उक्तं साहित्यदर्पणकारेण—

“ दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ॥
दृश्यं तत्राभिनेयम् ॥ ” इति ॥

कस्यचिदवस्थाया अनुकरणमभिनय इत्युच्यते ॥

“ श्रव्यं श्रोतव्यमात्रं तत्पद्यगद्यमयं द्विधा ॥”इति ॥

श्रव्यकाव्याद्दृश्यकाव्ये नृत्ययोज्यता संधिसंधानयुक्तता चेत्येतावन्मात्रं वैलक्षण्यम् । भगवान्भरतः काव्यस्वरूपमतीव प्रशस्तमाह । कविभिरीदृशान्येव काव्यानि कर्त्तव्यानि ॥

“मृदुललितपदाढ्यं गूढशब्दार्थहीनं
जनपदसुखबोध्यं युक्तियुक्तं च यत्स्यात् ॥
बहुकृतरसमार्गं राजराजेश्वर्य !
भरतमुनिमतेन श्रेष्ठकाव्यं प्रदिष्टम् ॥१॥ ”

भगवतो भरतस्य मते द्वितीयतृतीयश्रेणीकाव्यमेतस्यैव लक्षणस्य तारतम्येन ज्ञेयम् ॥

शब्दचित्रं यथा—

“पुच्छोच्छालनसंरम्भात्स्वच्छतां सरितां पतेः ॥
यो दूरीकृतवानच्छः स पायात्स्वच्छचेतसः ॥ १ ॥”

अत्रानुप्रासमात्रसत्त्वाच्छब्दचित्रत्वम् । चित्रलेखवच्छब्दस्य चित्रत्वमित्यर्थः । पुच्छोच्छालनाज्जलनिधेः कलुषीकरणान्मत्स्यावतारस्य लोकोत्तरपराक्रमस्य व्यङ्ग्यत्वेऽप्यासमाप्तेरस्मिन् काव्येऽनुप्रासस्य निर्वाहकरणात्कवेर्निर्भरो मुख्यतयाऽनुप्रास एव ॥

अर्थचित्रं यथा—

“ विनिर्गतं मानदमात्ममन्दिरा-
द्भवत्युपश्रुत्य यदृच्छयापि यम् ॥

सरसंभ्रमेन्द्रद्रुतपातितार्गला
निमीलिताक्षीव भियाऽमरावती ॥ १ ॥"

अत्रोत्प्रेक्षालंकार एव कवेर्निर्भरः, न तु राजरतिभावरूपव्यङ्ग्ये, अतो वाच्यचित्रत्वम् ॥

## ॥ अभिधा ॥

शब्दस्त्रिविधः । वाचको लक्षको व्यञ्जकश्चेति । तत्र संकेतितार्थस्य साक्षादभिधायको वाचकः । यथा–घटशब्दो घटत्वजातौ तद्विशिष्टायां वा कम्बुग्रीवादिमद्व्यक्तौ पूर्वं गृहीतसंकेतः श्रवणसमनन्तरं बाधबुद्ध्यादिव्यवधानमन्तरा घटत्वादिबोधं जनयन्वाचक इत्युच्यते । एवमन्येपि वाचकशब्दा ज्ञेयाः । वाचकशब्दस्यार्थो वाच्यार्थः । वाचकशब्द एवं रीत्यार्थबोधानुकूला शब्दनिष्ठा शक्तिरभिधेत्युच्यते । सा च "अस्माच्छब्दादयमर्थो बोद्धव्यः" इति नामकर्त्तुरिच्छा । शक्तिश्च वृत्तिर्व्यापार इति चोच्यते । कारणं यद्द्वारा कार्यमुत्पादयेत्स व्यापार इत्युच्यते । यथा घटोत्पत्तौ घटः कार्यम्, कुलालदण्डचक्रादयः कारणानि, तानि च भ्रम्यादिद्वारा घटमुत्पादयन्ति ततो भ्रम्यादयो व्यापारः । एवमत्र शब्दःकारणम् । अर्थबोधः कार्यम् । अभिधालक्षणाव्यञ्जना व्यापारः ॥

"वाचकः प्रोच्यते शब्दः साक्षादर्थस्य वाचकः ॥
शक्तिस्तस्येश्वरकृतः संकेतोऽथाभिधीयते ॥ १ ॥"

अभिधा संकेतापरपर्यायः । अभिधाव्यापारबोध्योऽर्थो मुख्यार्थो वा च्यार्थो नामार्थोऽभिधेयार्थ इत्युच्यते ॥

## ॥ लक्षणा ॥

मुख्यार्थबाधे मुख्यार्थयोगे च सति रूढ्या प्रयोजनविवक्षया वाऽभिधेयार्थातिरिक्तमर्थं बोधयञ्छब्दो लक्षक इत्युच्यते । यथा–"गङ्गायां

घोषः" इत्यत्र घोषस्य प्रवाहे स्थित्यभावादन्वयबाधो मुख्यार्थस्य प्रवाहस्य संबन्धश्च गङ्गातटे लक्षणीये वर्तते, शैत्यपावनत्वादिप्रयोजनं च घोषे विवक्षितमित्युक्तनिमित्तसाहाय्येन तटं बोधयन् गङ्गाशब्दो लक्षक इत्युच्यते। तटबोधानुकूला लक्षकगङ्गाशब्दे या शक्तिः सा लक्षणेत्युच्यते। "लक्षदर्शनाङ्कनयोः" इति शास्त्रेण लक्षधात्वर्थो दर्शनम्। करणे ल्युट्। "लक्ष्यतेऽनया" इति लक्षणाशब्दव्युत्पत्तिः। लक्षणा तु मुख्यार्थबाधो मुख्यार्थस्य लक्ष्यार्थेन सह संबन्धः प्रयोजनं चेति सामग्र्याऽन्यार्थस्य स्फुरणम्॥ इयं लक्षणा जहत्स्वार्थाऽजहत्स्वार्था चेति द्विविधा। या स्वशक्यार्थं परित्यजति सा जहत्स्वार्था। यथा "गङ्गायां घोषः" इत्यत्र गङ्गाशब्दः प्रवाहरूपमुख्यार्थं परित्यज्य लक्षणया तटरूपमर्थान्तरं बोधयति। इयं लक्षणलक्षणेति चोच्यते। या लक्षणा मुख्यार्थं न परित्यजति साऽजहत्स्वार्था। इयमुपादानलक्षणेत्यप्युच्यते॥

यथा—

"कुन्तेषु मरुभूपस्य प्रविशत्सु पुरे रिपोः।
पलाय्य रिपवो याता न पुनः पुरमागताः॥ १॥"

अत्र प्रवेशक्रियाकर्तृत्वस्य स्वातन्त्र्येण कुन्तेष्वचेतनत्वादन्वयासंभवेन मुख्यार्थस्यान्वयबाधान्मुख्यार्थबाधः। मुख्यार्थरूपकुन्तसंबन्धश्च कुन्तधरेषु लक्षणीयेषु वर्तते। प्रयोजनं च कुन्तधरेषु कुन्तवद्दारुणत्वम्। इत्येतत्सामग्रीसत्त्वात्कुन्तशब्देन कुन्तधरे लक्षणया कुन्तविशिष्टः प्रतिपाद्यते। तथा च कुन्तरूपमुख्यार्थमपरित्यज्यैव धर्मिरूपार्थान्तरस्याप्यभिधानादजहत्स्वार्थेयं लक्षणा। "गङ्गायां घोषः" इत्यत्रापि गङ्गाशब्देन गङ्गातटस्य बोधनान्मुख्यार्थरूपप्रवाहस्य परित्यागाभावादजहत्स्वार्थता स्यादिति नाशङ्कनीयम्?। मुख्यार्थपरित्यागश्चात्र विधेयान्वितत्वेन मुख्यार्थविषयकबोधजनकत्वाभावः। एवं च प्रवाहस्य तटोपलक्षणतया भानेपि तत्र घोषान्वयबोधाभावाद्विधेयरूपघोषान्वितत्वेन मुख्यार्थप्रवाहस्य भानाभावरूपमुख्यार्थपरित्यागोऽक्षत एवेति सा जहत्स्वार्थैव। कुन्तेष्वित्यत्र पुरुषद्वारा कुन्तानामपि प्रवेशान्वयसंभवेन तत्त्यागाभावादजहत्स्वार्था। इमे लक्षणे प्रयोजनवत्यौ। विवक्षितप्रयोजनसिद्ध्ये

लाक्षणिकशब्दप्रयोगः। प्रयोजनरहिता तु रूढेत्युच्यते। यथा "कर्मणि कुशलः" इत्यत्र कुशं लातीति व्युत्पत्त्या कुशलशब्दस्य योगार्थः कुशलवनकर्ता। तस्य विवेचकपुरुषे बाधात्तत्र निरूढा लक्षणा। सा चानादिप्रयोगशालित्वादभिधातुल्या। अत्र प्रयोजनं न किंचित्। एवं नवीनप्रयोगः कर्तुं न शक्यते। एवं च लक्षणाबोध्योऽर्थो लक्ष्यार्थ इत्युच्यते। लक्षणा त्वनेकविधैः संबन्धैर्भवति। "गङ्गायां घोषः" इत्यत्र प्रवाहतटयोः संयोगः संबन्धः। कुन्ताब्विस्यत्र कुन्तरूपशक्यार्थस्य कुन्तधररूपलक्ष्यार्थस्य च धार्यधारकभावः संबन्धः॥

"यशवन्तमहाराजो विद्यते कल्पपादपः॥"

इत्यत्र कल्पवृक्षस्य राजराजेश्वरयशवन्तसिंहस्य च प्रथमोपस्थिताभेदस्य बाधान्मुख्यार्थबाधः। लक्षणीयेन कल्पवृक्षसदृशेन राज्ञा कल्पवृक्षस्य वाच्यार्थस्यौदार्यगुणसंबन्धः। प्रकाशकारादयः सर्वे प्राचीना गुणसंबन्धमूलकत्वे गौणी, इतरसंबन्धमूलकत्वे शुद्धेति लक्षणाया द्वैविध्यमाहुः। मम मते तन्न समीचीनम्। एवं संबन्धभेदेन लक्षणाभेदाङ्गीकारे संबन्धानामनेकत्वाल्लक्षणाया अप्यानन्त्यं प्रसज्येत। गुणसंबन्धे गौणी, इतरसमग्रसंबन्धे शुद्धेति द्वैविध्यस्यैवाङ्गीकारे न काचिद्युक्तिर्विद्यते।

"मुख्यार्थबाधे तद्योगे प्रयोजनविवक्षया।
लक्ष्यते तु ययाऽन्योऽर्थः सा शक्तिर्लक्षणा मता॥
जहत्स्वार्थाऽजहत्स्वार्था चेति सा द्विविधा नृप॥ १॥"

## ॥ व्यञ्जना ॥

---

वाच्यार्थलक्ष्यार्थातिरिक्तार्थबोधकः शब्दो व्यञ्जक इत्युच्यते। तस्मिञ्छब्द उक्तार्थबोधानुकूलं व्यापारं वहतः प्राचीना अञ्जनरूपमङ्गीचक्रुः। तदेवोक्तं काव्यप्रकाशगतकारि "

कः " इति । " अञ्जू व्यक्तौ ।" करणे ल्युट् । "अज्यतेऽनया" इति व्युत्पत्त्या, अव्यक्तव्यक्तीकरणमञ्जनशब्दार्थः । वि विशेषार्थे । तथा चाञ्जनविशेषो व्यञ्जनसमुदायार्थः । अञ्जनं बहुप्रकारकं भवति । तत्र कज्जलादिकं घटादीनां स्फुटप्रकाशकम् । सिद्धाञ्जनं लोकान्तरदेशान्तरादीनां प्रकाशकम् । निध्यञ्जनं भूमिष्ठनिधिप्रकाशकम् । इदमञ्जनमभिधालक्षणाभ्यामबोधितार्थं प्रकाशयति. अतोऽस्या वृत्तेर्नाम व्यञ्जनेति, अर्थादञ्जनविशेष इति । व्यञ्जनाबोध्योऽर्थो व्यङ्ग्यार्थो ध्वन्यर्थ आक्षेपार्थः सूच्यार्थः प्रतीयमानार्थ इत्यादिनामभिरुच्यते । व्यङ्ग्यार्थो व्यञ्जकशब्दस्य साक्षादर्थोऽपि न भवति । न च वाच्यार्थबाधादिना व्यञ्जकशब्देन व्यङ्ग्यार्थो लक्ष्यते; किंत्वञ्जनन्यायेन दूरस्थार्थप्रदर्शनं क्रियते, यथोक्तलोकाञ्जनविशेषो भूमिष्ठवसुचयं देशान्तरस्थपदार्थांश्च प्रदर्शयति । एवं रीत्यैतेषां त्रयाणामप्यर्थानां परस्परमत्यन्तं वैलक्षण्यम् । व्यङ्ग्यार्थप्रत्यायिकां वृत्तिं भगवान्वेदव्यास आक्षेपरूपां ध्वनिरूपां चाहाग्निपुराणे—

"श्रुतेरलभ्यमानोऽर्थो यस्माद्भाति सचेतनः ।
स आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यतः ॥" इति॥

अयमस्यार्थः । यस्माद्धेतोः श्रुतेः श्रवणमात्रादेव लभ्यमानोऽर्थोऽर्थाच्छब्दादज्ञातोऽर्थः सचेतनोऽर्थात्प्रकाशमानः सन् भासतेऽतः स आक्षेप इत्युच्यते । ध्वनिनाऽर्थाद्वर्णविवेकं विना च यतो व्यज्यतेऽतोऽयमर्थो ध्वनिरित्यप्युच्यते । आक्षेपशब्दार्थश्च "आ समन्तात् क्षिप्यते प्रेर्यत इत्याक्षेपः" इति। ध्वनिना व्यज्यत इत्यस्यायमाशयः । वर्णसंकेतादिमन्तराऽस्यार्थस्य बोधो भवतीति । वर्णविवेकं विना यो दुन्दुभिझल्लर्यादिशब्दः श्रूयते स ध्वनिरिति कथ्यते । एतादृशध्वनिरूपशब्देन संकेतबाधादिमृते नृपगमनादिदेवपूजनाद्यर्थः प्रतीयते । तथैव संकेतबाधादिकं विना योऽर्थः प्रतीयते स ध्वनिन्यायेन ध्वन्यर्थ इत्युच्यते ॥

यथा—

"*उअ णिच्चलणिप्पन्दा भिसिणीपत्तम्मि रेहइ बलाआ।
णिम्मलमरगयभाअणपरिट्ठिआ संखसुत्तिव्व॥ १ ॥"

अत्र स्थाननिर्जनता व्यङ्ग्योऽर्थः। सचात्र न केनापि शब्देन संकेतितः। न च बाधादिना प्रतीयते,किं तु ध्वनिन्यायेनास्यार्थस्य प्रतीतिर्जायते। अत एव ध्वन्यर्थोपि कथ्यते। अस्मिन्काव्ये निर्जनस्थानरूपार्थस्य साक्षाद्वाचकशब्दाभावान्निर्जनतार्थप्रतीतय उक्तकाव्यं दुन्दुभिझल्लरीध्वनिसदृशम् । व्यञ्जकशब्दे व्यङ्ग्यार्थबोधार्थकव्यापारस्तु सूर्यचन्द्रनिष्ठवस्तुप्रकाशनसामर्थ्यवत्सामर्थ्यविशेषः । तत्र चाञ्जनन्यायसत्त्वाद्व्यञ्जना, ध्वनिन्यायसत्त्वाच्च ध्वनिरिति व्यवहारः । वक्तृदेशकालादिविलक्षणता तूक्तव्यापारेणार्थबोधे सहकारिणी। मम तु मतं; अत्र ध्वनिरूपत्वमेवं रीत्यापि विद्यते, वाच्यार्थबोधानन्तरं व्यङ्ग्यार्थबोधो भवतीति । यथा झल्लरीटङ्कारानन्तरं झङ्कारः। किं च वाच्यार्थापेक्षया व्यङ्ग्यार्थः सूक्ष्मोपि भवति। यथा झल्लरीटङ्कारापेक्षया झङ्कारः । अपि चोक्तटङ्कारझङ्कारयोर्व्यवधानमपि न भवति, तथैव वाच्यार्थव्यङ्ग्यार्थयोर्व्यवधानं न भवति । प्रतीयमानार्थवृत्तिविषयेऽञ्जनन्यायो ध्वनिन्याय आक्षेपश्चेत्येते त्रयः प्रकाराः समीचीनाः। व्यासमतानुसारेण काव्यप्रकाशगतकारिकायां प्रतीयमानार्थवृत्तिं ध्वनिमप्याह—

"इदमुत्तममतिशयिनि
व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः॥" इति ॥

ध्वनिमत्त्वादीदृशं काव्यं ध्वनिरित्युच्यते। मम तु मतं, एतत्कारिकाकारस्यायमभिप्रायः। वाच्याद्व्यङ्ग्येऽर्थाद्ध्वनौ प्रधाने सति ध्वनिरित्युच्यते। यतोऽलंकारशास्त्रकाराणामयं सिद्धान्तः।"प्राधान्येन व्यपदेशा भवन्ति" इति। अस्येदं तात्पर्यं, सामान्येन व्यङ्ग्यव्यवहारस्तु वाच्यादतिशयिव्यङ्ग्यस्यैवेति। व्यङ्ग्यस्य वाच्यसमत्वे न्यूनत्वे वा गुणीभूतव्यङ्ग्यमिति व्यवहारः।यदि कश्चिदेवं बुध्येत। प्रतीयमानार्थस्य वाच्यार्थसमत्वे न्यूनत्वे वा व्यङ्ग्यत्वं, वाच्यार्थादतिशयित्वे च ध्वनित्वम्, इदमेव च ध्वनिव्यङ्ग्ययोर्वैलक्षण्य-

* पश्य निश्चलनिष्पन्दविसिनीपत्रे राजते बलाका। निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥

मिति चेत्प्रमाद एव। कुत इति चेदेतद्वैलक्षण्येन ध्वनिव्यङ्ग्ययोः स्वरूपभेदयोग्यता न भवति॥

"विश्रामे सति वाच्यार्थे वक्त्रादीनां तु योगतः।
अन्योऽर्थो यः प्रतीयेत व्यङ्ग्यः सोऽत्र निगद्यते॥ १॥
तदर्थबोधशक्तिस्तु बहुधा कथ्यते नृप।
व्यञ्जनेति ध्वनिश्चेति ह्याक्षेपश्चेति दृश्यताम्॥ २।"

प्राचीना लक्षणायाः प्रयोजनं व्यङ्ग्यमङ्गीकुर्वन्ति; परं तु मम मते तत्र व्यङ्ग्यसदृशचमत्कारस्याभावात्तस्य प्रधानव्यङ्ग्ये ग्रहणमसमीचीनम्। व्यञ्जना द्विविधा। शब्दव्यञ्जना, अर्थव्यञ्जना चेति॥

शब्दव्यञ्जना यथा—

"वाहिनी मरुनाथस्य मिलिता सर्वतोमुखी॥
अरिवृन्देन नृत्यन्ति कबन्धा यत्र तत्र तत्॥ १॥"*

अत्र वाहिनीकबन्धशब्दावनेकार्थवाचकौ। वाहिनीशब्दः सेनाया नद्याश्च वाचकः। कबन्धशब्दोऽपमूर्धक्रियायुक्तकलेवरस्य जलस्य च वाचकः। राजवर्णनप्रस्तावाद्वाहिनीशब्दस्य सेनायां, कबन्धशब्दस्यापमूर्धक्रियायुक्तकलेवरविशेषेऽभिधायां नियन्त्रितायां सत्यां व्यञ्जनया वाहिनीशब्दान्नदीप्रतीतिः, कबन्धशब्दाज्जलप्रतीतिश्च भवति; इयं शाब्दी व्यञ्जना। यतोऽत्र वाहिनीशब्दस्थाने सेनाशब्दस्य, कबन्धशब्दस्थानेऽपमूर्द्धक्रियायुक्तकलेवरशब्दस्य न्यसने नद्या अपां च प्रतीतिर्न भवति। अपि च बहुमुखतया नदीमिलनाज्जलोच्छ्रायप्रतीतौ सत्यामरिवृन्दे समुद्रताप्रतीतिर्भवति। सा तु बहुमुखतया नदीमिलनाजलोच्छ्रायरूपयाऽर्थव्यञ्जनया भवति। ईदृशीं शब्दव्यञ्जनां प्रदर्शयन्त्यः काव्यप्रकाश इमाः कारिकाः सन्ति॥

"अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते॥
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्॥१॥
संयोगो विप्रयोगश्च साहचर्यं विरोधिता॥

* "मरुनाथस्य वाहिनी अरिवृन्देन मिलिता, तत्तस्माद्धेतोः कबन्धा नृत्यन्ति" इति सबन्धः॥

अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ॥
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥" इति ॥

क्रमेण यथा—

"सशङ्खचक्रो हरिः" इत्यत्र हरिशब्दस्येन्द्रादिनानार्थकस्य शङ्खचक्रसंयोगाद्विष्णौ वाचकत्वनियमनं भवति ॥ "अशङ्खचक्रो हरिः" इत्यत्र शङ्खचक्रवियोगेन हरिशब्दस्य विष्णौ वाचकत्वनियमनम् ॥ "रामलक्ष्मणौ" इत्यत्रानेकार्थस्य रामशब्दस्य लक्ष्मणसाहचर्याद्रघुनाथे वाचकत्वनियमनम् । संयोगशब्दार्थः सम्यग्योग इति । यथा शङ्खचक्रादीनां विष्णुकरस्य च संयोगः । साहचर्यं च सह विहरणमात्रम् ॥ "सिंहनागौ" इत्यत्रानेकार्थस्य नागशब्दस्य सिंहेन विरोधसंबन्धाद्गजे वाचकत्वनियमनम् ॥ 'स्थाणुं भज भवच्छिदे"। स्थाणुशब्दार्थः शाखापत्रादिरहिततरुः, शिव इति च। तथा चात्र भवच्छेदप्रयोजनबलेन स्थाणुशब्दस्य महेश्वरे वाचकत्वनियमनम् ॥ "सर्वं जानाति देवः" इत्यत्र राजप्रकरणाद्देवशब्दस्य राज्ञि वाचकत्वनियमनम् ॥ पूजाप्रकरणे चेद्देवतायाम् ॥ "कुपितो मकरध्वजः" । लिङ्गं संयोगातिरिक्तसंबन्धेन परपक्षव्यावृत्तो धर्मः । मकरध्वजशब्दार्थः कामः, समुद्रश्च । कोपलिङ्गेन कामे वाचकत्वनियमनम् ॥ समुद्रस्य जडत्वात्तस्मिन्वास्तविककोपस्यासंभवः । कोपस्तु चेतनधर्मः । स च चेतनमन्तरा न भवति ॥ "अमरा निर्जरा देवाः" इत्यत्र राजादिनानार्थकस्य देवशब्दस्यामरनिर्जरशब्दसामीप्यादिन्द्रादिदेवेषु वाचकत्वनियमनम् ॥ "मधुना मत्तः कोकिलः" । इत्यत्र मकरन्दादिनानार्थकस्य मधुशब्दस्य कोकिलमत्तकरणसामर्थ्याद्वसन्ते वाचकत्वनियमनम् ॥ "कान्ता ते संमुखी भवतु" । संमुखशब्दार्थो मुखस्य संमुखीकरणं प्रसन्नता च । अत्राशीर्वादौचित्यात्संमुखशब्दस्य प्रसादे वाचकत्वनियमनम् । औचित्यं च प्रकृतकार्ययोग्यता ॥ "अत्र देवो विराजते" इत्यत्र राजधानीरूपदेशविशेषश्चेद्देवशब्दस्य राज्ञि वाचकत्वनियमनम् । तीर्थादिदेशविशेषश्चेद्देवतायाम् ॥ "चित्रभानुर्विभाति" इत्यत्र दिवससमयश्चेत्सूर्ये वाचकत्वनियमनम् । रात्रिसमयश्चेदग्नौ ॥ व्यक्तिः पुल्लिङ्गादिः । "मित्रं भाति" इत्यत्र मित्रशब्दस्य क्लीबलिङ्गत्वेन सुहृदि

वाचकत्वनियमनम् ॥ "मित्रो भाति" इत्यत्र पुल्लिङ्गत्वेन मित्रशब्दस्य रवौ वाचकत्वनियमनम् ॥ स्वर उदात्तादिः । "इन्द्रशत्रुः" इत्यत्र पूर्वपदोदात्तत्वे "इन्द्रः शत्रुर्यस्य" इत्यस्मिन्नर्थे वाचकत्वनियमनम् । उत्तरपदोदात्तत्वे "इन्द्रस्य शत्रुः" इत्यस्मिन्नर्थे वाचकत्वनियमनम् ॥ इत्थं संयोगादिभिरेकस्मिन्नर्थेऽभिधानियमने सति याऽन्यार्थप्रतीतिर्भवति तत्राऽभिधा न हेतुः। उक्तरीत्याऽभिधाया नियन्त्रितत्वात् । नापि लक्षणा। मुख्यार्थबाधादिसामग्र्यभावात् । अपि तु व्यञ्जनैव व्यापारः । अनेकार्थवाचकशब्दमन्तरापि शब्दव्यञ्जना भवति ॥

यथा—

"निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्॥ १॥"

अत्र वाच्यार्थो वापीस्नानम् । व्यङ्ग्यार्थस्तु नायकेन सह दूत्या रमणम् । स च प्राधान्येनाधमपदेन व्यज्यते । शब्दव्यञ्जनायामर्थोऽपि सहकारितयेष्टः । तथाप्यत्र प्राधान्यं तु शब्दस्यैवेति काव्यप्रकाशकारमतम् । मम तु मतं,अत्रार्थस्य प्राधान्यं,शब्दः सहकारीति। कुत इति चेदधमशब्दं विनाप्यत्रान्यसंभोगदुःखितनायिकायाः प्रतीतिर्भवति ॥

यथा—

"अक्ष्णोरञ्जनमान्ध्यमश्रुनिसृतिं संबोधयत्येव ते
निःश्वासानिलरंहसा च बत ते निर्मृष्टरागोऽधरः ।
प्रातश्चन्द्रवदाननस्य सुषमा क्षीणाऽभवत्प्रेयसा
संदेशः किमतीव खिन्नहृदया नाङ्गीकृतश्चेत्सखि॥ १॥"

अत्र सहृदयहृदयमेव साक्षि ॥ अर्थान्तरप्रतीतिजनकीभूतार्थनिष्ठा शक्तिरार्थी व्यञ्जना । अभिधया लक्षणाया वा वाक्यार्थबोधानन्तरं वक्तृबोद्धव्यादिवैशिष्ट्यबलेन या त्वन्यार्थप्रतीतिर्भवति तत्र व्यञ्जनापरपर्यायोऽर्थनिष्ठो व्यपारो निमित्तम् । तदुक्तं काव्यप्रकाशगतकारिकाकारेण—

"वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः।
प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम्।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा"॥ इति।

वक्ता वचनोच्चारणकर्ता। बोद्धव्यो यमुद्दिश्य किंचिदुच्यते सः। काकुः स्वरविकारः। वाक्यं पदसमुदायः। वाच्यमभिधेयार्थः। अन्यसंनिधिर्वक्तृश्रोत्रतिरिक्ततटस्थसंनिधानम्। प्रस्तावः प्रकरणम्। देशः स्थलविशेषः। कालः समयविशेषः। वैशिष्ट्यं वैलक्षण्यम्। वक्रादीनां वैलक्षण्यात्प्रतिभाजुषामन्यार्थबुद्धिजनको व्यापारो व्यक्तिरेव, व्यञ्जनैवेत्यर्थः॥ प्रतिभा तु—

"स्फुरन्ती सत्कवेर्बुद्धिः प्रतिभा सर्वतोमुखी॥"

इति लक्षणाद्बुद्धिविशेषः॥

क्रमेण वक्त्रादिवैशिष्ट्येन व्यञ्जना यथा—

"रविरस्तं गतः॥"

इत्यत्र दूती वक्त्री चेदभिसरणं प्रक्रम्यतामिति व्यङ्ग्यम्। शिष्यं प्रति गुरूक्तिश्चेत्पूजादिसाधनमारभ्यतामिति व्यङ्ग्यम्॥

"देहो क्षणभङ्गुरः॥"

इत्यत्र बोद्धव्यः कामुकश्चेद्विषयोपभोगाद्विरामो माभूदिति व्यङ्ग्यम्। साधुश्चेद्विषयाद्विरम्य धर्मोऽनुष्ठेय इति व्यङ्ग्यम्॥

"तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥"

भीमं बोधयितुं युधिष्ठिरप्रेषितसहदेवं प्रति भीमस्येदं वचनम्। युद्धे त्वरमाणं भीमसेनं प्रति युधिष्ठिरः खिन्न इति जानन्तं सहदेवं प्रत्यस्य वचनस्य सरलत्वे निरर्थकत्वात्काकुस्वरकल्पनम्। तेन मयि खेदो न युक्तः, कुरुषु खेदो युक्त इति व्यज्यते॥

"तइआ मह गंडत्थलमिलिअं दिट्ठिं ण णेसि अण्णत्तो।
एण्हिं सच्चेअ अहं ते अ कवोला ण सा दिट्ठी॥ १ ॥"

अत्र "तदेदानीं" पदसमुदायरूपवाक्यवैशिष्ट्येन मत्कपोलप्रतिबिम्बितां मत्सखीं पश्यतस्तव दृष्टिर्न निवृत्ता, इदानीं तस्यां निर्गतायां तु न तादृशी दृष्टिरहो ते प्रच्छन्नकामुकत्वमिति व्यङ्ग्यम् ॥

"कदम्बसुरभिर्वातो झिल्लीझङ्कारजृम्भणम्।
अस्त्यद्य तडिदुल्लासो गर्जनं च पयोमुचाम्॥"

अत्र वाच्यार्थानां सुरतानुगुण्यरूपवैशिष्ट्यात्सुरतेच्छा व्यङ्ग्या ॥

"नियोजयाति मां श्वश्रूरजस्रं गृहकर्मणि।
सखि सायं भवेत्किंचिदवकाशो हरार्चने॥"

अत्र वक्त्री नायिका। श्रोत्री च सखी। अत्रान्यस्य विटपुरुषस्य सांनिध्यं चेत्संकेतसमयसूचनं व्यङ्ग्यम् ॥

"विलम्बो न हि कर्तव्यः कर्तव्येषु कदाचन।"

अत्र कवीनां प्रसङ्गश्चेद्दानम्, रिपुप्रसङ्गश्चेद्युद्धम्, सुहृत्प्रसङ्गश्चेन्मेलनं व्यङ्ग्यम् ॥

"सीतया सह धर्मात्मा लक्ष्मणानुचरो वशी।
न्यवसच्चित्रकूटेऽस्मिन् रामः कमललोचनः॥"

अत्रोक्तदेशस्य वैलक्षण्यान्निवासदानस्नानाद्याचरणमत्र कर्तव्यमिति व्यङ्ग्यम् ॥

"शुष्कान्पल्लवयंस्तप्तान्शीतयन् पूरयंस्तथा।
रिक्तं प्रावृड्ऋतुर्भाति राजेश्वरतया मम॥"

इति योधपुराधीशराजराजेश्वरमानसिंहनिर्मितनाथचरित्रग्रन्थे ॥ कविसंप्रदाये वसन्त ऋतुराज इत्युच्यते। राजराजेश्वरमानसिंहेनैवं वर्णनद्वारा प्रावृड्ऋतो राजेश्वरत्वं साधितम्। अस्य काव्यस्य नायिकया नायकेन वाऽनुवादः कृतश्चेत्कालवैशिष्ट्याद्दुद्दीपनाधिक्यं व्यङ्ग्यम्।

---

* तदा मम गण्डस्थलमिलितां दृष्टिं नानैषीरन्यत्र।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः॥ १॥ इति संस्कृतम्॥

"दर्पान्धगन्धगजकुम्भकपाटकूट-
संक्रान्तनिघ्नघनशोणितशोणशोचिः।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः ॥ १ ॥"

कविसंप्रदाये कटाक्षस्य वर्णो नीलोऽभिमतः। अभिहितं च चन्द्रालोकेऽनुगुणोदाहरणे—

"नीलोत्पलानि दधते कटाक्षैरतिनीलताम्" ॥ इति ॥

अथ च कृपाणस्य वर्णोऽपि नील एव। एवं चात्र राज्ञः कृपाणस्य कालीकटाक्षेणोपमादानादतिश्यामतारूपधर्मलुप्तोपमासिद्ध्यनन्तरं क्षणाजगद्भक्षणसामर्थ्यरूपधर्मान्तरं व्यज्यते। अत्रोपमावैशिष्ट्यं निमित्तम्। एवमनेकैर्वैशिष्ट्यैर्व्यङ्ग्यं भवति, अतो "वक्तृबोद्धव्यकाकूनाम्" इति कारिकायामादिपदमुपात्तम् ॥

"*उअ णिच्चलणिप्पन्दा भिसिणीपत्तम्मि रेहई बलाआ।
णिम्मलमरगयभाअणपरिट्ठिआ संखसुत्तिव्व ॥ १ ॥"

अत्र निश्चलनिष्पन्दशब्दयोर्वाच्यार्थस्तु निष्क्रियारूपः। कविरेव वक्ता चेद्बलाकावृत्तान्तवर्णनमात्रं विवक्षितम्। दंपत्योरन्यतरमुद्दिश्यान्यतरवचनं सुरतप्रस्तावे चेद्बलाकाया निर्भयताप्रतीतिर्भवति। तस्या निर्भयताप्रतीतेस्तस्य देशस्य निर्जनता प्रतीयते। निर्जनताप्रतीतेः सुरतप्रार्थना प्रतीयते। अत्र व्यङ्ग्यानां परंपरा। संकेतस्थल एकस्य प्रथममनागमनप्रस्तावश्चेन्निर्जनस्थलप्रतीत्यनन्तरं "त्वमत्र नागतोऽसि" इत्युपालम्भः प्रतीयते। न्यायादिशास्त्रकारैरभिधा लक्षणा चेति वृत्तिद्वयमेवाङ्गीकृतम्। व्यञ्जनावृत्तिस्तु साहित्यशास्त्र एव स्वीकृता। वाच्यार्थलक्ष्यार्थव्यतिरिक्तं व्यङ्ग्यार्थं पृथग्व्यवस्थापयन्सहृदयधुरंधरो ध्वनिकारः—

"प्रतीयमानं पुनरन्यदेव
वस्त्वस्ति वाणीषु महाकवीनाम्।

* पश्य निश्चलनिष्पन्दबिसिनीपत्रे राजते बलाका। निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥

यत्तत्प्रसिद्धावयवातिरिक्तं
विभाति लावण्यमिवाङ्गनासु ॥१॥"

इत्याह। यथाऽङ्गनासु हस्तपादाद्यवयवापेक्षया लावण्यं पदार्थान्तरमानुभविकमस्ति, तद्वद्वाच्यलक्ष्यार्थातिरिक्तो व्यङ्ग्यार्थोऽप्यस्तीत्यर्थः। शब्दार्थोभयवृत्तिरुभयशक्तिमूला व्यञ्जना यथा—

"विजितारिपुरः श्रीमान्विलसत्सर्वमङ्गलः।
राजमौलिरसौ भाति यशवन्तमहीपतिः॥"

राजराजेश्वरपक्षे—विजितारिपुरः, सर्वतो भावेन विलसत्सर्वं, कल्याणयुक्तः, राजमौली राजश्रेष्ठः। महेश्वरपक्षे—विजितवैरिपुरः-विलसत्सर्वमङ्गलया देव्या युक्तः, राजमौलिश्चन्द्रमौलिरित्यर्थः। अत्र राजवर्णनप्रसङ्गाद्राजराजेश्वरेऽभिधायां नियन्त्रितायां व्यंग्यार्थो राजराजेश्वरस्य महादेवेनोपमा, सा च शब्दार्थोभयव्यञ्जनया प्राप्ता। व्यञ्जनाया उभयशक्तिमूलत्वं एवं प्रकारेण बोध्यम्। सर्वमङ्गलशब्दो राजमौलिशब्दश्च परिवर्तनं न सहेते, तेन शब्दशक्तिमूलत्वम्। विजितारिपुर इति शब्दः परिवर्तनं सहते, तेनार्थशक्तिमूलत्वम्। इत्येवं रीत्योभयशक्तिमूलत्वम्।

व्यङ्ग्यं द्विविधम्। प्रधानमप्रधानं चेति। वाच्यार्थापेक्षया व्यङ्ग्यार्थस्य चारुत्वोत्कर्षे व्यङ्ग्यं प्रधानम्। वाच्यार्थापेक्षया व्यङ्ग्यार्थस्य चारुत्वोत्कर्षाभावे, अर्थाद्वाच्यार्थेन समत्वे न्यूनत्वे वाऽप्रधानम्। इदं गुणीभूतव्यङ्ग्यमित्युच्यते। उक्तं च सहृदयधुरंधरेण ध्वनिकृता—

"चारुत्वोत्कर्षनिबन्धना हि वाच्यव्यङ्ग्ययोः
प्राधान्यविवक्षा॥" इति॥

प्रधानं व्यङ्ग्यं द्विविधम्। अविवक्षितवाच्यं विवक्षितवाच्यं चेति। यत्र वाच्यार्थस्य न विवक्षा तद्व्यङ्ग्यमविवक्षितवाच्यम्। लक्षणास्थले प्रयोजनभूतव्यङ्ग्यमविवक्षितवाच्यं भवति। तत्र वाच्यार्थस्य बाधितत्वेन तस्य विवक्षाऽभावात्। एतदेव लक्षणामूलकमित्युच्यते। तद्द्विविधम्। अर्थान्तरसंक्रमितवाच्यं, अत्यन्ततिरस्कृतवाच्यं चेति। अर्थान्तरसंक्रमितवाच्यस्थलेऽजहत्स्वार्था लक्षणा भवति। यथा "कुन्तेषु मरुभूपस्य—" इत्यत्र कुन्तशब्दस्य

लक्षणया कुन्तधरार्थकतया कुन्तरूपवाच्यार्थो धारकरूपार्थान्तरे संक्रमितः। व्यङ्ग्यं तु कुन्तधरेषु कुन्तवद्दारुणत्वम्। अत्यन्ततिरस्कृतवाच्यस्थले जहत्स्वार्था लक्षणा भवति। यथा "गङ्गायां घोष." इत्यत्र केवलं तटस्यैव विवक्षणाद्द्रवार्थस्य प्रवाहस्यान्वयबोधानन्तर्गततया तस्यात्यन्तं तिरस्कारः। व्यङ्ग्यं तु तटे गङ्गावच्छैत्यपावनत्वादिकम्। मम तु मतं, लक्षणायाः प्रयोजनरूपं व्यङ्ग्यं प्रधानव्यङ्ग्यं न भवति; किं तु गुणीभूतव्यङ्ग्यम्। विवक्षितं वाच्यं यत्र व्यङ्ग्य इति व्युत्पत्त्या वाच्यार्थे यथास्थिते सति व्यङ्ग्यं विवक्षितवाच्यम्। एतदेवाभिधामूलकमित्युच्यते। इदमपि व्यङ्ग्यं द्विविधम्। असंलक्ष्यक्रमं संलक्ष्यक्रमं चेति। यत्र सम्यक्क्रमो न लक्ष्यते तदसंलक्ष्यक्रमम्। यत्र क्रमः सम्यग्लक्ष्यते तत्संलक्ष्यक्रमम्। अत्र क्रमस्तु वाच्यार्थबोधानन्तरं व्यङ्ग्यार्थबोधः। यथा झल्लर्याष्टङ्कारानन्तरं झङ्कारः। यथा—"उवणिच्चलनिप्पंदा—" इत्यत्र वलाकावृत्तान्तरूपवाच्यार्थबोधानन्तरं स्थानस्य निर्जनतारूपव्यङ्ग्यार्थस्य बोधो भवति। अत्र वाच्यार्थव्यङ्ग्यार्थयोः क्रमः सम्यग्दृश्यते, तेनास्मिन्पद्ये संलक्ष्यक्रमव्यङ्ग्यम्। संलक्ष्यक्रमं च वस्तुना वस्तु, वस्तुनाऽलंकार इत्यादिव्यङ्ग्यसद्भावे भवति। तत्सविस्तरमग्रे दर्शयिष्यते॥

"परस्परालोकनरज्जुरेषा ह्यट्टान्तरादट्टभुवि प्रबद्धा।
गतागतं निर्भयमत्र यूनोर्नटौ विधत्तो मनसी नितान्तम्॥"

अत्रापि दंपत्योः परस्परावलोकनरूपवाच्यार्थबोधानन्तरं तयोः परस्परं रतिभावरूपव्यङ्ग्यार्थस्य बोधो भवति। यद्यप्यत्र वाच्यार्थव्यङ्ग्यार्थयोः क्रमो वर्तते तथापि शतपत्रपत्रभेदन्यायेन क्रमः सम्यङ्न दृश्यते। एवं रीत्याऽत्रासंलक्ष्यक्रमत्वम्। अनेनैव तात्पर्येणात्र समुपसर्गस्य ग्रहणम्। शतपत्रपत्रभेदन्यायस्त्वयम्। कमलस्य शतं पत्राण्युपर्युपरि क्रमेण विन्यस्य सूच्या भेदने यद्यपि पत्राणां क्रमेण भेदनं भवति तथापि शीघ्रतया भेदनाद्युगपद्भेदव्यवहारः। भावस्य व्यङ्ग्यत्वेऽसंलक्ष्यक्रमत्वम्॥

# अथ भावनिरूपणम् ॥

काव्यं तु कविकृतवर्णनम् । तच्चैहिकामुष्मिकदृश्यवस्तूनां मनोवृत्तेर्वा भवति । मनोवृत्तिर्भाव इत्युच्यते । तदुक्तं चिन्तामणिकोषकारेण "भावो मानसधर्मे" इति । अमरकोषकारोऽप्याह "विकारो मानसो भावः" इति । भावस्य कारणं विभाव इत्युच्यते । विभावशब्दार्थस्तु विशेषेणोत्पत्तिकर्त्ता । विभावो द्विविधः । आलम्बन उद्दीपनश्च । यमवलम्ब्य भाव उत्पद्यतेऽसावालम्बनविभावः । भावमुत्कटतया दीपयति वर्धयतेऽसावुद्दीपनविभावः । भावस्य कार्यमनुभाव इत्युच्यते । अनुभावशब्दार्थस्तु भावस्य पश्चाद्भावी । अनुभावो भावस्य बोधकः । तदुक्तममरकोषकारेण "विकारो मानसो भावोऽनुभावो भावबोधकः" इति ॥

"भावस्तु मनसो धर्मः विभावस्तस्य कारणम् ॥
अनुभावस्तु भावस्य बोधकः कविभिः स्मृतः ॥१॥
आलम्बनोद्दीपनाख्यौ विभावौ कथितौ नृप ।
अनुभावा असंख्येया वाक्चेष्टाविकृतिस्तनोः ॥२॥"

चेष्टा च कटाक्षादिक्रिया । वपुर्विकारश्च स्तम्भस्वेदादिः । भावो मानसधर्मः । स चापरिमितः । तथापि काव्योपयोगितया धुरंधरेणात्र रत्यादय एकचत्वारिंशदेव गृहीताः । दृश्यकाव्ये श्रव्यकाव्ये च लौकिकभावानामेव निबन्धनं भवति । नाटकप्रेक्षकाणां काव्यश्रोतॄणां चास्वादस्यार्थाद्रसस्योत्पादकत्वे भावस्य रसदशास्ति । अन्यथा भावसंज्ञा । नाटकमते स्वादोत्पादका भावा रत्यादयोऽष्टावभिमताः । काव्यमते तु निर्वेदमिश्रणा नवाभिमताः । रत्यादिभाववासनावासितहृदयानां रत्यादयो रसा भवन्ति । अन्यभाववासनावासितहृदयानामन्यभावाद्रसो न भवति । यथा निर्वेदभाववासनावासितहृदयस्य रतिभावाद्रसो नोत्पद्यते ॥

# स्थायिसंचारिविवेकः ॥



नाटकस्य दर्शनमात्रेणैव काव्यस्य श्रवणमात्रेणैव च न रसोत्पत्तिः, किं तु नाटककाव्यनिबन्धितभावज्ञाने रसोत्पत्तिर्भवति । तथा च नाटकद्रष्टुः काव्यश्रोतुश्च रसोत्पत्तिपर्यन्तं रत्यादिभावेष्वितरभावैरनाच्छादितेषु स्थिरेषु सत्सु रसोत्पत्तिर्भवतीति रत्यादिभावानां रसदशायां स्थायिसंज्ञा । तदेवोक्तं दशरूपके—

" सजातीयैर्विजातीयैरतिरस्कृतमूर्तिमान् ।
यावद्रसं वर्तमानः स्थायिभाव उदाहृतः ॥ " इति ।

कान्ताविषयकरतिर्देवताविषयकरतिश्चेत्यादयो रतिभावाः परस्परं सजातीयाः । रतिहास्यादिभावाश्च परस्परं विजातीयाः । नाटकद्रष्टरि काव्यश्रोतरि वैकं रतिभावमनुभवत्यपरो रतिभावो हास्यादिभावो वा तादृशानुभवगोचरश्चेत्पूर्वरतिभावस्तिरस्कृतो भवति । एवमन्यदप्यूह्यम् । तदुक्तं प्रदीपकारेण—

" विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः ।
आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम् ॥ १ ॥ " इति ।

रतिक्रोधादयश्च भावाः परस्परं विरुद्धाः । रतिहास्यादयश्च भावा मिथोऽविरुद्धाः । एवमन्यदप्यूह्यम् । अपि च रत्यादीनां स्थायित्वदशायां रत्यादिभिः सहचरिता भावास्तत्पोषकत्वे संचारिसंज्ञां लभन्ते । संचारिशब्दव्युत्पत्तिस्तु "संचरतीति संचारी" इति । अत्र समुपसर्गार्थः सङ्गः । तदुक्तं चिन्तामणिकोषकारेण " सम् सङ्गे " इति । सहविचरणशीलः संचारीत्यर्थः । अत्र संचारिशब्देनानुचरत्वविवक्षा; न तु पथिकवत्सहगमनमात्रम् । अनुचरश्च दासः । अनुचरशब्दार्थोऽपि "अनुचरति" इति व्युत्पत्त्याऽनुसरणकर्ता । दासकार्यं च स्वामिनः परिचर्या । स्थायिभावेभ्य इतरे भावाः संचारिणो भवन्ति । अपि च रत्यादिस्थायिभावा अपीतरस्थायिभावस्यानुचरदशायां संचारिसंज्ञां लभन्ते । संचारिणो व्यभिचारिण इत्यप्युच्यन्ते । संचारिशब्दार्थः संचारकर्तेत्यपि, अर्थाद्गमनागमनकर्त्ता । एकभावस्थितौ तत्संबन्धिनो-

ऽन्ये भावा मुहुर्मुहुर्भूत्वा विलीयन्तेऽपि । संचारिभावविषये प्राचीनैः फेनबुद्बुदन्यायोऽपि कथितः । यथा रतिभावस्थितौ तत्संबन्ध्युत्कण्ठाभावः कदाचिदुत्पद्यते, पुनश्च तस्य लये चिन्ताभाव उत्पद्यत इति । एवमन्यदप्यूह्यम् । परं तु भावानामेषाप्यवस्था सततसहचारिभाववदनुचरतामाचरति । ननु स्थिरत्वात्स्थायी, सहचरत्वात्संचारीति संज्ञायां सत्यां भावानां रसदशायामेव किमिति स्थायिसंचारिसंज्ञानियमः, इयं संज्ञा तु सर्वत्र भवितुमर्हति । भावानामेष स्वभावः, एकभावस्थितौ तत्संबन्धीतरभावोत्पादे प्रधानः स्थायी, गौणस्तु संचारीति ॥ स्थायिभावानां मुख्यत्वं भगवान् भरतोऽप्याह ॥

"यथा नराणां नृपतिः शिष्याणां च यथा गुरुः ।
एवं हि सर्वभावानां भावः स्थायी महानिह ॥ १ ॥" इति ॥

अपि च गौणभावा मुख्यभावं पोषयन्त्येव ।

यथा—

"भूपावरङ्गसमये मिलितास्तु मुल्ला-
काजीमुखाः सकललोकममुं स्वधर्मे ।
कर्तुं सभास्थितजनैर्विमृशन्ति तस्मि-
न्कालेऽधरो विकसितो मरुभूमिपस्य ॥ १ ॥"

अत्र महाराजस्य हासभावो व्यङ्ग्यः । एतत्काव्यश्रोतुरन्तःकरणं हास्यमयं न भवतीत्यतोऽत्र न हासस्य रसदशा; किं तु भावत्वमेव । तथा चात्र हासभावस्य प्राधान्यात्स्थायित्वम् । एतत्सहचारितया गम्यानामुत्साहासूयादिभावानां संचारित्वमिति ? चेन्न । मनसोऽत्यन्तं चञ्चलत्वात् । तदुक्तं श्रीमद्भगवद्गीतायाम्—

"चञ्चलं हि मनः कृष्ण" ॥ इति ॥

केनचिद्विदुषाप्युक्तम्—

भूतदीपोऽश्वत्थदलं यथा ध्वजपटस्तडित् ।
कौर्मं शिरो दीपशिखा मनोवृत्तिस्तथा चला ॥" इति ।

अन्यभावैरतिरस्कृतः सन् रसोत्पत्तिपर्यन्तं मनसि भावस्थिरताया

यः श्लाघनीयश्चमत्कारः स रसदशातोऽन्यत्र नास्ति । एवं स्थायिपोषणे यः संचारितायाश्चमत्कारः सोपि रसदशातोऽन्यत्र नास्ति । अन्यत्र तु प्रधानस्य पर्यायमात्रं स्थायी, गौणस्य च पर्यायमात्रं संचारी भवेत् । स्थायी तु स्थानी । संचारी त्वतिथिः । स्थानी च गृहपतिः । स च प्रधानः । अतिथिस्तु गौणः । तस्मात्प्राचीनै रसदशायामेव स्थायिसंचारिसंज्ञा स्वीकृता । रसदशां विना भावानां न स्थायिसंचारिव्यवहारः, किं तु सामान्यतया भावव्यवहारः । तदेवोक्तं काव्यप्रकाशगतकारिकाकारेण—

"रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ॥
भावः प्रोक्तः ॥" इति ॥

अत्र रतिशब्देन सर्वे स्थायिभावा विवक्षिताः । अपि च 'देवादिविषयकरतिकथनेनाप्राप्तरसावस्था रत्यादयो विवक्षिताः" इति काव्यप्रदीपकारः स्पष्टीचकार । काव्यप्रकाशगतकारिकाकारस्येदमभिमतं "रसदशामप्राप्ता रत्यादयो भावा भावाः।रसदशां प्राप्ताश्च रत्यादयो भावा रसाः" इति। भगवतो भरतस्येदमभिमतं "रसं विना भावो नास्ति, भावं विना रसो नास्ति" इति । तदेवोक्तं तेन नाट्यशास्त्रे—

"न भावहीनोस्ति रसो न भावो रसवर्जितः ।
परस्परकृता सिद्धिस्तयोरभिनये भवेत् ॥" इति ॥

मम तु मतं, उभयोरपि कथनं सत्यमिति । काव्यप्रकाशगतकारिकाकारस्तु "ब्रह्मानन्दसहोदरः" इति रसस्वरूपमङ्गीकृत्य "रसदशां विना रत्यादयो भावा भावा एव"इत्याह । भगवान् भरतस्तु स्वादमात्रं रसस्वरूपमङ्गीकृत्य "न भावो रसवर्जितः" इत्याह। यतो रमणीयतां विना काव्यत्वमेव न संपद्यते। कुत्रचिद्रसदशां विनापि रत्यादयः स्थायिभावाः, ग्लान्यादयश्च संचारिण इत्युच्यन्ते। एतच्च ब्राह्मणक्षपणकन्यायेन मञ्जूषागतालंकारन्यायेन च संभवति।ब्राह्मणक्षपणकन्यायस्त्वयम्, पूर्वं यो ब्राह्मणः स एव पश्चात्क्षपणको जातः, तस्मिँश्च समये न तस्य ब्राह्मणत्वं,तथापि पूर्वं ब्राह्मणत्वाद्ब्राह्मणक्षपणक इत्युच्यते । मञ्जूषागतालंकारन्यायश्चायम्, कुण्डलादयो मनुष्यस्य शोभाकरत्वादलंकारसंज्ञकाः । अलंकारशब्दार्थश्च शोभाकरत्वम् । मञ्जूषागतालंकारस्य तस्मिन्समये मनुष्यस्य शोभाकरत्वाभावे-

ऽपि तस्मिन् मनुष्यस्य शोभाकरत्वयोग्यतायाः सत्त्वात्तस्मिन्नपि समये सोऽलंकार इत्युच्यते । तथैव रत्यादिषु रसदशायां स्थायित्वयोग्यतायाः, निर्वेदादिषु च संचारित्वयोग्यतायाः सत्त्वात्ते रसदशां विनापि स्थायिनः संचारिणश्चोच्यन्ते । न च रत्यादिनवभावातिरिक्तेषु रसत्वयोग्यता । न चोक्तस्थायिदशां विना रत्यादिषु स्थायित्वम् । न च स्थायिभावसहचारमन्तरा भावानां संचारित्वमित्येतदनुभवसिद्धं, प्राचीनानां संमतं च । केनचिद्भावेन सहान्यभावश्चेत्तस्य गौणत्वम् । तत्र प्रधानस्य भावत्वेन व्यवहार इत्यलंकारशास्त्रसिद्धान्तः । तदेवोक्तं "प्राधान्येन व्यपदेशा भवन्ति" इति । रसदशामप्राप्ता इतरे भावाः प्रधानतायां भावत्वेन व्यवह्रियन्त इति प्राचीनानां सिद्धान्तः । तदेवोक्तम्—

"रसः प्रधानः सर्वत्र भाव एव भवेत्क्वचित् ।
यथा विवाहे दासस्य नृपस्तेन सह व्रजेत् ॥१॥" इति ॥

अत्र रसशब्देन स्थायिभावा गृह्यन्ते । भावशब्देन च संचारिभावाः ॥

यथा—

याम्येका गहनं वनं प्रियतमे कृष्णोऽपि तत्रागते
कृत्वा स्वाननशीतदीधितिकरैस्तापापनोदं मम ॥
यद्वन्मे हृदयं स्मितान्वितदृशाऽहार्षीत्तथा मामसौ
कुर्यात्स्वान्तगतां स्मितेन सहितं गोपीगणानन्ददः ॥ १ ॥

अत्र रतिभावस्य विद्यमानत्वेपि चिन्तायाः प्राधान्यादत्र चिन्ताभावोस्तीति चिन्ताभावस्यैव व्यवहारः । अत्र चिन्ताभावेनापि श्रोतुः स्वादलाभः, परं तु न स रसदशासदृशः । रसदशानन्दविषये साहित्यदर्पणकारः "ब्रह्मानन्दसहोदरः" इत्याह । अपि चात्र चिन्ताभावेन सह रतिभाव उत्कण्ठाभावश्च विद्येते, परं तु रसदशायां सहचारिभावाः स्थायिभावमिव न पोषयतः । अत्र सहृदयहृदयमेव साक्षि । अत्र नायिकाया रतिभावस्यालम्बनविभावो नायकः । किं च "स्वाननशीतदीधितिकरैस्तापापनोदं कृत्वा" इति वचनेनोक्ता नायकस्य चन्द्राननतारूपसुन्दरतोद्दीपनविभावः । सखीं

प्रति नायिकाया इदं वचनं वाच्योऽनुभावः। नायिकानेत्रविकासादिचेष्टा गम्योऽनुभावः। रसशब्दार्थ आस्वादः। तदुक्तं धातुपाठे "रस आस्वादे" इति। "रस्यत इति रसः" इति व्युत्पत्त्याऽऽस्वादविषयीभूतो रस इत्युच्यते। अत्राङुपसर्गोऽभिव्याप्त्यर्थकः। उक्तं चिन्तामणिकोषकारेण "आङ् अभिव्याप्तौ" इति। अभितः सर्वतो व्याप्तिरभिव्याप्तिः। स्वादशब्दार्थो रसग्रहणम्। उक्तं चिन्तामणिकोषकारेण "स्वादो रसग्रहणे" इति। आस्वाद इति शब्दसमुदायार्थस्तु सर्वतो य आस्वाद्यते सः। शाकेन सह लवणमरिचादयोप्यास्वाद्यन्ते, तथात्रापि स्थायिभावेन सह व्यभिचारिभावा विभावा अनुभावाश्चाप्यास्वाद्यन्ते। लोके षड्रसाः। तदुक्तं न्यायशास्त्रे "मधुराम्ललवणकटुकषायतिक्तभेदात्षड्विधः" इति। एते रसा रसनयाऽऽस्वाद्यन्ते। रत्यादयो भावाश्च मनसाऽऽस्वाद्यन्ते। तदेवोक्तं भगवता भरतेन—

"यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम् ॥
आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः ॥१॥
भावाभिनयसंबद्धान्स्थायिभावांस्तथा बुधाः ॥
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः॥"॥ इति॥

भोजनादीनां स्वादोपि रसनादिबाह्येन्द्रियाणां साहाय्यतो मनसैवात्मविषयो भवति। काव्यार्थास्वादस्तु बाह्येन्द्रियसहायतामन्तरा मनसात्मविषयो भवति। स्वाद आनन्दविशेषः। धनपुत्रादिप्राप्तावप्यानन्द उत्पद्यते, परं त्वयमानन्दो न स्वादरूपः। भोजनादिना य आनन्द उत्पद्यते स तु स्वादरूपः। लोके रसनेन्द्रियेण मधुरादिरसानुभवेन य आनन्द उत्पद्यते स स्वाद इति नाम्ना व्यवह्रियते॥ एतन्न्यायेन काव्यनिबद्धया नाटकनिबद्धया वा विभावादिसामग्र्योल्लासितेन रत्याद्यनुभवेन तद्वासनावासितहृदयानां य आनन्द उत्पद्यते स स्वाद इति नाम्ना व्यवह्रियते। अयमानन्द इतरानन्दापेक्षयोत्कृष्टतरः। यथेतरानुभावापेक्षया सात्त्विकानुभावा उत्कृष्टतराः। शोकक्रोधभयजुगुप्साभावा यस्य मनस्युत्पद्यन्ते न तस्यानन्दोत्पादकाः। परं तु ते नाटके काव्ये वा निबद्धाः सन्तः सामाजिकानामानन्दोत्पादका भवन्तीत्यनुभवसिद्धम्। लोके हि बहवः पदार्था

मिलित्वा मुख्यं वस्तु स्वादु कुर्वन्त्येव । यथा लवणमरिचादयो मिलित्वा शाकं स्वादु कुर्वन्ति । एतन्न्यायेनालम्बनविभावा उद्दीपनविभावाः संचारिभावा अनुभावाश्च सर्वे मिलित्वा स्थायिभावं स्वादूकुर्वन्ति। एतद्दशायां च स्थायिभावस्य रससंज्ञा भवति। तदेवोक्तं भगवता भरतेन—

" विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः " ॥ इति ॥

उक्तं च केनचित्प्राचीनेनापि—

"व्यञ्जनौषधिसंयोगो यथान्नं स्वादुतां नयेत् ।
एवं नयन्ति रसतामितरे स्थायिनं श्रिताः ॥१॥" इति॥

व्यञ्जनशब्दार्थो दधिघृतसूपशाकादिः । शाकः षड्विधः ॥

"पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा ।
शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम् ॥१॥"॥ इति ॥

दशरूपकेप्युक्तम्—

"विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः ॥" इति॥

विद्यानाथोप्याह—

विभावानुभावसात्त्विकव्यभिचारिसामग्रीसमुल्लासितः स्थायी भावो रसः॥"॥ इति॥

सात्त्विकशब्दार्थः प्रतापरुद्रीयग्रन्थकर्त्रा विद्यानाथेन लिखितः—

"परगतसुखादिभावनया भावितान्तःकरणत्वं सत्त्वम्। "इति।

भावनाशब्दार्थो ध्यानम् । तदाह चिन्तामणिकोषकारः "भावना ध्याने" इति । "सत्त्वाद्भवाः सात्त्विकाः" इति व्युत्पत्त्योक्तसत्त्वानुभावाः सात्त्विकसंज्ञकाः । नायकविषयिका रतिर्नायिकाया अथवा नायिकाविषयिका रतिर्नायकस्यैकतो भवति, तदपश्चात एकतरस्यान्यतरान्तःकरणनिष्ठनिजरतिध्यानेन वासनायुक्तनिजान्तःकरणेऽन्यतरेण या रतिरुत्पद्यते तस्यामनुभावा अप्युत्कृष्टा भवन्ति । अनुभावाश्च भ्रूनेत्रविकारादयो बहवः । किं चोक्तदशायां तेऽपि भवन्ति; परं तूक्तभावबोधकास्तु

स्तम्भादय एव भवितुमर्हन्ति। कुत इति चेत्तेऽन्यानुभावेभ्य उत्कृष्टतराः। यथा भावानां बहुत्वेऽपि स्थायिभावत्वयोग्या भावास्तु रत्यादयो नवैव। सात्त्विक-भावाश्चाष्टौ सन्ति। तदेवोक्तं भोजमहाराजेन—

"स्तम्भस्तनूरुहोद्भेदो गद्गदः स्वेदवेपथू॥
वैवर्ण्यमश्रुप्रलयावित्यष्टौ सात्त्विका मताः॥१॥" इति॥

स्तम्भो निश्चेष्टता। तनूरुहोद्भेदो रोमाञ्चोद्गमः। गद्गदः स्वरभङ्गः। स्वेदो गात्रप्रस्त्रवणम्। वेपथुः कम्पः। वैवर्ण्यं वर्णस्यान्यथाभावः। अश्रु नेत्र-जलम्। प्रलयश्चेष्टाज्ञाननिराकृतिः। स्तम्भे चेष्टाकरणज्ञानं भवति, परं शरीरस्य जाड्याच्चेष्टा न भवति॥

यथा—

"निकुञ्जप्रान्त एकान्तेऽश्लिष्यत्कान्तां व्रजाधिपः॥
रोद्धुं वाञ्छति सा चैनं करो नाभूद्वशंवदः॥१॥"

स्तम्भादयोऽनुभावा उक्तदशां विनापि भावस्योत्कृष्टतया शृङ्गाररसेऽन्यरसेष्वपि च भवन्ति॥

यथा—

"पलायितुमशक्ता ये तेऽभवँश्चित्रवत्स्थिताः॥
जीवन्महारणे तत्र सूतपुत्रो विलोक्यते॥१॥"

अत्र महाभारते द्रोणाचार्यस्य रात्रियुद्धे पाण्डवसेनासुभटानां स्तम्भो भयस्थायिभावस्यानुभावः। परं तु स्तम्भाद्यनुभावेषु सात्त्विक-त्वयोग्यतात्वात्तादृशदशां विनापि सात्त्विकव्यवहारः। यथा रसदशां-विनापि योग्यतया रत्यादिषु स्थायिव्यवहारः। एवं रीत्या स्तम्भादीनां सर्वत्र सात्त्विकसंज्ञाप्राप्तेः प्राचीना लक्षणेषु सामान्यतयाऽनुभाव इत्यभिधाय विशेषतया सात्त्विक इत्यप्याहुः। धुरंधरः स्त्रीणां भ्रूनेत्रादिविकाररूप-शृङ्गारानुभावानां हावसंज्ञामनेनाभिप्रायेणाह, स्त्रीणामेतेऽनुभावाः कामुक-जनमनसामाकर्षका भवन्तीति। "हूयन्ते रागिणोऽनेनेति हावः" इति व्युत्पत्त्या हावशब्दार्थं आह्वानम्। उक्तं चिन्तामणिकोषकारेण "हाव आह्वाने"

इति । भ्रूनेत्रादिविकाररूपशृङ्गारानुभावाः पुरुषेऽपि भवन्ति परं तु स्त्रीणां चेष्टावत्तच्चेष्टा रम्या न भवतीत्यनुभवसिद्धम् । अत एव धुरंधरोक्ता स्त्रीणामनुभावानां हावसंज्ञा समीचीना । लीलाविलासविच्छित्तिविभ्रमकिलकिञ्चिन्मोट्टायितकुट्टमितविब्बोकललितविहृतय इत्येता दश चेष्टा हावेषु गणिताः । लीलाशब्द आचरणार्थकः । माघे पद्यं चैतत्—

"उदयति विततोर्ध्वरश्मिरज्जा-
वहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम् ॥ "

अत्र स्त्रियाः पुरुषाचरणे लीलाशब्दस्य संकेतः। धुरंधरोऽस्य हावस्य लीलेति नामरूपलक्षणमेवाह । भगवता भरतेन नामेतरद्वक्ष्यमाणलक्षणमभिहितम् । भरतात्पूर्वमुक्तहावो धुरंधरेण लक्षितः । एतच्च भरतस्य लक्षणे " आकथयन्ति लीलाम् " इति कथनेन सिद्धम् । भगवतो भरतस्येदं लक्षणम्—

"अप्राप्तवल्लभसमागमनायिकायाः
सख्याः पुरोऽत्र निजचित्तविनोदबुद्ध्या ।
आलापवेशगतिहास्यविलोकनाद्यैः
प्राणेश्वरानुकृतिमाकथयन्ति लीलाम् ।" इति ॥

इदं लक्षणं भरतप्रणीतनाट्यशास्त्रे नास्ति, तत्राऽन्यदेव लक्षणमुपलभ्यते; परं तु चिन्तामणिकोषकारेण लीलाशब्दप्रसङ्ग उक्तलक्षणं भरतस्य नाम्ना लिखितम् । तस्मादिदं लक्षणं भरतप्रणीतस्य कस्यचिदन्यग्रन्थस्य परंपराप्राप्तमित्यनुमीयते। कोषकाराः प्रमाणप्राप्तिं विना कस्यचिन्नाम न लिखन्ति । भगवतो भरतस्य—

"प्रियध्याननिविष्टात्मा कान्ता भूत्वा तु तन्मयी ।
स्वात्मानं दर्पणे वीक्ष्य सुतरां मुदिताऽभवत् ॥ १ ॥"

एतादृशलभ्योदाहरणानुसारेण लीलाहावस्य हेतुः "वियोगः" इति, सख्याः पुरोविषयकोदाहरणप्राप्त्या "सख्याः पुरः" इति च नियमकरणमसमीचीनम्। यतो लीलाहावः संयोगेऽपि भवति। नायकस्य पुरोऽपि च भवति। किं चैकान्तेऽपि भवति॥

यथा—

"राधा हरिर्हरी राधा भूत्वा संकेत आगतौ।
सहजे सुरते प्राप्तौ विपरीतरतेः सुखम्॥"

वासकशय्यायामभिसारिकायां च संयोगशृङ्गारोऽस्ति। न तु वियोगशृङ्गारः। कुत इति चेद्वियोगस्तु संयोगबाधायां भवति। माने समीपतापि विद्यते, परं तु संयोगबाधासद्भावान्मानो वियोगशृङ्गारस्य प्रकारः। अत्र दंपत्योर्वेषव्यत्यासलीला, सा च नायिकायां हावरूपा; नायके तु तादृशमनोहारित्वाभावादनुभावमात्रम्। अत्र सहृदयानां प्रत्यक्षं प्रमाणम्।

"मौनं गृहीत्वाऽऽस्व हि दत्तपृष्ठः
प्रसादये त्वां चरणे निपत्य।
प्रभो न किं त्वं भवसीह राधा
नन्दात्मजोऽहं रहसि प्रकथ्ये॥ १॥"

अत्र भविष्यल्लीलाहावः। स च संयोगनिष्ठः। किं चोभयत्रापि न सख्याः पुरतः, किंतु नायकस्य पुरतोऽस्ति। अपि च "प्रियध्याननिविष्टात्मा" इत्यत्रैकान्तेऽस्ति। ननु मानस्तु वियोगशृङ्गार एवेति चेन्न। अत्र वास्तवमानस्यासंभवात्। किं तु प्राणेश्वरस्यानुकृतिमिच्छन्त्या नायिकया "मौनं गृहीत्वाऽऽस्व" इत्याद्यनेकानुकृतिः प्रार्थिता॥ अन्यहावानामुदाहरणादीनि ग्रन्थविस्तरभयादत्र न प्रदर्शितानि। प्राचीना अनुभावे हावे चैतद्वैलक्षण्यं वदन्ति "स्फुट संलक्ष्यविकारो भावोऽनुभावः। अल्पसंलक्ष्यविकारो भावो हावः" इति। साहित्यदर्पणकारस्येदं लक्षणम्—

"भ्रूनेत्रादिविकारैस्तु संभोगेच्छाप्रकाशकः।
भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते॥" इति॥

मम तु मतं, अल्पलक्ष्यत्वं स्पष्टलक्ष्यत्वं चेत्येतत्किंचिद्वैलक्षण्यं

प्रकारान्तरत्वसाधकं भवितुं नार्हतीति । उक्तदशास्वेतेऽनुभावाः सात्त्विकपदवीं हावपदवीं च प्राप्नुवन्ति । ईदृक्पदप्राप्त्या च पदार्थः प्रकारान्तरतां न भजते। यथा पाणिग्रहणसमये पुरुषः "विन्दराजः" इति पदवीं प्राप्नोति। तत्र प्रकारान्तरता न भवति । यौवनागमवती मुग्धा, अतिवृद्धिमद्यौवनवती प्रौढा, तयोर्मध्यवर्तिनी मध्येति नायिकाप्रकारान्मन्यमाना एव प्राचीना वाच्यार्थादतिशयचमत्कारवत्प्रतीयमानोऽर्थो ध्वनिः, वाच्यार्थेन समन्यूनचमत्कारवत्प्रतीयमानोऽर्थो व्यङ्ग्यम्, अल्पलक्ष्यो हावः, स्पष्टलक्ष्योऽनुभाव इति स्वरूपभेदं मन्यन्ते। तदेतत्प्रमादविलसितम् । कुत इति चेच्चमत्कारवैलक्षण्यमन्तरा प्रकारान्तरत्वस्याप्यसंभवे वस्तुभेदः कथमुपपद्येत । प्राचीनाः काव्ये भावस्य वचनेन कथनं दोषमाहुः । तदस्माभिर्नेष्यते। भगवान्वेदव्यासो दोषस्येदं लक्षणमाह—

"उद्वेगजनको दोषः सभ्यानां स च सप्तधा॥" इति ॥

एवं च शब्दोपात्तोऽपि भाव उद्वेगजनकश्चेन्न दोषः ।

यथा—

" सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जन्हुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥ १ ॥

अत्र व्रीडादिभावानां शब्देन कथनेप्युद्वेगजनकत्वाभावान्न दोषत्वमित्यनुभवसिद्धम् ।

स्थायिभावा नव ।

स्थायिभावा नव प्रोक्ता महाराज मनीषिभिः ।
रतिर्हासोऽथ शोकश्च क्रोधोत्साहौ भयं तथा ॥
जुगुप्सा विस्मयश्चेति नाट्येऽष्टौ परिकीर्तिताः ।
निर्वेदो नवमः स्थायी काव्ये शान्तस्य संमतः " ।इति।

प्राचीनैः संचारिभावास्त्रयस्त्रिंशदभिहिताः ॥

निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।

आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ १ ॥
व्रीड़ा चपलता हर्षः संभ्रमो जड़ता तथा ।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥ २ ॥
सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ ३ ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ ४ ॥

भोजमहाराजेनापि संचारिभावास्त्रयस्त्रिंशदुक्ताः। परं तु तेन मरणापस्मारौ विहाय स्नेहेर्ष्ये परिगृह्य त्रयस्त्रिंशत्संख्यापूर्तिः कृता। स्नेहस्तु रतेरेव पर्यायः। ईर्ष्या परोत्कर्षाऽसहिष्णुता। असूया च परगुणे दोषारोपः। तस्मादीर्ष्याया अपि परोत्कर्षाऽसहिष्णुतामूलकत्वादसूयायामेवान्तर्भावः। मोह एव मूढतेत्युच्यते। संभ्रम एवावेग इत्युच्यते। औत्सुक्यमेवोत्कण्ठेत्युच्यते। व्याधिरेव गद इत्युच्यते। नाट्ये शृङ्गारादयोऽष्टावेव रसाः स्वीकृतास्तेन तन्मते निर्वेदः संचारिभावत्वेन गणितः। काव्यमते शान्तरसस्यापि स्वीकारान्निर्वेदस्य स्थायिभावत्वेन स्वीकारः।

## अथ रत्यादिभावानामुदाहरणानि प्रदर्श्यन्ते ॥



रतिः प्रीतिः। सा चानेकविधा ॥

देवताविषयिका यथा—

मयूरपिच्छमुकुटो गोपालो मुरलीधरः ।
वनमाली कच्छवेषः सदाऽस्तु हृदये मम ॥ १ ॥

गुरुविषयिका यथा—

संमुखे गुरुगोविन्दौ स्थितौ वन्दे पुरा कमु ।
धन्यः श्रीगुरुदेवोऽयं गोविन्दो येन दर्शितः ॥ २ ॥

राजविषयिका यथा—

गुणान् गृह्णाति यो नित्यं दोषांस्तु न कदाचन ।
प्रतिजन्म भवेन्नाथो यशवन्तधराधिप: ॥ ३ ॥

कान्ताविषयिका यथा—

गजसिंहो गुणान्रूपमाकर्ण्याप्सरसां नृप: ।
तत्र तत्र कृतोत्साहो युद्धं कर्त्तुं प्रवर्त्तते ॥ ४ ॥

अत्र गजसिंहमहाराजस्याप्सरोविषयो रतिभावो व्यङ्ग्य: । अप्सरस आलम्बनविभाव: । तासां रूपं गुणाश्चोद्दीपनविभाव: । अनुभावस्तु तत्र तत्र युद्धकरणम् । अत्र रतेर्व्यङ्ग्याया वाच्यार्थस्य च क्रमस्य सम्यग्बोधो न भवति । यथा—"उत्र णिच्चलणिप्पन्दा—" इत्यत्र वाच्यार्थबोधानन्तरं व्यङ्ग्यार्थस्य बोध: क्रमेण सम्यग्भवति । तस्मादत्रासंलक्ष्यक्रमव्यङ्ग्यम् । एवं भावेषु सर्वत्र ज्ञातव्यम् ॥

हासो यथा—

भूपावरङ्गसमये मिलितास्तु मुल्लां-
काजीमुखा: सकललोकममुं स्वधर्मे ।
कर्तुं सभास्थितजनैर्विमृशन्ति तस्मिन्-
कालेऽधरो विकसितो मरुभूमिपस्य ॥ १ ॥

अत्र प्राक्तनस्य यशवन्तसिंहमहाराजस्य हासभावो व्यङ्ग्य: । सर्वान्भारतवर्षीयाञ्जनान्यवनान्कर्तुं प्रवृत्तानां काजीमुल्लांप्रभृतीनां मिलित्वा मन्त्रणमालम्बनविभाव: । तेषां भाषणादिकमुद्दीपनविभाव: । महाराजस्याधरविकासोऽनुभाव: ॥

शोको यथा—

धर्मध्वजस्य दण्डो भग्नो मानससरश्च संशुष्कम् ।
मन्ये कविहंसानां दिवं गतो मानभूपाल: ॥ १ ॥

अत्र वक्तु: शोकभावो व्यङ्ग्य: । तत्र राजराजेश्वरमानसिंहस्य स्वर्गगमनमालम्बनविभाव: । धर्मवत्त्वादिगुणा उद्दीपनविभाव: । वचनमनुभाव: ॥

क्रोधो यथा—

साँभर्पुरे सैदभटै: सुयुद्धं कुर्वन्प्रहृष्टो ह्यजमल्लभूप: ।
कल्पान्तरुद्रीयललाटचक्षुस्तुल्यज्वलन्नेत्रयुगेन युक्त: ॥

अत्राजीतसिंहमहाराजस्य क्रोधभावो व्यङ्ग्यः। यवना आलम्बनविभावः। तत्कर्तृकयुद्धक्रियोद्दीपनविभावः। नेत्रज्वालाऽनुभावः॥

उत्साहो यथा—

स्फुरद्बाहुर्हृष्टमना विकसल्लोचनाननः।
रणे विवाहवद्धृष्टो यशवन्तमहीपतिः॥ १॥

अत्र राजराजेश्वरयशवन्तसिंहस्योत्साहभावो व्यङ्ग्यः। युद्धमालम्बनविभावः। चक्षुर्मुखविकासादिकमनुभावः॥

भयं यथा—

पुरैव नारीनयनानि विद्विषां
त्रसन्मृगीलोचनसाम्यभाञ्जि।
मरुस्थलाधीश! वनस्थितौ तु
कुतः क्षमा वर्णयितुं कवीशाः॥ १॥

अत्र राजराजेश्वरयशवन्तसिंहस्य रिपुयोषितां वनवासिनीनां भयभावो व्यङ्ग्यः। वनमालम्बनविभावः। दृष्टेरतिचाञ्चल्यमनुभावः॥

जुगुप्सा यथा—

भूमिं बहुनृपैर्भुक्तां मत्वा मानमहीपतिः।
त्यक्त्वा गृहीत्वा संन्यासं प्रतस्थे रैवताचलम्॥ १॥

अत्र राजराजेश्वरमानसिंहस्य वसुमतीविषयकजुगुप्साभावो व्यङ्ग्यः। अनेकैर्भुक्ता भूमिरालम्बनविभावः। भोक्तृभूपनिर्मितसरोवरादिचिन्हान्युद्दीपनविभावः। संन्यासोऽनुभावः॥

विस्मयो यथा—

श्यामासिवल्ली धवलं प्रसूते यशःप्रसूनं मरुवल्लभस्य॥
विलोक्य लोका विनिमेषनेत्रा भवन्ति चित्रैश्च समानवृत्ताः॥

अत्र पश्यतां विस्मयभावो व्यङ्ग्यः। राजराजेश्वरस्य यशवन्तसिंहस्य खड्गलताया उक्तकृत्यमालम्बनविभावः। पश्यतां स्तम्भोऽनुभावः। निर्वेदो वैराग्यम्॥

यथा—

प्रासादं मणिनिर्मितं कुटिमिव त्यक्त्वा पलाशार्जितां
राज्यं दन्तितुरङ्गमप्रभृतिभिर्ऋद्धं च रेणूपमम् ॥
त्यक्त्वाधर्मविलोपनस्य समये मानो महीवल्लभो
यातुं रैवतमुद्यतो मुनिरिव ध्यायन्परं चेतसा ॥ १ ॥

अत्र राजराजेश्वरमानसिंहस्य निर्वेदभावो व्यङ्ग्यः ॥ धर्मच्युतिरालम्बनविभावः। राज्यादित्यागोऽनुभावः। एषूदाहरणेषु रसोत्पत्तेरभावादेते रत्यादयो भावा एव। रसोत्पत्तौ तु तदाकारवृत्तिर्भवति, मनश्च ब्रह्मानन्दसदृशानन्दमग्नं भवति ॥

# अथ ग्लान्यादिसंचारिभावानामुदाहरणानि प्रदर्श्यन्ते ॥



## ग्लानिः ॥ १ ॥

आधिव्याध्यादिभिर्जाता ग्लानिश्चित्तबलच्युतिः ॥

यथा—

उपायान्विविधान्कृत्वा मन्दयत्ना द्विषोऽभवन् ॥ १ ॥

अत्र राजराजेश्वरयशवन्तसिंहस्य रिपूणां ग्लानिभावो व्यङ्ग्यः। अनेकोपायकरणेऽपि कार्यासिद्धिजनितमनःपीडारूप आधिरालम्बनविभावः। मन्दयत्नत्वमनुभावः ॥

## शङ्का २ ॥

वितर्कं तु महाराज शङ्कामाहुर्मनीषिणः ॥

एककोटिकसंदेहो वितर्क इत्युच्यते ॥

यथा—

मानः किं ज्वलयेत्प्रतापदहनज्वालाभिरर्कान्वयः
किं वा मत्तगजैर्विघट्य दलयेत्किं वा खुरैश्चूर्णयेत् ॥
अश्वानामुत वाहयेदरिवधूबाष्पैर्वसिष्ठो मुनि-
र्यो मां स्थापितवान्स चास्पदमिहेत्येषोऽर्बुदः शोचति॥ १॥

अत्रार्बुदाचलस्य वितर्कभावो व्यङ्ग्यः। राजराजेश्वरमानसिंहस्य कोप आलम्बनविभावः। अर्बुदस्य निर्झररूपाश्रुपातः प्रतीयमानोऽनुभावः, अन्यत्रापि प्रतीयमाना विभावादय एवं स्वतो बोध्याः। अत्र विचार्यते। शङ्का-शब्दस्य द्वावर्थौ, त्रासो वितर्कश्च। "शङ्का त्रासे वितर्के च" इति शब्दार्णवको-षवचनस्य चिन्तामणावुपन्यस्तत्वात्। अत्र त्रासविवक्षायां त्रासाच्छङ्का पृथङ्न भवेत्। वितर्कविवक्षायां वितर्कात्पृथङ्न भवेत्। प्राचीनैरनिष्टसंबन्धी वितर्कः शङ्कासंचारीत्युक्तम्। यथोक्तोदाहरणे। इतरवितर्को वितर्कसंचा-रीत्युक्तम्। इतरवितर्कस्येदमुदाहरणम्॥

यदि सा मिथिलेन्द्रनन्दिनी
नितरामेव न विद्यते भुवि॥
अथ मे कथमस्ति जीवितं
न विनाऽऽलम्बनमाश्रितस्थितिः॥ १॥

मिथिलेन्द्रनन्दिनी भुवि भवेत्? अन्यथा मज्जीवनं नोपपद्येत। इत्ये-ककोटिकसंदेहरूपवितर्क इष्टविषयको वितर्कः। तस्माच्छङ्कासंचार्यपेक्षया वितर्कसंचारी विलक्षण इति प्राचीनसिद्धान्तः। मम तु मतं, ईषद्वैलक्षण्यं शङ्कावितर्कयोः पृथक्त्वस्य साधनाय नालम्, किं तु वितर्कप्रकारत्वस्येति। संदेहो द्विविधः। उभयकोटिक एककोटिकश्चेति। तत्रैकस्य संचारित्व-मन्यस्य च नेत्यत्र निमित्ताभावाद्द्वयोरपि संचारित्वं युक्तम्। एककोटिक-संदेहः पूर्वं प्रदर्शितः। उभयकोटिकसंदेहसंचारिता मया प्रदर्श्यते॥
यथा—

सीताऽतिदूरे वितता घनाली
प्राचीमरुद्दारुण एष वाति॥
निष्क्रामतीदं किमु चन्द्रबिम्बं
फणा भुजङ्गस्य गिरेः किमेषा॥ १॥

अत्र संदेहरूपशङ्कासंचारी चन्द्रोदय आलम्बनविभावः। वचन-मनुभावः। मम तु मतं, अत्र शङ्काशब्दार्थः संदेहो बोद्धव्यः। येन प्रकार-द्वयस्यापि संग्रहो भवेत्॥

## असूया ॥ ३ ॥

परोत्कर्षासहिष्णुत्वमसूयामूचिरे बुधाः ।

यथा—

कवयः करिराजत्वमीयुरित्यभिवाञ्छता ।
यशवन्तनृपेणैषां गेहे गेहे गजाः कृताः ॥ १ ॥

अत्र राजराजेश्वरयशवन्तसिंहस्येन्द्रविषयोऽसूयाभावो व्यङ्ग्यः । इन्द्रस्य गजाधिपत्यमाहिमाऽऽलम्बनविभावः । कवीश्वराणां प्रतिगृहं गजकरणमनुभावः ।

## मदः ॥ ४ ॥

मदमेव महाराज मदमाहुर्मनीषिणः ।

यथा—

अव्याहताज्ञो विख्यातकीर्तिः श्लाघ्यकुलोद्भवः ।
घूर्णयन्नयनद्वन्द्वं वर्तते मरुवल्लभः ॥ १ ॥

अत्र राजराजेश्वरयशवन्तसिंहस्य मदभावो व्यङ्ग्यः । अव्याहताज्ञत्वादिकमालम्बनविभावः । नयनघूर्णनमनुभावः ।

## श्रमः ॥ ५ ॥

मनःश्रमः श्रमः प्रोक्तः प्राचीनैः कविसत्तमैः ॥

यथा—

असंख्येयगुणानस्य यशवन्तमहीपतेः ।
वर्णयन्तः कविश्रेष्ठा अनुद्भूतगिरोऽभवन् ॥ १ ॥

अत्र कविवराणां श्रमभावो व्यङ्ग्यः । राजराजेश्वरस्य गुणबाहुल्यमालम्बनविभावः । वाग्रोधोऽनुभावः । ग्लानौ मनोबलस्य क्षतिः, अत्र तु मनसः श्रम इति भेदः ।

## आलस्यम् ॥ ६ ॥

आलस्यमरुचिं विद्धि क्रियासु मरुनायक ।

यथा—

भूमावद्य गुणग्राही यशवन्तनरेश्वरः ।
उत्थाय पठ्यतां बाला वदन्तीत्थं कवीश्वराः ॥ १ ॥

अत्र कविबालानामालस्यभावो व्यङ्ग्यः । गुणग्राहिणो राजान आलम्बनविभावः । बालानां पठने विलम्बोऽनुभावः ।

## दैन्यम् ॥ ७ ॥

चेतसो यदनौजस्यं दैन्यमाहुः कवीश्वराः ।
गर्वस्य विपरीतत्वे भवेदेतन्महीपते ॥ १ ॥

यथा—

संबोधयन्ति वीरेति राजंस्त्वां रिपवो न हि ।
दयालो नरनाथेति वदन्त्यञ्जलिपूर्वकम् ॥ १ ॥

अत्र राजराजेश्वरस्य रिपूणां दैन्यभावो व्यङ्ग्यः । राजराजेश्वरयशवन्तसिंहस्य प्रभाव आलम्बनविभावः । वीरेतिसंबोधनं परित्यज्य दयालो इति सम्बोधनमञ्जलिबन्धश्च दैन्यस्यानुभावः ।

## चिन्ता ॥ ८ ॥

चिन्तनं प्रोच्यते प्राज्ञैश्चिन्तेति मनुजाधिप ।

यथा—

अयशः शरणे भावि रणे भावी पराभवः ।
इत्थं ते रिपवो राजँश्चिन्तयन्ति पुनःपुनः ॥ १ ॥

अत्र विद्विषां चिन्ताभावो व्यङ्ग्यः । राजराजेश्वरस्य प्रभाव आलम्बनविभावः । तेषां चेष्टा गम्योऽनुभावः ।

## मोहः ॥ ९ ॥

मूर्छां मोह इति प्राहुरेतच्छास्त्रस्य कोविदाः ।

यथा—

आक्रान्ते मरुसैन्येन खड्गैर्गात्रविकृन्तनात् ।
उच्छलच्छोणितं दृष्टं ततो जाने न किंचन ॥ १ ॥

अत्र युद्धं पश्यतां मूर्छाभावो व्यङ्ग्यः । युद्धदारुणत्वमालम्बनविभावः । निश्चेष्टत्वादिकमनुभावः ।

## स्मृतिः ॥ १० ॥

स्मृतिः संस्कारजं ज्ञानमितिशास्त्रविदां मतम् ।

यथा—

यदा यदा हि पश्यन्ति करिसिंहरणं वने ।
तदा तदा ते रिपवः प्राप्नुवन्ति विवर्णताम् ॥ १ ॥

अत्र शत्रुनिष्ठो राजराजेश्वरकर्तृकयुद्धस्य स्मृतिभावो व्यङ्ग्यः शार्दूलगजेन्द्रयुद्धमालम्बनविभावः । विवर्णताऽनुभावः ।

धृतिः ॥ ११ ॥

तृप्तिं धृतिं महीपाल प्रवदन्ति मनीषिणः ॥

भोजमहाराज इदं लक्षणमाज्ञापयामास—

"अभीष्टार्थस्य संप्राप्तौ स्पृहापर्याप्तता धृतिः॥" इति ॥

यथा—

नेच्छा कल्पतरौ रसायनरुचिर्नो तिष्ठ चिन्तामणे
दूरे हेमगिरौ स्पृहा न न गतिः कामप्रदोग्ध्र्यां हृदः ।
सत्यं प्रोक्तमिदं हि मानमरुपं याचेयमेकं परं
वाँकीदासकवेस्तु रक्षतुतरां कृष्णः प्रतिज्ञामिमाम् ॥ १ ॥

अत्र कविराजवांकीदासस्य धृतिभावो व्यङ्ग्यः । राजराजेश्वरमानसिंहस्यातिदातृत्वमालम्बनविभावः । कल्पवृक्षादिकं प्रति तिरस्कारवचनमनुभावः ।

व्रीडा ॥ १२ ॥

लज्जां व्रीडामिति प्राहुः श्रीमन्मरुपुरंदर ।

यथा--

अन्यैर्महीशैः* यशवन्तभूपते-
राकर्ण्य दानस्य कथां कवीश्वरैः† ।
संधूय मूर्धस्तु सुधाकरोदये
संकोच आप्तः सरसीरुहैरिव ॥ १ ॥

अत्रान्यभूपानां व्रीडाभावो व्यङ्ग्यः । राजराजेश्वरयशवन्तसिंहस्य दानकथाश्रवणमालम्बनविभावः। शिरःकम्पसंकोचावनुभावः ॥

* महीशैरिति कर्तरि तृतीया ॥

† कवीश्वरैरिति करणे तृतीया ॥

## चपलता ॥ १३ ॥

**अस्थैर्यं चेतसो भूप चापल्यमभिधीयते ॥**

यथा—

आकर्ण्य दुन्दुभिध्वानं सैन्यस्य मरुभूपतेः ॥
पताकापटवद्भान्ति विद्विट्स्वान्तानि सर्वदा ॥

अत्र रिपूणां चपलताभावो व्यङ्ग्यः । राजराजेश्वरस्य दुन्दुभिस्वनश्रवणमालम्बनविभावः। क्रियास्थैर्याभावोऽनुभावः। स च प्रतीयमानः।

## हर्षः ॥ १४ ॥

**प्रसादो मनसो राजन्हर्ष इत्यभिधीयते ॥**

यथा—

मन्मथरूपं भूमौ कल्पतरुं त्वां विलोक्य भूपालाः ॥
प्रेक्षकमनुजशरीरं वस्त्रान्तर्माति नो* चित्रम् ॥ १ ॥

अत्र पश्यतां हर्षभावो व्यङ्ग्यः । राजराजेश्वरयशवन्तसिंह आलम्बनविभावः । तदीयरूपौदार्ये उद्दीपनविभावः । प्रेक्षकशरीरप्रफुल्लत्वमनुभावः ॥

## संभ्रमः ॥ १५ ॥

**यशवन्तमहाराज त्वरा संभ्रम उच्यते ॥**

यथा—

स्वकीयकीर्त्तिश्रवणस्य कालेऽत्युदारचित्तो यशवन्तसिंहः ।
पूर्वं समाप्तेरनृणः कविभ्यः प्रदाय लक्ष्मीं भवति प्रभूताम् ॥

अत्र राजराजेश्वरयशवन्तसिंहस्य त्वराभावो व्यङ्ग्यः। कीर्तिपाठ आलम्बनविभावः। काव्यपाठपूर्त्तेः प्राग्दानमनुभावः ॥

---

* वस्त्रान्तर्नो मातीति योज्यम् ॥

## जड़ता ॥ १६ ॥

### क्रियासु मन्दतां जाड्यं प्रवदन्ति मनीषिणः ॥

यथा—

नेदं शृङ्गारकृत्यं वा गृहकृत्यं प्रियेऽथवा ॥
पलाय्यतां वनं शीघ्रं मरुसैन्यं समागतम् ॥१॥

अत्र रिपुस्त्रीणां वनप्रयाणे जड़ताभावो व्यङ्ग्यः। स्त्रीस्वभाव आलम्बनविभावः। विलम्बोऽनुभावः ॥

## गर्वः ॥ १७ ॥

### अभिमानो महाराज गर्व इत्यभिधीयते ॥

यथा--

प्रावृष्येव ददातीन्द्रः कर्णः स्वर्णं परं ददौ ॥
सर्वदा सर्वदोऽस्माकं यशवन्तमहीपतिः ॥

अत्र राजराजेश्वरयशवन्तसिंहस्य भृत्यानां गर्वभावो व्यङ्ग्यः। राजराजेश्वरकर्तृकं सर्वदा सर्ववस्तुदानमालम्बनविभावः। वचनमनुभावः।

## विषादः ॥ १८ ॥

### दुःखं विषाद इत्यत्र संमतिः सर्वदेहिनाम् ॥

यथा—

पुष्पशय्याधिशायिताः कण्टकावृतभूमिषु ॥
दयिताः शेरतेऽस्माकं हा पश्यामोऽद्य चक्षुषा ॥१॥

अत्र राजराजेश्वरयशवन्तसिंहस्य रिपूणां विषादभावो व्यङ्ग्यः। तत्स्त्रीणां कण्टकावृतभूमौ शयनमालम्बनविभावः। अरिवचनमनुभावः ॥

## औत्सुक्यम् ॥ १९ ॥

### औत्सुक्यमिष्टलाभेषु कालक्षेपासहिष्णुता ॥

यथा—

तव श्रुतवतां कीर्तिं दूरदेशनिवासिनाम् ॥
आकुलान्यक्षिवृन्दानि राजन्निर्जलमीनवत् ॥१॥

अत्र दूरदेशवासिनामौत्सुक्यभावो व्यङ्ग्यः । राजराजेश्वरयशवन्तसिंहस्य यशःश्रवणमालम्बनविभावः । नयनाकुलत्वमनुभावः ॥

## अवहित्थम् ॥ २० ॥

आकारगोपनं राजन्नवहित्थं निगद्यते ॥

यथा--

गुहां प्रविष्टा हिमभूधरस्य
श्रुत्वा हि नामारिमहीभुजस्ते ॥
प्रकम्पिताङ्गा निगदन्ति राज-
न्नतीव शीतं त्विति पर्वतेऽस्मिन् ॥ १ ॥

अत्र राजराजेश्वरयशवन्तसिंहस्य शत्रूणामाकारगोपनभावो व्यङ्ग्यः । इतरपुरुषा आलम्बनविभावः । ते भयं न जानीयुरिति हेतोरुक्तचिन्हगोपनम् । वचनमनुभावः ।

## व्याधिः ॥ २१ ॥

विरहादिभवश्चेतःसंतापो व्याधिरुच्यते ॥

यथा—

तवारिभूभुजां राजंस्तापः कालानलोपमः ।
न चन्द्रेण न पुष्पेण न हिमेन प्रशाम्यति ॥ १ ॥

अत्र रिपुभूभुजां मनस्तापभावो व्यङ्ग्यः । राजराजेश्वरयशवन्तसिंहस्य शौर्यमालम्बनविभावः । चन्द्राद्युपचारोऽनुभावः ॥

## उन्मादः ॥ २२ ॥

अन्यथामतिमुन्मादं जानीहि मरुभूपते ॥

यथा—

वदन्ति संगृह्य लताः पदे पदे

वनेऽरिनार्यौ यशवन्तभूपते ॥
ममाद्य शृङ्गारविधिं करोषि नो
न चापि शिक्षां कुरुषे कुतः सखि ॥ १ ॥

अत्र राजराजेश्वरारिपुस्त्रीणामुन्मादभावो व्यङ्ग्यः। आपदादिकमालम्बनविभावः। वल्लीः प्रत्युक्तवचनमनुभावः॥

## त्रासः ॥ २३ ॥

भयस्थायिभावाद्भेदप्रदर्शनाय भोजमहाराजोऽस्येदं स्वरूपमाह—

"त्रासश्चेतश्चकितता ह्याकस्मिकभयादिभिः॥" इति॥

यथा—

प्रतिध्वनिं समाकर्ण्य मृगेन्द्रस्य महागिरौ ॥
प्रिय प्रियेतिक्रोशन्त्यः कान्ताश्लिष्यन्त्यरिस्त्रियः॥ १ ॥

अत्र राजराजेश्वरारिपूस्त्रीणां त्रासभावो व्यङ्ग्यः। सिंहप्रतिध्वनिश्रवणमालम्बनविभावः। प्रिय प्रियेति संक्रुश्य संश्लेषोऽनुभावः। मम तु मतं, अयं भयाद्भिन्नो न भवतीति।

## निद्रा ॥ २४ ॥

निद्रा बाह्येन्द्रियविरामः।

## सुप्तम् ॥ २५ ॥

सुप्तं स्वप्नावस्था।

## प्रबोधः ॥ २६ ॥

प्रबोधो निद्रानिवृत्त्यवस्था।

## मरणम् ॥ २७ ॥

मरणं प्राणवियोगः। एतेषां बोधस्य सुलभत्वादुदाहरणानि न प्रदर्शितानि।

## अपस्मारः ॥ २८ ॥

अपस्मारो व्याधिविशेष इति तस्य व्याधावन्तर्भावः।

## अमर्षः ॥ २९ ॥

अमर्ष इति क्रोधस्य पर्यायान्तरम्। तस्य विषये प्राचीना एवमाहुः। क्रोधरूपस्थायिभावे विनाशे प्रवृत्तिर्भवति, अमर्षे वैमुख्यादिकमित्यनयोर्भेद इति। मम तु मतं, इदमीषद्वैलक्षण्यं नामर्षस्य भावान्तरत्वसाधकम्। किं तु क्रोधप्रकारत्वस्येति।

## उग्रता ॥ ३० ॥

उग्रतायाः स्वरूपं भोजमहाराज एवमाह। "अपकारिषु वाक्पारुष्यम्" इति। वाक्पारुष्यं दुर्वचनम्। रसगङ्गाधरकारः "अधिक्षेपावमानादिप्रभवा किमस्य करोमीत्याकारिका चित्तवृत्तिरुग्रता" इत्याह। मम तु मतं, इयमपि क्रोधान्नातिरिच्यत इति।

## मतिः ॥ ३१ ॥

मतिः शास्त्रादिविचारेणार्थनिर्द्धारणम्। इयमात्मतुष्टिप्रमाणालंकारस्य विषयः। तच्च प्रमाणप्रकरणे प्रदर्शयिष्यते। अस्या रसानुकूलत्वेऽर्थात्स्थायिभावसहचरत्वे संचारिता भवतु नाम।

## वितर्कः ॥ ३२ ॥

वितर्कस्य शङ्कायामन्तर्भावः। तत्तु प्रागुक्तमेव। केषांचिद्भावानामन्तर्भावाङ्गीकारे संख्याया न्यूनत्वे, कस्यचिदाधिक्यस्वीकारे संख्याया आधिक्ये न काचित्क्षतिः। यथा–लोके धृतिर्धैर्यमित्युच्यते। सा तु चपलतायाः प्रतिभटभूता। अस्या अपि संचारिभावत्वस्वीकारेण संचारिणां चतुस्त्रिंशत्त्वं भवति। एवमन्यदप्यनुसंधेयम्। एषूक्तोदाहरणेषु तु भावानां स्थितिदशा। उदयमानभावावस्था भावोदयः। शाम्यद्भावावस्था भावशान्तिः।

क्रमेण यथा—

नेत्रारुणिमा शत्रून्युद्धे दृष्ट्वा प्रवर्द्धते राज्ञः।
सा वै कृताञ्जलींस्तान्निरीक्ष्य मरुतेव लीयते मेघः* ॥ १ ॥

अत्र पूर्वार्द्धे राजराजेश्वरयशवन्तसिंहस्य क्रोधभावस्योदयावस्था। उत्तरार्द्धे क्रोधभावस्य शान्त्यवस्था। अत्र क्रोधभावोदयस्यालम्बनविभावो

* यथा मरुता मेघपङ्क्तिर्वर्द्धते लीयते च तथा नेत्रारुणिमा शत्रुक्रियया वर्द्धते लीयते च ॥

रिपवः । नेत्रारुणिमवृद्धिरनुभावः । क्रोधभावशान्तेरालम्बनविभावः शत्रूणामञ्जलीकरणम् । नेत्रारुणिमनिवृत्तिरनुभावः । यत्र विरुद्धयोर्भावयोर्मेलनं तत्र भावसन्धिः ।

यथा—

रामेण योद्धुं किल संमुखस्य
रामस्य बाहुः स्फुरति स्म वीक्ष्य ।
कुठारमालोक्य च यज्ञसूत्रं
प्रकम्पते स्मास्य स एव बाहुः ॥ १ ॥

अत्र परशुरामेण युद्धार्थमुपस्थितस्य रामस्योत्साहभावेन भुजस्फुरणम् । ब्रह्महत्याभयेन भुजकम्पनम् । भयोत्साहयोः परस्परं विरोधादनयोरुभयोर्भावयोर्मेलने भावसन्धिः । उत्साहभावस्यालम्बनं परशुः । बाहुस्फुरणमनुभावः । भयभावालम्बनं तु यज्ञोपवीतम् । अनुभावस्तु भुजकम्पनम् ।

यथा वा—

भर्तुर्वियोगभावि दुःखं हर्षः पितुर्गृहं गन्तुम् ।
दुर्योधनवद्बाला प्राणवियोगं समाप्स्यति त्वरितम् ॥ १ ॥

दुर्योधनस्य मरणसमये हर्षशोकसंधिरेवं रीत्या जातः । स रणाङ्गणेऽस्वपीत्तदाऽश्वत्थामा पञ्चानां पाण्डवपुत्राणां शिरांसि तत्समीपं निनाय; आकारेण तानि पाण्डवमस्तकानि विज्ञाय दुर्योधनो हर्षमवाप । पुनश्चूर्णेनेन पाण्डवपुत्रज्ञानाद्वंशनाशहेतोः शोकमवाप । अविरुद्धानेकभावानां मेलने भावशबलता ।

यथा—

दानस्य समये त्वस्य यशवन्तमहीपतेः ॥
हर्षोत्साहत्वरागर्वस्मृत्याद्यास्तु भवन्त्यहो ॥

अत्रैकस्मिन्नेव राजराजेश्वरे यशवन्तसिंहेऽनेकभावानां मेलनाद्भावशबलता । अत्र भावा न व्यङ्ग्याः, किं तु वाच्याः । दानपात्रमालम्बनविभावः । तदीयविद्वत्तादय उद्दीपनविभावः । राजराजेश्वरस्य मुखविकासादयोऽनुभावाः ।

व्यङ्ग्यरूपभावशबलता यथा—

प्रसन्नचक्षुः परितो विसर्प-
न्हयोत्तमाङ्श्रेष्ठगजाँश्च चिन्वन् ।
निन्दन्नदातृन्कृतदानलेख्यं
पृच्छन्नृपोऽस्त्येष तु दानकाले ॥ १ ॥

अत्रापि दानपात्रमालम्बनविभावः। दानपात्रस्य विद्वत्त्वादयो गुणा उद्दीपनविभावः । राजराजेश्वरस्य परितो विसर्पणरूपेणानुभावेन त्वराभावो व्यङ्ग्यः।हयोत्तमानां गजवराणां च दानार्थं चयनरूपानुभावेनोत्साहभावो व्यङ्ग्यः। नयनविकासरूपानुभावेन हर्षभावो व्यङ्ग्यः। "इन्द्रेणैरावतगजराजः स्वसद्मन्येव जीर्णतां नीतः" इत्याद्यदातृनिन्दारूपानुभावेन गर्वभावो व्यङ्ग्यः । राज्याभिषेकादिसमये पूर्वप्रदत्तदानलेखप्रश्नरूपानुभावेन स्मृतिभावो व्यङ्ग्यः । भावशबलतायां परस्परं भावानां गौणमुख्यभावो नास्तीत्ययं संचारिभावाद्भेदः ।भावस्याऽऽभासमानत्वे भावाभासः । अविचारदशायां क्षणमात्रं भावरूपतया भासनादस्यापि परिग्रहः कृतः । अनुचितो भावो भावाभासः ।

यथा—

खातः कथमयं केन कथं वा पूरितोऽम्बुना ॥
कथं नोल्लङ्घते सीमां चञ्चलोपि महार्णवः ॥ १ ॥

अत्रैतादृशी चिन्ता निरर्थकत्वादनुचिता तस्माद्भावाभासः ।

## रसः ॥



### अथ रसानामुदाहरणानि प्रदर्श्यन्ते ॥

वेदेपि रसा उक्ताः । उक्तं हि भगवता भरतेन नाट्यशास्त्रे—

"जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च ।
यजुर्वेदादभिनयान्रसानाथर्वणादपि॥" इति ॥

अभिनयोऽन्तर्गतभावस्य व्यञ्जकोऽङ्गचेष्टाविशेषैः ।

रसा नव । यथा—

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ॥
बीभत्साद्भुतशान्ताख्या निगद्यन्ते रसा नव ॥ १ ॥

## शृङ्गारः ॥

नायिका नायकश्चोभावालम्बनमुदाहृतौ ।
आरामघनचन्द्राद्या उद्दीपनतया मताः ॥ १ ॥
हर्षोत्कण्ठास्मृतिमुखा भवन्ति व्यभिचारिणः
भ्रूभङ्गवचनस्तम्भस्मिताद्या मरुनायक ॥ २ ॥
अनुभावा निगदिताः काव्यशास्त्रस्य कोविदैः ॥
स्थायिभावो रतिः प्रोक्तो विश्वं येन वशीकृतम् ॥३॥
सुरा नराश्च पशवः समभावेन भूमिप ॥

शृङ्गाररसस्यालम्बनविभावो नायिकानायकौ । तयोरनेके प्रकारा विद्वद्भिरुदिताः । तत्र स्वकीया, परकीया, सामान्येति प्रकाराः प्रकृतिकृताः । उत्तमा, मध्यमा, अधमा, धीरा, अधीरा, धीराधीरा, गर्विता चेत्यपि प्रकाराः प्रकृतिकृताः । मुग्धा, मध्या, प्रौढेति प्रकारा वयःकृताः । तत्र नवयौवना मुग्धा । पूर्णयौवना प्रौढा । तन्मध्यवर्तिवयस्का मध्या । मुग्धाशब्दार्थस्तु मूढेति । परं त्वत्र तस्या नववयःसंबन्ध्यविवेको विवक्षितः। तस्य च रमणीयत्वान्मुग्धा नायिका शृङ्गाररसालम्बनम् । प्रौढशब्दार्थः प्रवृद्धः । कथितं चिन्तामणिकोषकारेण "प्रौढः प्रवृद्धे" इति । अत्र प्रकर्षेण वृद्धिप्राप्तयौवनवत्यां नायिकायां प्रौढाशब्दस्य रूढिः । प्रोषितपतिकादयो दशाकृतप्रकाराः । प्राचीनैर्वयःकृतप्रकाराः स्वकीयायामेव दर्शिताः । मम तु मतं, परकीयासामान्ययोरप्यनयोर्न बाधः । रसिकप्रियानामकभाषाग्रन्थे चित्रिणीनायिकाविषय एवमुदाहृतम्—

हासः कटाक्षो मधुरा च वाणी
नृत्यं च गीतं परिरम्भणं च ॥
चित्रे चरित्राणि यदा भवेयुः
श्लिष्येत्तदा का सखि कृष्णमित्रम् ॥ १ ॥

"प्रत्यक्षमेलनसदृशं सुखं चित्रदर्शनेन न भवति" इति सख्याः शिक्षयेदमर्थसिद्धं,यदियं नायिकाऽद्यावधि प्रत्यक्षमेलनसुखं न जानातीति। अत इयं मुग्धा । अपि च कृष्णं प्रति मित्रकथनादिदं सिद्ध्यति, कृष्ण-

उपपतिरिति। निजपत्यर्थं मित्रशब्दस्य प्रयोगो न भवति। अपि च प्रत्यक्षसदृशं सुखं चित्रे भवेच्चेत्तदा का वा कृष्णमित्रं श्लिष्येत् ? अस्येदं तात्पर्यं, चित्रे प्रत्यक्षसदृशं सुखं भवेच्चेत्कुलकलङ्कादिदुःखं सोढ्वा कापि कृष्णं न श्लिष्येत्। अनेन कथनेनाप्यस्या नायिकायाः परकीयात्वं सिद्ध्यति॥

अयि चन्द्रानने! चित्रे लिखितेवाचला सती॥
लज्जां लोकभयं त्यक्त्वा कं वा पश्यसि मे वद॥

इयं परकीया प्रौढा॥

व्रजनाथानुरक्ता सा त्वयि यद्यपि विद्यते॥
तथापि लज्जासिन्धुश्रीः कथं करगता भवेत्॥

इयं परकीया मध्या। "सा त्वय्यनुरक्ता, परं तु कथं करगता भवेत्" इति कथनेन परकीयात्वं द्योत्यते। एवं सामान्यायामपि बोध्यम्। प्राचीनैः परकीयायां गुप्ता, विदग्धा, लक्षिता, कुलटा, मुदिता, अनुशयना चेति षट्प्रकारा उक्ताः। मम तु मतं, गोपनचमत्कारः केवलं परपुरुषप्रीतिमात्र एव न विद्यत इति॥

यथा--

दंपत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच-
स्तत्प्रातर्गुरुसंनिधौ निगदतस्तस्यातिमात्रं वधूः॥
कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्चूपुटे
व्रीडार्ता विदधाति दाडिमफलव्याजेन वाग्बन्धनम्॥ १॥

इयं स्वकीया गुप्ता। विदग्धतायाश्चमत्कारोपि परपुरुषसंबन्धमात्र एव न विद्यते॥

यथा--

निजं मौक्तिकहारं सा प्रियकण्ठे निधाय हि॥
कथयामास हे कान्त पश्य ते शोभतेतराम्॥ १॥

इयं स्वकीया विदग्धा। अनया विदग्धतया विपरीतरत्यभिलाषः

सूचितः । लक्षितत्वस्य चमत्कारोपि परपुरुषस्य प्रीतिमात्र एव न विद्यते ॥

यथा—

पृष्टे मया किमु त्वं गोपायसि ते प्रियस्य भालगतम् ॥
बिन्दुं विलोक्य विश्वैर्विपरीता ते रतिस्तु संविदिता ॥ १ ॥

इयं स्वकीया लक्षिता । कुलटाशब्दस्य "कुलान्यटतीति कुलटा" इति व्युत्पत्त्या स्वैरिण्यर्थः । सा च रत्यर्थं चेत्परकीया कुलटा; धनार्थं चेत्सामान्या कुलटा । मुदिता मोदयुक्ता । इयमपि स्वकीया, परकीया, सामान्या च भवितुमर्हति । अनुशयनाशब्दस्याक्षरार्थस्तु पश्चात्तापवती । उक्तं चिन्तामणिकोषकारेण " अनुशयः पश्चात्तापे " इति । संकेतसंबन्धिपश्चात्तापवत्यामनुशयनानाम्नो रूढिः । अयं च प्रकारः परकीयायामेव भवितुमर्हति । प्राचीनैर्वयःकृतप्रकारा नायिकायामेव दर्शिताः, परं तु मम मतेन वयःकृतप्रकारा नायकेपि संभवन्ति ॥

यथा—

अज्ञोऽद्यापि कुमारो मुञ्चति बालां यदेष विजनेपि ॥
स्त्रीजातिप्रकृतिरियं न हि न हि करणे विवर्धते स्नेहः ॥

अयं नायको मुग्धः । धुरंधरस्य नामरूपलक्षणानुसारेण नायिकानायकप्रकारा यथासंभवं स्वयमेव बोध्याः । ग्रन्थविस्तरभयान्मया दिक्प्रदर्शनं कृतम् । न च वाच्यं, सामान्या तु परकीयाप्रकार एवेति स्वकीया परकीया सामान्येति प्रकारत्रयं कथमुच्यत इति ? कुत इति चेल्लोक एतत्प्रकारत्रयमपि प्रत्यक्षं प्रसिद्धम् । सामान्याया विवाहितपतेरभावात्तस्याः परकीयेति संज्ञा न भवति । परकीयाशब्दस्य व्युत्पत्तिस्तु "परस्येयं परकीयेति" । कस्याश्चन परकीयाया धनाकाङ्क्षया प्रीतिश्चेत्तस्याः सामान्यायामन्तर्भावः ।

संयोगविप्रयोगाभ्यां शृङ्गारो द्विविधो मतः ।
यशवन्तमहाराज विप्रयोगश्चतुर्विधः ॥
पूर्वरागाद्विदेशाच्च तथा मानाच्च शापतः ।

तत्र संयोगो यथा—

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥ १ ॥

अत्र नायिकानायकयोः परस्पररतिस्थायिभावो व्यङ्ग्यः । नायिका-नायकावालम्बनविभावः । वासगृहस्य विजनत्वमुद्दीपनविभावः । व्रीडाहर्ष-हासादयो व्यभिचारिभावाः । चुम्बनरोमाञ्चालिङ्गनप्रभृतयोऽनुभावाः । अत्र नायकस्य रोमाञ्चानुभावः साक्षात्सात्त्विकसंज्ञकः । वियोगश्शृङ्गारश्चतु-र्विधः । मेलनात्प्रथमं योऽनुरागः स पूर्वानुरागः । मेलनानन्तरं विरहः प्रवासः । विदेशो निमेषान्तरादिकं च प्रवासभेदा एव । यथा दंपत्योः कश्चिद्विदेशे वर्तते, विदेशं गच्छति वा, क्षणमात्रमपि दूरे वा तिष्ठतीत्यादि । मानकालिको विरहो मानः । शापवशाद्वियोगः शापहेतुकः ।

क्रमेण यथा—

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ॥
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥

अत्र नायिकानायकावालम्बनविभावः । तयोः सौन्दर्यादयो गुणा उद्दी-पनविभावः । उत्कण्ठाचिन्तादयो व्यभिचारिभावाः । रतिः स्थायिभा-वः । तथा स्थितिरवलोकनं चानुभावः । अयं पूर्वानुरागः ।

नीहारः परितः समागत इतः कामस्य तुङ्गध्वज
आपृथ्वीतलमा च खं च नितरां विद्युच्छटा द्योतते ।
धत्ते दक्षिणमारुतेन वनिता वल्ली च कम्पं मुहु-
राप्तं नैव च वाचिकं प्रियतमात्प्राप्ता घनानां घटा ॥ १ ॥

अत्र कायिकस्य दूरदेशत्वमालम्बनविभावः । नीहारादिकमुद्दीपन-विभावः । त्रासोत्कण्ठादयः संचारिभावाः । कम्पोऽनुभावः । रतिः स्थायिभावः ।

यथा वा—

स्थायंस्थायमुपैति नीरदघटा तन्वन्सुगाढं तमः
पातंपातमहो तडिद्विलसति स्यान्मे गतिः क्वाधुना।
मार्गंमार्गमिमे नटन्ति शिखिनः कूजन्ति चक्राह्वयाः
पृथ्वीयं हरिता विना तु हरिणा ज्वालायते मे दृशः।

अत्र नायकस्य विदेशस्थितिरालम्बनविभावः। नीरदघटादय उद्दीपनविभावः। त्रासदैन्यादयो व्यभिचारिभावाः। वचनमनुभावः। रतिः स्थायिभावः।

विदेशयानोन्मुखमात्मकान्तं
विलोक्य बाला परितप्तदेहा।
घटं गृहीत्वाऽथ जलेन रिक्तं
मार्गे प्रियस्याभिमुखी बभूव ॥ १॥

अत्र नायकस्य विदेशगमनारम्भ आलम्बनविभावः। नायकसौन्दर्यादिकमुद्दीपनविभावः। विषादचपलतादयो व्यभिचारिभावाः। रिक्तघटेनापशकुनं विधाय गमने निरोधोऽनुभावः। अयं भविष्यत्प्रवासः।

अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृ-
द्यो मां नेच्छति नागतश्च हहहा!!कोऽयं विधेः प्रक्रमः॥
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्त्तनव्यतिकरा नाप्नोति निद्रां निशि॥१॥

अत्र नायकस्यागमने विलम्ब आलम्बनविभावः। रात्रिरुद्दीपनविभावः। विषादचिन्तादयो व्यभिचारिभावाः। निद्राभङ्गोऽनुभावः। अत्र कालविलम्बहेतुको वियोगः। एवं रीत्या वियोगशृङ्गारस्य बहवो भेदा भवितुमर्हन्ति।प्रकाशकारो वियोगशृङ्गारस्य पञ्च प्रकारान्मन्वानो विरहप्रवासौ पृथगाह—"अपरस्त्वभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पञ्चविधः" इति। प्रदीपकारः स्पष्टयति—"गुरुलज्जादिभिर्यो वियोगः स विरहहेतुको वियोगः" इति॥

यथा—

आभ्यां दुःखितनेत्राभ्यां धात्रा नो रचितं सुखम् ॥
न शक्नुतोऽन्तिके द्रष्टुं दूरे चैव प्रताम्यतः ॥ १ ॥

अत्र मुग्धावस्थाजनितलज्जया विरहहेतुको वियोगः ॥

विदेशायातस्यावधिदिवसमर्धं गतमतः
पदे ते कृष्णोऽयं पतति न परं त्वं सहसितम् ॥
ब्रवीष्यस्मान्मन्ये कठिन उत काष्ठादपि हठो
न दग्धो यस्तेऽभूद्विरहहुतभुक्संगतिमितः ॥ १ ॥

अत्र नायिकाया मानमालम्बनविभावः। त्रासचपलतादीनतादयः संचारिभावाः। पादपतनमनुभावः। अयं मानहेतुको वियोगः ॥

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ॥
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥ १ ॥

अत्र शाप आलम्बनविभावः। तादृशचित्रनाश उद्दीपनविभावः। विषादादयो व्यभिचारिभावाः। वचनाश्रुपातावनुभावौ। रतिः स्थायिभावः॥ अत्र कुबेरशापनिमित्तो यक्षस्य वियोगः ॥

यथावा--

आवयोः संगमो भावी रात्रावद्य न संशयः ॥
इति व्याधगृहीतं तु कोकयुग्ममंमोदत ॥ १ ॥
अत्रान्तरे महावाताद्विच्छिन्नं व्यलपन्मुहुः ॥
बन्धनेपि विधे!सङ्गं सहसे नेत्यखिद्यत ॥ २ ॥

कोकयो रात्रौ वियोगः शापहेतुक इति प्रसिद्धम्। अत्राकस्मिकविच्छेद आलम्बनविभावः। चन्द्रोदयादिकमुद्दीपनविभावः। स च प्रतीयमानः। विषादादयो व्यभिचारिभावाः। वचनमनुभावः। एतादृशो रतिस्थायिभावः श्रोतॄ रसो भवति। एवं सर्वत्र बोध्यम् ॥

## हास्यम् ॥

देहवेषाद्यन्यथात्वं हास्यस्यालम्बनं मतम् ॥
उद्दीपनं तु चेष्टाद्या यशवन्त महीपते ॥ १ ॥
मोहावहित्थाप्रमुखा व्यभिचारितया मताः ॥
अधरस्य विकासाद्या अनुभावाः प्रकीर्तिताः ॥ २ ॥

देहवेषादीत्यत्रादिशब्देन वचनवृत्तान्तयोर्ग्रहणम् ॥

यथा—

उद्बाहुः स्वां बहुलमहतीं संविलोक्यैव खर्व-
छायां सायं प्रग उ चरति प्रेमयुक्तो हि चित्ते ।
दैवाद्धेतोः खुरविरचिते गर्त एष प्रमग्न
उष्ट्रारूढो व्रजति नितरामेष नादं प्रकुर्वन् ॥ १ ॥

अत्र लोकादन्यथाऽऽकृतिर्वामन आलम्बनविभावः। सायंप्रातर्भुजमुत्थाप्य च्छायादर्शनरूपा तस्य चेष्टोद्दीपनविभावः। तादृशं तं पश्यतां हासः स्थायी। हसतां हर्षादयो व्यभिचारिभावाः। तेषां दन्तदर्शनादयोऽनुभावाः ॥

यथा वा—

श्रुत्वा लेखकमागतं तदबला व्हीणा गुरूणां पुरो
गेहान्तस्तमसि स्थिता व्यरचयच्छृङ्गारशोभां तनोः ॥
सिन्दूराञ्जनतैलविस्मृतिवशादालिप्य मस्या मुख-
मङ्क्त्वा हिङ्गुलुना विलोचनयुगं तालेन भालस्थले ॥ १ ॥
दत्त्वा बिन्दुमसौ शनैरुपगता वातायनद्वारतो
यावत्पश्यति तावदेव विकलो मिश्रो भयभ्रान्तधीः ॥
काली मामपहर्तुमागतवतीत्यालोचयन्नञ्जसा
चोत्प्लुत्याट्टगृहात्पपात शिरसि प्राप्तस्य कस्याप्यधः ॥ २ ॥

अत्रान्यथा वेषधारिणी लेखकपत्न्यालम्बनविभावः । तस्या अवलोकनमुद्दीपनविभावः । उक्तवृत्तान्तं पश्यतां हासः स्थायी । तेषां हर्षादयो व्यभिचारिभावाः। दन्तदर्शनादिकमनुभावः ॥

यथा वा—

धनं समादाय बहुप्रशंसया
ददौ भिषग्गर्वपुरःसरं रसम् ।
विलोकयामास मुखं भिषग्वधू-
स्तदा स्वकान्तस्य रहस्यवेदिनी ॥ १ ॥

उक्तवैद्यकृते पारद एतादृशो गुणश्चेदयमेव वैद्यः स्वयं क्लीबः कथं स्यादतोऽत्र वैद्यकृतपारदप्रशंसारूपो वृत्तान्तोऽन्यथाभूतः । अयमन्यथावृत्तान्त आलम्बनविभावः । पारदमहिमरूपं वैद्यवचनमर्थहरणं चोद्दीपनविभावः । भिषग्वनिताया हासः स्थायी । जुगुप्सास्मृतिदीनतादयो व्यभिचारिभावाः। तस्याः पतिमुखवीक्षणादिकमनुभावः । साहित्यदर्पणे हासः षट्प्रकारोऽभिहितः। ओष्ठविकासमात्रं स्मितम् । ईषद्दन्तप्रकाशो हसितम् । विशेषदन्तप्रकाशो विहसितम् । ईषच्छब्दसहितदन्तप्रकाशोऽवहसितम् । अतिशब्दसहितदन्तप्रकाशोऽपहसितम् । शिरःकम्पनहस्ततालाद्यतिशब्दसहितदन्तप्रकाशनमतिहसितमिति । रसगङ्गाधरकारस्याप्ययमेव सिद्धान्तः । मम तु मतं, एषु प्रकारेषु रमणीयत्वाभावादेवं प्रकारप्रदर्शनं व्यर्थम् ।

## करुणः ॥

आलम्बनं तु करुणे दरिद्रो दुःखितो मृतः ।
उद्दीपनं भवेद्भूप दुर्दशादहनादयः ॥ १ ॥
शोकस्तु मरुभूपाल स्थायिभावः प्रकीर्तितः ।
निर्वेदप्रमुखा राजन्व्यभिचारितया मताः ॥ २ ॥
वैवर्ण्याक्रोशनादीनामनुभावत्वमिष्यते ॥ २ ॥

यथा—

अस्तं गतो नृपरविर्दलितः कवीनां
कल्पद्रुमो ह्यतिथिहंससरश्च शुष्कम् ।
भग्नो महान्सुकृतकेतनदीर्घदण्डो

* नृपेषु रविरिति विग्रहः ।

हा तख्तसिंह कलिकृष्ण गते त्वयि द्याम् ॥ १ ॥

अत्र राजराजेश्वरतख्तसिंहस्य परलोकप्रयाणमालम्बनविभावः। तस्य राजचिन्हैः सहान्तिमप्रस्थानमुद्दीपनविभावः । जगतः शोकः स्थायी । विषादनिर्वेदस्मृत्यनुरागादयो व्यभिचारिभावाः । अश्रुवचनादयोऽनुभावाः ।

यथा वा—

उद्यानेषु सरस्सु मां प्रतिपदं योऽपाययत्प्रेमत
आतृप्त्यासवमासनैः सुकथनैर्योऽवर्धयद्गौरवम् ।
नो मां विस्मृतवान्पवित्रसमये पत्रादिना सज्जन-
स्तस्मिन्स्वर्गगते हि तेन न गतान्धिङ्मे मुरारेरसून् ॥ १ ॥

अत्र महाराणासज्जनसिंहस्य परलोकप्रयाणमालम्बनविभावः । तस्य सादरमासवपानकारयितृत्वादेः स्मृतिरुद्दीपनविभावः । कविराजस्य मुरारेः शोकः स्थायिभावः । निर्वेदादयः संचारिभावाः । वचनमनुभावः ।

यथा वा—

अष्टाशीतिसहस्रतापसजनान्सौवर्णपात्रेषु यः
सम्यग्भोजितवानिहान्यवशगो भुङ्क्ते स धर्मात्मजः ।
यो जेता जगतां त्रयस्य विजयः स स्त्रीस्वरूपं बहु-
न्नारीः शिक्षयतीह नर्तनकलामन्तःपुरे संप्रति ॥ १ ॥

भीमस्त्वं बकमर्दनोऽपि विहितः पाकक्रियायामहो
यौ माद्रीतनयौ रतीशसदृशावेकस्तयोर्योजितः ॥
धावत्यश्वगणे परोऽपि च तथा धावत्यहो गोगणे
गोविन्दस्य कृपा कदा मयि भवेत्कष्टं तरेयं यया ॥ १ ॥

अत्र राज्यभ्रष्टा धर्मात्मजप्रमुखा आलम्बनविभावः । तेषामुक्तदुर्दशोद्दीपनविभावः । पाञ्चाल्याः शोकः स्थायी । चिन्तास्मृतिविषाददैन्यादयो व्यभिचारिभावाः । वचनवैवर्ण्यादिकमनुभावः ॥

## ॥ रौद्रः ॥

अरिरालम्बनं रौद्रे तच्चेष्टोद्दीपनं मतम् ॥
क्रोधः स्थायी मदाऽसूयाप्रमुखा व्यभिचारिणः ॥ १ ॥
नेत्रारुण्यं भ्रुवोर्भङ्गश्चाधरस्फुरणादयः ॥
अनुभावा भवन्त्यत्र श्रीमन्मरुमहेश्वर ॥ २ ॥

यथा--

अद्यैव श्रुतमस्ति मे रिपुरिति प्राहाधुना कस्त्विदं
वंश्यः पङ्गुदलस्य तस्य यशवन्नामास्मि यद्गौरवे ॥
मेरुः सर्षपतां गतो हयखुरक्षुण्णान्विधायाचला-
नब्धीन्पूरयितुं क्षमो मम रुचिर्नो रामवच्छिल्पके ॥ १ ॥

अत्रोज्जयिनीपुरीयुद्धारम्भे पुरातनयशवन्तसिंहमहाराजस्यौरङ्गजेबनामा यवनाधीशकुमारो रिपुरालम्बनविभावः। तस्य गर्ववचनादय उद्दीपनविभावः। महाराजस्य क्रोधः स्थायी। असूयागर्वादयः संचारिणः। उक्तवचनादयोऽनुभावाः॥

## वीरः ॥

युद्धदानदयाधर्मपात्राण्यालम्बनानि वै ।
उद्दीपनं तु तत्कृत्यं स्थायी चोत्साह उच्यते ॥ १ ॥
उत्कण्ठाहर्षगर्वाद्या व्यभिचारितया मताः ।
अनुभावो भवेदत्र विकसद्वदनादिकम् ॥ २ ॥
युद्धवीरो दानवीरो दयावीरस्तथाऽपरः ।
धर्मवीरो महाराज वीर एवं चतुर्विधः ॥ ३ ॥

क्रमेण यथा—

यद्वत्केसरिणो बलाद्गिरिगतान् गृह्णन्ति जन्तूंस्तथा
वीरान्नागगतारिकर्षणपटून्कालीं पिबन्तीं रणे ।
रक्तं हस्तिमुखेषु चुम्बनकरीं गौरीं* गणेशानने
द्रक्ष्यामीति नृपो ब्रवीति गजसिंहाख्यो रणामन्त्रणे ॥ १ ॥

अत्र गजसिंहमहाराजस्य खुर्रमाख्यदिल्लीशकुमारेण सह भविष्य-द्युद्धमालम्बनविभावः । वीराणां कालिकायाश्च भविष्यत्तादृशक्रियो-द्दीपनविभावः । महाराजस्य रणोत्साहः स्थायी । हर्षस्मृत्यादयो व्यभि-चारिभावाः । वचनरोमाञ्चादयोऽनुभावाः । इति युद्धवीरः ॥

दत्तं यत्तु विभीषणाय विजया† लङ्काधिपत्यं पुरा
तद्वृत्तं रघुनायकस्य चरिते सारः कथाविस्तरे ॥
कर्णो यत्कवचं च कुण्डलयुगं राज्ञे सुराणां ददौ
तद्वृत्तं खलु तस्य भूरिचरिते सारो महाभारते ॥ १ ॥
ये मुक्तिं परमां गताः क्षितिभुजस्तेऽप्यत्र लोकेऽधुना
ख्याप्यन्ते किल दानपत्रलिखितैः प्रत्यक्षलब्ध्या इव ॥
तस्मात्ख्यातिरियं ग्रहीत्ववशगा दातुर्दिवः कारण-
मित्येवं परिचिन्तयन्मरुपतिर्याच्ञापरान्वाञ्छति ॥ २ ॥

अत्र दानपात्रमालम्बनविभावः । तदीयगुणविशेषा उद्दीपनवि-भावः । राजराजेश्वरस्य दानोत्साहः स्थायी । हर्षस्मृत्यादयो व्यभिचारि-भावाः । वचनमुखविकासादयोऽनुभावाः । इति दानवीरः ।

ज्ञात्वा नागपुरेश ! यच्छरणदं मां मानसिंहाभिध-
मायातोऽसि सुरेश्वराज्जलनिधिमैनाकशैलं यथा ।
नूनं त्वां परिपालयामि विपदो‡ मोक्ष्ये त्वदर्थं शिरः
क्षात्रं जन्म धृतायुधस्य सफलं भूयात्त्वयाऽद्यैव मे ॥ १ ॥

* गौरीमिवेत्युपमानलुप्तोपमेयम् ।
† विजयात्पुरेति योज्यम् ।
‡ विपदं मोचयित्वा ।

अत्र नागपुरमहाराजो मधुराजदेवो दयापात्रमालम्बनविभावः। तस्य दीनवचनमुद्दीपनविभावः। तद्रक्षणविषये योधपुराधीशस्य राजराजेश्वरमानसिंहस्योत्साहः स्थायी। हर्षस्मृतिगर्वादयः संचारिभावाः। वचनादयोऽनुभावाः। इति दयावीरः।

गजाश्ववसुभूप्राणा यश्चाप्यन्यः परिग्रहः।
धर्मार्थमस्ति मे सर्वं मानसिंहोऽब्रवीदिदम् ॥ १ ॥

अत्र गोविप्रादीनि धर्मपात्राण्यालम्बनविभावः। स्वर्गसाधनादयो धर्मस्य गुणा उद्दीपनविभावः। राजराजेश्वरमानसिंहस्य धर्मविषयक उत्साहः स्थायी। गर्वहर्षादयः संचारिभावाः। वचनादिकमनुभावः। इति धर्मवीरः।

## भयानकः ॥

भयानके भयं स्थायी व्याघ्रचौरवनादिकम्।
आलम्बनं क्रियास्तेषामुद्दीपनमुदाहृतम् ॥ १ ॥
चिन्ताविषादचापल्यप्रमुखा व्यभिचारिणः।
रोमाञ्चस्वेदकम्पाद्या अनुभावाः प्रकीर्तिताः ॥ २ ॥

यथा—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्।
शष्पैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ १ ॥

अत्राखेटकारी दुष्यन्त आलम्बनविभावः। तस्य शरसंधानादय उद्दीपनविभावः। मृगस्य भयं स्थायी। चिन्ताचपलताविषादश्रमादयो व्यभिचारिभावाः। ग्रीवाभङ्गाद्या अनुभावाः।

## बीभत्सः ॥

जुगुप्सितं तु बीभत्स आलम्बनतया मतम्।

दुर्गन्धकृमिकीटाद्या उद्दीपनमुदाहृतम् ॥ १ ॥
गदावेगादयस्तत्र चेष्यन्ते व्यभिचारिणः ।
अनुभावा भवन्त्यत्र वान्तिनिष्ठीवनादयः ॥ २ ॥
जुगुप्सा तु भवेत्स्थायी यशवन्तमहीपते ॥

यथा—

विदार्य कुक्षिं तु नखैः पिशाचा
अन्त्राणि दन्तैः परिकृष्य रक्तम् ।
पिबन्ति भूयोपि वमन्ति यत्र
कथं रणे राष्ट्रपते रुचिस्ते ॥ १ ॥

अत्रान्त्रादिकमालम्बनविभावः । तस्य दुर्गन्धादिकमुद्दीपनविभावः । पश्यतां जुगुप्सा स्थायी । एतादृशवस्तुदर्शनेन विमुखीभावे त्वरा गदादयश्च व्यभिचारिभावाः । वचनमनुभावः ।

## अद्भुतः ॥

अलौकिकत्वं विज्ञेयमालम्बनमथाद्भुते ।
स्थायी तु विस्मयश्चेष्टादय उद्दीपनं मतम् ॥ १ ॥
हर्षो वितर्क इत्याद्या व्यभिचारितया मताः ॥
अनुभावा महाराज नयनोल्लसनादयः ॥

यथा—

कनिष्ठिकाग्रेण गिरिं दधार
गोपालबालोऽपि विना श्रमेण ॥
करे पयोधिं चुलकं विधाय
पपौ द्विजन्मा कलशोद्भवोऽपि॥ १॥
मरुस्थलेशो यशवन्तसिंहो
वर्षत्यजस्रं* किल हेममधाराम् ॥

* मरुदेशे बहुधा वृष्टेरल्पत्वादायः शाश्वतं समो न भवति ॥

पिनाकपाणिश्च महेश्वरोपि
करोति संचारमहो वृषेण॥ २॥

अत्र गोपालबालकर्तृकं पर्वतोद्धरणं कुम्भसंभवकर्तृकमम्बुधिपानं, मरुदेशाधिपकर्तृकहेमवर्षणं, महेश्वरस्यापि वृषकरणकसंचरणं चेत्येतान्यलौकिकान्यालम्बनविभावः। कनिष्ठिकाग्रेण पर्वतोद्धरणं, समुद्रस्य चुलकीकरणं, हेम्नो नितरां वर्षणं, सर्वेश्वरस्याद्यापि पुरातनैकवृषवाहनत्वमित्येतान्युद्दीपनविभावः। वक्तुर्विस्मयः स्थायी। हर्षवितर्काद्या व्यभिचारिभावाः। वचनादयोऽनुभावाः॥

## शान्तः॥

अनित्यत्वसदुःखत्वे जगन्निष्ठे तथात्मनः॥
नित्यत्वानन्दरूपत्व आलम्बनतया मते॥१॥
शान्तस्थायी तु निर्वेद उद्दीपनमथो स्मृतम्॥
श्मशानतीर्थसत्सङ्ककथाद्या मरुनायक॥ २॥
धृतिस्मरणहर्षाद्या व्यभिचारितया मताः॥
औदासीन्यसमेत्ताद्या अनुभावाः प्रकीर्तिताः॥३॥

यथा—

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा॥
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः॥१॥

अत्र महाराजस्य भर्तृहरेर्निर्वेदः स्थायिभावः। जगतोऽनित्यत्वादिकमालम्बनविभावः। तत्संसर्गजनितदुःखादिकमुद्दीपनविभावः। हर्षोत्कण्ठादयो व्यभिचारिभावाः। वचनमनुभावः॥

यथा वा—

मित्रं पुत्रकलत्रबान्धवजना हस्त्यश्ववित्तादयो

नो यास्यन्ति सहान्तकस्य नगरं प्रस्थातुकामे त्वयि ॥
एकं यास्यसि केवलं जड मनो नाद्यापि जानासि त-
च्छीघ्रं जागृहि जागृहि प्रतिपदं शम्भोः समाराधने॥१॥

अत्र जगतोऽनित्यत्वादिकमालम्बनविभावः। पुत्रकलत्रादीनां सहगमनाभाव उद्दीपनविभावः। कवेर्निर्वेदः स्थायिभावः। आवेगमतिस्मृत्यादयो व्यभिचारिभावाः। वचनादयोऽनुभावाः। मम तु मतं, अत्रैवं नाशङ्कनीयम्। स्थायिभाव एव रसो भवति। तदेवोक्तम्। "स्थायी भावो रसः स्मृतः" इति। स्थायिभावास्त्वेते—

"रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ॥
जुगुप्सा विस्मयश्चैव स्थायिभावाः प्रकीर्तिताः" ॥ इति ॥

रसानां नामानि तु—

" शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ॥
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ १ ॥"इति॥

एवं च रत्यादिस्थायिभावानामेव रसत्वे रत्यादीन्येव रसनामानि भाव्यानि। तेषां शृङ्गारादीनि विलक्षणनामानि कुतः कृतानि" इति चेच्छृणु। रत्यादयः स्थायिभावा एव रसदशामापद्यन्त इति सत्यम्। परं तु यत्र यत्र स्थले रत्यादयः स्थायिभावा रसदशामापद्यन्ते तत्तत्स्थलमपि सूचयन्धुरंधरस्तत्तत्स्थलसंबन्धेन नामानि कृतवान्। शृङ्गार इत्यत्र शृङ्गशब्दार्थः कामोद्रेकः। कामस्य वृद्धिरित्यर्थः। उक्तं च चिन्तामणिकोषकारेण " शृङ्गं कामोद्रेके " इति। अपि च ऋधातोरारशब्दो निष्पन्नः। ऋधातुर्गत्यर्थकः। इह गतिश्च प्राप्तिः। उक्तं च चिन्तामणिकोषकारेण " गतिः प्राप्तौ " इति। शृङ्गस्यारो यस्मिंस्तच्छृङ्गारमिति व्यधिकरणबहुव्रीहौ शृङ्गारशब्दार्थः कामोद्रेकप्राप्तिमदन्तःकरणम्। तदस्त्यस्येति मतुबर्थेऽर्शाद्यचि कामोद्रेकप्राप्तिमदन्तःकरणसबन्धीति शृङ्गारशब्दार्थः। उक्तान्तःकरणेनैव सार्धं रतिरसस्य सबन्धो भवति। तथा च कामवृद्धिप्राप्तिमत्यन्तःकरणे रतिः स्थायिभावो रसदशामापद्यते, एतत्संबन्धेन धुरंधरेण रतिरसस्य शृङ्गार इति नाम विहितम्। कामुकाना-

मेवान्तःकरणे रतौ रसदशामापद्यते, न तु विरागिणामन्तःकरणे। एवं सर्वेषु रसेषु बोध्यम्। हास्यमित्यत्र हसधातोः कर्मणि ण्यत्प्रत्यये कृते "हस्यतेऽसौ हास्यः" इति व्युत्पत्त्या हास्यस्य कर्मेत्यर्थो भवति। परं त्वयमर्थोऽत्र नोपयुज्यते। अतः "कृत्यल्युटो बहुलम्" इति शास्त्रेण भावकर्मार्थककृत्यप्रत्ययानां भावार्थकल्युट्प्रत्ययस्य च यथोपयोगं कर्त्तरि कर्मणि भावे च विधानमिति बहुलमितिकथनाद्बोध्यम्। तदुक्तम्—

"क्वचित्प्रवृत्तिःक्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥" इति।

अत्र कर्त्रर्थस्योपयुक्तत्वात्कर्तरि ण्यत्प्रत्यये "हसतीति हास्यम्" इति व्युत्पत्त्या हास्यशब्दार्थो हासकर्तृ। हसनशीलमन्तःकरणं हास्यमिति प्रकृतार्थः। हसनशीलेऽन्तःकरणे हासः स्थायिभावो रसदशामापद्यते, एतत्संबन्धेन हासस्य नाम धुरंधरो हास्यमिति कृतवान्। स्थायिभावस्य हास इति नाम्नि सत्यपि रसस्य हास्यमिति नामकरणे धुरंधरस्य पूर्वोक्तोऽभिप्रायः। करुणशब्दार्थो दयालुरिति। उक्तं च चिन्तामणिकोषकारेण "करुणः सदये" इति। दयावत्यन्तःकरणे शोकः स्थायिभावो रसदशामापद्यते, एतत्संबन्धेन शोकरसस्य धुरंधरः करुण इति नाम कृतवान्। रौद्रशब्दार्थ उग्र इति। उक्तं च चिन्तामणिकोषकारेण "रौद्र उग्रे" इति। उग्रशब्दार्थश्चित्तविदारणयोग्यकर्मकर्त्ता। उक्तं च चिन्तामणिकोषकारेण "उग्रो दारुणकर्मकर्त्तरि" इति। उक्तकर्मकर्त्तर्यन्तःकरणे क्रोधः स्थायिभावो रसदशामापद्यते, एतत्संबन्धेन क्रोधरसस्य धुरंधरो रौद्र इति नाम कृतवान्। वीरशब्दार्थः शूर इति। उक्तं च चिन्तामणिकोषकारेण "वीरः शूरे" इति। शूरशब्दार्थो युद्धकर्मण्युत्साहवानिति। उक्तं च चिन्तामणिकोषकारेण "शूरो युद्धकर्मण्युत्साहवति" इति। उक्तकर्मकर्तर्यन्तःकरण उत्साहः स्थायिभावो रसदशामापद्यते। एतत्संबन्धेनोत्साहरसस्य धुरंधरो वीर इति नाम कृतवान्। अत्र दानवीरादीनामुपलक्षणतया संग्रहो भवति। भयानक इत्यत्र भयशब्दार्थो भयम्। आनकशब्दार्थो जीवयिता। उक्तं चानकशब्दार्थं कुर्वता चिन्तामणिकोषकारेण "आनक आनयति प्राणयति" इति। भयानक इति शब्दसमु-

दायार्थस्तु भयस्य जीवयिता । भयोत्पादकस्वभाववानित्यर्थः । भयोत्पादकस्वभाववत्यन्तःकरणे भयस्थायिभावो रसदशामापद्यते, एतत्संबन्धेन भयरसस्य धुरंधरो भयानक इति नाम कृतवान् । स्थायिभावस्य भयनामत्वेपि रसस्य भयानक इति नामकरणे धुरंधरस्य पूर्वोक्तोऽभिप्रायः । बीभत्सशब्दार्थो घृणाशील इति। उक्तं च चिन्तामणिकोषकारेण "बीभत्सो घृणात्मनि। आत्मा स्वभावे" इति । घृणाशीलेऽन्तःकरणे जुगुप्सास्थायिभावो रसदशामापद्यते, एतत्संबन्धेन जुगुप्सारसस्य धुरंधरो बीभत्स इति नाम कृतवान् । अद्भुत इत्यत्राच्छब्दार्थ आश्चर्यम् । उक्तं चामरकोषस्य रामाश्रमीटीकायाम्। "अद् आश्चर्ये" इति। भुतशब्दार्थो भवनम् । उक्तं च चिन्तामणिकोषकारेण "भुतं भवनम्" इति। अद आश्चर्यस्य भुतं भवनं यस्मिंस्तदद्भुतमिति व्यधिकरणबहुव्रीहावद्भुतशब्दार्थ आश्चर्यवदन्तःकरणम् । तदस्त्यस्येति मतुबर्थोऽर्शाद्यच्याश्चर्यवदन्तःकरणसंबन्धीत्यद्भुतशब्दार्थः । तथा चाश्चर्यवत्यन्तःकरणे विस्मयः स्थायिभावो रसदशामापद्यते। एतत्संबन्धेन विस्मयरसस्य नाम धुरंधरोऽद्भुत इति कृतवान्। आश्चर्यशब्दस्य पर्यायो विस्मयः। उक्तं च चिन्तामणिकोषकारेण "विस्मय आश्चर्ये " इति । स्थायिभावस्य विस्मय इत्येव नाम्नि सत्यपि रसस्य धुरंधरोऽद्भुत इति नामोक्ताभिप्रायेण कृतवान् । नाट्य एतेऽष्टावेव रसा उक्ताः । काव्ये नवमः शान्तरसोप्युक्तः। शान्त इत्यत्र शान्तशब्दार्थो वशीकृतान्तःकरणम् । उक्तं च चिन्तामणिकोषकारेण "शान्तः संयतान्तःकरणे" इति । संयतेन्द्रियशब्दार्थं कुर्वंश्चिन्तामणिकोषकारः संयतशब्दार्थं वशीकृतमित्याह। "संयतेन्द्रियो वशीकृतेन्द्रिये" इति। वशीकृतान्तःकरणे निर्वेदः स्थायिभावो रसदशामापद्यते, एतत्संबन्धेन धुरंधरः शान्त इति नाम कृतवान्। निर्वेदशब्दार्थो वैराग्यम् । उक्तं च चिन्तामणिकोषकारेण "निर्वेदो वैराग्ये" इति । केनचिन्मुनिना "वत्सलश्च रसः" इति प्रोक्तम्। तन्मतानुसारिणा साहित्यदर्पणकारेण दशमो वत्सलरसः स्वीकृतः। अत्र बालविषयः स्नेहः स्थायिभावः । बालक आलम्बनविभावः । तस्य चेष्टोद्दीपनविभावः । हर्षादयः संचारिभावाः। आलिङ्गनचुम्बनेचणरोमाञ्चादयोऽनुभावाः ॥

यथा—

उवाच धात्र्याः प्रथमोदितं वचो
ययौ तदीयामवलम्ब्य चाङ्गुलिम् ॥
अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन ततान सोऽर्भकः ॥

अनुचितो रसो रसाभासः । यथा कुलटानुरागः । अविचारदशायां क्षणं रसस्य भानाद्रसाभासस्यापि संग्रहः ॥

यथा—

स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणानूरणमखमुखे यं मृगयसे ॥
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बला-
त्तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥

अत्र रतेरनेकविषयत्वाद्रसाभासत्वम् । भगवता वेदव्यासेनाग्नि-पुराणस्यैकोनचत्वारिंशदधिकत्रिशततमेऽध्याये रसा उक्ताः—

"शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ॥
बीभत्साद्भुतशान्ताख्याः स्वभावाच्चतुरो रसाः ॥ १ ॥
शृङ्गाराज्जायते हासो रौद्रात्तु करुणो रसः ॥
वीराच्चाद्भुतनिष्पत्तिः स्याद्बीभत्साद्भयानकः ॥ २ ॥" इति ।

भगवता भरतेनाप्येवमेवाभाणि ॥ मम तु मतं, अयं नियमो नास्ति । शृङ्गारादिमन्तरापि हास्यादीनामुत्पत्तेः । इत्यसंलक्ष्यक्रमव्यङ्ग्यम् ।

## ॥ अथ संलक्ष्यक्रमव्यङ्ग्यम् ॥



वस्तुना वस्तुनः, वस्तुनाऽलंकारस्य, अलंकारेण वस्तुनः, अलंकारेणालंकारस्य वा व्यङ्ग्यत्वे व्यङ्ग्यः संलक्ष्यक्रमः । अलंकारातिरिक्तः पदार्थो वस्तु ॥

क्रमेण यथा—

वाञ्छन्त्यरिकलत्राणि विना रात्रिं तिथिं नृप ॥
शुक्लपक्षं विना मासान्वत्सरानृतुभिर्विना ॥

अत्र वाच्यार्थरूपवस्तुना राजराजेश्वरयशवन्तसिंहस्य रिपुयोषितां विरहरूपं वस्तु व्यङ्ग्यम् ॥

यशवन्तयशो वीक्ष्य वस्तुमिच्छति शंकरः ॥
शयितुं कमलाकान्तः स्नातुं वाञ्छन्ति तापसाः ॥

अत्र वाच्यार्थरूपवस्तुना भ्रान्त्यलंकारो व्यङ्ग्यः । राजराजेश्वरयशः, शंकरः कैलासं, विष्णुः क्षीराब्धिं, तापसाश्च सुरसरितं जानते ॥

दर्पान्धगन्धगजकुम्भकपाटकूट-
संक्रान्तनिघ्नघनशोणितशोणशोचिः ।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः ॥

अत्रोपमालंकारेण क्षणाच्छत्रुक्षयकारितारूपं वस्तु व्यङ्ग्यम् ।

यशवन्तयशःपद्मषट्पदस्तु नभस्तलम् ॥

अत्र परंपरितरूपकालंकारेणाधिकनामालंकारो व्यङ्ग्यः । आकाशस्य भ्रमरत्वकथनेन राजराजेश्वरयशःकमलस्वरूपस्याधिक्यं प्रतीयते । एषूदाहरणेषु वाच्यार्थबोधानन्तरं व्यङ्ग्यार्थबोधः सम्यक्परिदृश्यते, अतोऽत्र व्यङ्ग्यः संलक्ष्यक्रमः । इति प्रधानव्यङ्ग्यप्रकरणम् ॥

# अथ गुणीभूतव्यङ्ग्यम् ॥



अप्रधानव्यङ्ग्यं गुणीभूतमित्युच्यते। अस्याष्टौ प्रकाराः काव्यप्रकाशगतकारिकाकारेणोक्ताः—

"अगूढमपरस्याङ्गं वाच्यसिध्यङ्गमस्फुटम् ।
संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ।" इति।

क्रमेण यथा—

वाच्यार्थवद्व्यङ्ग्यस्य स्पष्टं प्रकाशमानत्वेऽगूढम् ।

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बिबिम्बम् ॥ १ ॥

अत्र प्रभातसमयो व्यङ्ग्यः । स तु वाच्यवत्स्पष्टं प्रकाशत इत्यगूढम् ।
व्यङ्ग्यस्य कंचिदन्यं प्रत्यङ्गत्वेऽपराङ्गत्वम् ।

आगत्य संप्रति वियोगविसंष्ठुलाङ्गी-
मम्भोजिनीं क्वचिदपि क्षपितत्रियामः ॥
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि पादपतनेन सहस्ररश्मिः ॥ १ ॥

अत्र पादपतनं तु रविकिरणानां कमलिनीस्पर्शः । अत्र रविकमलिनीवृत्तान्तो वाच्यः । नायिकानायकयोर्वृत्तान्तस्य व्यङ्ग्यस्य तत्र समारोपेणोक्तवाच्यार्थस्योत्कर्षाधानाद्व्यङ्ग्यं वाच्याङ्गम् । एवमेतद्व्यङ्ग्यमपरस्याङ्गम् । वाच्यसिद्धौ व्यङ्ग्यस्याङ्गत्वे वाच्यसिद्ध्यङ्गम् ।

भ्रमिमरतिमलसहृदयतां
प्रलयं मूर्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं
प्रसह्य कुरुते विषं वियोगिनीनाम् ॥ १ ॥

अत्र विषशब्दस्य वाच्यार्थो जलम् । व्यङ्ग्यार्थो गरलम् । अयं व्यङ्ग्यार्थो जलदस्य भुजगत्वरूपवाच्यार्थसिद्धिं करोति, अत इदं व्यङ्ग्यं वाच्यसिद्धेरङ्गम् । पूर्वोदाहरणे वाच्यस्य सिद्ध्यनन्तरं व्यङ्ग्येन वाच्यार्थस्योत्कर्षाधानमात्रं, अत्र तु व्यङ्ग्यार्थं विना वाच्यार्थसिद्धिरेव न भवतीति भेदः । व्यङ्ग्यार्थस्यातिगूढत्वेऽस्फुटत्वम् । व्यङ्ग्यार्थस्यातिस्फुटत्वेपि न चारुतोत्कर्षः, न चातिगूढत्वे च । उक्तं च—

कूर्पासकेनार्धतिरोहितौ कुचौ

रम्यौ रमण्याः कवितात्तराणि च ।
अर्द्धं निगूढानि सुशोभितान्यलं
नात्यन्तगूढानि न वा स्फुटान्यपि ॥ १ ॥
यशवन्तनरेन्द्रस्य दानवृद्धिं दिने दिने ।
श्रुत्वा कोकयुगान्यासन्प्रहृष्टानि पदे पदे ॥ १ ॥

अत्र व्यङ्ग्यार्थस्तु राजराजेश्वरो यशवन्तसिंहोऽतिदाने प्रवृत्तः स्वर्णमयत्वात्सुमेरुमपि शकलीकृत्य लोकेभ्यो दद्यात्तदा सूर्यप्रकाशनिरोधकस्य मेरोरभावाद्रात्रिर्न भवेत्ततश्च कोकयुगानां वियोगदुःखमपि न भवेदिति। अस्य व्यङ्ग्यस्यातिविचारसाध्यत्वादस्फुटत्वम् । पुराणेषु, सूर्यो मेरोः परितो भ्रमति तेन मेरोर्मध्यपातित्वेन रवेरदर्शनाद्रात्रिर्भवतीति सिद्धान्तः। कोकानां रात्रौ वियोगः प्रसिद्धः॥ वाच्यार्थे विवत्ता, व्यङ्ग्यार्थे विवत्ता वेति यत्र संदेहो भवति तत्संदिग्धव्यङ्ग्यम् ।

कोशेभ्यस्तव सैन्यस्य कृपाणा निस्सरन्त्यमी।
कृष्णसर्पा महाराज बिलेभ्य इव सङ्गरे ॥ १ ॥

अत्र वाच्यार्थस्तु कोशेभ्यो निःसरतां कृपाणानां बिलान्निर्गच्छत्कृष्णसर्पोपमा। व्यङ्ग्यार्थस्तु कृष्णसर्पवद्दंशनम् । अत्रैवं न निर्णीयते वाच्यार्थे विवत्ता व्यङ्ग्यार्थे वेति, अत इदं व्यङ्ग्यं संदिग्धम्। यत्र वाच्यार्थतुल्यं व्यङ्ग्यं भवति तत्तुल्यप्राधान्यव्यङ्ग्यम् ।

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यस्तथामित्रमन्यथा दुर्मनायते ॥ १ ॥

भार्गवं प्रति युद्धार्थं प्रवृत्तं रावणं प्रतीयं कस्यचिदुक्तिः । अत्र वाच्यार्थो ब्राह्मणातिक्रमत्यागः श्रेयस्करः, मैत्रीभङ्गाभावश्चेति । व्यङ्ग्यार्थस्तु "भार्गवः पृथिवीं यथा निःक्षत्रियां कृतवांस्तथैव नीराक्षसामपि कुर्यात्" इत्युभावप्यर्थौ रावणं युद्धान्निवर्तयितुं तुल्याविती दं व्यङ्ग्यं तुल्यप्राधान्यम्। काकुः स्वरविकारः, तयाक्षिप्त आकृष्टः काक्वाक्षिप्तः।

मथ्नामि कौरवशतं समरे न कोपा-
द्दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।

संचूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवतां नृपतिः पणेन ॥ १ ॥

अत्र वाच्यार्थस्तु कौरवशतं न मथ्नामि, दुःशासनस्य रुधिरं न पिबामि, सुयोधनोरू न चूर्णयामीति, परं भीमसेनः सभायामुक्तविषयेषु कर्तव्यत्वेन पूर्वं प्रतिज्ञातवान् । इदानीं तस्य न मथ्नामीत्यादीनि प्रतिज्ञातार्थविरुद्धवचनानि नोपपन्नानीत्यतः काकुस्वरकल्पनया कौरवशतं मन्थिष्याम्येव, दुःशासनस्य रुधिरं पास्याम्येव, सुयोधनोरू चूर्णयिष्याम्येवेति व्यङ्ग्यमाक्षिप्यते । अत्र वाच्यार्थस्य बाधाल्लक्षणा कुतो नेति नाशङ्कनीयम् । कुत इति चेदग्रजाज्ञानुसरणानुरोधेन प्रतिज्ञातार्थपरित्यागस्य संभवाद्वाच्यार्थे बाधबुद्धिर्निःशङ्कं न भवति। प्रधानव्यङ्ग्ये "तथाभूतां दृष्ट्वा" इति काकुवैशिष्ट्योदाहरणे प्रकृतकाकाक्षिप्तोदाहरणापेक्षया वैलक्षण्यं दर्शयन्प्रदीपकार इत्थमाह—"काकाक्षिप्तव्यङ्ग्यरूपगुणीभूतव्यङ्ग्यप्रभेदता कथमपनेयेति चेन्न, अत्र नेति प्रश्नकाकापि वाक्यार्थप्रतीतिपर्यवसानात् । यां काकुं विना वाक्यार्थबोध एव न भवति तयैवाक्षिप्तस्य गुणीभावात्।यथा "मथ्नामि कौरवशतम्" इत्यत्र । अस्यायमाशयः । वाच्याद्व्यङ्ग्यस्याधिकचमत्कारित्वे प्राधान्यं,वाच्यापेक्षया व्यङ्ग्यस्याधिकचमत्कारित्वाभावे व्यङ्ग्यं गुणीभूतम्। "मथ्नामि कौरवशतम्" इत्यत्र व्यङ्ग्यस्य काकाक्षिप्तत्वाद्गुणीभूतत्वम् । "तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयाम्" इत्यत्र काकाक्षेपस्तु सहदेवं प्रत्यस्य प्रश्नस्य भवति; युधिष्ठिरो मदुपरि खिन्नो भवति, कौरवोपरि खिन्नः किं न भवति ? इति । काव्यस्य ऋजुतया पाठे प्रश्नो न प्रतीयते, किं तु काकोक्तप्रश्न आक्षिप्यते । प्रश्नस्याक्षेपानन्तरं युधिष्ठिरस्य मदुपरि खेदो न युक्तः, कौरवोपरि तु युक्त इति व्यज्यते । अस्मिन्व्यङ्ग्ये काकाः साहाय्यम् । न त्वाक्षेपः । विशिष्टशब्दार्थ उत्तमज्ञानवान् । उक्तं च चिन्तामणिकोशकारेण "विशिष्टः प्रकृष्टज्ञानवति" इति । विशिष्टस्य भावो वैशिष्ट्यम् । काकुवैशिष्ट्यमिति शब्दसमुदायार्थस्तु काकोत्तमज्ञानवत्त्वमिति । अत एव च काकुवैशिष्ट्यस्थले व्यङ्ग्यं प्रधानम् । काकाक्षिप्तमित्यस्यार्थः काकाक्षिप्तमिति । अत एवोक्तरीत्याकृष्टं व्यङ्ग्यं गुणीभूतम् । काकुवैशिष्ट्यकाकाक्षिप्तयोरिदमेव वैलक्षण्यम्। वाच्यार्थापेक्षया व्यङ्ग्यस्यासुन्दरत्वेऽसुन्दरव्यङ्ग्यम् ।

करे कृष्णस्य वीक्ष्यैव तमालकुसुमं नवम् ।
पुष्पमालेव सा म्लाना हृदये दुःखिता सती ॥ १ ॥

अत्र नायिकायाः संकेतस्थले गमनाभावो व्यङ्ग्यः। अपि च वाच्यार्थे तु कार्यकारणयोर्युगपद्भावात्प्राचीनमतीयोऽतिशयोक्त्यलंकारो मन्मतीयश्च विचित्रालंकारः। इदं व्यङ्ग्यं वाच्यार्थापेक्षयाऽसुन्दरम् । वाच्यादतिशयचमत्कारवद्व्यङ्ग्यं ध्वनिरित्युक्त्वा "अतादृशि गुणीभूतव्यङ्ग्यम्" इत्युक्तत्वादिदं सिद्ध्यति, वाच्यार्थेन समचमत्कारवदथवा वाच्यार्थान्न्यूनचमत्कारवद्व्यङ्ग्यं गुणीभूतमिति। अत्र च व्यङ्ग्यं वाच्यार्थापेक्षया सुन्दरत्वे न्यूनम् । मम मतेऽस्मिञ्छास्त्रे प्रधानस्य व्यपदेशाद्गुणीभूतव्यङ्ग्यस्य न व्यङ्ग्यव्यवहारः। तच्चासुन्दरादिप्रकारकथनात्स्फुटतरम्। अनेनैवाभिप्रायेण धुरंधरोत्र गुणीभूतव्यङ्ग्यमदर्शयत् । व्यङ्ग्यस्यागूढत्वं तु लौकिकम् । अस्फुटत्वं क्लिष्टदोषः । अङ्गभूतं चाङ्गिना न्यग्भूतमेव । संदिग्धवाच्यार्थतुल्यप्राधान्ये अपि नोत्कटचमत्कारप्रदायिनी । काक्वाक्षिप्तव्यङ्ग्यमपि तथाविधमेव । असुन्दरं तु तुच्छमस्त्येव । एवं लक्षणायाः प्रयोजनमपि गुणीभूतव्यङ्ग्यम् ।

## ॥ अथ गुणाः ॥

माधुर्यं सौम्यता चित्तं द्रवीभूतं करोति तत् ॥
ओजस्तु दीप्तिस्तच्चित्तमुग्रं प्रकुरुते नृप ॥ १ ॥
प्रसादः स्वच्छता तत्र चित्तं व्याप्नोति तत्क्षणम् ॥
शुष्ककाष्ठे यथा वन्हिरच्छवस्त्रे यथा जलम् ॥ २ ॥

"माधुर्यं सौम्यता" इति चिन्तामणिकोषकारः। सा च चन्द्रादिषु वर्तते । सौम्यतावद्वस्तुना मनो द्रुतं भवति । एवं च यस्य काव्यस्य श्रवणान्मनो द्रुतं भवति, तन्माधुर्यगुणवत्काव्यम् ।"ओजो दीप्तिः" इति चिन्तामणिः। सा च सूर्यादिषु वर्तते। दीप्तिमद्वस्तुना मन उग्रं भवति। एवं च यस्य काव्यस्य श्रवणान्मनो दीप्तं भवति, अर्थादुग्रं भवति, तदोजोगुणवत्काव्यम्। तच्च माधुर्यगुणप्रतिद्वन्द्वि। "प्रसादो नैर्मल्यम्" इति चिन्तामणिः।

यथेन्धनेऽग्नेः शीघ्रंप्रवेशको गुण इन्धनशुष्कता, पटे जलस्य शीघ्रं प्रवेशको गुणः पटस्य स्वच्छता। तथा रचनायां मनसः शीघ्रं प्रवेशको गुणो रचनायाः प्रसादः। अयं क्लिष्टदोषप्रतिद्वन्द्वी । अयं गुणः समस्तरसेषु माधुर्यगुणवदोजोगुणवत्सकलरचनासु च वर्तते । गुणविषये काव्यप्रकाश इमाः कारिका विद्यन्ते—

"आल्हादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ॥
करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ॥" इति॥

माधुर्यगुणस्य वियोगशृङ्गारेऽतिशय एतदर्थमुक्तः, संयोगशृङ्गारे कदाचिन्निर्दयतापि संभवतीति ॥

"दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥
बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च ॥
शुष्केन्धनाग्निवत्स्वच्छजलवत्सहसैव यः ॥
व्याप्नोत्यन्यत्प्रसादोऽसौसर्वत्र विहितस्थितिः॥" इति॥

रसेषु गुणनियमं कुर्वता काव्यप्रकाशगतकारिकाकारेण " सर्वत्र विहितस्थितिः" इत्यनेनाभिप्रायेणोक्तं, प्रसादगुणः सर्वेषु रसेषु भवतीति । काव्यप्रदीपकारश्चैवं स्पष्टीचकार—"अयं प्रसादगुणः सर्वरसेषु सर्वासु च रचनासु भवतीति । तन्नु समीचीनम् । शृङ्गारकरुणशान्तेषु त्रिषु माधुर्यस्य, वीररौद्रबीभत्सेष्वोजसो नियमादित्थं प्रतीयते, हास्यभयानकाद्भुतेषु त्रिषु न कस्यापि नियमः । एतेषु कदाचिन्माधुर्यगुणः कदाचिच्चौजोगुणो भवति। रसेषु गुणानां नियमकरणादेवं न ज्ञातव्यं, नीरसेषु काव्येषु गुणा न भवन्तीति। एते गुणाःसमस्तेषु काव्येषु संभवन्ति। रसेषु तत्तद्गुणनियमप्रयोजनं तु शृङ्गारकरुणशान्तेष्वोजोगुणो न भवति। वीरबीभत्सरौद्रेषु च माधुर्यगुणो न भवतीति बोधनम्। "प्रसादगुणवत्काव्यं मनासि शीघ्रं प्रविशति" इत्युक्तवता काव्यप्रकाशगतकारिकाकारेण "शुष्केन्धनाग्निवत्, स्वच्छजलवत्" इति दृष्टान्तौ प्रदत्तौ। परमत्र तयोः संगतिर्न भवति, कुतइत्युक्तावनयोर्दृष्टान्तयोराधेये अग्निजले, आधारः काष्ठवस्त्रादिकं, तत्र शुष्कतास्वच्छत्वे साधने आधारनिष्ठे । प्रसादगुणवत्काव्यं मनसि शीघ्रं प्रविशतीत्युक्ते काव्यस्याधेयत्वान्मनसश्चाधारत्वात्साधनस्याधेयनिष्ठत्वेन दृष्टान्तयोर्वैप-

रीत्यम् । "प्रसादगुणवत्काव्ये मनः शीघ्रं प्रविशति" इति मदुक्तौ तु दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यम् । चित्तं विषयेषु प्रविशति विषयाश्चित्ते प्रविशन्तीति रीतिद्वयं वर्त्तते । तदेवोक्तं श्रीमद्भागवत एकादशस्कन्धस्य द्वादशेऽध्याये " गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो" इति ॥

क्लिष्टदोषवत्काव्ये मनः शीघ्रं न प्रविशति ॥

## ॥ अथ रीतिः ॥



देशजात्यादिभेदान्मनुष्येषु रीतिभेदवदर्थाद्व्यवहारभेदवद्देशादिभेदात्काव्यरचनायामपि रीतिभेदो भवति, पाञ्चालदेशस्य काव्यरचना लौकिकशास्त्रीयव्यवहारयुक्ता मृदुर्ह्रस्वसमासा च भवति, अत एतादृशकाव्यरचनायां पाञ्चाली रीतिरुच्यते । गौडदेशस्य काव्यरचना लौकिकशास्त्रीयव्यवहाररहिताऽनियता दीर्घसमासा च भवति, अत एतादृशकाव्यरचनायां गौडी रीतिरुच्यते ॥ तदेवोक्तं भगवता वेदव्यासेनाग्निपुराणस्य चत्वारिंशदधिकत्रिशततमेऽध्याये--

उपचारयुता मृद्वी पाञ्चाली ह्रस्वविग्रहा ॥
अनवस्थितसंदर्भा गौडी या दीर्घविग्रहा ॥
उपचारैर्न ॥

एवं विदर्भलाटदेशयोः काव्यरचनारीतिर्वैदर्भी लाटीति चोच्यते । एवमन्यदप्यूह्यम् । कौशिकमुनेः काव्यरचनारीतिः कौशिकी, भरतमुनेश्च काव्यरचनारीतिर्भारतीत्युच्यते । कुशिकवंश्यत्वाद्विश्वामित्रस्य कौशिक इति नामान्तरम् । मम तु मतम्, उक्तरीतीनां काव्यस्य रमणीयत्वे न कोप्युपयोगः । अत एव बहवो ग्रन्थकारा रीतीर्नोक्तवन्तः । रीतिर्वृत्तिरित्यप्युच्यते ॥

## ॥ अलंकारसामान्यस्वरूपम् ॥



मनुष्याणां हारादयोऽलंकारा भवन्ति, तच्छायया काव्यस्यानुप्रासो-

सर्वेषां शोभाकरत्वेप्यलंकारनाम्नो रूढिरनुप्रासोपमादिष्वेव। अस्य निमित्तं तु "प्राधान्येन व्यपदेशा भवन्ति" इति नियम एव। मनुष्यस्य जीवोपि शोभाकरः। कुत इति चेद्यावत्पुमाञ्जीवति तावच्छरीरस्य शोभा। न तु जीववियोगेपि। तथापि तस्य जीवत्वप्राधान्येन जीवनाम्नैव व्यवहारः। मनुष्यस्योदारतादिगुणानां शोभाकरत्वेपि गुणत्वप्राधान्याद्गुण इति व्यवहारः। "गुण आमन्त्रणे" इति शास्त्रादभिमुखीकरणं गुणशब्दार्थः। हारकङ्कणादिषु धनत्वस्य सत्त्वेपि शोभाकरधर्मस्य प्राधान्यादलंकारव्यवहारः। प्राचीना गुणालंकारयोरेवं वैलक्षण्यमाहुः। अचलस्थितयो गुणाः। चलस्थितयश्चालंकारा इति। मनुष्येषूदारतादयो गुणा अचलस्थितयः। हारादयश्च चलस्थितयः। कुत इति चेन्मनुष्याः कदाचिदलंकारान्दधति, कदाचिन्न दधति। एवं काव्ये माधुर्यादयोऽचलस्थितयः। कुत इति चेत्पुष्पादीनां वर्णने माधुर्यगुणो भवेदेव, शस्त्रादिवर्णन ओजोगुणो भवेदेव, इदं त्वनुभवसिद्धम्। परमुपमाद्यलंकाराणां नैवमचलस्थितिः। कुत इति चेत्कदाचित्काव्यमनलंकारमपि भवति। तदुक्तं काव्यप्रकाशगतकारिकाकारेण—

"तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्व…"

एतत्कारिकाकारोप…

पमाद्यलंकाराः स्वीकृताः। अलंकारास्त्रिविधाः। शब्दालंकारा अर्थालं-
कारा उभयालंकाराश्चेति। अलंकारशब्दव्युत्पत्तिस्तु "अलं करोति" इ-
ति॥ अलंशब्दः शोभार्थकः। शारीरकगुणानां लावण्यादीनां मानसिक-
गुणानामुदारतादीनां हारादीनां च सर्वेषां मनुष्यस्य शोभाकरत्वेऽप्यलंका-
रनाम्नो रूढिस्तु हारादिष्वेव। तद्वच्छब्दार्थव्यङ्ग्यगुणानुप्रासोपमादीनां

…कारस्य वा भवति।

…रसस्य चमत्कारात्काव्यत्वसिद्धिः।

…नलंकारकाव्यमिदमुदाहृतम्।

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः।

सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥"

अत्र न कश्चिच्छब्दस्यार्थस्य वा स्फुटोऽलंकारः। रसस्य प्राधान्यान्न रसवदलंकारोऽपि। लोके हारादयोऽलंकाराः स्वयं शोभायमानावर्थात्सुन्दरौ स्त्रीपुरुषौ शोभयन्ति, न त्वसुन्दरौ स्त्रीपुरुषौ; तथैवोपमादयोऽलंकारा अपि रमणीयार्थाञ्छोभयन्ति, नत्वरमणीयार्थान्। अतो "गोसदृशो गवयः" इत्यत्र नोपमालंकारः। "सह शिष्येणागतो गुरुः" इत्यत्र न सहोक्त्यलंकारः। एवमन्यदपि ज्ञेयम्। सर्वसंमतं चैतत्। अत एवार्थालंकारलक्षणे भोजमहाराजः "अलमर्थमलंकर्तुः" इत्याह। अलंकाराणां तिस्रो दशा भवन्ति। अलंकारान्तरं प्रकारान्तरमुदाहरणान्तरं चेति ॥

विलक्षणं लक्षणतः सर्वथा मनुजाधिप।
अलंकारान्तरं प्रोक्तं काव्यविद्याविचक्षणैः ॥ १ ॥
प्रकारान्तरमूह्यं यद्वैलक्षण्यं हि लक्षणे ॥
लीनं स्याद्राष्ट्रवर्येश तृतीयं शृणु सांप्रतम् ॥२॥
उक्तिमात्रेण भेदश्चेत्तदोदाहरणान्तरम्।
अलंकारदशेत्थं स्यात्त्रिविधा मरुनायक ॥ ३ ॥

## अलंकारालंकार्यविचारः ॥



चित्रमीमांसारसगङ्गाधरयोः "शोभाकरा धर्मा अलंकाराः, येषां शोभा क्रियते तेऽलंकार्याः, एवं चोपमादयो यदाऽन्यशोभां कुर्वन्ति तदालंकाराः, अन्यदा तु नालंकाराः" इत्युक्तम्।

महीधर इवाभाति गजराडुन्नतोऽसितः।
धारेव निर्झरस्यास्य मदधारा प्रदृश्यते ॥ ३ ॥

अत्र गजवर्णन उपमा न कस्यापि रसादेः शोभाकरोति कथमस्यां अलंकारत्वम्? अपि च।

उल्लास्य कालकरवालमहाम्बुवाहं
देवेन येन जरठोर्जितगर्जितेन ।
निर्वापितः सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥ १ ॥

अत्र करवालस्याम्बुवाहोपमा, खड्गधाराया जलोपमा, अरिप्रतापस्याग्न्युपमा चेत्येता वाच्याः । देवशब्दस्य राज्ञ इन्द्रादिदेवानां च वाचकत्वादनेकार्थता । तत्र प्रकरणवशाद्राजराजेश्वरेऽभिधाया नियमने सति व्यञ्जनयाऽवाच्यार्थस्येन्द्रस्य प्रतीतिद्वारेन्द्रेण सह राजराजेश्वरस्योपमा व्यङ्ग्या भवति । वाच्योपमा व्यङ्ग्योपमायाः शोभाकरत्वादलंकारः-व्यङ्ग्योपमायास्त्वलंकार्यत्वादियं व्यङ्ग्योपमालंकार इति कथमलंकारनाम्ना व्यवहारः ? इत्याशंक्य प्राचीनैः समाहितम् "महीधर इवाभाति" इत्यत्रान्यशोभामकुर्वन्त्या अप्युपमाया ब्राह्मणश्रमणकन्यायेन मञ्जूषागतभूषणन्यायेन चालंकारनाम्ना व्यवहार इति । उक्तवाक्यप्रदेशेऽस्या उपमाया अलंकारत्वाभावेऽप्यन्यकाव्यरूपदेश उपमाया अलंकारत्वयोग्यतासंभवादस्या अप्युपमाया अलंकारतया व्यवहारः । "उल्लास्य कालकरवालमहाम्बुवाहम्" । इत्यत्र वाच्योपमया शोभां दधत्या व्यङ्ग्योपमाया अलंकारव्यवहारस्त्वेवम् । यथा खचितरत्नैः शोभमानानां स्वर्णताटङ्कादीनामापणादिस्थानामपि लोके ताटङ्कालंकारादिनाम्नैव व्यवहारः । यतः कामिनीभिर्यदा ते धार्यन्ते तदोभौ कामिनीकर्णादीनामलंकारौ भवतः । अतस्तयोरलंकारत्वयोग्यता। एतादृशस्थलेषु रूपकादीनामप्यलंकारव्यवहार एवमेवानुसंधेयः । सर्वेषां प्राचीनानामयमेव सिद्धान्तः। रसभावादिशोभाकरत्व एवोपमादीनामलंकारत्वमिति । तदुक्तं काव्यप्रकाशगतकारिकाकारेण—

"उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ॥
हारादिवदलंकारास्तेऽनुप्रासोपमादयः॥" इति॥

अङ्गद्वारेण शब्दार्थद्वारेणेत्यर्थः । काव्यप्रकाशगतकारिकाकारादिप्राचीनैरेवं सिद्धान्तो यदा स्वीकृतस्तदा रसभावादिरहितकाव्य उपमादीनां कथमलंकारत्वमिति शङ्कावकाशः समजनि । मम तु मतं, आचार्य-

दण्ड्यादिभिः "काव्यस्य शोभाकरा धर्मा अलंकाराः" इत्युक्तं तत्समीचीनम्। तदुक्तम्—

"काव्यशोभाकरान्धर्मानलंकारान्प्रचक्षते॥" इति॥

मनुष्यस्य सुवर्णादीनामलंकारवत्काव्यशोभाकरा धर्माः काव्यालंकाराः। लोकालंकारेषु करस्य कङ्कणादयः कर्णस्य कुण्डलादयोलंकारविशेषाः;तथा काव्यालंकारेषूपमादयोलंकारविशेषाः। काव्यं तु कविरचना। सा च शब्दार्थमयी। एवं च शब्दस्य शोभाकरत्वे शब्दालंकारत्वम्। अर्थस्य शोभाकरत्वेऽर्थालंकारत्वम्॥

क्रमेण यथा—

पुच्छोच्छालनसंरम्भात्स्वच्छतां सुमहोदधेः॥
यो दूरीकृतवानच्छः स पायादच्छचेतसः॥ १॥

अस्मिन् काव्येऽनुप्रासः शब्दशोभाकरत्वाच्छब्दालंकारः। "महीधर इवाभाति" इत्यत्र। "उल्लास्य कालकरवालमहाम्बुवाहम्" इत्यत्र चोपमाया अर्थशोभाकरत्वादर्थालंकारत्वम्। काव्यशोभां कुर्वाणोनुप्रासोपमादिधर्मो रसादीनां शोभां करोतु नाम; अलंकारत्वं तु काव्यशोभाकरणमात्रादेव सिद्ध्यति। अनुप्रासोपमादीनामलंकारत्वसिद्ध्यै रसादिपर्यन्तमनुधावनमनावश्यकम्। धुरंधरोऽलंकारस्य नाम चित्रमप्याह। तदेवोक्तं काव्यप्रकाशगतकारिकायाम्—

"शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्॥" इति॥

भित्त्यादिलिखिता मनुजाद्याकृतिश्चित्रमित्युच्यते। पाषाणादेः स्तम्भादिषूत्कीर्य या लताकुसुमाद्याकृतिर्निर्मीयते तदपि चित्रमित्युच्यते। उक्तचित्रेण च स्तम्भादेः शोभा भवति॥

पुच्छकम्पनसंसर्गान्नैर्मल्यं सुमहोदधेः॥

अस्यां शब्दरचनायां न चित्रता। अथ चास्यैव स्थाने

पुच्छोच्छालनसंरम्भात्स्वच्छतां सुमहोदधेः॥

इत्युच्यते चेदस्यां शब्दरचनायामनुप्रासरूपं चित्रम्। तच्च शब्दशोभाकरम्॥

अत्युच्चो गजराजोयं मधुधारां प्रमुञ्चति ॥

अस्यामर्थरचनायां न किमपि चित्रम्। अपि चास्यैव स्थाने—

महीधर इवाभाति गजराडुन्नतोऽसितः ॥

धारेव निर्झरस्यास्य मदधारा प्रदृश्यते ॥ १॥

इत्युक्तावस्यामर्थरचनायामुपमारूपं चित्रं प्रदृश्यते । तच्चार्थशोभाकरम्। प्राचीना अत्र चित्रशब्दार्थं विचित्रं ज्ञातवन्तः। उत्कीर्णलताकुसुमाद्याकृतिमति स्तम्भे स्तम्भांशश्चित्रांशश्चेत्युभयमपि पाषाणमयम्। तथात्र पूर्वोदाहरणे शब्द उक्तचित्रम्। तत्र च शब्दः, शब्दचित्रं चेत्युभयमपि शब्दमयम्। उत्तरोदाहरणे चार्थ उक्तचित्रम्। तत्रार्थः, अर्थचित्रं चेत्युभयमप्यर्थमयम्। लोकालंकाराः शरीरात्सर्वथा पृथग्भूताः। काव्यालंकाराणां त्ववस्थाद्वयम्। क्वचित्तु लोकालंकारन्यायेनैकोर्थोऽन्यार्थस्य शोभाकरः, यथाऽप्रस्तुतप्रशंसालंकारः। अत्र वाच्यार्थो व्यङ्ग्यार्थशोभाकरः। इतरस्तु स्तम्भचित्रन्यायेन स एव शब्दार्थस्तस्यैव शब्दार्थस्य शोभाकरः, यथा पर्यायोक्त्यलंकारः। अत्र पर्यायेण कथित एक एवार्थः काव्यस्य शरीरं काव्यस्य शोभाकरश्च भवति। अपि च रसभावौ तदाभासादयो वा रसभावादीनां शोभाकरत्वे रसवदाद्यलंकारा भवन्ति। संचारितादशायां भावानां रसपोषकत्वेपि तेषां रसस्यावयवभूतत्वान्नालंकारत्वेन व्यवहारः। हस्तपादाद्यवयवानां मनुजशरीरस्य शोभाकरत्वेऽप्यवयवत्वान्नालंकारव्यवहारः। संचारिणं रसावयवं मत्वा भगवान्भरत आह—

"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः॥" इति॥

एकोर्थोऽन्यार्थस्य शोभाकरो भवति चेत्तत्राप्युपलक्षणतयालंकारपदप्राप्तिर्भवति। अर्थद्वये प्राय एकोर्थोऽन्यार्थस्य शोभाकरो भवेदेव। तत्र द्वयोरर्थयोर्वाच्यत्वम्, अथ वैकस्य वाच्यत्वमन्यस्य च व्यङ्ग्यत्वं भवेत्। काव्यस्य श्रवणे प्रथमं पदानां पृथक्पृथगर्थज्ञानं भवति। पश्चात्सर्वेषां पदानामर्थस्य समुच्चितं ज्ञानं भवति। तत्समये च पदानां पृथक्पृथगर्थध्यानं निवर्त्तते। तथैव व्यङ्ग्यार्थस्य ज्ञानसमये वाच्यार्थध्यानं निवर्त्तते। उक्तं च सहृदयधुरंधरेण ध्वनिकृता—

"स्वसामर्थ्यवशेनैव वाक्यार्थं प्रथयन्नपि ॥
यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते ॥ १ ॥
तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् ॥
बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते ॥" इति ॥

"उअ णिच्चलणिप्पन्दा" इत्यत्र पूर्वं तु निश्चलपदस्यार्थश्चञ्चलताराहित्यम्, विसिनीपदस्यार्थः कमलिनी, पत्रपदस्यार्थो दलम्, इत्यादि पृथक्पृथक्पदानां पृथक्पृथगर्थज्ञानं भवति। पश्चादौपम्यघटितवाक्यार्थबोधः। तत्समये च पदानां यत्पृथगर्थज्ञानं, तन्निवर्तते। तथैवात्र "इदं निर्जनस्थानम्" इति व्यङ्ग्यार्थबोधसमय उक्तवाक्यार्थस्य ध्यानं निवर्त्तते। एवं रीत्या केवलव्यङ्ग्यार्थज्ञानस्य स्थितौ व्यङ्ग्यस्यान्यार्थशोभाकरत्वाभावान्नालंकारत्वम्। अस्यां दशायां स्वयं प्रधानत्वाद्व्यङ्ग्यमात्रम्। अनयैव रीत्याऽप्रस्तुतप्रशंसास्थलेऽपि बुद्धिरप्रस्तुतवृत्तान्तरूपवाच्यार्थध्यानं परित्यज्य प्रस्तुतवृत्तान्तरूपव्यङ्ग्यार्थस्य ध्यानं करोति, परं तु व्यङ्ग्यार्थज्ञाने जाते साधर्म्यविवक्षणाद्बुद्धिः पुनस्त्वरितमप्रस्तुतवृत्तान्तरूपवाच्यार्थस्यापि ध्यानं करोति। तत्समये वाच्यार्थव्यङ्ग्यार्थयोरुभयोः संस्थितिर्भवति, तदाऽप्रस्तुतवृत्तान्तरूपो वाच्यार्थो व्यङ्ग्यार्थशोभाकरत्वादलंकारः, व्यङ्ग्योऽर्थोऽलंकार्यः। एवमन्यत्रापि ज्ञेयम्। सामान्यतयैकोऽर्थोऽपरार्थस्य शोभाकरो भवेच्चेत्तस्य सर्वथा वैलक्षण्याभावादुपलक्षणद्वारेण रसवदादिष्वन्तर्भावः॥ वाच्यार्थसत्त्वे व्यङ्ग्यार्थस्य चतस्रो गतयो भवन्ति। वाच्यार्थेन समता, वाच्यार्थेनासमता, संदिग्धता, प्रतिभामात्रत्वं चेति। सारूप्यनिबन्धनाऽप्रस्तुतप्रशंसास्थले व्यङ्ग्यार्थोऽप्रस्तुतवृत्तान्तरूपवाच्यार्थेन समो भवति। तत्र चाऽप्रस्तुतवृत्तान्तरूपवाच्यार्थः प्रस्तुतवृत्तान्तरूपव्यङ्ग्यार्थस्य शोभाकरत्वाद्वाच्यार्थोऽलंकारो भवति, अत एवायमलंकारोऽप्रस्तुतप्रशंसेत्युच्यते। एवमेव यत्र व्यङ्ग्यार्थो वाच्यार्थस्य विशेषणं न भवति, पृथक्तया तिष्ठति तत्र व्यङ्ग्यार्थो वाच्यार्थसमः। यथा— "उअ णिच्चलणिप्पन्दा—" इत्यत्र निर्जनस्थानरूपो व्यङ्ग्यार्थो वाच्यार्थेन समः।

समासोक्तावप्रस्तुतवृत्तान्तरूपो व्यङ्ग्यार्थो वाच्यार्थसमो न भवति, किं तु संक्षेपरूपो भवति, स व्यङ्ग्यार्थो वाच्यार्थपोषकत्वादलंकारः ॥

उपोढरागेण विलोलतारकं,
तथा गृहीतं शशिना निशामुखम् ॥
यथा समस्तं तिमिरांशुकं तया,
पुरोऽपि रागाद्गलितं न लक्षितम् ॥ १ ॥

अत्र चन्द्ररजनीवृत्तान्तो वाच्यः। व्यङ्ग्यार्थस्तु नायकनायिकावृत्तान्तः। अस्मिन्समासोक्त्युदाहरणे बुद्धिर्नायकनायिकावृत्तान्तरूपव्यङ्ग्यार्थस्य यदा ध्यानं करोति तदा चन्द्ररजनीवृत्तान्तरूपवाच्यार्थस्य ध्यानं निवर्त्तते। परं तु चन्द्ररजन्योर्नायकनायिकात्वारोपार्थं बुद्धिश्चन्द्ररजनीवृत्तान्तरूपवाच्यार्थमपि पुनस्त्वरितं ध्यायति। तदा व्यङ्ग्यार्थो वाच्यार्थपोषकत्वाद्वाच्यार्थस्यालंकारः। अपि चाप्रस्तुतप्रशंसायामपि बुद्धिः पुनर्वाच्यार्थध्यानं न करोति चेत्केवलव्यङ्ग्यार्थमात्रत्वम्। अस्यां दशायामलंकारत्वं न भवेत्। संदेहसंकरस्थले वाच्यालंकारस्य व्यङ्ग्यालंकारस्य च संदेहो भवति। संदिग्धोपि व्यङ्ग्यार्थो वाच्यार्थशोभाकरत्वादलंकारः। दीपकादिषूपमाया व्यङ्ग्यत्वेपि तत्र विवक्षाऽभावात्प्रतिभामात्रत्वम्। आभासमात्रत्वमित्यर्थः। तस्याश्च वाच्यार्थशोभाकरत्वाभावान्नालंकारत्वम्। ननु व्यङ्ग्यं तु पर्यायान्तरेण कथनम्। "उव णिच्चलणिप्पदा-" इत्यत्र स्थाननिर्जनता वक्तुमिष्टा। सा च रचनान्तरेणोक्तेत्ययं पर्यायोक्त्यलंकारः, कथं ध्वनिरिति ? नाशङ्कनीयम्। कुत इति चेत्पर्यायोक्तेः स्वरूपं तु विवक्षितार्थायाभिहितं प्रकारान्तरम्। व्यङ्ग्यस्वरूपं त्वनुरणनन्यायेन व्यञ्जनावृत्त्या प्रतीतोऽर्थः। "उव णिच्चलणिप्पन्दा-" इत्यत्र वाच्यार्थो निर्जनस्थानस्य न प्रकारान्तरम्। पर्याये चमत्काराधिक्येऽर्थचित्रतया पर्यायोक्त्यलंकारः। यत्र चोक्तव्यङ्ग्ये चमत्काराधिक्यं तत्र न पर्यायोक्तिनाम्नः संगतिः, किं त्वनुरणनन्यायस्य संगतिरिति तत्र व्यङ्ग्यार्थो ध्वनिः। उक्तं च ध्वनिकृतापि— "पर्यायोक्तेपि यदि प्राधान्येन व्यङ्ग्यत्वं तद्भवतु नाम तस्य ध्वनावन्तर्भावः। न तु ध्वनेस्तत्रान्तर्भावः। तस्य महाविषयत्वेन प्रतिपाद्यमानत्वात्" इति ॥

आहूतोपि सहायैरेमीत्युक्त्वा विमुक्तनिद्रोपि ।
गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति ॥

अत्रानुक्तनिमित्तविशेषोक्तौ प्रकरणवशादनुरागो व्यङ्ग्यो भवति, तथापि चमत्कारस्य प्राधान्यं तु कारणसामग्रीसत्त्वे कार्याभावरूपवाच्यार्थे, अतोत्र विशेषोक्त्यलंकारः । पुनरप्युक्तं ध्वनिकृता—

"शब्दार्थशक्त्या वाक्षिप्तो व्यङ्ग्योऽर्थः कविना पुनः ।
यत्राविष्क्रियते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेः ॥" इति ॥

अयमाशयः—वचनेन प्रकाशितो व्यङ्ग्योर्थो वाच्यादतिशययुक्तत्वाभावान्न ध्वनिः; किं तु वाच्यसमत्वाद्गुणीभूतत्वादलंकारः । "उव णिच्चलणिप्पन्दा—" इत्यत्र व्यङ्ग्यार्थस्य वचनेन प्रकाशनाभावाद्ध्वनिः ॥

ज्ञात्वा संकेतजिज्ञासां विदग्धा मां वचोऽब्रवीत् ।
पश्य निश्चलनिष्पन्दा पद्मपत्रे बलाकिका ॥ १ ॥

पूर्वपद्ये कविः सूक्ष्मतया नायिकासंकेतस्थानज्ञापनं वर्णितवान् । परं तु तत्र संकेतस्थानं दूराद्व्यङ्ग्यत्वाद्ध्वनेर्विषयः। उत्तरस्मिन्पद्ये दूराद्व्यङ्ग्यभूतसंकेतस्थानप्रश्नोत्तरे कविर्वचनेन स्वकाव्ये प्रकाशितवान्; अतोत्र व्यङ्ग्यस्य गुणीभूतत्वात्सूक्ष्मालंकारत्वम् ॥

यथा वा—

कोशद्वन्द्वमियं दधाति नलिनी कादम्बचञ्चुक्षतं
धत्ते चाम्रलता नवं किसलयं पुंस्कोकिलास्वादितम् ।
इत्याकर्ण्य मिथः सखीजनवचः सा दीर्घिकायास्तटे
चैलाञ्चेन तिरोदधे स्तनतटं बिम्बाधरं पाणिना ॥ १ ॥

अत्राद्यचरणत्रये व्यङ्ग्यभूतानि नायिकाया रतिचिन्हानि कविना वचनेन चतुर्थचरणे प्रकाशितानि; अतोत्र न ध्वनिः। किं तु प्राचीनमतीयः प्रस्तुताङ्कुरालंकारः ॥

# उभयालंकारः ॥



शब्दालंकारा अर्थालंकाराश्च सर्वेषामभिमताः । कतिचित्प्राचीना उभयालंकारमपि मन्यन्ते । भगवान् वेदव्यास उभयालंकारस्येदं स्वरूपमाह—

"शब्दार्थयोरलंकारो द्वावलंकुरुते समम् ।
एकत्र निहितो हारः स्तनग्रीवामिव स्त्रियाः ॥" इति ॥

समासोक्तिपर्यायोक्त्यादिषूभयालंकारत्वं व्यासमुनिः स्वीचकार । समासोक्तावलंकारता संक्षेपप्रयोज्या । तत्र शब्दसंक्षेपे कृते सत्यर्थस्यापि संक्षेपो भवति । अयं च संक्षेपः शब्दार्थयोर्युगलं युगपदलंकरोतीत्युभयालंकारत्वम् । पर्यायोक्त्यलंकारतासाधकः पर्यायः । शब्दपर्याये कृतेऽर्थस्यापि पर्यायो भवति। अस्य च पर्यायस्य शब्दार्थयोरुभयोर्युगपच्छोभाकरत्वादुभयालंकारत्वम् । भोजमहाराज उभयालंकारविषय इदमाज्ञापयति—

"शब्देभ्यो यः पदार्थेभ्य उपमादिः प्रतीयते ।
विशिष्टोऽर्थः कवीनां स उभयालंक्रिया मता ॥" इति।

महाराजेनोपमारूपकादीनां कतिचनालंकाराणामुभयालंकारत्वमङ्गीचक्रे । अस्यायमाशयः । उपमेयोपमानसाधर्म्याण्यर्थाः, उपमावाचका इवादयः शब्दाः, आभ्यामुभाभ्यामुपमा प्रतीयते, अत उपमोभयालंकारः। रूपके "मुखमेव चन्द्रः" इत्यभेदवाचक एव शब्दः, संदेहे संदेहवाचकाः किमादिशब्दाः, उत्प्रेक्षायामुत्प्रेक्षाद्योतका मन्ये इत्यादयश्च शब्दा अर्थेन सह मिलित्वा रूपकसंदेहोत्प्रेक्षारूपालंकारप्रतीतिं कारयन्ति । एवमन्यत्राप्यूह्यम् । काव्यप्रकाशगतकारिकाकारस्तु केवलं पुनरुक्तिवदाभासस्यैवोभयालंकारत्वमङ्गीचक्रे । उक्तं च पुनरुक्तिवदाभासलक्षणानन्तरं "तथा शब्दार्थयोरयम्" इति ।

यथा—

यशवन्तमहाराजसेनेयं समुपस्थिता ।
देहि स्वामिन्महाबुद्धे वारणं वा रणं द्रुतम् ॥ १ ॥

कारिकाकारस्येदं तात्पर्यम् । पदपरिवर्त्तनं यः सहते सोऽर्थस्य विषयः; यः पदपरिवर्त्तनं न सहते स शब्दस्य विषयः। अत्र द्वयमेतं रीत्या वर्त्तते। "वारणम्" इत्यत्र "करिणम्" इति कृतेपि पुनरुक्तिवदाभासालंकारो न निवर्त्तते । रणशब्दस्थान आहवशब्दप्रयोगं कृत्वा "वारणं वाहवम्" इत्युक्तौ पुनरुक्तिवदाभासालंकारो निवर्त्तते । एवं शब्दार्थोभयाश्रयत्वादुभयालंकारत्वम्। व्यासमुनेरिदं मतम्, "शब्दार्थयोरुभयोः शोभाकर उभयालंकारः" इति। भोजमहाराजमतं तु "शब्दार्थाभ्यां प्रतीयमान उभयालंकारः" इति । काव्यप्रकाशगतकारिकाकारमतं तूक्तरीत्या "शब्दार्थोभयाश्रित उभयालंकारः" इति । मम तु मतं, कथनमात्रेण तु त्रयाणां मतानां समीचीनत्वेप्युदाहरणैस्तु काव्यप्रकाशगतकारिकाकारस्य सिद्धान्तः समीचीनः। पुनरुक्तिवदाभासस्योक्तोदाहरण उक्तरीत्या शब्दार्थोभयसत्तया पुनरुक्तेराभासस्योत्पत्तिः। स चाभासः काव्यशोभाकरत्वादलंकारः। इवादिवाचकशब्दैरुपमायाः, "मन्ये" इत्यादिद्योतकशब्दैरुत्प्रेक्षायाः प्रतीतिस्तु मन्दमतिविषया । एवमन्यदप्यूह्यम्। न चैतस्या ईषदपि शोभाकरत्वम् । समासोक्तावर्थसंक्षेपमात्रस्य, पर्यायोक्तावर्थपर्यायमात्रस्य शोभाकरत्वम्; न तु शब्दस्य संक्षेपः पर्यायो वा । एवमन्यदपि बोध्यम् ॥

इति श्रीमन्मरुमण्डलमुकुटमणि-महाराजाधिराज–राजराजेश्वर–जी, सी, एस, आई, यशवन्तसिंहस्याज्ञानुसारेण कविराजमुरारिदानविरचिते यशवन्तयशोभूषणनामकग्रन्थे काव्यनिरूपणं नाम द्वितीयाकृतिः समाप्ता ॥ २ ॥



॥ श्रीजगदम्बायै नमः ॥

# ॥ अथ शब्दालंकारः ॥

वदन्ति शब्दं ब्रह्मेति वैयाकरणपण्डिताः॥
अलंकारोऽस्य शब्दस्य राजन्नद्य निरूप्यते॥१॥

शब्दे स्थित्वा यः काव्यशोभां करोति स शब्दालंकारः ॥

## ॥ अनुप्रासः ॥

अन्वित्युपसर्गार्थो वीप्सा, अर्थादनेकवारम्। आह च चिंतामणिकोषकारः "अनु वीप्सायाम्" इति। प्रेत्युपसर्गार्थः प्रकृष्टोऽर्थादुत्तमः। आह चिन्तामणिकोषकारः "प्रकृष्ट उत्तमे" इति। आसशब्दार्थो न्यासः। आह चिन्तामणिकोषकारः "प्रकृष्टो न्यासः प्रासः" इति। अनुप्रास इति शब्दसमुदायार्थो वारं वारमुत्तमन्यासः। अर्थस्य वारं वारं न्यासे पुनरुक्तिदोष उक्तः, अतस्तद्वैपरीत्यस्यार्थादलंकारस्य बोधार्थं धुरंधरेण नामनि प्रेत्युपसर्गो मेलितः। अत्र काव्यालंकारप्रकरणम्। काव्ये च शब्दार्थावेव भवतस्तत्र चार्थस्य वारं वारं न्यासस्य दूषणत्वेनाप्राशस्त्याच्छब्दालंकारप्रकरणाच्चात्र शब्दस्य वारं वारं न्यासोऽर्थसिद्धः ॥

अनुप्रासोऽलंकृतिः स्याच्छ्रेष्ठन्यासः पुनः पुनः ॥

यथा—

जयी जगत्सु विख्यातो जसवन्तनरेश्वरः॥१॥

अत्र जकारस्यानेकवारमावृत्तेरनुप्रासालंकारः ॥ वर्णः, पदं, वाक्यं, चरण इत्येतानि सर्वाणि शब्दाः। उक्तं च शास्त्रे। शब्दो द्विविधः, वर्ण-

त्मको ध्वन्यात्मकश्चेति ॥ पदं, वाक्यं, चरण इत्येतानि सर्वाण्यपि वर्णा-त्मकानि ॥

यथा—

छत्रं श्रीयशवन्तसिंहनृपतिः पुत्रेषु राज्ञां यथा,
तद्वद्वाजिषु सज्जनोऽस्ति बहुलं चाञ्चल्यमेतत्समम् ॥
नो नद्यां न च नेत्रयोर्न नटके नो वापि नार्यां तथा,
नो मीने न च मारुते न च मृगे नो मानसे दृश्यते ॥ १ ॥

अत्र नकारमकारवर्णयोरावृत्तेरनुप्रासालंकारः ॥

यथावा—

यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥
यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥ १ ॥

अत्र "दवदहन" इत्यस्य "तुहिनदीधिति" इत्यस्य च पदस्य, अथ च "यस्य सविधे दयिता" इति वाक्यस्य चावृत्तेरनुप्रासः । "दव-दहन" इति "तुहिनदीधिति" इति च शब्दौ समासयुक्तत्वात्पदे । "यस्य सविधे दयिता" इत्यस्य पदसमुदायरूपत्वाद्वाक्यत्वम् । पदलक्षणं तु "सुप्तिङन्तं पदम्" इति । वाक्यलक्षणं च "पदसमुदायो वाक्यम्" इति ॥

यथावा—

राजंस्ते यशवन्तसिंह ! हयराड्जेता कुरङ्गान् रये
दन्तीन्द्रानपवारयत्यतिबलान्दुर्गाणि चोल्लङ्घते ॥
संग्रामे जयमानयञ्जनमनो नृत्ये परं रञ्जयन्
दीनानां दमयँश्च दुःखमखिलं संस्तूयते स्तावकैः ॥

अत्र "यन्" इति पदांशस्यावृत्तेरनुप्रासालंकारः ॥

यथावा—

कोशोऽपूरि जनाः कृताश्च सुखिनो न्यायः कृतो निर्मलो
मन्त्रित्वे परतापसिंह ! भवता स्तेनादयो नाशिताः ॥

---

* राजराजेश्वरस्य प्रीतिपात्रमेतन्नामकोऽश्वः ॥

शान्ताः शत्रुगणा नमन्ति भवतस्तिग्मप्रतापातपा-
त्सम्यक्श्रीयशवन्तसिंहनृपते राज्यव्यवस्था कृता॥१॥

अत्र "पापा" इति पदांशस्यावृत्तेरनुप्रासालंकारः॥

महाराजाधिराज कर्नल्-सर- प्रतापसिंह के. सी. एस्. आई.
एडीकाङ्ग. टु हिज रोयल हाईनेस. दी प्रिंस आफ वेल्स.
इति पदोद्दाङ्कितस्य मरुधराधीशमुख्यमान्त्रिणश्चित्रम्



भगवतो वेदव्यासस्येदं लक्षणम्—

"स्यादावृत्तिरनुप्रासो वर्णानां पदवाक्ययोः॥" इति॥

काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"वर्णसाम्यमनुप्रासश्छेकवृत्तिगतो द्विधा ॥
सोऽनेकस्य सकृत्पूर्व एकस्याप्यसकृत्परः" ॥ इति ॥

वर्णसाम्यमर्थात्तादृशवर्णानां पुनरागमनमनुप्रासालंकारः । स च च्छेकवृत्तिगतत्वेन द्विविधः । अनेकवर्णानामेकवारं समतायां पूर्वोऽर्थाच्छेकानुप्रासः । एकवर्णस्याप्यनेकवारं समतायां परोऽर्थाद्वृत्त्यनुप्रासः । छेकानुप्रासे प्रकाशकृतेदमुदाहृतम्--

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी ॥
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥

अत्र नकारदकारसंयोगस्य णकारडकारसंयोगस्य चानेकवर्णात्मकस्यैकवारं समत्वाच्छेकानुप्रासः । एकवर्णमकारस्यानेकवारसमत्वादत्र वृत्त्यनुप्रासोऽपि । छेक इति चतुरस्य नाम । चतुरस्यानुप्रासश्छेकानुप्रासः । वृत्त्यनुप्रासस्यार्थं कुर्वन्प्रकाशकार आह—

"वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः ।" इति ॥

गुणप्रकरणे प्रकाशकृदाह—

"माधुर्यगुणे कोमलवर्णानामावश्यकता ।
ओजोगुणे परुषवर्णानामावश्यकता ॥" इति ॥

लक्षणकारिकायामेकस्यापीत्यत्र "अपि" शब्दो वर्तते । तेनानेकव्यञ्जनानामर्थात्संयुक्ताक्षराणामनेकवारं समतायां वृत्त्यनुप्रासः सिद्धो भवति ।

यथा—

अनङ्गरङ्गप्रतिमं तदङ्गं
भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।
कुर्वन्ति यूनां सहसा यथैताः
स्वान्तानि शान्तापरचिन्तितानि ॥ १ ॥

मम तु मतं, एकवर्णस्य समतायामनेकवर्णानां समतायामनेकवर्णानामेकवारं समतायामनेकवर्णानामनेकवारं समतायामेकवर्णस्यानेक-

वारं समतायामेकवर्णस्यैकवारं समतायां चोदाहरणान्तरमात्रम् । न तु प्रकारान्तरता । अपि चैकवर्णस्यैकवारं समतायामपि चमत्कारोऽनुभवसिद्धः । तत्राप्यनुप्रासालंकार एव भवेदत एकवर्णस्यानेकवारं समतेत्ययं नियमोऽपि न समीचीनः ।

मन्दश्चन्द्रोऽस्ति तरुणि तव वक्त्रस्य संनिधौ ।

इत्यत्र तकारस्यैकवारं समतापि श्रवणसुखदायिनी वर्तते । अपि चानुप्रासस्यालंकारत्वार्थं रसपर्यन्तानुधावनमप्यनावश्यकम् । शब्दालंकारत्वं तु श्रवणसुखमात्रेण सिद्ध्यति । अपि च काव्यप्रकाशगतकारिकाकारो लाटानुप्रासनामकमनुप्रासप्रकारमुक्त्वा तस्य पञ्च प्रकारानाह—

"शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ।
पदानां स पदस्यापि वृत्तावन्यत्र तत्र वा ॥
नाम्नः स वृत्त्यवृत्त्योश्च तदेवं पञ्चधा मतः ॥" इति ॥

लाटानुप्रासः शब्दस्य भवति। इदं तात्पर्यम्। पूर्वोक्तानुप्रासो वर्णस्य, अयं तु शब्दस्य । अत्र शब्दस्य वारंवारमागमनं भवति । "भेदे तात्पर्यमात्रतः" इति कथनेनेदं सिद्ध्यति। लाटानुप्रासेऽर्थस्य भेदो नास्ति, किं त्वन्वयरूपसंबन्धमात्रस्य भेदः । अर्थाद्भिन्नाभिन्नस्थले योजनमिति भेदः। यथा—

"यस्य च सविधे दयिता"—इत्यादि ।

अत्र तुहिनदीधितिशब्दस्य वारंवारं कथनमस्ति; परं तु स्थलद्वयेऽप्यर्थ एक एव । अन्वयरूपसंबन्धमात्रस्य भेदो वर्तते। अयं लाटानुप्रासः पञ्चप्रकारको भवति। पदानामर्थाद्वाक्यस्य (१), पदस्य (२), नाम्नश्च (३)। विभक्तिसहितं पदं, विभक्तिरहितं च नामेत्युच्यते । नाम्न आवृत्तौ त्रयः प्रकारा भवन्ति । स्थलद्वयेऽपि समासो भवति (१), स्थलद्वयेऽपि समासो न भवति (२), एकत्र समासः, एकत्र च समासाभाव (३) इति। लाटो देशविशेषः। देशभेदाल्लाटी पाञ्चाली वैदर्भीत्येवंप्रकारिकाः काव्यस्य रीतयोऽप्युक्ताः। तथायमनुप्रासो लाटदेशीयैरङ्गीकृतः, अतोऽस्य नाम लाटानुप्रास इत्युच्यते। मम तु मतं, पदं, वाक्यं, नाम, समास इत्येतान्युदाहरणान्तराण्येव । न तु प्रकारान्तराणि । भगवता व्यासेन "वर्णानां

पदवाक्ययोः" इति लक्षणं उदाहरणान्तरतात्पर्येणैवोक्तम्। न तु प्रकारान्तरतात्पर्येण। भगवान् भरतः शब्दालंकारेषु केवलं यमकमेव मन्वान इदं लक्षणमाज्ञापयति—

"शब्दाभ्यासं तु यमकं पादादिषु विकल्पितम्।
विशेषदर्शनं चास्य गदतो मे निबोधत॥ १॥" इति॥

भगवता भरतेन यमकस्य बहवः प्रकारा उक्ताः। अनुप्रासादयश्च सर्वे तदन्तर्गताः। काव्यप्रकाशगतकारिकाकारो यमकस्येदं लक्षणमाह—

"अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनःश्रुतिः॥
यमकं पादतद्भागवृत्ति तद्यात्यनेकताम्॥" इति॥

अर्थवत्त्वे सति भिन्नार्थवतां वर्णानां पुनःश्रुतिर्यमकम्। पादेऽर्थाचरणे, अथवा चरणस्य भागे वर्तनेन तद्यमकमनेकतां प्राप्नोति। एकार्थवतां वर्णानां पुनःश्रुतौ लाटानुप्रासोऽङ्गीकृतः। ततो व्यावर्तनाय यमकविशेषस्येदं स्वरूपमाह। द्वावर्थवन्तौ चेत्ताभ्यां भिन्नार्थवद्भ्यां भाव्यमिति। अनेन कथनेनेदं सिद्धम्। एकस्यार्थवत्त्वेऽन्यस्यार्थवत्त्वाभावे, द्वयोरप्यर्थवत्त्वाभावे च यमकं भवत्येव। परं तु द्वावप्यर्थवन्तौ चेत्ताभ्यां भिन्नार्थवद्भ्यां भाव्यमिति। एवं रीत्या यमकस्य त्रैविध्यम्॥

क्रमेण यथा—

समरसमरसा ते वाहिनी शूरमान्या॥

अत्र समरशब्दस्य पुनःश्रुतिरस्ति। तत्र प्रथमसमरशब्दस्यार्थो युद्धम्। द्वितीयसमरशब्दस्य तु कोऽप्यर्थो नास्ति। कुत इत्युक्तौ "समरसः" इति संपूर्णः शब्दः सार्थको विवक्षितः। समरसशब्दस्यार्थः समानरस इति॥

मधुपराजिपराजितमानिनी॥

भ्रमरपङ्क्तिर्मानिनीमजयत्। अर्थादुद्दीपनत्वान्मानिन्या मानमोचनमकरोत्। अत्र "पराजित" शब्दस्य पुनःश्रुतिरस्ति। अस्य शब्दस्यात्र द्वयोरपि स्थलयोः कोप्यर्थो नास्ति। मधुपराजिपराजितेत्यत्र मधुशब्दः पृथक्, राजिशब्दश्च पृथक्। पराजित इत्यत्र पराशब्दः पृथक्, जितशब्दश्च पृथक्। "परा" इत्युपसर्गार्थः पराङ्मुख इति। आह चिन्तामणि-

कोषकारः। "परा पराङ्मुखे" इति। जितशब्दस्यार्थो विजित इति। समुदायस्यार्थो विमुखीकृत्यार्थात्पलायनं कारयित्वा जयकरणम्।

"हारहारकुचाभोगा"

अत्र हारशब्दस्य पुनःश्रुतिरस्ति। तत्र प्रथमहारशब्दस्यार्थो मुक्ताहारः। द्वितीयहारशब्दस्यार्थो मनोहर इति। यमधातोर्यमकशब्दो निष्पन्नः। यमधात्वर्थ उपरमः। विश्राम इति यावत्। प्राचीनैर्वर्णानां पुनःश्रुतेः क्वचिद्द्वितीयचरणे क्वचित्तृतीयचरणे क्वापि चतुर्थचरणे विश्रामः कृतः। इयं यमकशब्दस्य सार्थकता।

यथावा—

"नवपलाशपलाशवनं पुरः
स्फुटपरागपरागतपङ्कजम्॥
मृदुलतान्तलतान्तमलोकय-
त्स सुरभिं सुरभिं सुमनोभरैः॥ १॥"

नवा नवीनाः पलाशवृक्षस्य पलाशाः पत्राणि यस्मिन्। परागैः परागतं व्याप्तम्। मृदुलं कोमलं तान्तं क्लान्तं लतान्तं लताग्रम्। मलयमारुतेन नर्त्यमानत्वात्क्लान्तो लताग्रभाग इत्यर्थः। सुरभिर्वसन्तः। सुरभिः सुगन्धश्च। अत्र प्रथमपलाशशब्दस्यार्थो वृक्षविशेषः। द्वितीयपलाशशब्दस्यार्थः पत्रम्। प्रथमपरागशब्दस्यार्थः सुमनोरजः। द्वितीयपरागशब्दस्य न कोप्यर्थः। कुत इत्युक्ते परागत इति पूर्णः शब्दः। प्रथमलतान्तशब्दस्य न कोप्यर्थः। कुत इत्युक्तौ मृदुल इति भिन्नः शब्दः, तान्त इति च भिन्नः शब्दः। द्वितीयलतान्तशब्दस्यार्थो लतानामग्रभागः। प्रथमसुरभिशब्दस्यार्थो वसन्तः। द्वितीयसुरभिशब्दस्यार्थः सुगन्ध इति। मम तु मतं, वर्णसाम्यमथ च वर्णानां पुनःश्रुतिरित्युभयमेकमेव। प्राचीनैरेकार्थत्वेन भिन्नार्थत्वेन च लाटानुप्रासयमकयोर्भेदः प्रदर्शितः। एकस्य शब्दस्यार्थवत्त्वेऽन्यस्य शब्दस्यार्थवत्त्वाभावेन, द्वयोरर्थवत्त्वाभावेन, द्वयोरर्थवत्त्वे तु भिन्नार्थवत्त्वेन चेति यमकस्य प्रकाराः प्रदर्शिता इतीयं किंचिद्विलक्षणतोदाहरणान्तरतासाधिका। न त्वलंकारान्तरतायाः प्रकारान्तरतायाश्च साधिका। इमानि सर्वाण्यनुप्रासस्यैवोदाहरणान्तराणि। कुत इत्युक्तावत्र

सर्वत्रानुभवसिद्धचमत्कारोऽनुप्रासस्यैव वर्तते। अथ चात्रार्थपर्यन्तानुधावनमप्यनावश्यकम्। कुतइत्युक्तावयं शब्दालंकारः। अस्मिञ्छब्दस्य वारं वारं श्रवणमात्रेण चमत्कारो भवत्येव। एकस्यैव शब्दस्य वारं वारं श्रवणे चमत्कारोऽस्ति। अर्थस्य वारं वारं श्रवणे चमत्कारो नास्ति। अतोऽनुप्रासः शब्दालंकारतयैव स्वीकृतो न त्वर्थालंकारतयापि। अनुप्रास उभयालंकारतया न केनापि स्वीकृतः। एवं द्वितीयचरणेऽथवा तृतीयचरणे चतुर्थचरणे वा वर्णानां पुनःश्रुतिरप्युदाहरणान्तरमात्रम्। प्रत्युत शब्दानां पुनःश्रुतेः समीपापेक्षया दूरतायां चमत्कारस्य न्यूनत्वम्।

यथा—

"अनन्तमहिमव्याप्तविश्वां वेधा न वेद याम्॥
या च मातेव भजते प्रणते मानवे दयाम्॥ १॥"

अत्र द्वितीयचतुर्थचरणयोर्यमकम्। प्राचीनैः शब्दालंकारे पुनरुक्तिवदाभासनामकमलंकारान्तरं स्वीकृतम्। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"पुनरुक्तिवदाभासो विभिन्नाकारशब्दगा।
एकार्थतेव शब्दस्य तथा शब्दार्थयोरयम्॥" इति॥

विभिन्नाकारशब्दगता एकार्थतेवार्थाद्वस्तुतो नैकार्थता, किंत्वेकार्थतेवार्थाद्भासमानैकार्थता पुनरुक्तिवदाभासालंकारः। शब्दस्यार्थादयमलंकारः शब्दस्य भवति। तथैवायमलंकारः शब्दार्थयोर्द्वयोरस्ति। उभयालंकार इत्यर्थः। अहं त्वस्य वक्ष्यमाणाभासालंकारेऽन्तर्भावं करिष्ये। प्रकाशकारादयः कतिपयप्राचीना वक्रोक्तेः श्लेषस्य च शब्दालंकारे गणनामकुर्वन्। सर्वस्वकारादयः कतिपयप्राचीना एतयोरलंकारयोरर्थालंकारे गणनामकुर्वन्। मयाप्यनयोरर्थालंकारत्वमङ्गीकृतम्। कुत इत्युक्तावर्थज्ञानं विना श्रवणमात्रेण यो रमणीयो भवति स शब्दालंकारः। वक्रोक्तिश्लेषयोरर्थविचारेणैव मनोरञ्जकता भवति। काव्यप्रकाशगतकारिकाकारादयः सर्वे प्राचीनाः काव्याक्षराणां छत्र-कमल-खड्गाद्याकारेण लेखने चित्रनामकं पृथगलंकारं शब्दालंकारे गणयाञ्चक्रुः। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता॥" इति।

अत्र चित्रशब्दार्थ आलेख्यम्॥

## ॥ पद्मबन्धः ॥

"भासते प्रतिभासार! रसाभाताहताविभा ।
भावितात्मा शुभा वादे देवाभा बत ते सभा ॥ १ ॥"

श्लोकस्यार्थः– रसैराभाता शोभिताऽहताऽप्रतिहताऽऽविभा सम्यग्दीप्तिर्यस्याः सा । भावितो निर्णीत आत्मा यस्यां सा । वादे तत्त्वकथायां शुभा । देवाभा देवतुल्येत्यर्थः ॥



## ॥ खड्गबन्धः ॥

"माराशिक्रशमेभमुखैरासाररंहसा ।
साराब्धस्तवा नित्यं तदार्तिहरणक्षमा ॥ १ ॥
माता नतानां संघट्टः श्रियां बाधितसंभ्रमा ।
मान्याथ सीमा रामाणां शं मे दिश्यादुमादिमा ॥ २ ॥"

अयमर्थः– मारस्य कंदर्पस्य अरिः शिवः, शक्र इन्द्रः, रामो रघुनन्दनः, परशुरामो वा, इभमुखो गणेशः, एतैरासाररंहसा धारापाततुल्यवेगेन सारमतिशयमारब्धः स्तवो यस्याः सा । तेषां माराशिक्रादीनां नित्यं पीडाहरणसमर्था! श्रियां संघट्टः संमेलनस्थानम् । बाधितो निरस्तः संभ्रम उद्वेगो यस्याः सा । रामाणां नारीणां सीमा परा काष्ठा । अन्यत्सुगमम् ।

काव्यप्रदीपकार आह । अयं चित्रालंकारो रसपोषको न भवति । तथापि कवेर्निपुणतावशाद्विस्मयहेतुत्वादलंकारो ज्ञातव्यः । रत्नाकरकारस्तु चित्रस्य काव्यात्मरूपरसास्वादप्रतिबन्धकतया न तादृशालंकारत्वमित्याह । प्राचीनानामेवं कथनेनेदं स्पष्टं भवति चित्रस्य किंचिदलंकारतास्तीति ॥

मम तु मतं चित्रबन्धस्य सर्वथाऽलंकारत्वं नास्तीति। कुत इत्युक्तावलंकारस्तु काव्यशोभाकरो धर्मः। अर्थज्ञानेन शोभाकरोर्थोऽर्थालंकारः। शब्दज्ञानेन शोभाकरः शब्दः शब्दालंकारः। अत्र नार्थविचारेण रम्यता। न च शब्दश्रवणेन। किं तु पद्माद्याकारालेख्यज्ञानेनेति चित्रकारवत्तस्य कर्तुश्चातुर्यमात्रम्॥

इतिश्रीमन्मरुमण्डलमुकुटमणि-राजराजेश्वर-जी, सी, एस्, आई, महाराजाधिराज-यशवन्तसिंहाज्ञानुसारेण कविराज-मुरारिदानविरचिते यशवन्तयशोभूषणग्रन्थे शब्दालंकारनिरूपणं नाम तृतीयाकृतिः समाप्ता॥३॥

॥ श्रीजगदम्बायै नमः ॥

# ॥ अथार्थालंकाराः ॥



एको भवत्यनेको यः पुनरेकोप्यनेकतः ।
तं नत्वा धरणीपालार्थालंकारान्प्रचक्ष्महे ॥ १ ॥

## ॥ उपमा ॥



भोजमहाराजो दण्ड्याचार्यो रुद्रटवाग्भटप्रभृतयश्च केचिदर्थालंकारेषु प्रथमं स्वभावोक्तिं निरूपयामासुः । एतैः स्वभावोक्तेः प्रथमं निरूपणे हेतुर्नाभिहितः । परं त्वेवं ज्ञायते प्रथमं स्वभावसिद्धालंकाराणां निरूपणं विधाय पश्चात्कल्पनासिद्धालंकाराणां निरूपणमुचितमिति । कुत इत्युक्तौ स्वाभाविकवस्तुज्ञानं प्रथमं भवति, काल्पनिकवस्तुज्ञानं पश्चाद्भवति । भगवद्भरतवेदव्यासादयो बहवः प्राचीना उपमां प्रथमं निरूपयन्ति । तत्र सर्वस्वचित्रमीमांसाकारावेवं हेतुं वदतः ॥

"बुध्यते ब्रह्मविज्ञानाद्यथा विश्वं तथा स्फुटम् ॥
अलंकाराः प्रबुध्यन्त उपमाज्ञानतः परे ॥ १ ॥
उपमैषा शैलूषी संप्राप्ता चित्रभूमिकाभेदान् ॥
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः ॥ २ ॥" इति ॥

मया तूपमाया अतिप्रसिद्धत्वात्प्रथममुपमा निरूप्यते । तदनन्तरमन्येऽलंकाराः प्राचीनैर्भिन्नभिन्नक्रमेण निरूपिताः । अपि च तत्र क्रमनियामकनिमित्तनिर्वाहोऽपि कर्तुमशक्यः । अतस्तैरशोकवनिकान्यायेन कर्तुरिच्छैव हेतुतया मन्तव्या । अस्य न्यायस्यायमर्थः । दशमुखो जानकीमशोकवने कुतो न्यवेशयदाम्रादिवने कुतो न न्यवेशयदिति प्रश्ने तदीयेच्छैव निमित्तमिति वक्तव्यम् । एतादृशशङ्कायाः समाधानं कर्तुरिच्छातिरिक्तं न भवति । अहं तु वर्णमालाक्रमानुसारेणोपमातिरिक्तालंकारान्नि-

रूपयिष्ये। तत्रादावुपमास्वरूपप्रदर्शनोपयोगिनी काचित्प्रक्रिया प्रदर्श्यते। अलंकाराः प्रायो लोकव्यवहारच्छायानुसारिणो वर्तन्ते। लोके पदार्थानां सादृश्यादिनिर्णयो बहुभिः प्रकारैर्भवति। तत्र गुरुत्वस्य रक्तिकामाषकतोलकादिभिर्निर्णयो भवति। उच्चैस्त्वनीचैस्त्वयोर्ह्रस्वत्वदीर्घत्वादीनां चाङ्गुलिवितस्तिहस्तधनुःप्रभृतिभिर्निर्णयो भवति। वस्त्रादीनां श्लक्ष्णताया रक्तादिवर्णस्य च सादृश्यविषये निर्णयो वस्त्रान्तरादिसमीपकरणाद्भवति। एतच्छायानुसारेण बुद्धावेकवस्तुनः समीपेऽन्यद्वस्तु कृत्वा तस्य यो गुणदोषादेः सादृश्यनिर्णयः क्रियते स उपमालंकारः। तथाहि, उपेत्युपसर्गार्थः सामीप्यम्। उक्तं च चिन्तामणौ "उप सामीप्ये" इति। "माङ्माने"। ततो भावेऽङि कृते माशब्दो निष्पन्नः। मानं, मितिः, विज्ञानं चेति पर्यायशब्दाः। उक्तं चिन्तामणिकोषकारेण " मितिः माने, विज्ञाने।" इति॥ विज्ञानं तु विशेषज्ञानम्, अर्थान्निर्णयः। उप सामीप्यान्मा मानमुपमेति व्युत्पत्त्या समीपे करणाज्जातं विशेषज्ञानं धुरंधरमतानुसारेणोपमानामाक्षरार्थः। एकस्य वस्तुनो वस्त्वन्तरसमीपकरणे त्रिधा निर्णयो भवति। न्यूनमधिकं समं चेति। तत्र वर्णनीयस्य न्यूनत्वं मनोरञ्जकत्वाभावादस्मिञ्छास्त्रे न ग्राह्यम्। आधिक्यं तु व्यतिरेकालंकारस्य विषयः। समत्वनिर्णय उपमाशब्दस्य रूढिः। सा च प्रथमाकृतौ प्रतिपादितविषया। एवं प्रकारेणोपमाशब्दोऽत्र योगरूढः। काव्यशोभाकरो धर्मोऽलंकारः॥ अतः—

आखण्डल इवोदारो मरुभूमेरधीश्वरः॥

एतादृशकाव्येषु शोभाकरधर्मस्तु समीपे कृत्वा कृतः समभावनिर्णयः। अत एव धुरंधरेणास्य नामोपमेति कृतम्। एवमेवोदाहरणानुसारेण धुरंधरेणेतरालंकाराणामपि नामानि कृतानि। एवं सर्वत्र ज्ञातव्यम्। अत्र काव्यशोभाकरधर्मोऽलंकारत्वेन स्वीकृतः। अतः कविरचनायामेवालंकाराङ्गीकारः। न त्वेकतरवस्त्रस्य समीपेऽन्यतरवस्त्रं कृत्वा तस्य श्लक्ष्णतारक्तिमादिविशेषज्ञाने। रमणीयत्वं चालंकारनाम्नैव स्पष्टतरम्। एवं सर्वेष्वलंकारेषु बोध्यम्॥

## सामीप्याद्यत्तु विज्ञानमुपमाऽसौ निगद्यते॥

यथा—

मरुद्वन्मरुभूपाल सर्वसंचारि ते यशः ॥

ममेदं सामान्यज्ञानं पूर्वमासीत् । राजराजेश्वरयशवन्तसिंहस्य यशः सर्वसंचारीति । परं तु स्वस्वराज्यसीमावधि संचारकरणाद्राज्ञामाज्ञायाः, कियद्दूरावधि खण्डेषु संचारकरणात्सूर्याचन्द्रमसोः, लोकत्रयसंचारित्वान्मारुतस्य च सर्वसंचारितया राजराजेश्वरयशसः सर्वसंचारिता कीदृशीति विशेषज्ञानं नासीत् । तस्य निर्णयं कर्तुं मया स्वबुद्धौ राजराजेश्वरस्य यशो मारुतस्य समीपे कृतं, तदेदं विशेषज्ञानं जातं, राजराजेश्वरयशसः सर्वसंचारिता मारुतसर्वसंचारितासदृशीति । "आखण्डल इवोदारो मरुभूमेरधीश्वरः ॥" इति वक्तुरेतत्सामान्यज्ञानं तु पूर्वमासीत्, राजराजेश्वरोऽतिवदान्य इति । परं त्विन्द्रस्य सामीप्यादिदं विशेषज्ञानं जातं, राजराजेश्वरस्योदारता महेन्द्रस्योदारतासदृशीति ॥

यथावा—

उव णिच्चलणिप्पन्दा भिसिणीपत्तम्मि रायए बलाआ ।
णिम्मलमरगयभायणपरिट्टिआ संखसुत्तिव्व ॥

संस्कृतम्—

पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका ।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥ १ ॥

अत्र नलिनीपत्रस्य बलाकिकायाश्च संबन्धस्य, बलाकिकाया निश्चलस्थितेश्च विषये मरकतभाजनगतशङ्खशुक्त्या सह नलिनीपत्रगतनिश्चलबलाकिकां बुद्धौ समीपे कृत्वा सादृश्यस्य निर्णयः कृतः । यन्नलिनीपत्रगतनिश्चलनिष्पन्दबलालिका मरकतपात्रगतशङ्खशुक्तिसदृशीति ।

यथावा—

तां सैव वेत्रग्रहणे नियुक्ता,
राजान्तरं राजसुतां निनाय ।
समीरणोत्थेव तरङ्गलेखा,
पद्मान्तरं मानसराजहंसीम् ॥ १ ॥

अत्र पश्यतां प्रथममिदं सामान्यज्ञानं तु वर्तते । वेत्रवतीप्रेरितेन्दुमत्येकैकराजमञ्चसमीपे क्षणं क्षणं विलम्ब्य मन्दगत्या राजान्तरं गच्छ-

तीति। परं तु तरङ्गलेखाप्रेरितयैकैकं पद्मं प्रति क्षणं क्षणं विलम्ब्य मन्दगत्या पद्मान्तरं गच्छन्त्या राजहंस्या सहेन्दुमत्या बुद्धौ समीपकरण इदं विशेषज्ञानं जातं, उक्तराजहंसीक्रियासदृशीन्दुमतीक्रियेति।

यथावा—

सा लोभयन्ती विविधैः कटाक्षै-
श्छायामपि स्प्रष्टुमदान्न चास्मै।
निजानुगं दन्तिवरं विधाय
सादी यथा नैति तदीयहस्ते ॥ १ ॥

अत्र कवेरिदं सामान्यज्ञानं तु प्रथमं वर्तते। नायिका नववयस्कं नायकमुक्तरीत्या प्रलोभयतीति। परं तु हस्तिनं निजानुगं विधाय तत्करगतत्वाभावरूपो यः करिप्रतारकस्य वृत्तान्तस्तेन सहोक्तनायिकावृत्तान्तस्य बुद्धौ समीपकरण इदं विशेषज्ञानं जातं, वर्णनीयनायिकायाः क्रियोक्तकरिप्रतारकक्रियासदृशीति। नाम्नोऽक्षरार्थस्याविचारणादुपमालंकारस्य साक्षात्स्वरूपमजानन्तः प्राचीना उपमायाः स्वरूपं सादृश्यमाहुः। न च सादृश्यमात्रमुपमालंकारः, किं तु प्रसिद्धवस्तुनः समीपे कृत्वा कृतः सादृश्यस्य निर्णयोऽलंकारः। प्रधानचमत्कारस्त्वस्यैव। अत्र सहृदयहृदयमेव साक्षि। सादृश्यं नोपमायाः स्वरूपं। किं तूपमायाः संपादकम्। इदं सादृश्यमात्रं तु रूपकाद्यनेकालंकारसंपादकम्। उपमालक्षणं सादृश्यमात्रमित्यङ्गीकारे भ्रान्तिरूपकसंदेहादिष्वतिव्याप्तिर्भवेत्। सादृश्यस्य त्वकृतसामीप्यसंबन्धेषु समानधर्मैकपदार्थेष्वपि सत्त्वात्तत्राप्युपमालंकारेण भवितव्यम्। यच्चुच्यते प्राचीनैः सादृश्यमुपमायाः स्वरूपतया न प्रदर्शितम्। किं तु सादृश्यस्थल उपमालंकारो भवतीति ज्ञापितमिति। इदं समाधानं न समीचीनम्। अलंकारग्रन्थकरणस्य प्रयोजनमलंकारस्वरूपस्य बोधकरणम्। एवं च सत्युपमायाः स्वरूपमनुक्त्वा सादृश्यस्थल उपमा भवतीत्येवं कथन उपमायाः स्वरूपस्य बोधो न भवति। एवं बोधने किं वा पाण्डित्यम्। उपमालंकारस्य ज्ञाता बालकोपीदं स्वयमेव ज्ञातुमर्हति, सादृश्यस्थल उपमालंकारो भवतीति। एवमन्येष्वप्यलंकारेषु बोध्यम्। प्राचीनैरुपमायाः स्वरूपं साधर्म्यमिति ज्ञातं, तदा भगवतो भरतस्य वेदव्यासस्य दण्ड्याचार्यप्रमुखानां च भ्रान्त्यादिसादृश्यमूल-

कालंकाराणामुपमाप्रकारत्वं कथनीयमापतितम्। अत एव च किंचिद्वै-लक्षण्याद्भगवतो वेदव्यासादे रूपकस्याप्युपमैवेति कथनीयत्वेनापतित-म्। उक्तं च रूपकप्रकरणे भगवता वेदव्यासेन—

"उपमैव तिरोभूतभेदा रूपकमेव वा।" इति।

अत एव बहूनां प्राचां रूपकादिष्वतिव्याप्तिवारणाय लक्षणेषु कतिपयानि विशेषणानि निवेशनीयत्वेनापतितानि। भगवतो भरतस्येदं लक्षणम्—

"यत्किंचित्काव्यबन्धेषु सादृश्येनोपमीयते।
उपमा नाम सा ज्ञेया गुणाकृतिसमाश्रया।" इति।

काव्यरचनायां यत्किंचित्सादृश्येनोपमा क्रियते सोपमा नाम ज्ञेया; सा च गुणाकृती आश्रित्य भवति॥ गुणशब्देन वर्णस्वभावक्रियादयः संगृह्यन्ते। भगवतो वेदव्यासस्येदं लक्षणम्—

"उपमा नाम सा यस्यामुपमानोपमेययोः।
सत्ता चान्तरसामान्ययोगित्वेपि विवक्षिता।" इति॥

उपमानोपमेययोः सत्ताऽर्थाद्विद्यमानता यस्यां वर्तते सोपमा नाम। पुनश्चान्तरसामान्ययोगित्वेऽप्यर्थादुपमानोपमेययोर्भेदे सति साधर्म्यसंब-न्धेपि सा विवक्षितेत्यर्थः। एतैरनन्वयालंकारो नोक्तः। अत एषामयम-भिप्रायः, एकस्मिन्नेव वस्तुन्युपमानोपमेयभावेप्युपमैवेति। यथा—"इन्दु-रिन्दुरिव श्रीमान्" इत्यत्रोपमानमुपमेयं चैक एवेन्दुः। उपमानोपमेययोर्भेदे सति साधर्म्येपि चोपमेति। यथा—"इन्दुरिवाननम्" इति॥ लक्षणानन्तरं च वेदव्यासेनोक्तम्—

"किंचित्सारूप्यमादाय लोकयात्रा प्रवर्तते।" इति।

अस्य कथनस्य तात्पर्यमिदं, किंचित्सारूप्येणापि काव्य उपमा भवतीति॥ दण्ड्याचार्यस्येदं लक्षणम्—

"यथाकथंचित्सादृश्यं यत्रोद्भूतं प्रतीयते।
उपमा नाम सा तस्याः प्रपञ्चोऽयं निदर्श्यते।" इति।

यत्र येन केनापि प्रकारेण सादृश्यमुद्भूतमर्थात्स्पष्टतया प्रतीयते सोपमा नाम। व्यङ्ग्योपमावारणायोद्भूतमिति विशेषणम्। भोजमहाराजस्येदं लक्षणम्—

"प्रसिद्धेरनुरोधेन यः परस्परमर्थयोः।
भूयोऽवयवसामान्ययोगः सेहोपमा मता।" इति॥

प्रसिद्ध्यनुसारेण परस्परं पदार्थयोर्भूयोऽर्थाद्बहुतराणामवयवानां सामान्यस्यार्थात्सादृश्यस्य यो योगः सेहार्थादलंकारशास्त्र उपमा मता। अप्रसिद्धोपमानवारणाय प्रसिद्धेरनुरोधेनेति। अत्रावयवा गुणक्रियारूपाः। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"साधर्म्यमुपमा भेदे॥" इति।

उपमानोपमेययोर्भेदे सति साधर्म्यमुपमेत्यर्थः। अनन्वयवारणाय "भेदे" इति। साधर्म्यं सादृश्यस्य पर्यायः। वामनस्येदं लक्षणम्—

"उपमानेनोपमेयस्य गुणलेशतः साम्यमुपमा।" इति।

अस्य सिद्धान्तः। उपमानोपमेयशब्दयोः स्वसंबन्धिसहितार्थबोधकत्वात्तयोरेकतरस्योपादान इतरस्य ग्रहणेऽर्थसिद्धेप्यत्रोभयोरुपमानोपमेययोरुपादानं लोकप्रसिद्धयोरुपमानोपमेययोर्ग्रहणार्थमिति। एतेन "कुमुदमिव मुखम्" इत्याद्यप्रसिद्धोपमाव्यावृत्तिः। लेश इति शब्दो यथा कथंचित्सादृश्यस्य बोधकः॥ सर्वस्वस्येदं लक्षणम्—

"उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्व उपमा" इति।

उपमानोपमेययोः साधर्म्ये भेदाभेदयोस्तुल्यत्व उपमालंकारः। कविसंप्रदायविरुद्धयोरुपमानोपमेययोर्वारणार्थमुपमानोपमेययोरिरिति। भेदे तुल्यता व्यतिरेके, अभेदे तुल्यता रूपके, एतयोर्वारणायोपमायां भेदाभेदतुल्यत्वस्याङ्गीकारः। विमर्शनीकार आह—"भेदतुल्यत्वे सहोक्त्यादीनामभेदतुल्यत्वे परिणामोत्प्रेक्षादीनामपि संग्रहः" इति। अलंकाररत्नाकरस्येदं लक्षणम्—

"उपमानेनोपमेयस्य सादृश्यमुपमा" इति।

कल्पितोपमावारणायोपमानोपमेयग्रहणम् । रुद्रटस्येदं लक्षणम्—

उभयोः समानमेकं गुणादि सिद्धं यथा यदेकत्र ।
अर्थेऽन्यत्र तथा तत्साध्यत इति सोपमा त्रेधा ॥" इति ॥

उभयोरर्थादुपमानोपमेययोर्यद्गुणादि समानमेकमर्थादेकजातीयं यथैकत्रार्थे सिद्धं तथाऽन्यत्रार्थे तत्साध्यते सोपमेत्यर्थः । सा च त्रिधा ।

यथा—

गोविन्दवदनं भाति चन्द्रबिम्बमिवोदितम् ।

अत्र प्रकाशरूपो गुणश्चन्द्रे भगवद्वदने च समानोऽर्थान्न्यूनाधिकभावरहितः । प्रकाशश्च स्वभावादेकजातीयोऽर्थात्सदृशः, स च यथैकत्र चन्द्रे सिद्धस्तथा वदने साध्यते। अनन्वयवारणायोभयोरिति। व्यतिरेकवारणाय समानमिति । दीपकतुल्ययोगितयोर्वारणायैकत्र सिद्धमन्यत्र साध्यत इति । दीपकतुल्ययोगितयोरुभयत्र सादृश्यस्य सिद्धत्वात् । साहित्यसुधासिन्धोरिदं लक्षणम्—

"तद्भिन्नत्वे सति तद्गतभूयोधर्मत्वमुपमात्वम् ।" इति ।

अनन्वयवारणाय तद्भिन्नत्वे सतीति। यत्किंचिद्धर्मवारणाय भूय इति विशेषणम् । वाग्भटस्येदं लक्षणम्—

"उपमानेन सादृश्यमुपमेयस्य यत्र सा ।
प्रत्ययाव्ययतुल्यार्थसमासैरुपमा मता" ॥ इति ।

अलंकारतिलकस्येदं लक्षणम्—

"अतिरोभूतभेदत्वेन सादृश्यप्रतीतिरुपमा" । इति ।

रूपकवारणायातिरोभूतभेदत्वेनेति विशेषणम् । अलंकारचूडामणेरिदं लक्षणम्—

"हृद्यं साधर्म्यमुपमा ॥" इति ॥

चमत्कारहीनोपमावारणाय हृद्यमिति। चन्द्रालोकस्येदं लक्षणम्—

"उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः॥" इति ॥

अनन्वयवारणाय द्वयोरिति । चमत्कारहीनोपमावारणाय लक्ष्मी-

रिति । व्यङ्ग्योपमावारणायोल्लसतीति । उल्लासश्च स्पष्टं भासमानत्वम् । कुवलयानन्दे चन्द्रालोकस्यैव लक्षणमस्ति, काव्यप्रदीपे काव्यप्रकाशस्यैव लक्षणमस्ति । प्रतापरुद्रीयस्येदं लक्षणम्—

"स्वतः सिद्धेन भिन्नेन संमतेन च धर्मतः ॥
साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा ॥" इति ॥

उत्प्रेक्षावारणाय स्वतः सिद्धेनेति । कुत इत्युक्तौ उत्प्रेक्षायां कदाचिदुपमानं लोकप्रसिद्धत्वाभावात्कविकल्पितं भवति । अनन्वयवारणाय भिन्नेनेति। कुत इत्युक्तौ तत्रोपमानोपमेययोर्भेदो नास्ति । सर्वप्रकारेण दुष्टोपमावारणाय संमतेनेति । कुत इत्युक्तौ लिङ्गवचनभेदाच्चमत्काराभावाच्च कवीनां साऽनिष्टा । श्लेषवारणाय धर्मत इति विशेषणम् । श्लेषे गुणक्रियादिधर्मेण साम्यं नास्ति; किंतु शब्दमात्रसाम्यम् । प्रतीपवारणायान्येन वर्ण्यस्येति । प्रतीप उपमेयेन सहोपमानस्य सादृश्यवर्णनं विद्यते । उपमेयोपमावारणायैकदेति । तत्रोपमाया वारद्वयं वर्णनात् । व्यङ्ग्योपमावारणाय वाच्यमिति । साहित्यदर्पणस्येदं लक्षणम्—

"साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः ॥" इति ॥

रूपके साम्यं व्यङ्ग्यं, व्यतिरेके वैधर्म्यस्याप्युपादानं, उपमेयोपमायां वाक्यद्वयं, अनन्वय एकस्यैव वस्तुन उक्तिरित्येतेष्वलंकारेषूपमाया नातिव्याप्तिः । अलंकारकौस्तुभस्येदं लक्षणम्—

"एकवाक्यवाच्यं सादृश्यं भिन्नयोरुपमा ॥" इति ॥

उपमेयोपमावारणायैकवाक्येति । व्यङ्ग्योपमावारणाय वाच्यमिति। अनन्वयवारणाय भिन्नयोरिति । चित्रमीमांसायामुपमाया लक्षणचतुष्टयमुक्तम्—

"व्यापार उपमानाख्यो भवेद्यदि विवक्षितः ॥
क्रियानिष्पत्तिपर्यन्तमुपमालंकृतिस्तु सा ॥" इति ॥

उपमाननामको व्यापार उपमितिक्रियासिद्धिपर्यन्तं विवक्षितश्चेत्सोपमालंकृतिः । उपमानव्यापारस्तु सादृश्यवर्णनमिति स्वयं चित्रमीमांसाकार एवाह "उपमानव्यापार उपमितिक्रियानिष्पादको व्यापारः, सादृश्य-

वर्णनमिति यावत्" इति। अत्रोपमासिद्धिपर्यन्तं सादृश्यवर्णनमिति कथनस्य प्रयोजनमिदम्। अग्रेऽतिरेकेऽसादृश्ये वा पर्यवसानं न भवेत्। अतिरेके पर्यवसाने व्यतिरेकालंकारः। असादृश्ये पर्यवसाने चानन्वयालंकारः। द्वितीयलक्षणं त्विदम्—

"निरूप्यमाणं कविना सादृश्यं स्वात्मनो न चेत्।
प्रतिषेधमुपादाय पर्यवस्यति सोपमा॥१॥" इति॥

इत्यपि लक्षणमनुसंधेयम्। सादृश्यं स्वनिषेधे पर्यवसायि न चेदिति कथनस्य प्रयोजनमपि व्यतिरेकानन्वययोर्वारणम्। तृतीयं लक्षणं त्विदम्—

"उपमितिक्रियानिष्पत्तिमत्सादृश्यवर्णनमुपमा॥" इति॥

इदं लक्षणं प्रथमलक्षणस्य निष्कर्षः। चतुर्थं लक्षणं त्विदम्—

"स्वनिषेधापर्यवसायि सादृश्यवर्णनमुपमा॥" इति॥

इदं लक्षणं द्वितीयलक्षणस्य निष्कर्षः। अलंकारोदाहरणग्रन्थस्येदं लक्षणम्—

"उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्व उपमा।" इति।

इदं लक्षणं सर्वस्वलक्षणानुसारि। अलंकारशेखरस्येदं लक्षणम्—

"भेदे सति साधर्म्यमुपमा।" इति।

इदं लक्षणं काव्यप्रकाशानुसारि। रसगङ्गाधरस्येदं लक्षणम्—

"सादृश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमालंकृतिः।" इति।

चमत्काररहितोपमाव्यावृत्तये सुन्दरमिति। अलंकार्यभूतोपमावारणाय वाक्यार्थोपस्कारकमिति। धुरंधरमतानुसारेण मदीयस्योपमाशब्दाक्षरार्थरूपस्वरूपलक्षणस्य रूपकादिषु केषुचिदप्यलंकारेष्वतिव्याप्तिर्नास्ति, सर्वेषां भिन्नभिन्नस्वरूपत्वात्। इदं तु तत्तदलंकाराणां नामाक्षरार्थेनैव स्पष्टम्। यद्यप्युपमारूपकादयो बहवोऽलंकाराः साधर्म्यमूलकास्तथाप्येकक्षेत्रमूलकानेकवृक्षन्यायेन ते भिन्नभिन्ना एव; अतोऽलंकारान्तरवारणाय नामार्थरूपलक्षणे न कस्यापि विशेषणस्य निवेशना-

ऽऽवश्यकता। उपमेयोपमा कल्पितोपमा च मन्मत उपमायाः प्रकारावेव। तच्चाग्रे स्पष्टीकरिष्यते। एतयोर्वारणाय यानि प्राचीनैर्विशेषणानि दत्ता-नि तानि तु प्रमादमूलकानि। प्रथमप्रतीपमप्युपमाप्रकार एव। दण्ड्या-चार्य्यैणाप्यत्र विषये विपर्यासोपमेत्युपमाप्रकारत्वमेवाभिहितम्। एतद्वा-रणाय प्राचीनैर्यानि विशेषणानि दत्तानि तानि प्रमादमूलकानि। अन-न्वयवारकविशेषणान्यपि प्रमादमूलकानि। कुत इति चेदनन्वयस्थल उद्धरकंधरतयोपमाया आभासस्य चमत्कारः। ततश्च तत्राभासालंकारः। तस्य चात्यन्तविलक्षणत्वादत्रोपमाया अतिव्याप्तेर्न शङ्कावकाशः। तच्चा-न्तर्भावाकृतावनन्वयप्रकरणे सविस्तरं वर्णयिष्यते। श्लेषवारणाय दत्तं विशेषणमपि प्रमादमूलकम्। शब्दसाधर्म्यस्याप्युपमासंपादकत्वात्। श्लेषा-लंकारस्य स्वरूपं पृथक्; तच्च तत्प्रकरणे स्फुटीकरिष्यते। व्यङ्ग्योपमाव्यावृ-त्तये यद्विशेषणमभिहितं तदपि प्रमादमूलकम्। कुत इति चेदर्थालंकारोऽर्थ-चित्रम्। अर्थश्च त्रिविधः। वाच्यो लक्ष्यो व्यङ्ग्यश्चेति। त्रिष्वप्यर्थेष्व-लंकारतासंपत्तियोग्यता वर्तते। प्राचीनैरपि वाच्योपमालक्ष्योपमाव्यङ्ग्यो-पमा अङ्गीकृताः।

वाच्योपमा यथा—

रत्नोपस्कृतहारमाल्यसुरभिप्राप्तालि वक्षःस्थल-
मुष्णीषोल्लसितं शिरः कटितटं हेमाम्बरोद्भासितम्।
कुञ्जान्निःसरतो विलासवसतेः कृष्णस्य तुल्यं तव
रूपं वीक्ष्य तु तरुतसिंह न हि मे तृप्तिर्मुरारेरभूत्॥ १॥

अत्रोपमाया उपमावाचकतुल्यशब्देनाभिधानाद्वाच्योपमा।

लक्ष्योपमा यथा—

नीवीं नियम्य शिथिलामुषसि प्रकाश-
मालोक्य वारिजदृशः शयनं जिहासोः।
नैवावरोहति कदापि च मानसान्मे
नाभेर्निभा सरसिजोदरसोदरायाः॥ १॥

अत्र सरसिजोदरसोदराया इति नाभेर्विशेषणम्। सोदरशब्दस्य

वाच्यार्थस्त्वेकोदरप्रभव इति । तस्य बाधितत्वात्सदृशे लक्षणा । प्रयोजनं तु शोभासंबन्धिसमानांशहरणस्य प्रतीतिः । रसगङ्गाधरकारो लक्ष्योपमाया उक्तोदाहरणमदात् ।

यथावा—

चौरो हास्यरसस्य किं हिमगिरेः किं वा प्रभाणां प्रभुः
क्षीराब्धेः किमु पृच्छकः किमथवा मित्रं तु मुक्तामणेः ।
बन्धुश्चन्द्रमसोऽथवा रघुपते वादी च कुन्दस्य किं
किं वा रूपरिपुर्यशस्तव पुनर्हंसस्य पुत्रोऽथवा ॥ १ ॥

अत्रापि चौरादिशब्दानां मुख्यार्थस्तु स्तेनादिः । तस्य चात्र बाधितत्वात्सदृशे लक्षणा ।

व्यङ्ग्योपमा यथा—

अद्वितीयं रुचात्मानं मत्वा किं चन्द्र हृष्यसि ।
भूमण्डलमिदं मूढ केन वा विनिभालितम् ॥ १ ॥

कस्यचिद्विदेशस्थितस्य किरणैरात्मानं संतापयन्तं चन्द्रं प्रत्येषोक्तिः । अत्र च कदापि बहिरनिर्गताया अत एव त्वयाप्यदृष्टाया मम प्रियाया आननं त्वत्सदृशमिति प्रतीयमानोपमा मूढपदेन ध्वन्यमानायां चन्द्रविषयायां वक्तृगतायामसूयायामलंकारः ॥ इदं व्यङ्ग्योपमोदाहरणं रसगङ्गाधरकारस्य ॥

यथावा—

वैदग्ध्योत्साहविद्याद्यैः प्रतापैररिभञ्जनैः ।
भोजः किमधिकश्चासीन्न्यूनः किं मरुवल्लभः ॥ १ ॥

अत्रापि समता न वाच्या, किं तु व्यञ्जनालभ्या । अलंकार्यभूतोपमावारणाय यद्विशेषणं दत्तं तदपि प्रमादमूलकम् । कुत इति चेत्, रसगङ्गाधरकारादिभिरुक्तं "कुत्रापि स्थले रसादीनां शोभामकुर्वतां केवलोपमादीनामप्यलंकारव्यवहारो भवति । यथा मञ्जूषास्थितस्य हारादेस्तत्समये कस्यापि पुरुषस्य स्त्रिया वा शोभाकरत्वाभावेऽपि तत्समयेऽपि लोके तस्या-

* श्रेष्ठपदार्थाना स्वरूप श्वेतं मन्यते, तस्माद्रूपस्यार्थात्सुन्दरताया रिपुरिति विवक्षितम् ॥

लंकारव्यवहारो वर्तत एव" इति। मन्मतं तु काव्यशोभाकरो धर्मोऽलंकार इति॥ अतः काव्यशोभाकरणमात्रादेवालंकारत्वसिद्धे रसादिपर्यन्तानुधावनमनावश्यकम् । चमत्कारहीनोपमावारणाय यद्विशेषणं दत्तं तदपि प्रमादमूलकम् । । कुत इत्युक्तावलंकारप्रकरणवशात्सचमत्कारिता त्वर्थसिद्धा । शोभाकरण एवालंकारपदवीप्राप्तेः । उपमायामेतद्विशेषणदाने सर्वत्रैतद्विशेषणदानमुचितं स्यात् । भिन्नलिङ्गादिदोषग्रस्तोपमावारणाय यद्विशेषणं दत्तं तदपि प्रमादमूलकम् । कुत इति चेत् सदोषत्वेप्युपमात्वस्य न हानिः । यथा कीटानुविद्धरत्ने न रत्नत्वहानिः। उक्तं च दण्ड्याचार्येणापि—

"न लिङ्गवचने भिन्ने न हीनाधिकतापि वा ।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ।" इति ॥

यद्युच्यते दोषवर्जनं सूचयितुमेवं विशेषणं दत्तमिति। तर्हि दोषप्रकरण एव तदभिधानमुचितम् ।

यथा—

आज्ञां सज्जनराणभूप भवतो याचे मुरारिः कवि-
र्भुक्तं स्वर्गसुखं त्वदीयनगरे गौर्युत्सवेऽनुग्रहात् ।
नाहं विस्मृतिमेमि मज्जति मनः कान्तावियोगाम्बुधौ
ज्योत्स्ना चैत्रभवा विना शशिमुखीं दैत्यो यथा भाति मे॥ १॥

अत्र दैत्य इत्युपमानवाचकः शब्दः पुल्लिङ्गः, ज्योत्स्नेत्युपमेयवाचकः शब्दः स्त्रीलिङ्ग इति भिन्नलिङ्गदोषः। परं तु रसिकश्रोतॄणामुद्वेगाभावान्न दोषः। "ज्योत्स्ना चैत्रभवा विना शशिमुखीं दैत्येव भातीह मे" इति कृते तु नोक्तदोषशङ्कावकाशः। अलंकारकौस्तुभस्य निष्कृष्टलक्षणमिदम्—

"यत्सादृश्यप्रतियोगितायामुपमेयतावच्छेदकावच्छिन्नत्वस्वाश्रयमात्रवृत्तिस्वानवच्छेदकधर्मसामानाधिकरण्योभयाभावः सोपमा ।" इति ॥

अत्र यच्छब्दः सादृश्यप्रतियोगितापरः । उभयाभाव इत्यस्य उभयप्रतियोगिताकान्यतरत्वावच्छिन्नप्रतियोगिताकोऽभाव इत्यर्थः। इति

तट्टीकायामभिहितम् । "इन्दुरिन्दुरिव श्रीमान्" इत्याद्यनन्वयवारणाय प्रतियोगिकोटावुपमेयतावच्छेदकावच्छिन्नत्वेत्युक्तम् । तत्रोपमानताया उपमेयतायाश्चैकरूपेणैव स्वीकारात् । सादृश्यप्रतियोगितायामुपमेयतावच्छेदकावच्छिन्नत्वस्यैव सत्त्वेनान्यतरत्वावच्छिन्नाभावो नास्तीति नातिव्याप्तिः । "शैला इवोन्नताः सन्तः किं तु प्रकृतिकोमलाः ।" इत्यादिव्यतिरेकवारणाय स्वाश्रयमात्रेत्याद्युक्तम् । तत्र सादृश्यप्रतियोगिताश्रयशैलवृत्त्युपमेयेषु सत्पुरुषेष्ववृत्ति यत्काठिनत्वं तत्तु प्रतियोगितानवच्छेदकम् । शैलत्वस्यैव प्रतियोगितावच्छेदकत्वात् । तादृशकाठिनत्वसामानाधिकरण्यस्यैव सादृश्यप्रतियोगितायां सत्त्वान्नोक्तान्यतरत्वावच्छिन्नप्रतियोगिताकाभाव इति न तत्रातिव्याप्तिः । एवं न्यायपरिभाषामनुसृत्य साहित्यविषयविवेचनं न सरलमिति सहृदयहृदयाल्हादकत्वाभावाद्वर्जनीयम् । उक्तं च रसतरङ्गिणीटीकायां केनचित्प्राचीनेन—

"गिरां तव तरङ्गिण्यां वारयोन्मत्तवारणान् ।
यद्भविष्यति लोकानामाविलो विरलो रसः ॥ १ ॥" इति ॥

हे सरस्वति ! नैयायिकवैयाकरणरूपोन्मत्तवारणानस्या रसरूपनद्याः सकाशादपवारय । अस्य तात्पर्यमिदम् । रसग्रन्थेषु न्यायव्याकरणयोर्विचारे रसानन्दो निवर्तते । उक्तं च केनचित्कविना—

"कठोरतार्किकालापैरलंकारपरिष्क्रिया ॥
वासीकुठारकुद्दालैर्नासाभरणरञ्जनम् ॥" इति ॥

प्राचीनानामयं सिद्धान्तः समीचीनः ॥

सुखावहं न साहित्ये तर्करीत्या निरूपणम् ॥
युद्धे घोररवव्याप्ते संगीतश्रवणं यथा ॥

भगवतो भरतस्य, भगवतो वेदव्यासस्य, दण्ड्याचार्यस्य, सूत्रकारवामनस्य चेदं मतम्, यत्किंचित्सादृश्येनोपमा सिध्यतीति । भोजमहाराजस्येदं मतम्, यत्किंचित्सादृश्य उपमा न सिध्यति, किं तु प्रसिद्ध्यनुसारेण बहूनामवयवानां सामान्ययोग उपमा भवतीति । यत्किंचित्सादृश्य उपमाऽभावे साहित्यसुधासिन्धोरपि संमतिर्वर्तते । अप्रसिद्धोपमाना-

नङ्गीकारे वामनसर्वस्वकारादीनामपि संमतिः । काव्यप्रकाशगतकारिकाकारादयो बहवः प्राचीना इमं विवादमत्याक्षुः । मम तु मतं, भरतादीनां मतं समीचीनमिति । उपमायां भूयोधर्मवत्त्वस्य नावश्यकता, किंचित्सादृश्येनाप्युपमासिद्धेः । एतच्च मया लोकालंकारच्छायानुसारेण काव्यालंकारस्वीकारप्रकरणे स्पष्टीकृतम् । बहूनामवयवानां सामान्ययोगस्याप्यनावश्यकता । एकावयवसमानतयाप्युपमासिद्धेः । प्रसिद्धोपमानस्यापि नावश्यकत्वं, प्रत्युताप्रसिद्धोपमानस्यान्वेषणं कृत्वाऽऽनयने कवेश्चातुर्याधिक्यम् ॥

प्रकाशते हरेरेतद्वक्त्रं पूर्णशशाङ्कवत् ॥

अत्र चन्द्रः प्रसिद्धमुपमानम् । वर्णाकृतिगुणरूपानेकावयवसामान्ययोगो वर्तते । "मरुद्वन्मरुभूपाल सर्वसंचारि ते यशः ।" इत्यत्र राजराजेश्वरस्य यशसः सर्वसंचारितोपमार्थमप्रसिद्धोपमानं मारुतोऽन्विष्यानीतः । अत्र च सर्वसंचारितारूपैकावयवस्य समानताया योगो वर्तते । तथापि "प्रकाशते" इत्येतदुदाहरणोपमापेक्षयाऽस्यामुपमायां मनोरञ्जकताधिक्यम् । अत्र सहृदयहृदयमेव साक्षि । भोजमहाराजेनोपमाया एवं स्वरूपमङ्गीकृतमतोऽप्रसिद्धोपमानस्यैकावयवसमतायोगे साम्यनामकोऽन्योऽलंकारः स्वीकृतः । इयं किंचिद्विलक्षणता नालंकारान्तरसाधिका, अतो मया साम्यस्योपमायामन्तर्भावः कृतः । अस्मिन्नुपमाप्रकरणे तु मया यावतो ग्रन्थान्विचार्यायं ग्रन्थो निर्मितस्तेषां सर्वेषां लक्षणानि लिखितानि । परं तु सर्वेषामलंकाराणां प्रकरण एषां सर्वेषां ग्रन्थानां लक्षणलिखने त्वतीवग्रन्थविस्तरो भवेदतोऽन्येषामलंकाराणां प्रकरणे त्वत्यावश्यकलक्षणानि प्रदर्शयिष्यन्ते । उपमेयमुपमानं धर्मो वाचक इत्येतान्युपमायाः साधनसामग्री । उपमीयत इत्युपमेयम् । समीपे कृत्वा यन्मीयतेऽर्थान्निर्णयविषयीक्रियते तदुपमेयमित्यर्थः । उपमीयतेऽनेनेत्युपमानम् । अनेन सह समीपे कृत्वा मीयतेऽर्थान्निर्णयः क्रियते तदुपमानमित्यर्थः । यस्मिन् वस्तुनि यद्वस्तु तिष्ठति तत्र धारकं वस्तु धर्मि । यो ध्रियते स धर्मः । यथा पृथिव्यां गन्धः । अत्र गन्धो धर्मः । पृथिवी धर्मिणी । उपमेयोपमानयोः स्थितो यो धर्मः स समानधर्मः । अयं च साधारणधर्म इत्यप्युच्यते । उक्तमितेर्वक्ता, इवादिशब्दो वाचकः । केचित्प्राचीनाः "अधिकगुणमुपमानं, न्युनगुणमुपमेयम्" इत्याहुः ।

परं त्वयं सिद्धान्तो न समीचीनः। अधिकगुणवता सह न्यूनगुणवतः सामीप्यान्निर्णये क्रियमाणे न्यूनगुणस्य न्यूनगुणत्वमेव सिद्ध्येत्। तत्त्वत्रानिष्टम्। अत्र तु समतानिर्णय इष्टः। कतिपयप्राचीना इत्थमाहुः। "अप्रकृतमुपमानं, प्रकृतमुपमेयम्" इति। अयमपि नियमो न समीचीनः। कुतः, प्रकृतेन प्रकृतस्य, अप्रकृतेनाप्रकृतस्य चोपमाया अपि प्राचीनैः प्रदर्शितत्वात्। तच्चाग्रे प्रदर्शयिष्यते। कतिपयप्राचीनानामयं सिद्धान्तः। "प्रसिद्धगुणमुपमानमप्रसिद्धगुणमुपमेयम्" इति। अत्र ममापि संमतिः। अत्रोपमेयगुणस्याप्रसिद्धिकथनस्य नेदं तात्पर्यं, यदुपमेयस्य विवक्षितगुण उपमाकरणात्पूर्वं सुतरामज्ञात एवेति। किं त्विदं तात्पर्यम्, उपमेयनिष्ठोऽमुको गुणो दोषो वा कियान् कीदृशश्चेत्यस्य ज्ञानं नास्तीति। अत उपमेयं प्रसिद्धगुणवत उपमानस्य समीपे कृत्वा तत्सादृश्यस्य निर्णयः क्रियते। इदं प्रसिद्ध्यप्रसिद्धिकथनमुपमाकरणस्य प्रयोजनमात्रज्ञापनार्थम्। न तूपमेयोपमानयोराधिक्यन्यूनत्वज्ञापनार्थम्। अन्यथा वर्णनीयस्य न्यूनत्वमरुचिकरत्वाद्विरसं स्यात्। उपमा वर्णाकृतिगुणानाश्रित्य भवति। वर्णः श्वेतपीतादिः। आकृतिरवयवसंबन्धः। गुणस्त्वौदार्यशौर्यादिः। अत्रोपलक्षणत्वात्क्रियादिसमस्तधर्माणां गुणे संग्रहकरणे तात्पर्यम्। यद्यपि न्यायशास्त्रे श्वेतपीतादयो वर्णा अपि गुणेष्वेव गणिताः, परं त्वलंकारशास्त्रे लोकव्यवहारानुसारेणैषां वर्णत्वेन गुणेभ्यः पृथग्व्यवहारः। न्यायशास्त्रे क्रियादयोऽपि गुणापेक्षया भिन्नतया स्वीकृताः, परं साहित्यशास्त्रे तु तेषां गुणेष्वेव संग्रहः कृतः॥

ओष्ठस्ते सखि विद्रुमेण सदृशः कण्ठः समः कम्बुना,
वाणी कोकिलवाक्समा गिरिसमावेतौ च वक्षोरुहौ।
वेणी नागवधूसमा तनुरसौ सौदामिनीविभ्रमा,
वक्त्रं चन्द्रसमं त्वदीयविभवो नान्यत्र संदृश्यते॥ १॥

"ओष्ठस्ते सखि विद्रुमेण सदृशः" इत्यत्र वर्णविषये, "कण्ठः समः कम्बुना" इत्यत्राकृतिविषये, "वाणी कोकिलवाक्समा" इत्यत्र गुणविषये, "गिरिसमावेतौ च वक्षोरुहौ" इत्यत्र कठोरत्वगुणविषय आकृतिविषये च, "वेणी नागवधूसमा" इत्यत्र वर्णाकृतिविषये, "तनुरसौ सौदामिनीविभ्रमा"

इत्यत्र तनुत्वचाञ्चल्यगुणविषये वर्णविषये च, "वक्त्रं चन्द्रसमं" इत्यत्र वर्णाकृतिविषय आनन्ददायित्वादिगुणविषये चोपमा ॥ केचन प्राचीना धर्मस्य पञ्चप्रकारत्वमाहुः । अनुगामी बिम्बप्रतिबिम्बभावापन्न उपचरितो वस्तुप्रतिवस्तुभावापन्नः श्लेषश्चेति । उपमेयोपमानयोरेकस्वरूपेण वर्तमानो धर्मोऽनुगामीत्युच्यते ॥

यथा—

"मरुद्वन्मरुभूपाल सर्वसंचारि ते यशः" ।

इत्यत्र सर्वसंचारितारूपो धर्म उपमेयोपमानयोरेकस्वरूपेण वर्तते, अतोयं धर्मोऽनुगामी । उपमेयोपमानयोर्धर्मयोर्भेदे सति सादृश्यात्तयोर्द्धर्मयोरैक्यं बिम्बप्रतिबिम्बभाव इत्युच्यते । एवं बिम्बप्रतिबिम्बभावं प्राप्तो धर्मो बिम्बप्रतिबिम्बभावापन्नधर्म इत्युच्यते ।

यथा—

गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥ १ ॥

अत्र बुधजन उपमेयम् । महादेव उपमानम् । इन्दुगरले गुणदोषौ च धर्माः । ते च परस्परं भिन्नाः । तथापीन्दुगुणौ सौम्यतया श्लाघ्यतादिना च सदृशत्वादेकीभूय साधर्म्यं भजतः । दोषगरले निन्द्यत्वादिना सदृशत्वादेकीभूय साधर्म्यं भजतः । इन्दुगरलपक्षे ग्रहणं धारणम् । गुणदोषपक्षे ग्रहणं ज्ञानम् । गृह्णन्नित्येकशब्देन प्रतिपादनादेकतां प्राप्य साधर्म्यं भजतः । इन्दुपक्षे शिरसा श्लाघनमर्थाच्छिरसा धारणम् । गुणपक्षे शिरःकम्पनद्वारा स्तुतिः । गरलपक्षे कण्ठे नियमनं स्थापनम् । दोषपक्षे वाणीद्वारा कण्ठाद्बहिरनुद्घाटनम् । अत्रापि नियच्छतीत्येकशब्देन प्रतिपादनादेकत्वेन बुध्यमानं नियमनं साधरणधर्मः । बिम्बप्रतिबिम्बे भिन्ने भवतः, तथापि सादृश्यादेकत्वं भजतः । अनेन न्यायेनेदृशं धर्मं बिम्बप्रतिबिम्बभावापन्नधर्ममाहुः । उपमेयोपमानयोर्मध्यादेकत्र वर्तमानोऽन्यत्रारोपितो धर्म उपचरित इत्युच्यते ।

यथा—

सरोरुहमिवाभाति विकसल्लोचनं तव ।

अत्र विकासक्रियारूपो धर्मो वस्तुतः सरोरुहे प्रसिद्धो लोचने त्वारोपितः। लोचन उन्मीलनक्रिया वर्तते, सा च विकासक्रियातो भिन्ना। उपमानोपमेययोर्वर्तमानस्यैकस्यैव धर्मस्योभे प्रति वारद्वयं कथने स धर्मो वस्तुप्रतिवस्तुभावापन्नधर्म इत्युच्यते। आपन्नशब्दार्थस्तु प्राप्त इति। वस्तूपमेयम्। प्रतिवस्तूपमानम्। भावः स्थितिः। द्वयोरुपमेयोपमानयोः स्थितिं प्राप्तो यो धर्मः स वस्तुप्रतिवस्तुभावापन्नधर्मः। तस्य धर्मस्य पृथक्पृथक् शब्देन कथनं पुनरुक्तिदोषनिवारणार्थम्।

यथा—

सा तेन जगृहे साध्वी हठात्साध्वसकम्पिता।
वानरेणातिलोलेन वाताधूतेव वल्लरी॥ १॥

अत्र सीतावल्लर्योरुपमेयोपमानता। अनयोः कम्पनरूपक्रियासाधर्म्यस्यैव "वेप-धू" इति धातुरूपपर्यायशब्दाभ्यामुभे प्रति द्विवारं कथनम्। अत्रैकस्यैव धर्मस्य पर्यायेण द्विवारं कथनेऽप्युपमा सिध्यतीति पृथङ् निर्देशः। उपमेयोपमानयोर्वर्तमानौ यौ भिन्नौ धर्मौ तद्वाचकैकशब्दः स्वरूपं यत्साधर्म्यं तच्छ्लेषसाधर्म्यमित्युच्यते॥

यथा—

एष ते विद्रुमच्छायो मरुमार्ग इवाधरः।
कस्य नो तनुते तन्वि! पिपासाकुलितं मनः॥ १॥

यथावा—

सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव।

विद्रुमच्छायः सकलकलमिति शब्दमात्रसाधर्म्यम्। विद्रुमच्छायप्रवालवर्णः, विगतद्रुमच्छायश्च। सकलकलं कोलाहलसहितं, संपूर्णकलासहितं च। एतादृशस्थले कतिपयप्राचीना वदन्ति। अत्रोपमालंकारो नास्ति, किं तु श्लेष इति। कतिपयप्राचीनास्त्वेवं वदन्ति। अत्र श्लेषालंकारो न विद्यते किं तूपमेति। अस्य विवादस्य निर्णयः श्लेषालंकारप्रकरणे करिष्यते। रत्नाकरकृताऽप्रकृतेनाप्रकृतस्य प्रकृतेन प्रकृतस्य चोपमा दर्शिता॥

क्रमेण यथा—

स्वरेण तस्याममृतस्रुतेव
प्रजल्पितायामभिजातवाचि ॥
अप्यन्यपुष्टाः प्रतिकूलशब्दाः
श्रोतुर्वितन्त्रीरिव ताड्यमानाः ॥ १ ॥

अत्रान्यपुष्टा वीणा चोभयेप्यप्रकृताः । प्रकृता तु वर्णनीया नायिकावाणी ॥

सदयं बुभुजे महाभुजः
सहसोद्वेगमियं व्रजेदिति ॥
अचिरोपनतां स मेदिनीं
नवपाणिग्रहणां वधूमिव ॥

नववध्वा विश्वासेनोपभोगस्य सर्वजनप्रसिद्धत्वान्नवपाणिगृहीता नार्युपमानम् । अत्र च वर्तमानसमये राजन्युभे अपि वर्णनीयत्वात्प्रकृते। अलंकारोदाहरणादिग्रन्थेषु वैधर्म्येणाभावरूपसाधर्म्येण चोपमा प्रदर्शिता॥

क्रमेण यथा—

संतोषाद्राजते विप्रोऽसंतोषादिव भूपतिः ॥
स्फुरदर्धमिलन्नेत्रा श्रान्ता दोहददुःखिता
विभाति मृगशावाक्षी रतान्तसुखिता यथा ॥

अत्र संतोषासंतोषौ सुखदुःखे च परस्परं विरुद्धत्वाद्वैधर्म्ये ॥

न भवति भवति च न चिरं
भवति चिरं चेत्फले विसंवदते ॥
कोपः सत्पुरुषाणां
तुल्यः स्नेहेन नीचानाम् ॥ १ ॥

अत्र खलानां मित्रतायाः सत्पुरुषाणां कोपस्य च सादृश्यस्य वर्णनम्। प्रथमं तु द्वयोर्भवनं नास्ति, भवनं चेन्न स्थैर्यम् । स्थिरतायां च फलाभावः । इदमभावरूपं साधर्म्यम् । दण्ड्याचार्येणासंभावितोपमा कथिता ॥

यथा—

चन्द्रबिम्बादिव विषं चन्दनादिव चानलः ॥
परुषा वागितो वक्त्रादित्यसंभावितोपमा ॥ १ ॥

अत्राप्यभावोऽस्ति, परं त्वसंभवे तात्पर्यम् । कैश्चित्प्राचीनैः पदमात्रसंबन्धिनोरर्थयोरुपमायां पदार्थोपमा । वाक्यसंबन्धिनोरर्थयोरुपमायां वाक्यार्थोपमा । समासप्रतिपादितोपमायां समासोपमेत्युक्तम् ॥

क्रमेण यथा—

इन्दुरिवाननम् ॥

अत्रेन्दुराननमिति चैकैकं पदम् । अत इयं पदोपमा ॥

शरत्सुधांशुवद्रम्यं विभाति वदनं तव ॥

अत्र शरदिति विशेषणवाचकं पदम् । सुधांशुरिति विशेष्यवाचकं पदम् । एतयोः पदयोर्मेलनाद्वाक्यम् । उपमेयपक्षे वदनं विशेष्यम्, तवेति विशेषणम् । अनयोश्च पदयोर्मेलनाद्वाक्यम् । एतयोर्वाक्यार्थयोरुपमायाः सत्त्वादियं वाक्योपमा ॥

मुखाब्जम् ॥

इत्यत्राब्जमिव मुखमित्यर्थो भवति। अयं समास उपमितसमासः । एवं समासेनोपमालाभेनेयं समासोपमा । मम तु मतम्, पदवाक्यसमासानां भेदश्चमत्कारेऽनुपयोगित्वात्प्रकारान्तरयोग्यो न भवति । प्राचीनैरुपमेयोपमानसाधारणधर्मवाचकानां चतुर्णामुपादाने पूर्णोपमा । एतन्मध्यादेकस्य द्वयोस्त्रयाणां वानुपादानेऽर्थादुपमेयोपमानसाधर्म्याणां शब्देन कथनाभावे वाचकस्य चोच्चारणाभावे लुप्तोपमेत्युच्यते ॥

क्रमेण यथा—

यशवन्तनरेन्द्रोयमुदारो मघवानिव ॥

अत्रेन्द्र उपमानम् । राजराजेश्वरयशवन्तसिंह उपमेयम् । औदार्यं साधारणधर्मः । इव शब्दो वाचकः । एषां चतुर्णामुपादानात्पूर्णोपमा ॥

आस्ते मरुधराधीश आखण्डलसमो भुवि ॥

अत्र मरुधराधीश उपमेयम् । इन्द्र उपमानम् । इव शब्दो वाचकः ।

इति त्रयाणामुपादानमस्ति, उदारतादिधर्मस्योपादानं नास्तीति धर्मलुप्ता । उदारतादिधर्मस्य प्रसिद्ध्या लाभो भवति ॥

चन्द्रमुखी ॥

इत्यत्र चन्द्र उपमानं, मुखमुपमेयं चोपात्तम् । प्रकाशादिधर्मस्य प्रसिद्ध्या, इवादिवाचकस्य च समासेन लाभो भवतीतीयं धर्मवाचकलुप्ता ।

मृगनयनी ॥

अस्यायमर्थः, मृगनयनसदृशनयनवतीति । मृगशब्दादुत्तरं नयनसदृश इत्यंशस्य समासविधेर्लोपः । अत्र मृगस्य नयनमुपमानम् । तस्य चञ्चलताधर्मस्य, इवादिवाचकशब्दस्य चानुपादानादियमुपमानधर्मवाचकलुप्ता । नयनस्योपमानस्य सादृश्यवाचकस्य च समासेन, चञ्चलताधर्मस्य च प्रसिद्ध्या लाभो भवति । इदमुदाहरणं प्रकाशकारेण दत्तम् । एवं लुप्तोपमानामनेके प्रकारा ग्रन्थकारैरुक्ताः । दीक्षितैः कुवलयानन्दे लुप्तोपमाया अष्टौ प्रकाराः प्रदर्शिताः । प्रत्ययस्यार्थेन योपमा भवति सा प्रत्ययोपमा ।

यथा—

राजन् भो नवकोटलक्षितमरुस्थानाधिप! श्रूयतां,
वातं स्थावरयन्नभः पुटकयन्स्रोतस्विनीः सूत्रयन् ।
अब्धीन्पल्वलयन्वनं विटपयन्क्षोणीं रयाल्लोष्टय-
न्कुध्रं सर्षपयंस्त्वदीयहयराड् नो वाक्पथे वर्तते ॥ १ ॥

अत्र वाताद्युपमेयम् । स्थावराद्युपमानम् । उपमानवाचकः स्थावरादिशब्दोत्तरं णिच्प्रत्ययः । तदग्रे च शतृप्रत्ययः । स्थावरयन्नित्यस्यायमर्थः, स्थावरं कुर्वन्नर्थात्स्थावरसदृशं कुर्वन्नित्यादि । अत्र वाचकार्थस्य बोधः प्रत्ययेन भवति । कुवलयानन्दग्रन्थकरणानन्तरं चित्रमीमांसानामको ग्रन्थो दीक्षितैर्निर्मितः । तस्मिन्नुक्तम्, पूर्णालुप्ताविभागो वाक्यसमास-प्रत्ययविशेषद्वारोदाहरणदर्शनफलं च व्याकरणशास्त्रस्य कौशलप्रदर्शनमात्रम् । अलंकारशास्त्रस्य बोध एषां न कश्चिदुपयोग इति । मम तु मतम्, समासविधिनोपमानादीनां लोपकरणं वाचकार्थस्य च

प्रत्ययादिभिः कथनमित्येषा व्याकरणशास्त्रस्य प्रचलिता रीतिः। अत्र श्लाघनीया व्याकरणशास्त्रस्यापि का वा कुशलता। अपि च प्रसिद्धधर्मस्य स्वतो लाभात्तस्योपादानाभावे गौरवदोषस्य निवृत्तिमात्रम्। एषु न कश्चिदपि चमत्कारः। एवं वर्णाकृत्यादीनां प्रदर्शनमप्युपमाया उदाहरणान्तरबोधार्थम्। न तूपमाप्रकारान्तरार्थम्। अत एव द्रव्यजात्याद्युदाहरणान्तरप्रदर्शनार्थं मया यत्नो न कृतः॥

"उपमा नाम सा ज्ञेया गुणाकृतिसमाश्रया॥"

इति कारिकया भगवतो भरतस्याप्युदाहरणभेददर्शन एव तात्पर्यम्, न तूपमाप्रकारदर्शने। अन्यथा कारिकायां "गुणाकृतिकृता द्विधा" इति वदेत्। सूत्रकारो वामनो वदति—

"स्तुतिनिन्दातत्त्वाख्यानेषु॥" इति॥

स्तुतौ, निन्दायां, तत्त्वाख्याने चार्थादज्ञातज्ञापन उपमाया अनुसरणम्॥

क्रमेण यथा—

"मरुद्वन्मरुभूपाल सर्वसंचारि ते यशः॥"

इत्यत्र स्तुत्यर्थमुपमा॥

"आज्ञां सज्जन शाण भूप"—

इत्यत्र वियोगदशायां चैत्रचन्द्रिकाया निन्दार्थमुपमा। तत्त्वाख्यानाय वामनेनोपमाया इदमुदाहरणं दत्तम्—

तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले॥
यस्तन्वि तारकान्यासः शकटाकारमाश्रितः॥

उक्तोदाहरणे लोकोत्तरचमत्काराभावादलंकारो नास्ति। अतः साहित्यशास्त्रानुसारेण मयोदाहरणान्तरं प्रदर्श्यते—

पद्मिनीव सुगन्धा या विद्धि तां पद्मिनीमिह॥

एवं मा वद। अयं तु स्तुतिरूपत्वाद्वामनमतानुसारेण प्रथमभेद एवेति। कुतः स्तुतये नेदं वर्णनं, किं तु कामशास्त्रे पद्मिनी, चित्रिणी,

हस्तिनी, शङ्खिनीति स्त्रीणां चतस्रो जातय उक्ताः । उक्तोपमा पद्मिनी-ज्ञापनार्थमस्ति । केचित्प्राचीना निरवयवसावयवत्वाभ्यां समस्तवस्तु-विषयत्वेनैकदेशविवर्तित्वेन परंपरितत्वेन चोपमायाः प्रभेदानाहुः । या केवलयोरेव वस्तुनोरुपमा भवति न त्ववयवसहितयोः सा निरवयवा । अवयवसहितयोरवयविनोर्योपमा भवति सा सावयवा । सावयवा द्वि-प्रकारा । समस्तवस्तुविषया, एकदेशविवर्तिनी च । उपमेयोपमानपक्षयो-रवयवयोरवयविनोश्च समस्तानां शब्देन कथने समस्तवस्तुविषया । पक्षद्वयमध्यात्कस्यचिदेकस्य वस्तुन उपमानपक्ष उपमेयपक्षे वा शब्दाद-नभिधान एकदेशविवर्तिनी । परंपरया वस्तूनामुपमा परंपरितोपमा ॥

क्रमेण यथा--

आखण्डल इवोदारो मरुभूमिनरेश्वरः ॥

अत्रावयविनोरेव केवलयोरुपमा वर्तत इति निरवयवा ॥

मुखं मृगाङ्कतुल्यं ते नेत्रे चाब्जसहोदरे ॥
स्मितं ज्योत्स्नासमं कान्तचकोरानन्ददायिनि! ॥१॥

अत्रोपमेयपक्षे मुखमवयवि, नेत्रस्मिते अवयवौ । उपमानपक्षे मृगाङ्कोऽवयवी, कलङ्कज्योत्स्ने अवयवौ। एवं चावयवसहितयोरवयविनो-रुपमायाः सत्त्वात्सावयवा । अत्रोपमेयपक्षे यावतामवयवावयविनां कथनं तावतामेवावयवावयविनामुपमानपक्षेऽपि कथनमिति समस्तव-स्तुविषया ॥

मकरप्रतिमैर्महाभटैः
कविभी रत्नसमैः समन्वितः ॥
कवितामृतकीर्तिचन्द्रयो-
स्त्वमिहोर्वीरमणासि कारणम् ॥

अत्र यावन्तोऽवयवा उपमेयपक्षे शब्देनोक्तास्तावन्त एवावयवा उपमानपक्षेऽपि शब्देनोपात्ताः । परं त्ववयविनो राजराजेश्वरस्योपमेय-भूतस्य यत्समुद्ररूपमुपमानं तस्य शब्देन कथनं नास्ति, तथापि विशेषण-सामर्थ्यात्तस्य लाभो भवति । अत इयमुपमैकदेशविवर्तिनी । मम तु

मतम्, निरवयवसावयववादेः किंचिद्वैलक्षण्यादुदाहरणान्तरमात्रता, न तु प्रकारान्तरता ॥

आस्तां तौ शुंचिसायमङ्गनतले सानन्दमत्रान्तरे
निर्यातं प्रियवक्रतोऽन्यवनितानाम प्रियाया मुखे ॥
क्रोधो मेघ इवोत्थितः सुरधनुस्तुल्यौ भ्रुवौ वक्रितौ
वाष्पो बिन्दुरिवाजनि व्यपगतो हर्षश्च हंसो यथा ॥

अत्र कोपस्य मेघोपमादानाद्वक्रितभ्रुवोर्वाष्पस्य हर्षस्य च मेघसंबन्धिना सुरधनुषा बिन्दुना हंसेन चोपमा सिद्ध्यति । एवमेकोपमामूलकेतरोपमानां परंपरया भावात्परंपरितोपमा । भगवान्वेदव्यासः समुच्चयोपमाया बहूपमाया मालोपमायाश्च परस्परं भेदमेवमाह ॥

क्रमेण यथा—

"समुच्चयोपमा त्वन्यधर्मबाहुल्यकीर्तनात् ॥" इति ॥

समुच्चयोपमा तूपमानधर्मबाहुल्यस्योपमेये कीर्तनाद्भवतीत्यर्थः । निष्कर्षस्तूपमानस्यानेकधर्मान्समुच्चीयोपमा यदा दीयते सा समुच्चयोपमा । अत्रोपमा त्वेकैव । उपमानस्य धर्माणां समुच्चयः । भगवता वेदव्यासेन लक्षणमात्राण्युक्तानि, उदाहरणानि न दर्शितानि । स्पष्टपरिज्ञानार्थमन्यैरुदाहरणानि प्रदर्शितानि ॥

यथा—

कलीव चम्पकस्येयं वर्णाकृतिगुणैर्नृप ॥

अत्रैकस्या एवोपमानभूतायाश्चम्पककलिकाया वर्णाकृतिगुणैरनेकैर्धर्मैरुपमाभावात्समुच्चयोपमा ॥

"यत्रोपमा स्याद्बहुभिः सदृशैः सा बहूपमा ॥" इति ॥

यथा—

हंसेन हीरेण हिमेन शंभुना
तुल्यं यशस्ते यशवन्तभूपते ॥

अत्रोपमानानि बहूनि तथाप्येकेन श्वेतधर्मेणोपमा त्वेकैव । अतो

* शुचिराषाढमासः ।

बहूनामुपमानानामुपमाया भावाद्बहूपमा। अत्र विषये दण्ड्याचार्योऽपि बहूपमां वदन्निदमुदाहरणमाह—

चन्दनोदकचन्द्रांशुचन्द्रकान्तातिशीतलः ॥
स्पर्शस्तवेत्यातिशयं बोधयन्ती बहूपमा ॥" इति ॥

एकस्मिन्नेव विषयेऽनेकोपमादानस्येदं प्रयोजनमाह दण्ड्याचार्यः। "अतिशयं बोधयन्ती बहूपमा" इति। अस्य तात्पर्यमिदम्। बहूपमा वर्णनीयस्यातिशयं बोधयतीति। वामनो वदति। अत्रापुष्टार्थदोषोऽस्ति। कुत इत्युक्तावेतन्मध्यादेकोपमानेन यशसो धवलतोत्कर्षसिद्धौ पुनस्तादृशान्योपमानकथने प्रयोजनं नास्तीति। मम तु मतं, वामनस्येदं कथनं न समीचीनम्। कुत इति चेदुपमायाः स्वरूपं सादृश्यस्य निर्णयः। लोके हि निर्णयार्थं परस्परपरिवर्तनेनापि पदार्थानां तोलनं क्रियते। अनेन न्यायेन परस्परोपमा स्वीकृता। तथैव दृढनिर्णयार्थमेकस्य वस्तुनोऽनेकैस्तोलकैस्तोलनस्यापि रीतिर्लोके वर्तते। यथा पादतुलामात्रं वस्तु लोहादिनिर्मितपादतुलापरिमितेन निजतोलकेनान्यवणिजस्तोलकेन शतरूप्यकैः पञ्चविंशतिपलैः पुनःपुनस्तोलयन्ति। तेनैव न्यायेनैकवस्तु तस्यैव धर्मस्य विषयेऽनेकवस्तूनां समीपे कृत्वा निर्णयकरणान्निर्णयो दृढतरो भवति। दण्ड्याचार्येण त्वतिशयरूपं प्रयोजनमुक्तं, तदपि न युक्तम्। तस्यैव धर्मस्य विषयेऽनेकोपमानकरणादुपमेयस्य न कश्चिदतिशयः। किं तूपमेयनिष्ठधर्मपरिमाणनिर्णयस्यात्यन्तं दृढता भवति। इदमेवात्र प्रयोजनम्।

"धर्माः प्रत्युपमानं चेदन्या मालोपमैव सा।" इति।

प्रत्युपमानं धर्मा भिन्नाश्चेन्मालोपमैवेत्यर्थः। अन्या मालोपमा। समुच्चयोपमा बहूपमातो भिन्ना।

यथा—

भाग्यात्तख्तनृपात्मजोऽयमधुना शास्ति प्रजा रामव-
द्धर्मो यस्य भुजाश्रितः क्षितिभुजां ख्यातः पवित्रैर्गुणैः।
गाम्भीर्येऽम्बुधिना समः शशभृता तापापहारे समः
ऐश्वर्ये सुरनायकस्य सदृशस्तुल्यः प्रतापे रवेः ॥ १ ॥

अत्र राजराजेश्वरस्य गाम्भीर्यधर्मेण समुद्रस्य, तापहरत्वधर्मेण चन्द्रस्य, ऐश्वर्यधर्मेणेन्द्रस्य, प्रतापधर्मेण च सूर्यस्योपमा वर्तते। एवं रीत्या प्रत्युपमानं पृथक् पृथग्धर्मैरुपमाभावान्मालोपमा।

यथावा—

रौद्रं शूलमिवाथ भार्गवमुनेस्तुल्यः कुठारेण च,
ह्यास्ते श्रीनृहरेर्नखालिसदृशश्चक्रं यथा वैष्णवम्।
ऐन्द्रं वज्रमिव प्रभूतभयदः खड्गस्तु मानप्रभो,
रक्षायां जगतोऽर्गलेन तुलितः ख्यातो वरीवृत्यते॥ १॥

अत्र राजराजेश्वरमानसिंहखड्गस्यैकेन भयंकरत्वधर्मेण बहूनामुपमानानामुपमाया भावाद्बहूपमा। परं तु पुनारक्षणधर्मेणोक्तखड्गस्यार्गलयोपमादानान्मालोपमा। भिन्नधर्मैरुपमानानां मालायाः सत्त्वादियं बहूपमागर्भिता मालोपमा। अपि चात्र भयंकरताधर्मस्य वर्णनं समाप्य पुनारक्षणधर्मस्य वर्णनान्न समाप्तपुनरात्तत्वम्॥

यथावा—

श्रीमंस्त्वं फतमल्ल सज्जननृपस्वर्याणदुःखक्षयं
कृत्वा विक्रमतुल्यतामधिगतो दातासि कर्णो यथा।
आचारेण नयेन वीर्यविभवैर्धत्से तुलां राघवे
कव्यध्यापनमन्दिरस्य करणाद्भोजोपमाप्यर्जिता॥ १॥

रसनारूपेणोपमा रसनोपमा।

यथा—

चन्द्रायते शुक्लरुचाथ हंसो,
हंसायते चारुगतेन कान्ता।
कान्तायते स्पर्शसुखेन वारि,
वारीयते स्वच्छतया विहायः॥ १॥

अस्या एव पर्यायः शृङ्खलोपमा। रसना कटिमेखला। सा रज्ज्वाकृतिरपि भवति, शृङ्खलाकृतिश्च भवति। परं त्वत्र रसनायाः शृङ्खलाकृ-

तिर्विवक्षिता। अस्यालंकारस्य नाम शृङ्खलेतिकथने तु गजबन्धनप्रभृति-शृङ्खलान्यायः प्रतीयते । रसनानामकथने च नायिकायास्तादृशकटिमे-खलान्यायः प्रतीयते। तत्र च गजबन्धनन्यायापेक्षया कटिमेखलान्या-यस्य रमणीयत्वात्केनापि रसिककविनाऽस्या नाम रसनोपमेत्युक्तम्। अत्र चन्द्रोपमा हंसस्य, हंसोपमा तरुण्याः, तरुण्युपमा जलस्य, जलोपमा च गगनस्येत्युपमापरंपरायां शृङ्खलाकृतिरसनान्यायसद्भावाद्रसनोपमा। शृ-ङ्खलालंकारश्चाग्रे कथयिष्यते। भगवान्वेदव्यासोऽस्या नाम गमनोपमे-त्याह। तस्या लक्षणमिदम्—

"यद्युत्तरोत्तरं याति तदासौ गमनोपमा ॥" इति ॥

निजस्य स्वस्य निजेन स्वेनैवोपमा निजोपमा ॥

"स्वस्य स्वेनोपमा या स्यात्तां जानीहि निजोपमाम्।
कालदेशादिभेदेन बहुधेयं प्रदृश्यते ॥"

समयभेदेन यथा—

लोहितपीतैः कुसुमैरावृतमाभाति भूभृतः शिखरम्।
दावज्वलनज्वालैः कदाचिदाकीर्णमिव समये ॥

देशभेदेन यथा—

प्रफुल्लचक्षुर्वदनः स्फुरद्भुजः
प्रहृष्टवक्षा यशवन्तभूपतिः ॥
यथा विवाहोत्सवमण्डपे स्थितो
धनुर्धरः संप्रति लक्ष्यते रणे ॥ १ ॥

पूर्वोदाहरणे वसन्तग्रीष्मसमयभेदेन तस्यैव पर्वतस्य तेनैव पर्व-तेनोपमा। अत्र तु विवाहमण्डपरणाङ्गणदेशभेदेन तस्यैव राजराजेश्वर-यशवन्तसिंहस्य तेनैव राजराजेश्वरयशवन्तसिंहेनोपमा ॥

शरीरभेदेन यथा—

प्रल्हादत्राणकरणे नरसिंहो यथा भवान् ॥
तथा त्वं गोपगोपीस्तु कृष्णरूपेण रक्षसि ॥

अत्रावतारभेदेन तस्यैव जगदीश्वरस्य तेनैव जगदीश्वरेणोपमा। प्राचीनैर्निजोपमाया उदाहरणमेकेन समयभेदेनैव दर्शितम्। तेन दिक्प्रदर्शनेन मया देशभेदशरीरभेदयोरप्युदाहरणे प्रदर्शिते ॥

उपमेयानुरूपेणोपमानस्य प्रकल्पने ॥
कल्पितामुपमां प्राहुः श्रीमन्मरुमहीपते ॥

यत्र कस्यचिदुपमेयस्योपमार्थमुपमानस्य प्राप्तिः कवेर्न भवति चेत्तस्योपमेययोग्यस्योपमानस्य कल्पनां कृत्वोपमाकरणे कल्पितोपमा।

यथा—

स्तनाभोगे पतन्भाति कपोलात्कुटिलोऽलकः॥
शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः॥

आचार्यदण्डी त्वस्या अभूतोपमेतिनामाह। अभूतोपमा यद्वस्तु न विद्यते तस्योपमेत्यर्थः। कल्पितोपमाऽभूतोपमानाम्नोस्तात्पर्यमेकमेव॥

मयोदाहरणान्यस्या दृष्टानि बहुधा पुनः॥
अविरोधविरोधादेरनेकानि महीपते॥

उक्तोदाहरण उपमानं कल्पितत्वान्न वास्तवम्। परं त्वत्र परस्परं कल्पितपदार्थानां विरोधाभावादसावविरुद्धा कल्पितोपमा॥

यथावा—

तुलसीमालिका कण्ठे सखि कृष्णस्य राजते॥
प्रोद्यत्पयोमुचामग्रे यथा वै शुकशावकाः॥

मेघोदयसमये पङ्क्तिं कृत्वोड्डयनं बकानां प्रसिद्धम्। न तु शुकानाम्। अत इयमुपमा कल्पिता। अथ च मेघैः सह शुकानां विरोधाभावादत्राप्यविरुद्धा॥

यथावा—

राधा परिष्वज्य हरिं विभाति
स्विन्नाङ्गयष्टिः सुरतान्तकाले॥

हैमी सुमुक्ताफलिनी लतेव
संवेष्टयन्ती तरुणं तमालम् ॥

मुक्ताफलरूपफलवती हैमी लता वस्तुतो नास्ति। किं तु कल्पिता। परं तु मुक्ताफलस्य हेम्नश्च परस्परं विरोधाभावादियमप्यविरुद्धा। पूर्वोदाहरणे प्रसङ्गप्राप्तघनेन शुकावलेः संबन्धो भवति चेदसंभवो नास्ति, अतः सा संभवत्कल्पितोपमा। अत्र त्वत्यन्तमसंभव इतीयमसंभवत्कल्पितोपमा ॥

यथावा—

केशानारुणरज्जुना विरचितान्मुक्तावलीवेष्टिता-
न्दृष्ट्वा वर्तुलदर्पणे करगते काचित्कुरङ्गेक्षणा ॥
सूर्यान्तर्गतचन्द्रमण्डलगतां ज्ञात्वा त्रिवेणीमिव
सैषा नैव जहाति दर्पणममुं हस्तादतृप्तान्तरा ॥ १ ॥

अत्र सूर्यमण्डले चन्द्रमण्डलं चन्द्रमण्डले च त्रिवेणी वस्तुतो नास्तीत्युक्तस्थितिः कल्पिता ॥ सूर्य उष्णप्रधानः, चन्द्रः शीतप्रधान इत्यनयोः संबन्धस्य विरुद्धत्वादियं विरुद्धा कल्पितोपमा। पूर्वोदाहरणेषु विधिसृष्टपदार्थेषु कल्पनासत्त्वाद्विधिसृष्टिकल्पितोपमा ॥

कविसृष्टिकल्पितोपमा यथा—

भूषिता नीलरत्नेन नासा ते भासते सखि।
स्थित्वा चम्पककल्यां हि यथालिः स्वदते रसम् ॥

कविसृष्टौ चम्पककुसुमेन सह भ्रमरसबन्धो वर्जितः। अत इयं कविसृष्टिकल्पितोपमा। अथ च चम्पकभ्रमरयोर्विरोधाभावादविरुद्धा। न च वाच्यम्, 'स्तनाभोगे पतन्भाति'—इत्यत्र लोकसीमातिवर्तनादतिशयोक्त्यलंकारः कुतो नास्तीति। कुत इति चेद्यत्रातिशयस्य स्वयं प्रधानता भवेत्तत्रातिशयोक्त्यलंकारो भवेत्। यत्रान्यालंकारार्थमातिशयो भवेत्तत्र स प्रधानभूतोलंकारः। अस्य विशेषविचारोतिशयोक्तिप्रकरणे करिष्यते ॥ कल्पितोपमायां मनोरञ्जकतायाः सद्भावात्प्रसिद्धविरुद्धदोषशङ्काया नावकाशः। उक्तं चाचार्यदण्डिना—

"न लिङ्गवचने भिन्ने न न्यूनाधिकतापि वा ॥
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥" इति ॥

कल्पितोपमां पृथगलंकारं मन्वानो रत्नाकरकार आह—"कल्पितोपमायाः फलमुपमानान्तराभावः । अत एवास्या उपमायामन्तर्भावो न भवितुमर्हति । फलभेदे सत्यप्यस्या उपमायामन्तर्भावं करोषि चेदनन्वयस्याप्युपमायामन्तर्भावेन भाव्यम्" इति । रसगङ्गाधरकारो वदति—"रत्नाकरकारस्येदं कथनं न समीचीनम् । अत्र सादृश्यं चमत्कारकारि भवतीत्युपमाङ्गीकार एवोचितः" इति ॥ एवं शङ्का न कार्या, कल्पितोपमायामुपमानस्यात्यन्तमसंभवात्सादृश्यस्य ज्ञानमेव न भवितुमर्हति, तदा सादृश्यस्य चमत्कारः कथं भवेदिति चेदित्थम्, विशिष्टोपमानस्याप्रसिद्धत्वेऽपि प्रत्येकपदार्थानां प्रसिद्धिरस्ति । तेषां परस्परं संबन्धमात्रस्य कल्पनां कृत्वा तेन सह साम्यस्यापि कल्पनायां बाधा नास्तीति ॥ एवं मा वद, कल्पितसादृश्यं चमत्कारस्य जनकं कथं भवेदिति । कल्पितसुन्दर्यालिङ्गनेनाप्याल्हादोऽनुभवसिद्धः । मम मतेऽपि रसगङ्गाधरकारस्य कथनं समीचीनम् । कुत इति चेदत्र पर्यवसानमुपमायाम्, न तूपमानान्तराभावे । उपमानान्तराभावे पर्यवसानकरणे तु वक्ष्यमाण आक्षेपालंकारो भवति । परं स्वत्र न स विवक्षितः । कश्चित्प्राचीन उत्पाद्योपमां कल्पितोपमायाः प्रभेदमाह । उत्पाद्योपमाऽर्थादुत्पादितेनोपमानेनोपमा ॥

यथा—

पुष्पं प्रवालोपहितं यदि स्या-
न्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्या-
स्ताम्रोष्ठपर्यस्तशुचिस्मितस्य ॥

कल्पना तु रचना । उक्तं च चिन्तामणिकोषकारेण "कल्पना रचनायाम्" इति । कल्पना द्विधा भवति । मानसी कायिकी च ॥ "स्तनाभोगे पतन्भाति" इत्यत्र मानसी कल्पनास्ति । "पुष्पं प्रवालोपहितम्" इत्यत्र तु कायिकी कल्पना वर्तते । विद्रुमस्थितं मुक्ताफलं विद्रुमस्थितं सितपुष्पं वा न वास्तवम्, कल्पनामात्रम् । परं त्वीदृशकल्पना हस्तेन कृत्वा

दर्शयितुं शक्या, अत इयं कल्पना कायिकी ॥ लोकप्रसिद्धोपमानस्योपमेयत्वकरणे आचार्यदण्डी प्रसिद्धेर्विपर्याससत्त्वाद्विपर्यासोपमां वदति। अस्या एव पर्यायो विपरीतोपमेति। दण्डिनेदमुदाहृतम् ॥

"तवाननमिवोन्निद्रमरविन्दमभूदिति ॥
सा प्रसिद्धिविपर्यासाद्विपर्यासोपमेष्यते ॥ १ ॥" इति ॥

आचार्यदण्डी परस्परोपमायाः प्रयोजनमन्योन्योत्कर्षमाह । तेन विपर्यासोपमायामुपमेयोत्कर्षरूपप्रयोजनमर्थसिद्धम्। प्रसिद्धगुणवदुपमानमप्रसिद्धगुणमुपमेयमिति प्राचीनाः स्वीचक्रुः। इदं मया पूर्वमलेखि। एवं चोपमेयस्योपमानत्वकरणे उपमेयस्य प्रसिद्धिरूपोत्कर्षः सिद्ध्यति ॥ मम तु मतम्, एतत्प्रयोजनातिरिक्तप्रसङ्गरूपनिमित्तेनापि विपरीतोपमा भवति। दण्डिन उक्तोदाहरणे विपरीतोपमाया निमित्तं संकेतस्थाने नायिकां प्रति सख्या प्रभातसूचनप्रसङ्गोऽपि भवितुमर्हति। परकीया नायिका नायकेन तडागतीरस्थसंकेतस्थाने रात्राववसत्। तत्र कमलं विकसितमालोक्य सखी तां नायिकां प्रति प्रभातसूचनं करोति। तव मुखस्य सदृशं कमलं विकसितमासीत्, अर्थात्कमलं पूर्णविकासयुक्तमासीदिति। अस्मिन्नुदाहरणेऽरविन्दमित्येकवचनान्तः शब्दोऽभिहितः। अतो मत्स्वीकृतोक्तनिमित्तमेवात्र मुख्यम्। कुत इति चेत्कमलानि परिपाकक्रमेण विकासं प्राप्नुवन्ति। एकस्य कमलस्य विकासे संजात एव सखी नायिकां प्रति प्रभातमसूचयत्। मण्डनशिक्षाकरणोपालम्भपरिहासादीनि सख्या नियतकर्माणि ॥

यथावा—

सेवन्तिकानां कलिकाः स्फुटन्ति
कूजन्ति चेमाश्चटकाः समन्तात् ॥
विहाय कुञ्जं भवनं प्रयाहि
पश्चात्त्व नन्दात्मज दिव्यमूर्ते ॥ १ ॥

यथावा—

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं

मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ॥
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते॥

अत्र रामचन्द्रः सीताया अवयवसमानानुक्तपदार्थानालोक्य विरहव्यथापनोदं कुर्वन्नासीत् । वर्षावशात्तेऽपि पदार्था लुप्ताः । अतोऽस्य वृत्तान्तस्य सीतासंबोधनपूर्वककथनं तु विपरीतोपमाया अयमेव प्रसङ्गो निमित्तम् ॥

यथावा—

निद्रावशेन भवताप्यनवेक्ष्यमाणा
पर्युत्सुकत्वमबला निशि खण्डितेव ॥
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥

अत्र राज्ञो निद्रावशसमये खण्डितादशां प्राप्ताया राजश्रियः पूर्णशशिनमालोक्य विनोदकरणे हेतुस्तु राज्ञो मुखेन सह पूर्णशशिनः सादृश्यम् । अत्र विपरीतोपमाया निमित्तमयमेव प्रसङ्गो भवितुमर्हति ॥

यथावा—

जगाद्बिम्बोपमां यच्छत्यन्यासामधरस्य हि ॥
त्वदीयोष्ठोपमां श्रेष्ठकविर्बिम्बस्य यच्छति॥

अत्र विपरीतोपमाकरणस्य निमित्तं न कश्चिदन्यः प्रसङ्गोऽस्ति । दण्ड्याचार्यमतानुसारेण नायिकाधररूपोपमेयस्य गुणप्रसिद्धिमूलकोत्कर्षार्थमेवेयं विपरीतोपमा कृता । उपमानस्योपमा तूपमेयस्य, उपमेयस्य चोपमा तूपमानस्य, एवं परस्परमुपमाया भावे परस्परोपमा ॥

यथा—

स्वल्पेनापि गुणेन यस्य सुतरां तुष्टिर्निदाने मितिः
शुद्धा च प्रकृतिर्महेशपदभागप्येष साधारणः ॥

वेषे श्रीयशवन्तसिंहनृपतिस्तुल्योऽस्ति भर्गेण वै
भर्गः श्रीयशवन्तसिंहनृपतेस्तुल्यः सदा वर्तते ॥

ईदृशोदाहरणेषु येन वस्तुना सहान्यस्य वस्तुनो येन धर्मेणोपमा दीयते तद्धर्मविषयेऽन्यवस्तुना सह तस्य वस्तुन उपमायामप्यर्थसिद्धायां पुनस्तदुपमाया वचनेन कथने किं प्रयोजनम्। अथ चात्र कोलंकार इत्याशङ्कायां प्राचीना भिन्नं भिन्नं प्रयोजनमङ्गीकृत्य भिन्नभिन्नमलंकारमङ्गीचक्रुः। दण्डयाचार्यस्त्वस्याः प्रयोजनमन्योन्योत्कर्षमङ्गीकृत्यान्योन्योपमानामकमुपमायाः प्रकारमाह——

"इत्यन्योन्योपमा सेयमन्योन्योत्कर्षशंसिनी॥" इति॥

अस्यायं सिद्धान्तः। येन वस्तुनोपमा क्रियते तस्मिन्नुपमानरूपवस्तुनि प्रसिद्धिमूलकोत्कर्षो भवति, तस्मात्परस्परोपमादानेनोपमेयस्यापि तादृशोत्कर्षः सिद्ध्यति। एवं रीत्यात्रान्योन्योत्कर्षो वर्तते। अथ चेयमुपमाप्रकार एवेति॥ मम तु मतम्, दण्ड्युक्तोक्तफलातिरिक्तं परस्परोपमायाः फलमुपमाया दृढनिर्णयोऽपि। यथा लोके मापकेन सह माप्यस्य तुलारोहणकरणेन मापकेन सह माप्यस्य समता सिद्ध्यति। परं तु दृढप्रतीत्यर्थं क्वापि पुनस्तुलायां परिवर्तनेनापि तद्वस्तु तोलयन्ति। तन्न्यायेनात्र समताया दृढप्रतीतिरपि फलम्। ते चोभे फले विवक्षाधीने। कस्यचित्परस्परोत्कर्षस्य विवक्षा भवति, कस्यचित्सादृश्यदृढनिर्णयस्य विवक्षा भवति। सर्वस्वकारादयः परस्परोपमायाः फलं तृतीयसदृशव्यवच्छेदमङ्गीकृत्येमामुपमेयोपमानामकं पृथगलंकारं वदन्ति। सर्वस्वस्येदं लक्षणम्——

"द्वयोः पर्यायेण तस्मिन्नुपमेयोपमा॥" इति॥

द्वयोरुपमेयोपमानयोः पर्यायेण तस्मिन्नर्थादुपमेयोपमानभाव उपमेयोपमालंकार इत्यर्थः। पर्यायशब्दस्यात्रार्थस्तु युगपदनुक्त्वाऽऽवृत्त्या कथनम्। रत्नाकरस्येदं लक्षणम्——

"परस्परमुपमानोपमेयत्व उपमेयोपमा॥" इति॥

मम तु मतम्, अस्या अन्योन्योपमा, उपमेयोपमा, परस्परोपमेति

पर्यायनामानि । सर्वस्वकारादिकृतेन नाम्ना लक्षणैश्चोपमाबहिर्भावो न सिद्ध्यति, किं तूपमाप्रकारतैव । मम तु मतम्, फलभेदेनालंकारभेदो न भवति । अन्यथा बहूनामलंकाराणामुत्कर्षादिकं फलमेकमेव भवति । अतः फलैक्यात्तेषामनेकालंकाराणामेकालंकारतया भवितव्यम् । तृतीयसदृशव्यवच्छेदफलस्य विवक्षायामप्यस्याः शरीरं तूपमारूपमेव । अपि च तृतीयसदृशव्यवच्छेदफलेऽलंकारताङ्गीकारश्चेन्निषेधरूपत्वादाक्षेपालंकारो भवेत् । द्वितीयसदृशव्यवच्छेदेऽनन्वयः, तृतीयसदृशव्यवच्छेद उपमेयोपमेत्येवं सदृशनिषेधप्रतियोगिनः संख्याभेदेनालंकारभेदस्वीकारे त्वनन्तविस्तारो भवेत् ॥

यथा—

हरयः सन्ति दशैकादश भर्गा द्वादशैव रवयः स्युः ।
एतेभ्योऽन्ये न समाः केपि तु यशवन्तसिंहस्य ॥ १ ॥

अत्र त्रयस्त्रिंशदतिरिक्तेषु सादृश्यस्य निषेधोस्तीत्यत्राप्यलंकारान्तरेण भवितव्यम् ॥

रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसंनिभैः ।
भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥

अत्रोदाहरणे रजोभिर्घनरूपगजैश्च विभिन्नधर्मैर्भूतलस्य नभसश्च परस्परमुपमा वर्तते, अतः परस्परमुपमादानस्य किं प्रयोजनमित्याशङ्काया नावकाशः । परस्परोपमायां द्वावंशौ वर्तेते, एकः शुद्धोपमारूपो द्वितीयो विपरीतोपमारूपः, अतोऽत्रोपमाप्रकारयोः संकरोस्ति, पृथक्प्रकारः कथमित्येवं शङ्का न कार्या । कुत इति चेत्संकरेष्वप्यलंकारद्वयमेलनमस्ति । परं त्वलंकारयोश्चमत्कारः पृथक्पृथग्वर्तते । एतच्च संकरप्रकरणे स्फुटीकरिष्यते । अत्र तु यथा शर्कराद्यनेकपदार्थमेलनान्मदिराया भिन्न एवास्वाद उत्पद्यते, तथैव शुद्धोपमाया विपरीतोपमायाश्च मेलनेन परस्परोपमारूपस्तृतीयश्चमत्कार उत्पद्यते, स चोपमाप्रकार एव भवितुमर्हति । अत्र सहृदयहृदयमेव साक्षि । प्राचीनैः पुनरुपमाया बहवः प्रकाराः प्रदर्शिताः । मया तु व्यर्थग्रन्थविस्तरभयात्ते नोक्ताः ॥

शुद्धा विपरीता च परस्परं चोपमा परंपरिता ।
ज्ञेया निजोपमेश! समुच्चयाख्या बहूपमा माला ॥ १ ॥
रसना च कल्पितेति दश प्रकारा इमे स्युरुपमायाः ॥

इत्युपमाप्रकरणम् ॥ १ ॥

आदावतिप्रसिद्धत्वादुपमा कथिता मया ।
वक्ष्येऽन्यालंकृतीरद्य वर्णमालाक्रमान्नृप ॥ १ ॥

## ॥ अतद्गुणः ॥

तस्य गुणोऽत्रास्तीति तद्गुणः, अर्थादन्यगुणस्यान्यत्र संबन्धश्चेत्तद्गुणः । तस्य गुणोऽत्र नास्तीत्यतद्गुणः। अन्यदीयगुणस्यान्यत्र संबन्धो न भवति चेदतद्गुणालंकारः । वक्ष्यमाणतद्गुणालंकारविपरीतभावे धुरंधरेणाङ्गीकृतोयमतद्गुणालंकारः ॥

अन्यदीयगुणस्याहुरसंबन्धमतद्गुणम् ।
प्राचीनाः कवयः श्रीमन्यशवन्तनरेश्वर!॥ १ ॥

यथा—

पयोधिपङ्केऽपि शशाङ्कबिम्बे
मदाम्बुनीलेष्वपि दिग्गजानाम् ।
मुखेषु खलद्यशवन्तसिंह !
यशः सदा ते विमलं चकास्ते ॥ १ ॥

यथावा—

अत्र मदे कलङ्के च संगतेः सत्त्वेऽपि राजराजेश्वरयशवन्तसिंहयशसस्तदीयश्यामगुणस्य च संबन्धो नास्ति। अत्रापकृष्टगुणासंबन्धः । अथ चात्र गुणो वर्णरूपः ॥

यथावा—

चौराद्यास्तु तमश्चराः परिहृताः स्नेहेन पूर्णो गुणी
त्वं चास्से कुलदीपको रिपुगणा दग्धाः पतङ्गा यथा ।
संसर्गेऽपि च कज्जलस्य भवता नालम्बितः कालिमा
राणश्रीफतासिंह! संप्रति समः को वास्ति भूमीश्वरः ॥ १ ॥

गुणो द्विविधः । वर्णरूपः स्वभावादिरूपश्च । अनयोर्द्वयोश्च द्वौ द्वौ प्रकारौ । सम्यगसम्यगिति । दीपकपक्षे दुर्वर्णस्यानङ्गीकारः । महाराणापक्षे तु दुःखभावस्यानङ्गीकारः ॥

यथावा—

मरुनाथ! तवारियोषितां
सहवासेऽपि वनेचरस्त्रियः ।
न विदुर्मणिगुञ्जयोर्भिदां
न हृतं तेन तदीयभूषणम् ॥ १ ॥

अत्र निरन्तरं राजस्त्रीसंसर्गेऽप्युत्तमानुत्तमभेदज्ञानगुणस्य शबराङ्गनासु संबन्धो न जातः । अत्रोत्कृष्टगुणस्यासंबन्धः । अथ चात्र गुणो विवेकबुद्धिरूपः । सर्वस्वस्येदं लक्षणम्—

"सति हेतावतद्गुणः ॥" इति ॥

हेतौ सत्यर्थादन्यदीयगुणसंबन्धजननहेतोः संसर्गादेः सत्त्वे संबन्धो न भवति चेदतद्गुणालंकारो भवति । प्रकाशकारोऽपि वृत्तावाह—

"संभवन्त्यामपि योग्यतायाम् ॥" इति ॥

मम तु मतम्, संसर्गादिहेतुसत्त्वे परगुणस्य संबन्धाभाव एव चमत्कारसद्भावादलंकारता भवतीतीदमलंकारप्रकरणवशादर्थसिद्धम् । लक्षणेऽथवा वृत्तावस्य कथनमनावश्यकम् । ईदृशलक्षणकरणादेवायमलंकारो विशेषोक्तिशङ्कास्पदो भवति । अत एव च रत्नाकरकारस्यैतदलंकारोच्छेदायावकाशो मिलितः । अथ च सर्वस्वकार आह—"न्यूनगुणवद्वस्तुनोऽधिकगुणवस्तुसंबन्धात्तदीयगुणास्वीकरणं न्याय्यमकरणादतद्गुणालंकारः" इति ॥ अयमेव प्रकाशकारस्यापि सिद्धान्तः । मम तु मतम्,

अत्रायं प्रमाद एव। कुत इति चेत् " पयोधिपङ्केपि " इत्यत्र मदकलङ्कयोरधिकगुणत्वं यशसि च न्यूनगुणत्वं कथमुपपादयिष्यते । किं श्वेतगुणतः श्यामगुणः स्वभावादतिरिच्यते । एवं चेत् " सर्पाधिराजः शितिकण्ठकण्ठ " इत्यत्र वक्ष्यमाणेन पूर्वरूपालंकारेण न भाव्यम् । यद्वा परिमाणेन मदादिषु श्यामताया आधिक्यं यशसि च श्वेतताया न्यूनत्वमिति स्वीकारे तु वर्णनीयस्य न्यूनतया विरसतापद्येत । अत्र श्वेतावन्मात्रं विवक्षितम्, सङ्गत्या गुणस्वीकारस्य न्याय्ये तदभावेऽतद्गुणालंकार इति । अथ च प्रकाशकार आह—

" केनापि निमित्तेन परगुणस्य ग्रहणं न
करोति सोप्यतद्गुणः । एवं ज्ञातव्यम् । " इति ॥

यथा—

गाङ्गमम्बु सितमम्बु यामुनं
कज्जलाभमुभयत्र मज्जतः ।
राजहंस ! तव सैव शुभ्रता
चीयते न न च चापचीयते ॥ १ ॥

अत्र परगुणग्रहणस्याकरणे राजहंसत्वं निमित्तम् ॥

यथावा—

वाडवेन हुताशेन न तप्तं सैन्धवं जलम् ।
महिमैव हरेर्ह्येष सुप्तस्याङ्गनया सह ॥ १ ॥

मम तु मतम्, अस्यायं सिद्धान्तः समीचीनो नास्तीति । कुत इति चेदतद्गुणतायां निमित्तसद्भावादतद्गुणमहिम्नि हानिर्भवति । इदमनुभवसिद्धम् । ईदृशस्थले हेतुरलंकारो भवेत् । अतद्गुणमलंकारमनङ्गीकुर्वन्रत्नाकरकार आह—

" हेतौ सत्यपि नान्यस्य गुणानुहरणं यदि ॥
विशेषोक्तिरसौ स्पष्टा न वाच्यस्तदतद्गुणः ॥ " इति ॥

आह चास्याः कारिकायाः पूर्वम् " तद्गुणाननुहरणाद्विच्छित्ति-

भेदेन पृथगलंकारत्वे नानाविधकार्यानुत्पत्तिसद्भावेनालंकारानन्त्यप्रसङ्गात्। तस्माद्यस्य कस्यचित्कार्यस्य हेतावनुत्पत्तिर्यत्र यत्र तत्र तत्र सर्वत्र विशेषोक्तिः" इत्ययं रत्नाकरस्य कटाक्षः सर्वस्वोपरि वर्तते। अस्य समाधानं विमर्शनीकारो न किंचिदप्यकरोत्। इदमेवाह "अलंकारसारकारोऽस्य विशेषोक्तावन्तर्भावमकरोत्। सर्वस्वकारः प्राचीनमतानुसारेण पृथगाह" इति। मम तु मतम्, तद्गुणालंकारवासनावासितहृदयानां सहृदयानां तद्गुणविपरीतभावेऽन्यगुणस्यान्यत्रासंबन्धांशमात्रे चमत्कारस्य पर्यवसानं भवति। न तु हेतुसत्त्वे कार्यानुत्पत्त्यंशे। यद्यस्मिन्नंशे चमत्कारोङ्गीक्रियते तदा तद्गुणेऽपि हेत्वंशे पर्यवसानात्तस्याप्युच्छेदो भवेत्। तर्हि तद्गुणालंकारः किमिति रत्नाकरकारेण स्वीकृत इति। विशेषोक्तिस्तु हेतौ सति कार्यानुत्पत्तेश्चमत्कारस्य प्राधान्ये भवति॥

यथा—

प्रियापराधे दृष्टेपि बहुधा कान्तया तदा।
एकान्तेऽपि तया मानं नाकारि कविपुङ्गव ॥ १ ॥

तद्गुणातद्गुणयोः परगुणग्रहणाग्रहणयोरुद्धरकंधरतयैतयोरेव चमत्कारस्य पर्यवसानं भवति। कार्यकारणपर्यन्तं बुद्धिरनुधावनं न करोति। अत्र सहृदयहृदयमेव साक्षि ॥

इत्यतद्गुणप्रकरणम् ॥ २ ॥

## ॥ अतिशयोक्तिः ॥

अतिशयशब्दो लङ्घनार्थकः। आह च चिन्तामणिकोषकारः। "अतिशयितोऽतिक्रान्ते" इति॥ अतिशयितशब्दोतिक्रमयुक्तेऽर्थे वर्तते, अनेनेदं सिद्ध्यति, अतिशयशब्दार्थोऽतिक्रमणमिति । अतिक्रमणं तूल्लङ्घनम्। अत्र लोकसीमोल्लङ्घने रूढिः। सा च प्रथमाकृतौ प्रतिपादितविषया ॥

लङ्घनं लोकसीमाया जानीह्यतिशयं नृप ।
असावतिशयोक्तिः स्यादुक्तिस्त्वतिशयस्य या ॥

यथा—

राजन्सप्ताप्यकूपारास्त्वत्प्रतापाग्निशोषिताः ।
पुनस्त्वद्वैरिवनिताबाष्पपूरेण पूरिताः ॥

अत्र राजराजेश्वरस्य प्रतापानलेन सप्तानां समुद्राणां शोषणं पुनररिनारीनयननीरेण तेषां भरणमित्येतल्लोकसीमोल्लङ्घनरूपवर्णनमस्ति । तत्तु राजराजेश्वरस्य प्रतापाधिक्यरूपप्रयोजनस्य विवक्षया रुचिकरत्वादलंकारः ॥

यथावा—

एधोऽभूत्किल कालकूटमनलश्चौर्वोऽहिराड्भस्त्रिका
वज्रं वै करणं क्षयाम्बुधिजलैर्निर्वाप्य तीक्ष्णीकृता ।
धारा भास्करशाणचक्रघटनाद्घृष्टिश्च कारुर्यमः
खड्गस्यास्य तव प्रतापनृपते! किं ब्रूमहे विक्रमम् ॥ १ ॥

यथावा—

गोपाङ्गनानां शृणु बाष्पनिर्झरै-
र्नद्यो भवन्ति स्म ततो महानदाः ।
सिन्धुर्बुभूषत्यधुना द्रुतं व्रज
व्रजेश नो चेत्प्रलयो भवेज्जलैः ॥ १ ॥

विधिकृतलोकसीमोल्लङ्घनं तु कविकृतलोके भवत्येव । अलौकिकत्वे काव्यत्वस्याङ्गीकारात् । प्राचीनैः कविवाणीस्तुतावुक्तम् “ नियतिकृतनियमरहिताम् ” इति । अतोत्रातिशयोक्त्यलंकारे कविलोकसीमातिलङ्घनमभीष्टम् । उक्तोदाहरणेष्वेतादृशवर्णनस्य सयुक्तिकत्वाभावात्कविलोकतोऽपि बाह्यत्वम् । लोकसीमातिवर्णनं तु मिथ्या वर्ततेऽतो दूषणं भवितुं योग्यम्, परं तु रुचिकरत्वाद्भूषणम् । तदुक्तम्—

अन्यमुखे दुर्वादो यः प्रियवदने स एव परिहासः ।
इतरेन्धनजन्मा यो धूमः सोऽगुरुभवो धूपः ॥

भगवतो वेदव्यासस्येदं लक्षणम्—

"लोकसीमातिवृत्तस्य वस्तुधर्मस्य कीर्तनम् ।
भवेदतिशयो नाम संभवासंभवाद्द्विधा ॥" इति ॥

मम तु मतम् । संभवोऽसंभवश्चेत्येवमतिशयोक्तेः प्रकारद्वयकथनं न समीचीनम् । कुत इति चेदतिशयोक्तेः स्वरूपं तु लोकसीमातिवर्तनम् । यस्य संभवो भवेत्तत्र लोकसीमातिवर्तनं कथं भवेत् । आचार्यदण्डिन इदं लक्षणम्—

"विवक्षा या विशेषस्य लोकसीमातिवर्तिनी ।
असावतिशयोक्तिः स्यादलंकारोत्तमा यथा ॥" इति ॥

इयमतिशयोक्तिरनेकालंकाराणां जीवनभूताऽत उत्तमेति विशेषणं दत्तम् । भोजमहाराजो दण्ड्यनुसारी । मीलितालंकारमकथयताऽऽचार्यदण्डिनाऽतिशयोक्तेरेवमुदाहरणं दत्तम्—

"मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥ १ ॥"

मम तु मतम्, अत्रातिशयोक्त्यलंकारो नास्ति; किं तु मिलितालंकारः । कुत इति चेद्दूरात्कृष्णरात्रौ बहुधा श्यामं वस्तु न दृश्यते । चन्द्रिकारात्रौ बहुधा दूराच्छ्वेतवस्तु न दृश्यते । अथ च परकीयाभिसारिकायाः सखीनां दूराच्चलनस्य संभवोऽस्ति; कुत इति चेत्सह चलने लोकानामभिज्ञानस्य शङ्का वर्तते, अतोऽत्र लोकसीमातिवर्तनं प्रधानं नास्ति । यत्किंचिल्लोकसीमातिवर्तनं तूपमादिषु बहुष्वलंकारेषु वर्तते । तदाहातिशयोक्तिप्रकरण आचार्यदण्ड्यपि—

"अलंकारान्तराणामप्येकमाहुः परायणम् ।
वागीशमहितामुक्तिमिमामतिशयाह्वयाम् ॥" इति ॥

रुद्रटोप्याह—

"अर्थस्यालंकारा वास्तवमौपम्यमतिशयः श्लेषः।
एषामेव विशेषा अन्ये तु भवन्ति निःशेषाः॥" इति॥

विशेषालंकारप्रकरणे काव्यप्रकाशकारोऽप्याह—

"एतादृशे विषयेऽतिशयोक्तिरेव प्राणरूपा सती वर्तते। अनया विना बहुधाऽलंकारो नास्ति।" इति।

अथ चैषा प्राचीनकारिका लिखिता—

"सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना॥" इति।

इयं वक्रोक्तिरर्थादतिशयोक्तिरूपवक्रोक्तिः सर्वत्र वर्तते। अनयाऽर्थस्य विशेषभावना भवति। अतोऽस्या अतिशयोक्तेर्विषये कविना यत्नः कर्तव्यः। अनया विना कोऽलंकारो वर्तत इत्यर्थः॥

स्तनाभोगे पतन् भाति कपोलात्कुटिलोऽलकः।
सुधांशुबिम्बतो मेरौ लम्बमान इवोरगः॥

अत्र लोकसीमातिवर्तनकल्पनमुपमासिद्ध्यर्थं वर्तते, अतोऽत्रातिशयोक्त्यलंकारो नास्ति; किं तूपमायां पर्यवसानात्कल्पितोपमालंकारः। धुरंधरस्येदमुदाहरणम्॥

कमलमनम्भसि कमले कुवलये तानि कनकलतिकायाम्।
सा च सुकुमारसुभगेत्युत्पातपरंपरा केयम्॥

अभेददृढतार्थमुपमेयमनुक्त्वा केवलमुपमानकथनमलंकारशास्त्रे लोकसीमातिवर्तनं न भवति। अतिशयोक्तेर्बहुधाऽलंकारेषु भावना वर्तते। इदं चाधुनैव स्पष्टीकृतम्॥

यथा—

लावण्यसिन्धुरपरैव हि कापि नेयं
यत्रोत्पलानि शशिना सह संप्लवन्ते।
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः॥ १॥

अत्र प्राचीनमतस्य दृढारोपरूपकं, मन्मतस्य च दृढाभेदालंकारो विद्यते। अतिशयोक्त्यलंकारो नास्ति। धुरंधरस्योक्तोदाहरणे केवलोपमानकथनांशे लोकसीमातिवर्तनं न वर्तते। अत्र लोकसीमातिवर्तनविवक्षा तु जलाधारं विना कमलं, कमले च कुवलय इत्येतस्मिन्नलौकिकपरंपरांशे वर्तते। तदेवोक्तमस्मिन्नेव काव्य कण्ठरवेण "उत्पातपरंपरा केयम्" इति। लोके हि नियतास्थित्या व्यतिक्रम उत्पातसूचको भवतीति प्रसिद्धम्। धुरंधरस्येमां विवक्षामजानन्तः प्रचीना उक्तोदाहरणेन भ्रान्ताः केवलोपमानकथनांशेऽतिशयोक्तिं ज्ञातवन्तः। प्राचीना ईदृशस्थलेऽध्यवसायं वदन्ति। सर्वस्वकारोऽध्यवसायस्येदं लक्षणमाह—

"विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः॥" इति॥

विषयस्य निगरणं कृत्वा विषयिणो यदभेदज्ञानं तदध्यवसाय इत्युच्यते। निगरणं तु निगलनम्। व्याकरणरीत्या रकारस्य लकारो जातः। निगलनं तु ग्रसनम्। अत्र विषयस्य निगलं तु विषयिणि विषयस्यान्तर्भावः। अत्र निगलनं तु स्फटिककलशगतासवन्यायेन विवक्षितम्। स्फटिककलशोदरगत आसवो यथा प्रतीयते तथोपमानोदरगतमुपमेयमत्र प्रतीयते। उक्ताभेदनिश्चयोऽलंकारशास्त्रेऽध्यवसाय इत्युच्यते। काव्यप्रकाशगतकारिकायामतिशयोक्तेर्न किंचिदपि सामान्यलक्षणमुक्तम्। एनमध्यवसायमतिशयोक्तेः प्रथमप्रकारं मत्वेदं लक्षणमुक्तम्—

"निगीर्याध्यवसानं तु प्रकृतस्य परेण यत्॥" इति॥

परेणार्थादुपमानेन प्रकृतस्यार्थादुपमेयस्य निगरणं कृत्वा योऽध्यवसायः साऽतिशयोक्तिरित्यर्थः। प्रकाशकारेण "कमलमनम्भसि" इतीदमेवोदाहृतम्। अध्यवसायस्थल एवातिशयोक्तिर्भवतीत्येवं मन्वानः सर्वस्वकारोऽतिशयोक्तेरिदं सामान्यलक्षणमाह—

"अध्यवसितप्राधान्येऽतिशयोक्तिः॥" इति॥

अध्यवसितस्यार्थादध्यवसायं प्राप्तस्य वस्तुनः प्राधान्येऽतिशयोक्तिर्भवति। अस्यायं सिद्धान्तः। अध्यवसायस्य सिद्धदशायामतिशयो-

त्त्यलंकारः। अथ च साध्यदशायामुत्प्रेक्षालंकारो भवतीति । अतिशयोक्त्युदाहरणेषु निगरणं भूतकालिकम्। उत्प्रेक्षोदाहरणेषु तु वर्तमानकालिकम् । अतिशयोक्तावध्यवसायस्वीकारे सर्वस्वकारस्येदं तात्पर्यम्। अत्रैकं वस्त्वन्यस्य वस्तुन उदरगतं कृत्वान्यद्वस्तु स्थाप्यते, अत एव वास्तवं वस्तु तस्योदरे प्रतीयते । येन वस्तुना वस्त्वन्तरस्य निगरणं कृतं तन्निगरणकर्तृ वस्तु तत्र वस्तुतो नास्त्यतो लोकसीमातिवर्तनं वर्तते । यथा "लावण्यसिन्धुरपरैव—" इत्यत्र कमलादिभिर्मुखादीनां निगरणं कृतं; परं त्वत्र कमलादीनि वस्तूनि वस्तुतो न सन्ति, अतस्तेषामुदरे मुखादिकं प्रतीयते । एवं चानया रीत्या वास्तवस्यावास्तवतया निश्चयरूपेण वर्णनं लोकसीमातो बहिर्वर्तते । उत्प्रेक्षायाः संभावनारूपतयाऽर्थादेककोटिकसंदेहरूपतया निश्चयरूपत्वाभावात्तत्र लोकसीमातिवर्तनं नास्ति । अतिशयोक्तेः पञ्च प्रकारान्मन्वानः सर्वस्वकारः केवलमुपमानकथनस्थले

"भेदेऽभेदः" इति ॥

लक्षणमुक्त्वा तं प्रथमप्रकारं मनुते। अत्र मुखादेश्चन्द्रादेर्भेदसत्त्वेऽभेदकथनमास्ति। अथ चैवं कथनं लोकसीमातिवर्तनं भवति। सर्वस्वकारोऽपि "कमलमनम्भसि कमले" इतीदमेवोदाजहार । मम तु मतम्, एतादृशकेवलोपमानकथने सहृदयानां लोकसीमातिवर्तनबुद्धिर्न भवति, किं त्वभेददृढताया बुद्धिर्भवति । अत्र सहृदयहृदयमेव साक्षि । द्वितीयप्रकारस्य काव्यप्रकाश इदं लक्षणमुक्तम्—

"प्रस्तुतस्य यदन्यत्वम् ॥" इति ॥

यथा—

अन्ये एवास्य धीरत्वोदारते मरुभूपतेः ॥

लोके धीरतोदारतादयो गुणा जात्या सर्वत्रैकै एव, केनचित्प्रकारेण विलक्षणता कामं स्यान्नाम । यथा मनुष्या मनुष्यत्वजात्यैक एव, विद्यादिभिर्विलक्षणता कामं स्यान्नाम। एवं चात्र राजराजेश्वरस्य धीरतोदारतयोरितरेषां राज्ञां धीरतोदारताभ्यामन्यत्वकथने लोकसीमातिवर्तनमस्ति । सर्वस्वकारोप्यस्मिन्विषयेऽतिशयोक्तेर्द्वितीयप्रकारत्वमङ्गीकुर्वन्निदं लक्षणमाह—

"अभेदे भेदः" इति ॥

धीरतोदारतागुणयोर्जात्याऽभेदे सति भेदमाह, अतो लोकसीमातिवर्तनमस्ति। सर्वस्वमतानुसारेणात्राध्यवसाय एवं रीत्या वर्तते। अत्र धीरतोदारतयोरभेदस्य भेदेन निगरणं कृतम्; परं त्वत्र भेदस्य वास्तवत्वाभावात्तयोर्धीरतोदारतयोरभेदः प्रतीयते। मम तु मतम्, अत्रापि सहृदयानां लोकसीमातिवर्तनबुद्धिर्न भवति, किं त्वनुभयोक्तिव्यतिरेकस्य बुद्धिर्भवति। अथ च यादृशः केवलमुपमानकथनेऽध्यवसायो वर्तते, तादृशोऽध्यवसायोऽपीदृशस्थले नास्ति। काव्यप्रकाशे तृतीयप्रकारस्येदं लक्षणमुक्तम्—

"यद्यर्थोक्तौ च कल्पनम्" इति ॥

यथा—

राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥

अत्रातिशयोक्तेर्विषयस्तु राकाचन्द्रेऽकलङ्कतायाः कल्पना। परं तु मम तु मतम्, अमुं यद्यर्थेनाह, अकलङ्कताया निश्चयं नाकरोदतो लोकसीमातिवर्तनं नास्ति। ईदृशविषये संभावनालंकारः। काव्यप्रकाशे चतुर्थप्रकारस्येदं लक्षणमुक्तम्—

"कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः॥" इति ॥

यथा—

प्रागेव हरिणाक्षीणामुदितो रागसागरः।
पश्चात्पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ॥

सर्वस्वकार इमं पञ्चमप्रकारं मत्वेदं लक्षणमाह—

"कार्यकारणयोः पौर्वापर्यविध्वंसश्च।" इति ॥

सर्वस्वकारोऽस्य भेदद्वयमङ्गीचकार। कार्यस्य प्रथममुत्पत्तिः कारणस्य पश्चादुत्पत्तिरित्येकः प्रकारः। अनेनास्य "प्रागेव हरिणाक्षीणाम्" इत्येतदेवोदाहरणं प्रदर्शितम्। द्वितीयस्तु कार्यकारणयोर्युगपदुत्पत्तिः॥

यथा—

यशवन्तनरेन्द्रस्य महिमा वर्ण्यते कथम्।
अरिमण्डलमाक्रान्तं सार्धं सिंहासनेन हि ॥

यथावा—

निगरणं कृतम्। परं तूक्तसंबन्धो वास्तवो नास्त्यतस्तस्योदर उक्तसंबन्धः प्रतीयते। मम तु मतम्, ईदृशसंबन्धे सत्यसंबन्धोऽतिशयोक्त्यलंकारो भवितुं न योग्यः। अस्मिन्नुदाहरणेऽलंकारस्तूत्प्रेक्षा विद्यते। अतिशयोक्तिवदत्राक्षेपोऽप्यस्ति; परं तूत्प्रेक्षायाः प्रधानत्वादत्रोत्प्रेक्षैवालंकारः। अथ चात्राप्यध्यवसायस्तादृशो नास्ति। अतिशयोक्तेश्चतुर्थप्रकारस्य सर्वस्वकार इदं लक्षणमाह--

"असंबन्धे संबन्धः" इति॥

असंबन्धे सति संबन्धकथनमित्यर्थः॥

यथा--

यशवन्तमहाराजविभवो वर्ण्यते कथम्।
सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम्॥

अत्र सौधेषु विधुमण्डलस्पर्शस्यासंबन्धे सति संबन्ध उक्तः। सर्वस्वमतानुसारेणात्राध्यवसायोऽनया रीत्या वर्तते। उक्तासंबन्धस्य संबन्धेन निगरणं कृतम्। परं तूक्तसंबन्धस्य वास्तवत्वाभावात्तस्योदरेऽसंबन्धः प्रतीयते। ममापि मतेऽस्मिन्नुदाहरणे लोकसीमातिवर्तनस्य प्रधानत्वादतिशयोक्त्यलंकारो वर्तते। परं त्वसंबन्धे सति संबन्धकथनमित्यादिषु प्रकारान्तरकरणयोग्यश्चमत्कारो नास्ति। उदाहरणान्तरं काममुच्यताम्। अथ चात्राप्यध्यवसायस्तादृशो नास्ति। दीक्षितादयः प्राचीनाः काव्यप्रकाशस्य सर्वस्वस्य चानुसारिणः॥

इत्यतिशयोक्तिप्रकरणम्॥ ३॥

## ॥ अतुल्ययोगिता ॥

वक्ष्यमाणतुल्ययोगितालंकारविपरीतभावेऽतुल्ययोगिताऽलंकारोऽस्माभिर्लक्षितः। तुल्ययोगशब्दस्य द्वावर्थौ स्तः। एकस्तुल्ययोर्योगः। स

दयोऽलंकाराः प्रदर्शिताः । तुल्ययोगितायां हेत्वलंकारो नास्ति । तथैवा-तुल्ययोगितायां विशेषोक्त्यलंकारो नास्ति । कुत इति चेत्कार्यकारणा-भावे तात्पर्यं नास्ति, किं त्वतुल्ययोगे ॥

इत्यतुल्ययोगिताप्रकरणम् ॥ ४ ॥

## ॥ अधिकम् ॥

अधिकशब्दार्थः प्रसिद्ध एव । वस्तुन आधिक्यं रुचिकरं चेत्तत्रा-धिकालंकारः ॥

यया कया च विधया वस्त्वाधिक्यं नराधिप ॥
अधिकालंकृतिर्नाना परिमाणादिभेदतः ॥१॥

यथा—

अमान्तो ये गुणा लोके यशवन्त महीपते ॥
भवतो हृदये शश्वन्निवसन्ति सुखेन ते ॥ १ ॥

उक्तरीत्यात्र राजराजेश्वरस्य मनसो विशालताविषय आधिक्य-स्यार्थान्महत्त्वस्य प्रतीतेरधिकालंकारः ॥

यथावा—

जगद्विशाले हृदि तस्य तन्वी
प्रविश्य साऽऽस्ते स्म यथा यथा तत् ॥
पर्याप्तमासीदखिलं न तस्या-
स्तत्रावकाशस्तु कुतोऽपरस्याः ॥

अत्र हरेर्विशालहृदयस्य पूरणकरणात्तन्व्या लावण्यादिगुणविषय आधिक्यस्यार्थाद्बाहुल्यस्य प्रतीतेरधिकालंकारः। तन्व्यास्तनुत्वेपि त्रिभुव-नाधिकरणहरिहृदयस्य पूरणाद्विचित्रस्यापि संकीर्णता ॥

यथावा—

त्त्यलंकारः। अथ च साध्यदशायामुत्प्रेक्षालंकारो भवतीति । अतिशयोक्त्युदाहरणेषु निगरणं भूतकालिकम्। उत्प्रेक्षोदाहरणेषु तु वर्तमानकालिकम् । अतिशयोक्तावध्यवसायस्वीकारे सर्वस्वकारस्येदं तात्पर्यम्। अत्रैकं वस्त्वन्यस्य वस्तुन उदरगतं कृत्वान्यद्वस्तु स्थाप्यते, अत एव वास्तवं वस्तु तस्योदरे प्रतीयते । येन वस्तुना वस्त्वन्तरस्य निगरणं कृतं तन्निगरणकर्तृ वस्तु तत्र वस्तुतो नास्त्यतो लोकसीमातिवर्तनं वर्तते । यथा "लावण्यसिन्धुरपरैव—" इत्यत्र कमलादिभिर्मुखादीनां निगरणं कृतं; परं त्वत्र कमलादीनि वस्तूनि वस्तुतो न सन्ति, अतस्तेषामुदरे मुखादिकं प्रतीयते । एवं चानया रीत्या वास्तवस्यावास्तवतया निश्चयरूपेण वर्णनं लोकसीमातो बहिर्वर्तते । उत्प्रेक्षायाः संभावनारूपतयाऽर्थादेककोटिकसंदेहरूपतया निश्चयरूपत्वाभावात्तत्र लोकसीमातिवर्तनं नास्ति । अतिशयोक्तेः पञ्च प्रकारान्मन्वानः सर्वस्वकारः केवलमुपमानकथनस्थले

"भेदेऽभेदः" इति ॥

लक्षणमुक्त्वा तं प्रथमप्रकारं मनुते। अत्र मुखादेश्चन्द्रादेर्भेदसत्त्वेऽभेदकथनमस्ति। अथ चैवं कथनं लोकसीमातिवर्तनं भवति। सर्वस्वकारोऽपि "कमलमनम्भसि कमले" इतीदमेवोदाजहार । मम तु मतम्, एतादृशकेवलोपमानकथने सहृदयानां लोकसीमातिवर्तनबुद्धिर्न भवति, किं त्वभेददृढताया बुद्धिर्भवति । अत्र सहृदयहृदयमेव साक्षि । द्वितीयप्रकारस्य काव्यप्रकाश इदं लक्षणमुक्तम्—

"प्रस्तुतस्य यदन्यत्वम् ॥" इति ॥

यथा—

अन्ये एवास्य धीरत्वोदारते मरुभूपतेः ॥

लोके धीरतोदारतादयो गुणा जात्या सर्वत्रैकै एव, केनचित्प्रकारेण विलक्षणता कामं स्यान्नाम । यथा मनुष्या मनुष्यत्वजात्यैक एव, विद्यादिभिर्विलक्षणता कामं स्यान्नाम। एवं चात्र राजराजेश्वरस्य धीरतोदारतयोरितरेषां राज्ञां धीरतोदारताभ्यामन्यत्वकथने लोकसीमातिवर्तनमस्ति । सर्वस्वकारोप्यास्मिन्विषयेऽतिशयोक्तेर्द्वितीयप्रकारत्वमङ्गीकुर्वन्निदं लक्षणमाह—

"अभेदे भेदः" इति ॥

धीरतोदारतागुणयोर्जात्याऽभेदे सति भेदमाह, अतो लोकसीमातिवर्तनमस्ति। सर्वस्वमतानुसारेणात्राध्यवसाय एवं रीत्या वर्तते। अत्र धीरतोदारतयोरभेदस्य भेदेन निगरणं कृतम्; परं त्वत्र भेदस्य वास्तवत्वाभावात्तयोर्धीरतोदारतयोरभेदः प्रतीयते। मम तु मतम्, अत्रापि सहृदयानां लोकसीमातिवर्तनबुद्धिर्न भवति, किं त्वनुभयोक्तिव्यतिरेकस्य बुद्धिर्भवति। अथ च यादृशः केवलमुपमानकथनेऽध्यवसायो वर्तते, तादृशोऽध्यवसायोऽपीदृशस्थले नास्ति। काव्यप्रकाशे तृतीयप्रकारस्येदं लक्षणमुक्तम्--

"यद्यर्थोक्तौ च कल्पनम्" इति ॥

यथा--

राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥

अत्रातिशयोक्तेर्विषयस्तु राकाचन्द्रेऽकलङ्कतायाः कल्पना। परं तु मम तु मतम्, अमुं यद्यर्थेनाह, अकलङ्कताया निश्चयं नाकरोदतो लोकसीमातिवर्तनं नास्ति। ईदृशविषये संभावनालंकारः। काव्यप्रकाशे चतुर्थप्रकारस्येदं लक्षणमुक्तम्--

"कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः ॥" इति ॥

यथा--

प्रागेव हरिणाक्षीणामुदितो रागसागरः।
पश्चात्पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ॥

सर्वस्वकार इमं पञ्चमप्रकारं मत्वेदं लक्षणमाह--

"कार्यकारणयोः पौर्वापर्यविध्वंसश्च।" इति ॥

सर्वस्वकारोऽस्य भेदद्वयमङ्गीचकार। कार्यस्य प्रथममुत्पत्तिः कारणस्य पश्चादुत्पत्तिरित्येकः प्रकारः। अनेनास्य "प्रागेव हरिणाक्षीणाम्" इत्येतदेवोदाहरणं प्रदर्शितम्। द्वितीयस्तु कार्यकारणयोर्युगपदुत्पत्तिः ॥

यथा--

यशवन्तनरेन्द्रस्य महिमा वर्ण्यते कथम्।
अरिमण्डलमाक्रान्तं सार्धं सिंहासनेन हि ॥

यथावा--

यशवन्तमहाराज! शरो मौर्वीमरेः शिरः।
युगपत्ते स्पृशत्यस्माद्धनुर्धारिषु शस्यसे ॥

अथ च कारणज्ञानादेव कार्यस्योत्पत्तौ चन्द्रालोककारश्चपलातिशयोक्तिनामकमतिशयोक्तेः प्रकारमङ्गीकुर्वन्निदं लक्षणमाह—

"चपलातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे।" इति ॥

हेतुप्रसक्तिरर्थाद्धेतुज्ञानम् । हेतुज्ञानमात्रेणैव कर्योत्पत्तौ चपलातिशयोक्तिः। अर्थाच्चपलतासंबन्धिन्यतिशयोक्तिः ॥

यथा—

यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्मिका ॥

एते कार्यकारणयोः पौर्वापर्यविध्वंसे कारणज्ञानमात्रेणैव कार्योत्पत्तौ च लोकसीमातिवर्तनमङ्गीचक्रुः । मम तु मतम्, अत्र यद्यप्यतिशयोक्तेर्भावना वर्तते, परं तु हेतोर्विचित्रतारूपचमत्कारस्य प्राधान्याद्भोजमहाराज ईदृशस्थले विचित्रहेतुनामकान्हेतुप्रकारानङ्गीचकार, तत्समीचीनम्। सर्वस्वमतानुसारेणात्राध्यवसाय एवं रीत्या वर्तते । कार्यकारणयोः पूर्वापरीभावस्य कार्यकारणयोः पूर्वापरीभावविध्वंसेन निगरणं कृतम्, परं तूक्तविध्वंसस्य वास्तवत्वाभावाद्विध्वंसयोदर उक्तपूर्वापरीभावः प्रतीयते। अत्रापि केवलमुपमानस्य कथनवदध्यवसायो नास्ति । सर्वस्वकारस्तृतीयप्रकारस्येदं लक्षणमाह—

"संबन्धेऽसंबन्धः" इति।

संबन्धे सत्यसंबन्धकथनमित्यर्थः।

यथा—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ॥
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥ १ ॥

अत्र ब्रह्मणि समस्तसृष्टिरचनाकर्तृत्वसंबन्धे सत्यप्यसंबन्धमाह। सर्वस्वमतानुसारेणात्राध्यवसाय एवं रीत्या वर्तते। उक्तसंबन्धस्योक्तासंबन्धेन

निगरणं कृतम्। परं तूक्तसंबन्धो वास्तवो नास्त्यतस्तस्योदर उक्तसंबन्धः प्रतीयते। मम तु मतम्, ईदृशसंबन्धे सत्यसंबन्धोऽतिशयोक्त्यलंकारो भवितुं न योग्यः। अस्मिन्नुदाहरणेऽलंकारस्तूत्प्रेक्षा विद्यते। अतिशयोक्तिवदत्राक्षेपोप्यस्ति; परं तूत्प्रेक्षायाः प्रधानत्वादत्रोत्प्रेक्षैवालंकारः। अथ चात्राप्यध्यवसायस्तादृशो नास्ति। अतिशयोक्तेश्चतुर्थप्रकारस्य सर्वस्वकार इदं लक्षणमाह—

"असंबन्धे संबन्धः" इति॥

असंबन्धे सति संबन्धकथनमित्यर्थः॥

यथा—

यशवन्तमहाराजविभवो वर्ण्यते कथम्।
सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम्॥

अत्र सौधेषु विधुमण्डलस्पर्शस्यासंबन्धे सति संबन्ध उक्तः। सर्वस्वमतानुसारेणात्राध्यवसायोऽनया रीत्या वर्तते। उक्तासंबन्धस्य संबन्धेन निगरणं कृतम्। परं तूक्तसंबन्धस्य वास्तवत्वाभावात्तस्योदरेऽसंबन्धः प्रतीयते। ममापि मतेऽस्मिन्नुदाहरणे लोकसीमातिवर्तनस्य प्रधानत्वादतिशयोक्त्यलंकारो वर्तते। परं त्वसंबन्धे सति संबन्धकथनमित्यादिषु प्रकारान्तरकरणयोग्यश्चमत्कारो नास्ति। उदाहरणान्तरं काममुच्यताम्। अथ चात्राप्यध्यवसायस्तादृशो नास्ति। दीक्षितादयः प्राचीनाः काव्यप्रकाशस्य सर्वस्वस्य चानुसारिणः॥

इत्यतिशयोक्तिप्रकरणम्॥ ३॥



## ॥ अतुल्ययोगिता॥



वक्ष्यमाणतुल्ययोगितालंकारविपरीतभावेऽतुल्ययोगिताऽलंकारोऽस्माभिर्लक्षितः। तुल्ययोगशब्दस्य द्वावर्थौ स्तः। एकस्तुल्ययोर्योगः। स

तु समालंकारस्य विषयः। द्वितीयार्थस्तु तुल्यधर्मस्य योगः। तुल्यधर्मस्य योगे तुल्ययोगितालंकारस्य रूढिः। तुल्ययोगस्तुल्ययोगिता चैक एव पदार्थः। उक्ततुल्ययोगो यत्र न भवति तत्रातुल्ययोगितालंकारः। यथा तद्गुणविपरीतभावेऽतद्गुणालंकारः॥

तुल्ययोगो न यत्र स्यात्स्यात्तत्रातुल्ययोगिता।
प्राच्यैर्दिग्दर्शिता तेन स्वीकृतेयं मया नृप॥ १॥

यथा—

कलिप्रभावाद्यशवन्तसिंह
मेघा ददत्यल्पजलं तथैव।
फलन्ति भूमौ तरवोपि चाल्पं
तथापि दाने तव नाल्पतास्ति॥ १॥

राजराजेश्वरस्य दानमल्पं न जातमिति कथनेनेतरेषां राज्ञां दानेऽल्पत्वमर्थसिद्धम्। कलिप्रभावान्मेघा अप्यल्पं जलं ददति। तरवोऽप्यल्पं फलं ददति। इतरे राजानोप्यल्पं ददति। अत्र कलियुगनिमित्तान्मेघादिभिः सह राजराजेश्वरेऽपि समयानुसारेण दानाल्पत्वरूपतुल्ययोगस्य संभवे सति तुल्ययोगो न जात इत्यतुल्ययोगितालंकारः॥

यथावा—

श्रान्ता विक्रयिणो निरन्तरमलं वैश्यादयो विक्रया-
च्छ्रान्ता दूतजना विलिख्य बहुशो देशान्तरं पत्रिकाः॥
श्रान्तास्ते विनिवेदनात्परिजनास्त्वं राजराजेश्वर
विश्रान्तो न हि तख्तसिंह वितरन्हेमाम्बराणि प्रभो॥१॥

यथावा—

पत्त्यश्वरथनागेषु प्रचलत्सु रणाङ्गणात्॥
अचलोऽभूत्तदा वीरश्छत्रशालमहीपतिः॥ १॥

धुरंधरेण समविपरीतभावे विषमालंकारस्तद्गुणविपरीतभावेऽतद्गुणालंकार इत्यादि दिग्दर्शनमात्रं कृतम्। तदनुसारेण मयाऽतुल्ययोगिता-

दयोऽलंकाराः प्रदर्शिताः । तुल्ययोगितायां हेत्वलंकारो नास्ति । तथैवा-तुल्ययोगितायां विशेषोक्त्यलंकारो नास्ति । कुत इति चेत्कार्यकारणभावे तात्पर्यं नास्ति, किं त्वतुल्ययोगे ॥

इत्यतुल्ययोगिताप्रकरणम् ॥ ४ ॥

## ॥ अधिकम् ॥

अधिकशब्दार्थः प्रसिद्ध एव । वस्तुन आधिक्यं रुचिकरं चेत्तत्राधिकालंकारः ॥

यया कया च विधया वस्त्वाधिक्यं नराधिप ॥
अधिकालंकृतिर्नाना परिमाणादिभेदतः ॥१॥

यथा—

अमान्तो ये गुणा लोके यशवन्त महीपते ॥
भवतो हृदये शश्वन्निवसन्ति सुखेन ते ॥ १ ॥

उक्तरीत्यात्र राजराजेश्वरस्य मनसो विशालताविषय आधिक्यस्यार्थान्महत्त्वस्य प्रतीतेरधिकालंकारः ॥

यथावा—

जगद्विशाले हृदि तस्य तन्वी
प्रविश्य साऽऽस्ते स्म यथा यथा तत् ॥
पर्याप्तमासीदखिलं न तस्या-
स्तत्रावकाशस्तु कुतोऽपरस्याः ॥

अत्र हरेर्विशालहृदयस्य पूरणकरणात्तन्व्या लावण्यादिगुणविषय आधिक्यस्यार्थाद्वाहुल्यस्य प्रतीतेरधिकालंकारः। तन्व्यास्तनुत्वेपि त्रिभुवनाधिकरणहरिहृदयस्य पूरणाद्विचित्रस्यापि संकीर्णता ॥

यथावा—

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डार्धभङ्गोद्यत-
ष्टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ॥
द्राक्पर्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदरो
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥ १ ॥

धनुर्भङ्गध्वनिरल्पा भवति। चन्द्रचूडधनुर्भङ्गध्वनेरपरधनुर्भङ्गध्वन्यपेक्षयाऽऽधिक्यादधिकालंकारः ॥

यथावा—

राणाफतेसिंह नवं कृतं ते
जन्मोत्सवेनेदमभूत्पुरा या ॥
सितद्वितीयौषधिपोषिका सा
यतो नराणामपि पोषिकाऽभूत् ॥ १ ॥

अत्र शुक्लद्वितीयायाः पोषकतारूपगुणविषये संख्याया आधिक्येनाधिकालंकारः ॥

यथावा—

मुद्रे ब्रूहि वनान्तरे कुशलिनाविक्ष्वाकुवंशाङ्कुरौ
किं धत्से मयि मौनमित्यभिहिते देव्या हनूमानिदम् ॥
ऊचे देवि न विद्यतेऽथ पदवी मुद्रेति तस्मादियं
नो वक्त्यद्य तु कङ्कणस्य पदवीं धत्ते प्रभोस्त्वां विना ॥ १ ॥

अत्र मुद्रिकायाः पदवीविषय आधिक्यादधिकालंकारः ॥

यथावा—

भ्रमरीकबरीभारभ्रमरीमुखरीकृतम् ॥
दूरीकरोतु दुरितं गौरीचरणपङ्कजम् ॥ १ ॥

अनुप्रासेनास्य काव्यस्य पूर्तिकरणादिदं सिद्ध्यति, कविरनुप्रासार्थमत्र स्त्रीवाचकं भ्रमरीशब्दं न्यस्तवानिति । ततश्च तिर्यग्जातयः पुरुषभ्रमरा अपि यस्या अङ्गयष्टिं स्प्रष्टुमशक्ताः, तादृशपार्वत्या अलौकिकसतीत्वमहिमरूपव्यङ्ग्यलाभस्याधिकत्वादधिकालंकारः । अधिके चारुतामानेतुं प्रयत्नं कुर्वन्काव्यप्रकाशगतकारिकाकार इदं लक्षणमाह—

"महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात् ॥
आश्रयाश्रयिणौ स्यातां तनुत्वेप्यधिकं तु तत् ॥" इति॥

यदि सूक्ष्मतया स्थितावप्याश्रयाश्रयिणौ क्रमेण महत आश्रयिण आश्रयस्य च संबन्धेन महान्तौ स्यातामर्थात्तथा ज्ञातौ स्यातां तदाधिकालंकार इत्यर्थः ॥ "अमान्तः"— इत्यत्र सूक्ष्मतया प्रसिद्धो मनोरूप आश्रयो महतो गुणगणरूपस्याश्रयिणः सबन्धेन महान्प्रतीयतेऽतोऽत्राधिकालंकारः ॥

यथा—

युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकाशमासत ॥
तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसंभवा मुदः ॥ १ ॥

अत्रैतावन्महत्त्वेन प्रसिद्धिरहित आनन्दरूप आश्रयी हर्युदररूपस्य महत आश्रयस्य संबन्धेनातिमहत्तया प्रतीयते । अनया रीत्यात्राधिकालंकारः । ईदृशोदाहरणेषु काव्यप्रकाशगतकारिकाकारस्य लक्षणसंगतिः संजायते; परं तु मया दर्शितेषु " अमरीकबरीभार- " इत्याद्युदाहरणेष्वव्याप्तिर्भवति । कुत इति चेत्तेषूदाहरणेष्वाश्रयाश्रयिभावसंबन्धो नास्ति। साहित्यशास्त्रे रोचकताया निकषोपलं सहृदयहृदयमेव। अन्यन्निमित्तं किमपि नास्ति । अथ चात्र चारुताग्रहणं त्वलंकारनाम्नैव भवति। अतः प्राचीनानामयं यत्नो व्यर्थः । सर्वसंग्राहकं धुरंधरस्य नामरूपं लक्षणमेव समीचीनम् । प्राचीनैर्लभ्योदाहरणानुसारेण लक्षणानि कृतानि । परं तूदाहरणान्येकप्रकाराण्येव न भवन्ति । सर्वस्वस्येदं लक्षणम्—

"आश्रयाश्रयिणोरनानुरूप्यमधिकम् ॥" इति॥

आधाराधेययोरनानुरूप्यं विरूपता । अर्थादाश्रयादाश्रय्यधिकः, आश्रयिण आश्रयो वाधिकश्चेत्तदाधिकालंकार इत्याशयः। विमर्शनीकार आह "विरूपता विषमेप्यस्ति परं तु तत्र तेषां पदार्थानां मेलनात्पूर्वमपि तेषां विरूपता स्वभावसिद्धा । अधिके तु न्यूनाधिकभावः परस्प-

रापेक्षया सिद्धो भवत्यतो द्वयोर्मेलनकरणादेव विरूपता सिद्ध्यति।" इति ॥

यथा—

जगदादिजले सन्ति ब्रह्माण्डानि महान्त्यपि ॥
बुद्बुदा इव ते तत्र यशो माति न भूपते ॥ १ ॥

अत्र संसारस्यादिभूतजलरूप आश्रयो ब्रह्माण्डरूपाश्रयिणोऽधिकः। अथ च जगत आदिमजलरूपाश्रयाद्राजराजेश्वरस्य यशोरूप आश्रय्यधिकः। अत्र द्वयोर्मेलनकरणाद्विरूपता सिद्ध्यति। पूर्वोक्तखण्डनेनेदमपि लक्षणं खण्डितम् ॥

यथावा—

श्रीमन्निङ्ग्लसार्वभौमसदसि स्वामन्त्र्य दिल्लीपुरे
संमान्यादरपूर्वकं पदमरं संप्रापितः पैतृकम् ॥
मालायां पृथिवीभुजामधिगतो मेरूपमां श्लाघितः
साम्यं को यशवन्तसिंह! भवता धत्ते महीमण्डले ॥ १ ॥

मालाया मणिषु सुमेरुरधिको भवति तथैव पृथिवीपालमालायां राजराजेश्वरोऽधिकः॥ कुवलयानन्दकारादयः प्रकाशकारानुसारिणः। रत्नाकरकारादयः सर्वस्वानुसारिणः। व्यतिरेकेऽपि क्वचिदुपमेयाधिक्यं भवति, परं तु तत्र पृथक्करणरूपचमत्कारस्योद्धरकंधरत्वाद्व्यतिरेकालंकारो भवति॥ प्राधान्येन व्यपदेशा भवन्तीति न्यायात् ॥ अधिकशब्दस्य व्यवहारो लोकविलक्षणतायामथ च महत्त्वे वर्तते। एवं चोभयात्राधिकालंकारमङ्गीकुर्वन्रुद्रट आधिक्यस्य लक्षणोदाहरणे तु प्रकाशकारवदाह। विलक्षणताया लक्षणोदाहरणे इमे आह—

यत्रान्योन्यविरुद्धं विरुद्धबलवत्क्रियाप्रसिद्धं वा ॥
वस्तुद्वयमेकस्माज्जायत इति तद्भवत्यधिकम् ॥" इति ॥

यत्र परस्पराविरुद्धमथवा विरुद्धबलवत्क्रियाप्रसिद्धं वस्तुद्वयमेकस्माज्जायते तत्राधिकालंकार इत्यर्थः ॥

यथा—

मुञ्चति वारि पयोदो ज्वलन्तमनलं च यत्तदाश्चर्यम् ॥
उदपद्यत नीरनिधेर्विषममृतं चेति तच्चित्रम् ॥

अत्र ज्वलन्तमनलमित्यनेन विद्युद्विवक्षिता। अनलो जलं च परस्परं स्वभावाद्विरोधिनी। अनलो जलस्य नाशको जलमनलस्य नाशकम्। अनयोरेकमेघादुत्पत्तिराधिक्यम्, अर्थाद्विलक्षणता। विषममृतं च मारणजीवनयोर्विरुद्धयोः क्रिययोः कर्तृणी। अनयोर्द्वयोरेकसमुद्रादुत्पत्तिराधिक्यम्, अर्थाद्विलक्षणता ॥ विषामृते जलानलवत्परस्परं विरुद्धे न स्तः। किं त्वनयोर्मारणजीवनक्रिये परस्परं विरुद्धे। मम तु मतम्, अयं रुद्रटस्य प्रमादः। अत्र लोकविलक्षणता तु विचित्रतारूपा। स च विचित्रालंकारोऽग्रे प्रतिपादयिष्यते। परं तु विचित्रालंकारस्याधिकनाम्नि संग्रहो न समीचीनः। कुत इत्युक्तौ विचित्रार्थेऽधिकशब्दः प्रसिद्धो नास्ति। अथ च विचित्रमनेकप्रकारकं भवति। तस्योक्तविशेषे नियमकरणमपि न समीचीनम्। केनाचित्प्राचीनेनेदमुदाहरणमधिकालंकारस्यानेन तात्पर्येण दत्तम्। जलं वर्षञ्जलदोऽग्निमपि वर्षति। एवं चैकस्माज्जलवस्तुनो द्वितीयस्य वस्तुनोऽग्नेर्वर्षणं संख्ययाधिकमस्ति। तथैवामृतेन सह समुद्राद्वितीयं विषमपि जातम्। इदमपि वस्तुनः संख्ययाधिक्यम्। भ्रमेण रुद्रट उक्तोदाहरणस्य तात्पर्यं विस्मयं ज्ञात्वेदं लक्षणमुक्तवान् ॥

इत्यधिकालंकारप्रकरणम् ॥ ५ ॥

## अनवसरः ॥

वक्ष्यमाणावसरविपरीतभावेऽनवसरालंकारो मया लक्षितः ॥

यो वाऽनवसरो राजञ्ज्ञेयोऽनवसरः स हि ॥
अप्रियस्ते महाराज तथापि श्रूयतामयम् ॥

यथा—

संदेश आयान्मरुभूपतेः पुरा

पश्चादनीकं शरवर्षणं ततः ॥
संधौ रुचिस्ते न तदाऽभवत्प्रिय !
वनेऽधुना काङ्क्षसि का विवेकिता ॥ १ ॥

अत्र राजराजेश्वरस्य शत्रुस्त्रीणां निजस्वामिनं प्रतीयमुक्तिः। संदेशागमनादिसमयः संध्यवसर आसीत्। तदा संधिर्न कृतः। अद्य राज्यभ्रंशे सति वनवासदशायां संध्यभिलाषाया अनवसरः। अयं मनोरञ्जकत्वादलंकारः॥

यथावा—

विदेशं बान्धवा याता विनष्टाः कृषयस्तथा।
मृताश्च पशवो मेघो दुग्धं कामं प्रवर्षतु ॥ १ ॥

यथावा—

अधिकारः स्थितो यावत्तावद्दृग्विवृता न हि।
इदानीं विवृतात्यन्तं किं तेन वद मे सखे ॥ १ ॥

इत्यनवसरप्रकरणम् ॥ ६ ॥



## ॥ अनुज्ञा ॥



अन्वित्युपसर्गोऽनुकूलार्थे। ज्ञा ज्ञाने। अनुज्ञेतिसमुदायशब्दार्थस्त्वनुकूलज्ञानम्। उक्तं च चिन्तामणिकोषकारेणापि "अनुज्ञा अनुमतौ" इति॥ अनुमतिरनुकूलमतिरङ्गीकार इत्यर्थः। अङ्गीकारस्त्वङ्गीकारयोग्यस्यानङ्गीकारयोग्यस्यापि च भवति। अनङ्गीकारयोग्यस्याङ्गीकारश्च कारणेन, कारणं विनापि च भवति। ततोत्रान्यत्रातिव्याप्तिवारणाय केनचिन्निमित्तेनानङ्गीकारयोग्यस्याङ्गीकारे रूढिः॥

अनङ्गीकारयोग्यस्य स्यादङ्गीकरणं यदि।
अनुज्ञालंकृतिर्ज्ञेया निमित्तेनैव केनचित् ॥

यथा—

द्वाःपालवेत्रैः किल कन्दुकाभं नृत्यन्ति राज्ञां मुकुटानि यत्र ।
सिन्धोरधीशो* विशति प्रभीतो द्वारे तु तस्मिन्मरुनायकस्य ॥ १ ॥
सत्कारपूर्वं हि लभे प्रवेशमुपोपविष्टश्च पठामि काव्यम् ।
मुरारिनामा कविराट्ततोहं युगे युगे याचकजन्म याचे ॥ २ ॥

युग्मम् ॥

याचकजन्म जगत्यनङ्गीकारयोग्यम् । तस्यात्राङ्गीकारः । अथ चात्राङ्गीकारे राजराजेश्वरस्योक्तश्रेष्ठसन्मानं निमित्तम् । अनङ्गीकारयोग्यस्याङ्गीकारः कस्यचिद्गुणस्य लेशेन भवति । तथाप्यनङ्गीकारयोग्यस्याङ्गीकाररूपचमत्कारस्य प्राधान्यादलंकारस्त्वनुज्ञैव भवेत् । न तु वक्ष्यमाणलेशालंकारः ॥ चन्द्रालोकस्येदं लक्षणम्—

"दोषस्याभ्यर्थनाऽनुज्ञा तत्रैव गुणदर्शनात् ।" इति ।

तत्रैवार्थाद्दोष एव गुणदर्शनाद्दोषस्याभ्यर्थनाऽर्थाद्याच्ञाऽनुज्ञालंकार इत्यर्थः । रसगङ्गाधरस्येदं लक्षणम्—

"उत्कटगुणविशेषलालसया दोषत्वेन प्रसिद्धस्यापि वस्तुनः प्रार्थनमनुज्ञा ।" इति ।

यथा—

विपदः सन्तु नः शश्वद्यासु संकीर्त्यते हरिः ।

एवं प्रार्थनारूपाङ्गीकारोदाहरणैर्भ्रमित्वा चन्द्रालोककर्ता लक्षणे "अभ्यर्थना" इत्याह । तदनुसारिण इतरेप्याहुः । स च प्रमाद एव । कुत इत्युक्तावङ्गीकारः सामान्यः । प्रार्थनादयस्तस्य विशेषाः । अतोऽप्रार्थनोदाहरणेष्वव्याप्तिर्भवति ॥

यथा—

धन्या निर्धननारी या शयाना वन्दते विधुम् ।
धिग्धिग्वै वैभवं लग्नाः कपाटा यत्र कोटयः ॥

---

* सिन्धुदेशराजधान्या हैदराबादेतिप्रसिद्धाया अधिपतेः "अबदुन्नवी" इत्याख्यस्य "मीरनसीरखां" इत्याख्येन मन्त्रिणा राज्यमाच्छिन्नम् । तदा स महाराजविजयसिंहस्य शरणं प्राप्तः । तदाप्रभृति तद्वंश्या योधपुरे वर्तन्ते । तेभ्यश्च बहुतरा भूः प्रदत्तास्ति । योधपुरमहाराजस्तस्मा अर्धासनं ददाति ॥

कपाटरहितगृहमनङ्गीकारयोग्यं, तस्यात्राङ्गीकारः। अस्मिँश्चाङ्गीकारे निमित्तं मित्रमेलनस्य सौकर्यम्। स्तुतिश्चाऽऽर्थोऽङ्गीकारः। अत्र न प्रार्थना। उत्तरार्धेऽनुज्ञाया विपरीतभावः। कुत इति चेद्धनाढ्यता लोकेऽङ्गीकारयोग्या, तस्या अत्रानङ्गीकारः। अत्र विषये रसगङ्गाधरकारास्तिरस्कारनामकमलंकारमाह। स त्वग्रे प्रदर्शयिष्यते। लभ्योदाहरणानुसारेण लक्षणे गुणदर्शनादित्युक्त्वा नियमकरणमपि प्राचीनानां प्रमादः। कुत इत्युक्तौ—

जगद्विनाशकं बुध्वा बुभुजे विषमीश्वरः।

अत्राऽव्याप्तिः स्यात्। अत्रानङ्गीकारयोग्यस्य विषस्याङ्गीकारे विषस्य जगद्विनाशकतारूपदोष एव निमित्तम्। अतो धुरंधरस्य सर्वसंग्राहकं नामरूपलक्षणमेव समीचीनम्॥

इत्यनुज्ञाप्रकरणम्॥ ७॥

## ॥ अन्योन्यम् ॥

अन्योन्यशब्दार्थः परस्परम्। कथितं च चिन्तामणिकोषकारेण "अन्योन्यं परस्परार्थे" इति॥

अन्योन्यता या राजेन्द्र! साऽन्योन्यालंकृतिर्मता।
उपकारादिभेदेन बहुधेयं प्रभिद्यते॥ १॥

यथा—

मरुनाथ त्वया भाति जगत्तेन भवानपि।
गगनं शशिना भाति गगनेन तथा शशी॥

एवं परस्परोपकारोदाहरणोपलब्ध्या भोजमहाराजस्तदनुसारेणेदं लक्षणमकरोत्॥

"अन्योन्यमुपकारो यस्तदन्योन्यं त्रिधा च तत्।
वाच्यं प्रतीयमानं च तृतीयं तूभयात्मकम्॥" इति।

चन्द्रालोककारादय एतदनुसारिणः ॥

शब्दो वर्धयते शोभामर्थस्य मरुनायक ।
अर्थो वर्धयते शोभां शब्दस्यापि तथैव हि ॥

ईदृशोत्कर्षविषयकोदाहरणप्राप्त्या भानुदत्त इदं लक्षणमाह—

"परस्परमुत्कर्षजननमन्योन्यम् ।" इति ।

रूपधर्मविषयकोदाहरणोपलब्ध्या रत्नाकरकार इदं लक्षणमाह—

"रूपधर्मयोः परस्परनिबद्धत्वमन्योन्यम् ।" इति ।

स्वरूपस्येदमुदाहरणम्—

धनेन जायते प्रज्ञा प्रज्ञया जायते धनम् ।
प्रज्ञार्थौ जीवलोकेऽस्मिन्परस्परनिबन्धनम् ॥

अत्र प्रज्ञाया धनस्य वा कस्यापि धर्मत्वेन न विवक्षा; किं तु धर्मित्वेनैव विवक्षा । अत इदं स्वरूपस्योदाहरणम् ॥

धर्मस्य यथा—

सेनारेणुभरेण वा हयभुवा घोरान्धकारेण वा
दृष्टः शात्रवगात्रवञ्चनचणः कैर्लोचनैस्त्वं तदा ।
धन्यं तद्भुवनत्रयस्य परमं ज्योतिर्मयं लोचनं
येनालम्भि तवान्तरं त्वमपि वा यस्यान्तरं लब्धवान् ॥

अत्र वीररूपिणोर्धर्मिणोः परिज्ञानधर्मस्यान्योन्यता । भानुदत्तो वृत्तावाह—

"उत्कर्ष इत्युपलक्षणम् ।
वैरस्पर्धादयोऽपि ज्ञातव्याः ।" इति ॥

यद्यप्यस्मिन्साहित्यशास्त्र उपलक्षणतायाः स्वीकारो वर्तते, तथापि मम तु मतम्, धुरंधरस्य नामार्थरूपसर्वव्यापिलक्षणे स्पष्टे स्थिते सत्युत्कर्षादिविशेषमुक्त्वा पुनस्तस्योपलक्षणतां स्थापयित्वा परस्परस्पर्धादिसंग्रहकरणे वृथा परिश्रम इति । ईदृशविषये लोकप्रवादोप्यस्ति ॥

"प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ।" इति ॥

अन्योन्यमनेकप्रकारं भवति ॥

यथा--

करोति हरिमातङ्गकपोलौ मलिनौ मदः ।
मरुनाथयशः शुभ्रौ प्रकरोति पुनः पुनः ॥

अत्र मदस्य यशसश्च परस्परं हठः ॥

यथावा—

पलाशकुसुमभ्रान्त्या शुकतुण्डे पतत्यलिः ।
सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्तुमिच्छति ॥

अन्योन्यालंकारमनभिदधानो दण्ड्याचार्योऽत्र विषयेऽन्योन्यभ्रान्तिरिति भ्रान्तेः प्रकारमाह। परं त्वन्योन्यालंकारोऽङ्गीक्रियते चेत्तदेयमन्योन्यभ्रान्तिरन्योन्यस्य प्रकार एव भवति । कुत इत्युक्तावत्रान्योन्यतायाश्चमत्कारः प्रधानतया वर्तते ॥

यथा—

हरेर्मत्स्यावतारेऽभूत्पुच्छोच्छालितवारिभिः ।
सिन्धुर्नभो नभः सिन्धुरौर्वोर्कः सोपि वाडवः ॥

अत्रान्योन्यपरिणामः । न च वाच्यमेवं चेद्दण्ड्याचार्येणैवाङ्गीकृताया अन्योन्योपमायास्त्वयैव कथमुपमाप्रभेदत्वमुक्तम्। अन्योन्यप्रकारत्वमेव वाच्यमिति ? कुत इति चेत्परस्परभ्रान्त्यादौ त्वन्योन्यतायाश्चमत्कारः प्रधानः । अथ चान्योन्योपमास्थले प्रसिद्धोपमानेनोपमया सादृश्यनिर्णये सिद्धे सति पुनस्तस्योपमानस्योपमेयेनोपमाकरणेऽन्योन्यत्वरूपचमत्कारे पर्यवसानं नास्ति । तस्य प्रयोजनं तु परस्परतुलान्यायेन सादृश्यस्य दृढनिर्णयकरणम् अतस्तत्रोपमायामेव पर्यवसानादुपमाया एव प्रकारः । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"क्रियया तु परस्परम् । वस्तुनोर्जननेऽन्योन्यम् ॥" इति॥

वृत्तावस्यार्थमाह--

"अर्थयोरेकक्रियामुखेन परस्परं कारणत्वे सति

अन्योन्यनामाऽलंकारः ॥" इति ॥

यथा—

हंसानां सरोहिं सिरी सारिज्जइ अह सराणं हंसेहिं।
अण्णोण्णं विअ एए अप्पाणं णवर गरुअन्ति ॥

अत्र सरोहंसयोर्द्वयोः शोभाप्रसारणरूपेणैकक्रियाद्वारेण परस्परकारणता वर्तते। सर्वस्वकारादयः काव्यप्रकाशानुसारिणः। अन्योन्यशब्दस्य परस्परमित्येतावन्मात्रार्थकरणेनैवास्यालंकारस्य स्वरूपे स्पष्टे सति सर्वेषां गौरवं व्यर्थम्। "सेनारेणुभरेण—" इत्यत्र गुणस्यान्योन्यतायामव्याप्तिर्भवति। ज्ञानं च न्यायशास्त्रे गुणत्वेनोक्तम्। विलम्बेनाप्यन्योन्यता मया दृष्टा ॥

यथा—

आशाममायात्प्रियसंगमेच्छु-
र्नालोक्य कान्तं परितापमेति ॥
चन्द्रं हसञ्चारु मुखं तदाया-
च्चन्द्रो हसत्येष मुखं त्विदानीम् ॥ १ ॥

अत्रान्योन्यापकारो वर्तते। स च विलम्बेन जातः। एकस्मिन्समये न भूतः। तथाप्यन्योन्यचमत्कारस्तादृश एवानुभवसिद्धः। भोजमहाराजोऽन्योन्यचूड़िकानामकमन्योन्यालंकारप्रकारमङ्गीकृत्येदमुदाहरणं ददौ ॥

शशिना च निशा निशया च शशी
शशिना निशया च यथा गगनम्।
भवता च सभा सभया च भवान्
सभया भवता च तथा भुवनम् ॥

चूड़िकान्यायस्त्वेवं प्रकारः। स्त्रियो हस्तयोश्चूड़िकासमुदायो भवति। अथ च ताश्चूड़िका उत्तरोत्तरं परस्परं संबद्धा भवन्ति। तथैवात्राप्यन्योन्येनाग्रे संबन्धः कृतः। मम तु मतम्, ईदृशः प्रकारस्तु भवितुम-

* "हसाना सरोभिः श्री सार्यते, अथ सरसा हसैः। अन्योन्यमिव एते आत्मान केवलं गरयन्ति।" इति संस्कृतम् ॥

इति। परं तु चूड़िकास्तु परस्परं सजातीया भवन्ति। उक्तोदाहरणेऽन्योन्यस्य संबन्धोऽग्रेऽन्योन्ये नास्ति। "शशिना च निशा निशया च शशी" इत्यत्र त्वन्योन्यमस्ति। आभ्यां गगनं शोभते। अयं हेत्वलंकारः। अतोऽत्रान्योन्यचूड़िकान्यायो न घटते। उक्तन्यायघटनार्थमहमन्यां रचनां करोमि॥

कवयः सभया भान्ति तैः सभा मरुनायक!।
तया तैश्च भवान् भासि भवता च विभान्ति ते॥

अन्योन्यकरणे यथायोग्यताप्यस्ति, तथापि परस्परकरणचमत्कारस्य प्राधान्यादलंकारस्त्वन्योन्यम्। न तु समः। अथ च समस्यांशमन्तराप्यन्योन्यं भवति। "सेनारेणुभरेण–" इत्यत्रोभयोः परस्परपरिज्ञाने यथायोग्यता नास्ति। अथ चान्योन्यस्यांशं विना समो भवति॥

यथा—

आभीर्या हि मनो नवोद्धृतसमं दुग्धोपमं यौवनं
दध्ना तुल्यतमा रतिर्दृढतरा स्नेहस्रुती लोचने।
चन्द्रस्तक्रतुलां दधाति च सदा यस्या मुखस्याग्रत
ईदृग्वै सरसा कथं न मधुरा नन्दस्य सूनोर्भवेत्॥ १॥

अत्राभीर्यास्तस्या एवोपस्करेणोपमा यथायोग्यत्वादन्योन्यांशं विना समालंकारः॥

इत्यन्योन्यप्रकरणम्॥ ८॥



## ॥ अपन्हुतिः॥



न्हुङ्धातोरपन्हुतिशब्दो निष्पन्नः। न्हुङ्धातुश्चापन्हवार्थे। उक्तं हि धातुपाठे "न्हुङ् अपन्हवे" इति। अत्र "अप" इत्युपसर्गः। न्हुङ् धातोर्भावेऽप्प्रत्ययेऽपन्हवशब्दः, क्तिन्प्रत्यये चापन्हुतिशब्दो निष्पद्यते, उभयो चै-

कार्थौं । अत्रापन्हुतिशब्दार्थो गोपनम् । उक्तं च चिन्तामणिकोषकारेण "गोपनमपन्हवे" इति । गोपनं चमत्कारकारि चेदपन्हुत्यलंकारः ॥

अपन्हुतिरलंकारस्त्वपन्हव इहोच्यते ।

यथा—

नायं शारदचन्द्रो यशवन्तेश्वरयशो विभात्येतत् ।
नेदं कलङ्कचिन्हं सह लग्नेयं हि भिक्षुकश्रेणी ॥ १ ॥

शास्त्र उत्कृष्टवस्तुनो वर्णं श्वेतं वदन्ति । अपकृष्टवस्तुनो वर्णं श्यामं वदन्ति । तदनुसारेण भिक्षुकवर्णोत्र श्यामोऽङ्गीकृतः । अत्र नायिकाया विरहदशायां चन्द्र उद्दीपनम् । अतः सखी राजराजेश्वरस्य यश इत्यभिधाय चन्द्रं जुगोप । राजराजेश्वरस्य यशसि कोपि कलङ्को नास्ति, चन्द्रे च कलङ्कं विद्यते । अत एतच्छङ्कानिवृत्त्यर्थं कलङ्कं भिक्षुकावलिरित्यभिधाय तस्य गोपनं कृतम् ॥

यथावा—

आयास्यति परदेशी प्रावृषि, नैते कदम्बकप्रसवाः ।
संहत्य घामतप्तास्तारा एता विभान्ति तरुराजौ ॥ १ ॥

वर्षाकाले कदम्बाः पुष्प्यन्ति । वर्षर्तुरुद्दीपनम् । अतः सखी विरहिणीनायिकार्थं कदम्बानां पुष्पितत्वमुक्तरीत्या जुगोप ॥

यथावा—

नेदं नभोमण्डलमम्बुराशि—
र्नैमाश्च तारा नवफेनखण्डाः ।
नायं शशी कुण्डलितः फणीन्द्रो
नायं कलङ्कः शयितो मुरारिः ॥

अत्रापि विरहिणीनायिकार्थं सखी चन्द्रं जुगोप ॥

यथावा—

नेयं मेघघटा *तनुच्छदभटा नेयं तड़ित्कुन्तभा

---

* तनुच्छदेन कवचेन युक्ता भटा इति मध्यमपदलोपी समासः ॥

निर्घोषो न हि दुन्दुभेर्ध्वनिरयं नेयं तु केका स्तुतिः।
नैवेयं बकमालिका गजरदाः प्रावृण्न सेना त्वियं
मुग्धे योधपुरेश्वरस्य सरति प्रख्यातशौर्या रणम् ॥

अत्रापि तादृशमेघागमरूपमुद्दीपनं योधपुरेश्वरस्य निर्गममभिधाय विरहिणीनायिकार्थं सखी जुगोप। धुरंधरस्येदमुदाहरणम् ॥

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥ १ ॥

अत्रापन्हुतिरेवं रीत्या वर्तते; चन्द्रोदयमुद्दीपनं नायिकायै प्रदर्श्य मानमोचनोपायं कुर्वन्ती सखी चन्द्रमसि कलङ्कस्यारुचिकरत्वात्तस्य गोपनं कृत्वा रतिश्रान्ताया रजनिरमण्या उरसि गाढमाश्लिष्य शयनरूपं महदुद्दीपनं प्रदर्शितवती। काव्यप्रकाशकारोपि परंपरागतमिदमुदाजहार। गोपने रोचकताऽऽनयनार्थं धुरंधरेणेदृग्रचना विहिता। रोचकतामन्तरालंकारो न भवति ॥

यथा—

कर्णाभरणकान्तिं त्वं पतितां तु कपोलके।
कान्तदन्तक्षतभ्रान्त्या किं गोपायसि वाससा ॥

अत्र कर्णाभरणमाणिक्यकान्तिं कान्तदन्तक्षतं ज्ञात्वा नायिकोत्तरासङ्गेन गोपायति। परं त्वेवं गोपनस्य चातुर्यमूलकत्वाभावान्न रमणीयता। अतोऽत्र गोपनं नालंकारः। किं त्वत्र सखीपरिहासे भ्रान्तिरलंकारः। अस्यालंकारस्य साक्षात्स्वरूपमजानानाः प्राचीना धुरंधरस्येदृशोदाहरणेष्वेकं निषिध्यान्यस्य स्थापनं ज्ञात्वाऽपन्हुतिशब्दार्थं "एकं निषिध्यापरस्य स्थापनम्" इति चक्रुः। उक्तं चिन्तामणिकोषकारेण "अपन्हवोऽपलापे। अपलापः सतोप्यसत्त्वेन कथने" इति। आक्षेपे तु निषेधमात्रम्, अत्र त्वेकं निषिध्यापरस्य स्थापनमित्यस्यालंकारस्याक्षेपाद्विलक्षणयमज्ञासिषुः।

एतत्सिद्धान्तानुसारेण प्राचीनैर्लक्षणानि विहितानि। भगवतो वेदव्यासस्येदं लक्षणम्—

"अपन्हुतिरपन्हुत्य किंचिदन्यार्थदर्शनम् ॥" इति ॥

इदमेव लक्षणमाचार्यदण्डिना भोजमहाराजेन च विहितम्। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपन्हुतिः ॥" इति ॥

वामनवाग्भटरुद्रटसर्वस्वकारप्रभृतयो लक्षणानीत्थमेवाहुः। दण्ड्याचार्यस्येदमुदाहरणम्—

"न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामिति ॥" इति ॥

काव्यप्रकाशे द्वितीयमिदमुदाहरणम्—

बत सखि कियदेतत्पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन्रागिलोके तथाहि ॥
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥ १ ॥

रोचकतामन्तरा कुत्राप्यलंकारो न भवति। तथा चैकं निषिध्यापरस्य स्थापने रोचकताया अभावान्नालंकारत्वम्। दण्डिन उक्तोदाहरणेऽलंकारस्तु प्रसङ्गविध्वंसमानमोचनोपायं कुर्वन्त्याः सख्या उक्तावज्ञातज्ञापनरूपो विधिरस्ति। भयं प्रदर्श्य मानमोचनकरणं प्रसङ्गविध्वंसमानमोचनोपाय इत्युच्यते। प्रकाशकारस्योक्तोदाहरणे च प्रसङ्गविध्वंसमानमोचनोपायं कुर्वन्त्याः सख्या उक्तौ प्राचीनमतीयं दृढारोपरूपकं, मन्मतीयश्च दृढाभेदालंकारः। अत्र न गोपनम्, किं तु निषेधः। यत्र वस्तुनः प्राकट्ये हानिसंभावनयाऽप्रकटीकरणस्यावश्यकता भवति तत्र तु गोपनम्। उक्तप्रयोजनं विना निषेधस्तु निषेधमात्रम्। अत्र तु भ्रमरसहितरसालमञ्जरीं विषाक्तं स्मरशरमभिधायोद्दीपनाधिक्यस्य प्रदर्शनाद्गोपनाभावः। एवमन्यत्रापि बोध्यम्। रूपकदृढतायै प्रकृतनिषेधं दण्ड्याचार्यस्तत्त्वापन्हवरूपकमाह। दण्ड्याचार्यः

'नैतन्मुखमिदं पद्मं न नेत्रे भ्रमराविमौ ॥

एतानि केसराण्येव नैता दन्तार्चिषस्तथा ॥ १ ॥"

इदमुदाहृत्य कारिकां लिखति—

"मुखादित्वं निवर्त्यैव पद्मादित्वेन रूपणात् ॥
उद्भावितगुणोत्कर्षं तत्त्वापन्हवरूपकम् ॥१॥" इति ॥

मुखादित्वं निवर्त्यैव पद्मादित्वेन रूपणकरणादुद्भावितोऽर्थादुत्थापितो यो गुणोत्कर्षस्तत्सहितं तत्त्वापन्हवरूपकमर्थात्साक्षात्स्वरूपस्य निषेधसहितं रूपकम् । दण्डिमुखादेवेदं निर्धार्यते, एकं निषिध्यापरस्य स्थापनांशे नालंकार इति । अत एव दण्डिनोक्तोदाहरणे रूपकस्य रोचकतयात्र तत्त्वापन्हवरूपकालंकारः स्वीकृतः। एवं मां वद, तदा तु धुरंधरस्योक्तोदाहरणेऽप्येवं रोचकतायास्तत्त्वापन्हवरूपके सत्त्वात्तत्त्वापन्हवरूपकमेवालंकारो भविष्यति। भवत्संमताया अपन्हुत्याश्चोच्छेदो भविष्यति। कुत इत्युक्तौ तत्र तत्त्वापन्हवरूपकं प्रकृतगोपनार्थं कृतमिति तस्य प्रधानत्वादपन्हुतिरेवालंकारः । अत्र सहृदयहृदयमेव साक्षि। एवमपि न वाच्यं, धुरंधरस्योक्तोदाहरणेपि रोचकता तत्त्वापन्हवरूपकांशेऽस्ति चेत्पुनरपन्हुतिरलंकारः कथमिति ? कुत इत्युक्तौ शाकं लवणमरिचादयो मिलित्वा स्वादूकुर्वन्तीत्ययमेव दृष्टान्तो रसेषु प्रदर्शितः । विभावानुभावसंचारिभावा मिलित्वा स्थायिभावं स्वादूकुर्वन्तीति। तथैवात्र तत्त्वापन्हवरूपकस्य मेलनेन स्वादूभूयापन्हुतिरलंकारो भवति । तत्त्वापन्हवरूपकांशमन्तरापि चापन्हुतेर्बहून्युदाहरणान्युपलभ्यन्ते। तत्र च प्राचीनानां लक्षणानां स्फुटमव्याप्तिर्भवति ॥

यथा—

दंपत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच-
स्तत्प्रातर्गुरुसंनिधौ निगदतस्तस्यातिमात्रं वधूः ॥
कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्चूपुटे
व्रीडार्ता विदधाति दाडिमफलव्याजेन वाग्बन्धनम् ॥१॥

अत्र नायिकया गुरुजनेभ्यो रहस्यगोपनार्थमुक्तवैदग्ध्यं विहितम् । अत्र भ्रान्त्यलंकारस्य संकीर्णत्वम् । रत्नाकरकारः कथयति, रूपके

विषयनिषेधः प्रतीयमानः। अत्र तु विषयनिषेधो वाच्यः। रूपक आरोपे पर्यवसानानन्तरं विषयनिषेधः प्रतीयते, अत्र तु प्रथमं विषयनिषेधः प्रतीयते। मम मते तु रूपके विषयनिषेध एव नास्ति। तच्च रूपक-प्रकरणे स्फुटीकरिष्यते। परं तु रत्नाकरकारस्य रूपके विषयनिषेधा-ङ्गीकारेऽपीदं समाधानं रूपकस्य प्रकारतासाधकं, न त्वलंकारान्तरता-साधकम्॥

"उपस्थितं निषिध्य परस्य स्थापनमपन्हुतिः"॥

ईदृशलक्षणमुक्त्वा भानुदत्तोपि स्फुटं वदति॥ "यद्यपि निषेधमुख-रूपकमेवापन्हुतिः" इति। तथापि संप्रदायानुसारेण पृथगुच्यते। उद्भटस्येदं लक्षणम्—

"सादृश्यव्यक्तये यत्रापन्हवोऽसावपन्हुतिः॥
अपन्हवाय सादृश्यं तत्राप्येषा ह्यपन्हुतिः॥" इति॥

दण्ड्याचार्यः सादृश्ये तत्त्वापन्हवरूपकं, असादृश्ये चापन्हुत्यलं-कारमङ्गीकरोति। तच्च तदुदाहरणैः स्पष्टम्। उद्भटो लभ्योदाहरणानुसा-रेण सादृश्येऽपन्हुतिं मत्वोक्तप्रकारद्वयमाह॥ अयमपि प्राचीनानुसारेणै-वापन्हुतिस्वरूपं ज्ञात्वा स्थलद्वयेऽप्यपन्हुतिमाह। साक्षात्स्वरूपज्ञाने तु सादृश्यस्पष्टीकरणार्थमपन्हवे तत्त्वापन्हवरूपकं, अपन्हवार्थं सादृश्ये त्व-पन्हुतिरिति वदेत्। कतिचन प्राचीना अपन्हुतेः षाड्विध्यमाहुः। चन्द्रा-लोक एतानि लक्षणोदाहरणानि सन्ति॥

"शुद्धापन्हुतिरन्यस्यारोपार्थो धर्मनिन्हवः" इति।

यथा—

नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम्।

इदमुदाहरणं तु पूर्ववत्।

"स एव युक्तिपूर्वश्चेदुच्यते हेत्वपन्हुतिः" इति।

यथा—

नेन्दुस्तीव्रो न निश्यर्कः सिन्धोरौर्वोयमुत्थितः।

मम मते त्वत्र दृढतराभेदः।

"अन्यत्र तस्यारोपार्थः पर्यस्तापन्हुतिस्तु सः" इति।

यथा—

नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्।

अत्र मुखे सुधांशुताधर्मस्थापनार्थमुक्तधर्मस्य चन्द्रेऽपन्हवः कृतः मम तु मतं, वक्ष्यमाणपदार्थवृत्तिनिदर्शनावदत्राप्यार्थ्युपमेति॥

"भ्रान्तापन्हुतिरन्यस्य शङ्कायां भ्रान्तिवारणे" इति।

यथा—

तापं करोति सोत्कम्पं ज्वरः किं न सखि! स्मरः॥

मम मतेऽत्र भ्रान्तिनिवृत्तावपि भ्रान्तिरेवालंकारः। एतच्च भ्रान्तिप्रकरणे स्पष्टीभविष्यति॥

"छेकापन्हुतिरन्यस्य शङ्कातस्तथ्यनिन्हवे" इति।

अयं प्रकारो भ्रान्तापन्हुतेः प्रतिभटभूतः॥

यथा—

सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम्।
नागरिकः किं मिलितो न हि न हि सखि हैमनः पवनः॥

कुवलयानन्दकारो वदति, एषूक्तोदाहरणेषु विषयान्तरयोजना वर्तते। एकस्मिन्विषयेऽवस्थाभेदाद्योजनाया इदमुदाहरणम्॥

वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया।
पतिं बुध्वा सखि ततः प्रबुद्धास्मीत्यपूरयत्॥

पूर्वोदाहरणे प्रियकार्यं पवनकार्ये योजितमिति त्वेकस्मिन्विषयेऽपरविषययोजना। अत्र विषयैकतायामवस्थाभेदाद्यज्जाग्रदवस्थायां जातं तस्यैकस्यैव जारवृत्तान्तस्य स्वप्नरूपावस्थान्तरप्रदर्शनेनापन्हवो विहितः। एषूदाहरणेषु मम मतेनाप्यपन्हुत्यलंकारः॥

"कैतवापन्हुतिर्व्यक्तौ व्याजाद्यैर्निन्हुतेः पदैः॥" इति॥

यथा—

निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ॥

वाचकभेदात्प्रकारो न भवति। एतच्चोपमाप्रकरणे प्रोक्तम्। एतस्य कतिपयेषूदाहरणेष्वपन्हुतिरलंकारो वर्तते, परं त्वयमप्यस्यालंकारस्य साक्षात्स्वरूपं नाबोधि। बुद्धे तु "तापं करोति सोत्कम्पम्" इत्यत्र नायिकया प्रत्युत रहस्यप्रकटने कथमपन्हुत्यलंकारं वदेत्। अपि चास्मिन्नलंकारे प्रकृतनिषेधः, अन्यस्य स्थापनं चेत्यखिलं गोपनार्थकम्। तच्च शुद्धापन्हुतिलक्षणेऽन्यस्थापनार्थं प्रकृतनिषेधं किमिति वदेत् ॥

दाडिमीबीजबुद्ध्येदं कर्म चक्रे शुकः सखि।
हारमाणिक्यमालोक्य चरन्त्यां निष्कुटे मयि ॥

अत्र नखक्षतरूपाकारगोपनम् ॥

त्वामलिखन्ती दृष्ट्वान्यं धनुष्पौष्पं करेऽलिखत् ॥

अत्र क्रियया गोपनम् ॥

मासे भाद्रपदे शुक्लचतुर्थ्यां गोष्पदोदके ॥
दृष्टो विधुः कलङ्को मे सखि भावीति निश्चितम् ॥

लोके प्रसिद्धिरियम्, वृष्टिवारिपूरितगोखुरगर्ते भाद्रपदशुक्लचतुर्थ्यां चन्द्रमसः प्रतिबिम्बालोकनेन मिथ्याकलङ्कं लगेदिति। इदं भविष्यद्गोपनम् ॥

चाणूरो मर्दितः कण्ठे गृहीत्वैवं मयेत्यसौ ॥
अद्य मां बोधयत्यत्र हास्यहेतुः कथं सखि ॥

अत्र वर्तमानगोपनम्। एतानि सर्वाण्यपन्हुतेरुदाहरणान्तराणि।

॥ इत्यपन्हुतिप्रकरणम् ॥ ६ ॥

## ॥ अपूर्वरूपम् ॥

धुरंधरेण पूर्वरूपप्राप्तौ वक्ष्यमाणः पूर्वरूपालंकारोऽङ्गीकृतः। रूपं

त्वत्रावस्था । पूर्वरूपविपरीतभावेऽपूर्वरूपालंकारो मया दृष्टः । धुरंधरेण तद्गुणादिविपरीतभावेऽतद्गुणादीनलंकारानभिधायालंकारस्य विपरीतभावेऽलंकारान्तरभावस्य दिग्दर्शिता, अत एव पूर्वरूपस्य वैपरीत्येऽस्मत्प्रदर्शितोयमपूर्वरूपालंकारो न नवीनः ॥

अप्राप्तौ पूर्वरूपस्यापूर्वरूपं निगद्यते ॥
न नूत्नोयमलंकारो जानीहि मरुभूपते ॥

यथा—

नाथाः! श्रीयशवन्तसिंहनृपतिं क्रुद्धं कुरुध्वं न हि
कृत्वा वासमहो दरीषु तु पुनर्हर्म्येषु नो वत्स्यथ ॥
कान्तारे खगजम्बुकादिरचितैर्ध्वानैः प्रबुद्धाः प्रगे
स्तोत्रैर्वन्दिजनोदितैर्न हि पुनर्यूयं मुदा जाग्रत ॥१॥

यथावा—

क्षीणक्षीणोऽपि शशी भूयोभूयोऽभिवर्धते नित्यम् ॥
विरम प्रसीद सुन्दरि यौवनमनिवार्ति यातं तु ॥

इदमुदाहरणं सर्वस्वकृता व्यतिरेके प्रदर्शितम् । व्यतिरेकस्त्वेवं रीत्या वर्तते । शशिवद्यौवनमपि शनैः शनैर्वृद्धिं प्राप्य तेनैव क्रमेण क्षीणं भवति । परं तु शशी वारं वारं वर्धते, यौवनस्य पुनः प्राप्तिरलभ्या । अथ चास्मिन्काव्ये पूर्वार्धे पूर्वरूपालंकारोऽप्यस्ति । परं त्वत्र पर्यवसानं त्वपूर्वरूप एव । अतोऽत्रापूर्वरूपमेवालंकारो मुख्यः ॥

॥ इत्यपूर्वरूपप्रकरणम् ॥ १० ॥

## ॥ अप्रत्यनीकम् ॥

पक्षवन्तं प्रति करणे धुरंधरेण वक्ष्यमाणः प्रत्यनीकालंकारः स्वीकृतः । अथ चोपलक्षणतया पक्षवतः करणादेरपि तत्र संग्रहोऽस्माभिः कृतः ।

प्रत्यनीकस्य विपरीतभावेऽप्रत्यनीकालंकारो मया लक्षितः॥ प्रत्यनीकस्याक्षरार्थस्तु तस्य प्रकरणे वक्ष्यते ॥

पक्षिणं प्रत्यकरणेऽप्रत्यनीकमिहोच्यते ।
प्राचां दिग्दर्शनेनैतत्स्वीकृतं मरुनायक ॥ १ ॥

यथा—

रिपुं प्रबाधते साक्षात्तत्प्रजां न मरोश्चमूः ।
मृगाङ्कं बाधते राहुर्न तारास्तस्य संश्रयाः॥

अत्र साक्षाच्छत्रोः संबन्धिनीं प्रजां प्रति राहोः साक्षाच्छत्रोर्मृगाङ्कस्य संबन्धिनीस्ताराः प्रति शत्रुताया अकरणम् ॥

यथावा—

दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ॥
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः ॥

अत्र साक्षाद्गजपतिकुरङ्गपत्योः स्वर्गचन्द्रलोकयोः स्थितत्वात्तत्सजातीयसंबन्धिष्वितरगजकुरङ्गेषु मृगपतिर्नखपाण्डित्यं न प्रकटयति ॥

यथावा—

न तृप्ता श्रवणात्तस्य स्वप्नाद्वा चित्रदर्शनात् ।
तं द्रष्टुमीहते साक्षाद्राधा नीलमणिप्रभम् ॥

नायकस्य चित्ररूपसंबन्धिनि नायिकानां रुचिर्भवति। परं तु राधिका न करोत्यतोऽत्राप्रत्यनीकम् ॥ साक्षाद्वस्तुनस्तस्य च चित्रस्य मिथो बिम्बप्रतिबिम्बभावरूपः संबन्धो भवति ॥

यथावा—

जलधिसुताया नाथो जगतामीशः परो विष्णुः ।
साहाय्यं न तथापि हि कर्तुं शक्तो मुनिः पपौ स यदा॥ १॥

अत्र लक्ष्म्याः समुद्रस्य च जन्यजनकभावः संबन्धः। परं तु

लक्ष्म्याः पतिभूतो विष्णुस्तु समुद्रस्य साक्षात्संबन्धिन्यो लक्ष्म्याः संबन्धी । अत्र सबन्धिसबान्धिन उपकारकरणाभावः ॥

इत्यप्रत्यनीकप्रकरणम् ॥ ११ ॥

## ॥ अप्रस्तुतप्रशंसा ॥

अप्रस्तुतप्रशंसेत्यत्र "अ" इत्यव्ययं निषेधार्थकम् । प्रस्तुत इति प्रकरणप्राप्तस्य नाम । आह चिन्तामणिकोषकारः । "प्रस्तुतः प्रकरणप्राप्ते" इति । शंसुधातोः शंसाशब्दो निष्पन्नः । "शंसु कथने स्तुतौ च" इति शास्त्रम् । अत्र शंसुधात्वर्थः कथनं विवक्षितम् । कथनं तु कथा । आह चिन्तामणिकोषकारः "कथनं कथायाम्" इति । कथा तु वृत्तान्तः । अत्र "प्र" इत्युपसर्गस्य शंसुधात्वर्थ एवार्थः । उपसर्गस्य तिस्रो गतयो भवन्ति । तदुक्तम्—

धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते ॥
तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा ॥

उपसर्गः क्वचिद्धात्वर्थं बाधते, अर्थाद्धात्वर्थमन्यं करोति । क्वापि धातोरनुवर्तनं करोति । अर्थाद्यस्मिन्नर्थे धातुर्वर्तते, तस्मिन्नेवार्थ उपसर्गोऽपि वर्तते । अथ च क्वचिद्धातोरर्थं विशिनष्टि, अर्थाद्धात्वर्थे विशेषं बोधयति । क्रमेण यथा—"आदत्ते" इत्यत्र दाधातोरर्थो दानम् । "दा दाने" इति शास्त्रात् । अत्र "आङ्" इत्युपसर्गो दाधात्वर्थं दानं बाधित्वा ग्रहणरूपमर्थं बोधयति । "प्रसूते" इत्यत्र षूङ् धातोरर्थः प्रसवः, अर्थात्प्राण्युत्पादनम् । अत्र "प्र" इत्युपसर्गोऽपि तस्मिन्नेवार्थे वर्तते । "प्रवर्धते" इत्यत्र वृधुधात्वर्थो वृद्धिः । "प्र" इत्युपसर्गो वृद्धौ विशेषं बोधयति । अप्रस्तुतप्रशंसेतिसमुदितशब्दार्थस्त्वप्रस्तुतस्य कथा । कस्यचित्प्रसङ्गे कथितायामप्रस्तुतकथायामप्रस्तुतप्रशंसाशब्दस्य रूढिः । सा च प्रथमाकृतौ प्रतिपादितविषया । यस्य कस्यचित्प्रसङ्गेऽप्रस्तुतकथाकथनस्य लोके रीतिर्वर्तते । अपि च महाभारतादीतिहासेष्वपि यस्य कस्यचित्प्रसङ्गेऽप्रस्तुतकथा कथिता । एत-

दनुसारेण धुरंधरोऽप्रस्तुतप्रशंसाऽलंकारं स्वीचकार। अत्र प्रस्तुतवृत्तान्तो व्यञ्जनया लभ्यते। स तु व्यङ्ग्यस्य विषयः। न खलंकारः। काव्ये प्रस्तुतवृत्तान्तस्यापि वचनेन कथने वृथा गौरवं भवति। अत्र प्रस्तुतकथाया अप्रस्तुतकथायाश्च सारूप्यसंबन्धः सामान्यविशेषभावसंबन्धो वा भवति। अतः प्रस्तुतप्रसङ्गे तस्या अप्रस्तुतकथायाः कथनं रोचकं भवति। अन्यथाऽकाण्डप्रथनदोषो भवति। परं त्वत्र सारूप्यसंबन्धांशे पर्यवसानं नास्ति। तस्मिन्पर्यवसाने कुत उपमालंकारो भवेत्। उपमाया अंशो दीपकतुल्ययोगिताद्यनेकालंकारोदाहरणेषु वर्तते, परं तु तस्मिन्पर्यवसानं न भवति। किं तु दीपकतुल्ययोगितादीनां प्रधानतया तेष्वेव पर्यवसानात्तत्र दीपकतुल्ययोगितादय एवालंकारा भवन्ति। तथैवात्राप्यप्रस्तुतप्रशंसांशस्योद्धरकंधरत्वादत्रैव पर्यवसानम्। अयमेवात्र प्रधानतया काव्यशोभाकरः। एवं न वक्तव्यं, प्रकरणवशात्प्राप्ता कथापि प्रस्तुतैवेति। कुत इत्युक्तावियं कथा मुख्यतया वर्णनीयत्वाभावान्न प्रस्तुता॥

**अप्रस्तुतकथा प्रोक्ता प्रसङ्गे कस्यचिद्यदि॥**
**अप्रस्तुतप्रशंसा स्यादलंकृतिरधीश्वर॥**

यथा—

मरालवृन्दाय ददाति मुक्ता
मधुव्रतेभ्यो मकरन्दपानम्॥
जलं तृषार्ताय च मानसाख्यं
सरस्तदेतज्जगतः सुखौकः॥ १॥

अत्र राजराजेश्वरयशसो वर्णनं विवक्षितमस्तीति जानतां श्रोतृणामियं प्रतीतिर्भवति, राजराजेश्वरस्याखिलजगदभिलाषापूरणप्रसङ्गे इयं मानससरसोऽप्रस्तुतकथा कथितेति। अथ च कस्यचिच्छ्रोतुर्बुद्धिरत्र वाच्यार्थमात्र एव विश्राम्यति चेदस्मिन्मानससरोवरवर्णनमात्रे व्यतिरेकालंकारः। समुद्रे मौक्तिकोत्पत्तेः स केवलं हंसमात्रस्य सुखदायी, तज्जलस्य क्षारत्वात्तत्र कमलं न जायते, अतः स भ्रमराणां सुखदायी न भवति। अथ च जलस्य क्षारत्वात्पिपासूनामपि न सुखदायी। अथ चेदं वर्णनं मानससरस एव विवक्षितं, तत्र च राजराजेश्वरस्याखिलजगद-

भिलाषापूरणाकरणरूपवृत्तान्तस्य प्रतीतिश्चेद्व्यङ्ग्यमात्रम्, नालंकारः। एवं सर्वत्र ज्ञातव्यम् ॥

यथावा—

आबाल्यादपि यो विदारितमदोन्मत्तेभकुम्भस्थली-
स्थालीमध्यकवोष्णरक्तरसवन्मुक्तापुलाकप्रियः ॥
हस्तस्तस्य कथं प्रसर्पति पुनः कृच्छ्रेऽप्यवस्थान्तरे
गर्भावर्तविवर्तमानशशकप्राणापहारे हरेः ॥

अत्र सहृदयश्रोतॄणामियं प्रतीतिर्भवति, कश्चित्पराक्रमवान्पुरुष आजन्मनिजभुजबलोपार्जितोत्तमजीविकया जीवनमकरोत्स विपत्तिकालेऽपि नीचाचरणेन तुच्छजीविकया जीवनं न करोतीत्येतस्य प्रसङ्गे उक्तसिंहस्येयमप्रस्तुतकथा कथितेति। अथ च कस्यचिच्छ्रोतुर्बुद्धिरत्र वाच्यार्थमात्र एव विश्रान्ता चेदस्मिन्सिंहवर्णने रूपकालंकार आक्षेपालंकारश्च ॥

यथावा—

भञ्जन्ति द्रुमवल्लरीर्मदगजा धावन्ति शङ्कां विना
जम्बूकाः शशकाश्चरन्ति चरितं चिन्तां विना चित्रकाः॥
क्षोणीं चापि खनन्ति शूकरगणा व्याघ्राश्च गर्वान्विताः
स्वर्याते हि वनाधिपे वनदशा जातान्यथैवाधुना ॥ १ ॥

अत्र सहृदयश्रोतॄणामिदं प्रतीयते, कस्यापि पराक्रमवतोऽधिकारिपुरुषस्य परलोकवासकरणात्साहसिनो लुण्टने प्रवृत्ताः। कापुरुषाः स्वच्छन्दवर्तने प्रवृत्ताः । छलिनो निश्चिन्तं चरित्रं कर्तुं प्रवृत्ताः। मूर्खाः कार्यविघाते प्रवृत्ताः। तुच्छपुरुषाणां महत्त्वाभिमानो जातः। एवं दुर्दशापन्नदेशस्य प्रसङ्गे सिंहशून्यस्य वनस्येयमप्रस्तुतकथा कथितेति। अत्र कस्यचिच्छ्रोतुर्बुद्धिर्वाच्यार्थमात्रे विश्रान्तिं प्राप्ता चेदस्य वनस्य वर्णनेऽवस्थान्तरप्राप्तेः परिणामालङ्कारः ॥

यथावा—

आषाढमासेऽङ्कुरसंयुतोऽभू-

द्विपत्रितः श्रावणमासि जातः ॥
सपल्लवो भाद्रपदे बभूव
भूत्वाऽऽश्विने पुष्पफलप्रपूर्णः ॥ १ ॥
वार्तां विवाहस्य वटेन साकं
कर्तुं प्रवृत्तं वट आह मार्गे ॥
यथा प्रथा ते भविता विवाहो
म्लानस्तु भिण्डोऽजनि हास्यपात्रम् ॥ २ ॥

युग्मम् ॥

अत्र वृक्षयोः परस्परं वार्तालापस्यासामंजस्यात्सहृदयश्रोतुरिदं प्रतीयते, कस्यचिदकुलीनक्षुद्रपुरुषस्याधिकारस्य वैभवस्य च झटिति वर्धनात्स चिरकालिककुलीनमान्यवरेण सह समानसंबन्धकरणमैच्छत् । स मान्यवरो विचारपूर्वकं समयनिर्गमनार्थं कञ्चनावधिमदर्शयत् । अत्रान्तरे तस्य क्षुद्रपुरुषस्य वैभवस्याधिकारस्य च विलयात्स हास्यपात्रमभूत् । अस्य प्रसङ्गे भिण्डीफलवतो भिण्डनामकवृक्षस्य वटवृक्षस्य चेयमप्रस्तुतकथाऽभिहितेति । अत्र वाच्यार्थ एव विश्रान्तिश्चेच्चातुर्मासे वटेन विवाहनिषेधमिषेण समयनिर्गमनं कृतमिति मिषालंकारः ॥

यथावा—

शीलं कीदृगलेरिदं प्रिय! वरं भूपद्मसङ्गे मधु
पीत्वा मत्ततरो नवीनलतिकावृन्दे रमित्वा पुनः ॥
मालत्यापि च तृप्तिमेत्य परमामन्यत्र संक्रीडने
नीत्वा सर्वदिनं च रात्रिसमये शेते नलिन्या सह ॥ १ ॥

अत्र सहृदयश्रोतॄणामियं प्रतीतिर्भवति । स्वकीया खण्डिता नायिका शठनायकं प्रत्युपालम्भप्रसङ्ग इमां भ्रमरसंबन्धिनीमप्रस्तुतां कथामकथयत् । अत्र भ्रमरोपि पुरोवर्तित्वात्प्रस्तुतस्तथापि मुख्याभिप्रेताद्यदतिरिक्तं तदप्रस्तुतमेव । तच्चोक्तोदाहरणे नायिकाया मुख्यतात्पर्यं नायकं प्रति निशि गृहशयनोपदेशकरणे वर्तते, तस्मिन् प्रसङ्गे कथितः पुरोवर्तिभ्रमरवृत्तान्तोप्यप्रस्तुत एव । अथ च कस्यचिच्छ्रोतुर्बुद्धिर्वाच्यार्थमात्र

एव विश्रान्ता चेदस्मिन्भ्रमरवर्णने स्वभावोक्त्यलंकारः। चन्द्रालोकपथगामिनः कुवलयानन्दकारस्यायं सिद्धान्तः। अत्र भ्रमरोऽपि पुरोवर्तित्वात्प्रस्तुत एव। ईदृशोदाहरणेष्वप्रस्तुतप्रशंसानाम्नः संगतिर्न भवति। अत ईदृशस्थले प्रस्तुताङ्कुरनामकमलंकारान्तरमस्ति। अप्रस्तुतप्रशंसायां तु वाच्यार्थस्याप्रासङ्गिकत्वात्प्रस्तुतार्थस्य प्रतीतिः स्पष्टा भवति। अत्र वाच्यार्थरूपप्रस्तुतार्थे विश्रामाद्द्वितीयप्रस्तुतार्थस्य प्रतीतिः स्पष्टा न भवति। किं त्वङ्कुररूपा भवतीत्येवं प्रकारेण प्रस्तुताङ्कुरनाम्नः संगतिः। अङ्कुर इव प्रस्तुत इति यौगिकः प्रस्तुताङ्कुरशब्दो द्वितीयप्रस्तुते रूढः। चन्द्रालोके प्रस्तुताङ्कुरस्येदं लक्षणम्—

"प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः॥" इति॥

रसगङ्गाधरकारो वक्ति "मुख्यतात्पर्यवतो यदतिरिक्तं तदप्रस्तुतमेव। एवं चोक्तोदाहरणे नायिकाया मुख्यतात्पर्यं, नायकं प्रति निशायां गृहशयनोपदेशकरणे वर्तते। तस्य प्रसङ्गे कथिते भ्रमरवृत्तान्तोऽप्रस्तुत एव" इति। अस्मिन्विषये मम संमतिरपि रसगङ्गाधरकृता सह वर्तते॥

यथावा—

मलिनेऽपि रागपूर्णां
विकसितवदनामनल्पजल्पेऽपि।
त्वयि चपलेऽपि च सरसां
भ्रमर! कथं वा सरोजिनीं त्यजसि॥

इति प्राचीनानां प्रस्तुताङ्कुरोदाहरणेऽप्यप्रस्तुतप्रशंसाऽनया रीत्या वर्तते। अत्र तिर्यञ्चं भ्रमरं प्रति कथनस्यासमञ्जसत्वात्सहृदयश्रोतॄणामियं प्रतीतिर्भवति, उत्तमनायिकायामनासक्तनायकं प्रत्युपालम्भप्रसङ्गे सखीमां भ्रमरसंबन्धिनीमप्रस्तुतकथामाहेति। अत्र वाच्यार्थ एव विश्रान्तिश्चेत्प्राचीनमतीयो विशेषोक्त्यलंकारः। इमानि सर्वाणि पूर्वोक्तोदाहरणानि साधर्म्यस्य वर्तन्ते। वैधर्म्येणाप्यप्रस्तुतप्रशंसा प्राचीनैः प्रदर्शिता॥

यथा—

पक्षौ तु वाससी यस्य पाषाणकणभक्षणम् ।
विचरन्प्रियया सार्धं धन्यः पारावतः खगः ॥

अत्रान्नवस्त्रार्थं क्लिश्यमानेन विरहव्यथाव्याकुलेन च प्रवासिना स्वस्य प्रसङ्गेऽयं पारावतस्याप्रस्तुतवृत्तान्त उक्तः । स्वप्रसङ्गे परप्रसङ्गे वाऽप्रस्तुनवृत्तान्तस्य कथनं भवतु, उभयत्राप्यप्रस्तुतप्रशंसारूपचमत्कारस्तु तुल्यः । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"अप्रस्तुतप्रशंसा सा या सैव प्रस्तुताऽऽश्रया ॥" इति ॥

याऽप्रस्तुतस्य प्रशंसा प्रस्तुतस्याश्रयं करोति साऽप्रस्तुतशंसा, सैव, अप्रस्तुतप्रशंसाऽलंकार एवेत्यर्थः । "सैव" इति कथनस्येदं तात्पर्यम्, ईदृशस्थलेऽप्रस्तुतोऽर्थ एवालंकारः । न तु प्रस्तुतोऽर्थः । चन्द्रालोकस्येदं लक्षणम्—

"अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया ॥" इति ॥

कुवलयानन्दकार इमां कारिकामेवं व्याचख्यौ—"यत्राप्रस्तुतवृत्तान्तवर्णनं प्रस्तुतवृत्तान्तावगतिपर्यवसायि तत्राप्रस्तुतप्रशंसालंकारः" इति । एषामिदं तात्पर्यं, अप्रस्तुवृत्तान्तः प्रस्तुतवृत्तान्तस्य प्रतीतौ पर्यवस्यति चेदलंकारः । केवलमप्रस्तुतकथनमसमञ्जसत्वान्नालंकारः । अपि चात्र प्रस्तुनार्थस्याक्षेपो भवति । मम तु मतं, अप्रस्तुतवर्णनस्य प्रस्तुताश्रयत्वमर्थात्प्रस्तुतार्थे समावेश इत्यस्यालंकारस्य साक्षात्स्वरूपं न भवति । एतादृशस्थितौ सादृश्यविवक्षायामुपमा स्यात् । अथ च प्रस्तुतस्याप्रस्तुतरूपप्रकारान्तरेण कथनविवक्षायां तु पर्यायोक्तिर्भवेत् । किं चाप्रस्तुतवृत्तान्तस्य प्रस्तुतवृत्तान्तरूपावस्थान्तरप्राप्तिविवक्षायां तु परिणामो भवेत् । अपि च प्रस्तुतवृत्तान्तेऽप्रस्तुतवृत्तान्तस्य लयविवक्षायां तु मिलितालंकारो भवेत् । अथ चाप्रस्तुतवृत्तान्तस्य प्रस्तुतवृत्तान्तेन सहैकत्वविवक्षायां त्वभेदालंकारो भवेत् । किं चाप्रस्तुतवृत्तान्तस्य क्षणमात्रभानविवक्षायां त्वाभासालंकारो भवेत् । अतो मया स्पष्टीकृतमप्रस्तुतप्रशंसास्वरूपमेवालंकारत्वालंकारान्तरत्वयोग्यम् ॥ प्राचीना आहुः, अप्रस्तुतकथनं क्वचित्सारूप्यसंबन्धेन क्वचित्कार्यकारणभावसंबन्धेन क्वचिच्च सामान्यविशेषभावसंबन्धेन प्रस्तुताश्रयं करोतीति । तदेवोक्तं काव्यप्रकाशगतकारिकाकारेण—

"कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ॥
तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥" इति॥

कार्ये कारणे सामान्ये विशेषे च प्रस्तुते सत्येतदन्येषां वचनमर्थाद्प्रस्तुतस्य कारणस्य कार्यस्य विशेषस्य सामान्यस्य च कथनम्। अथ च तुल्ये प्रस्तुते सति तुल्यस्याप्रस्तुतस्य कथनम्। एवमस्याः पञ्च प्रकारा भवन्ति। काव्यप्रकाशमतानुसारिणा कुवलयानन्दकारेण सारूप्यनिबन्धनायाः

"एकः कृती शकुन्तेषु योऽन्यं शक्रान्न याचते ॥"

इत्युदाहृत्यैवं योजना कृता। अत्राप्रस्तुतचातकप्रशंसा चातकसदृशे क्षुद्रपुरुषयाचनातो निवृत्ते प्रशंसनीयतया प्रस्तुते मानिपुरुषे पर्यवस्यति। पर्यवसानविषये त्वस्माभिः पूर्वमुक्तमेव। प्रस्तुतार्थप्रतीतिस्तु व्यङ्ग्यस्य विषयः ॥

"पश्य निश्चल निष्पन्दा" ॥

इत्यत्र बलाकावर्णनस्य प्रस्तुतत्वाद्बलाकावर्णने पर्यवसानेपि निर्जनस्थलतादयो व्यङ्ग्याः। अपि चात्राप्रस्तुतवृत्तान्तवर्णनस्याप्रस्तुतत्वात्तस्मिन् पर्यवसानाभावे, प्रस्तुतवृत्तान्तस्य व्यङ्ग्यत्वेपि पूर्वोक्तव्यङ्ग्येऽस्मिन्व्यङ्ग्ये च न किंचिद्वैलक्षण्यम्। अतोयमपि व्यङ्ग्य एव ॥

कारणनिबन्धना यथा—

याताः किं न मिलन्ति सुन्दरि! पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि ॥
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥

प्रकाशकार इदमुदाहृत्यानेन प्रकारेण योजयति। प्रयाणान्निवृत्तं नायकं प्रति कोपि प्रयाणनिवृत्तेः कार्यमपृच्छत्; कस्मै प्रयोजनाय निवृत्तोसीति। तत्र नायको रुदन्त्या नायिकया विहस्य ज्ञापितमहं तु मरिष्यामि पुनश्च भवान्कया मिलिष्यतीतीदं कारणमाह। अत्र कार्ये प्रस्तुते सति कारणकथनमप्रस्तुतम्। चन्द्रालोकपथगामिनः कुवलयानन्दकारस्येदमुदाहरणम्—

हृतसारमिवेन्दुमण्डलं
दमयन्तीवदनाय वेधसा ।
कृतमध्यबिलं विलोक्यते
धृतगम्भीरखनी*खनीलिम ॥

अत्र दमयन्तीमुखस्य लोकोत्तरसौन्दर्यरूपे कार्ये प्रस्तुते सति, तदनुक्त्वाऽप्रस्तुतोक्तकारणमभिहितम् ॥

कार्यनिबन्धना यथा—

रत्यन्ते न करोति पङ्कजदृशां स्वेदाम्भसां शोषणं
नो वा नर्तयति ध्वजाग्रघटिताँश्चित्रान्पताकापटान् ।
नोन्निद्राणि करोति निष्कुटगतः पुष्पाणि वा मारुतः
सर्पैरेव निपीयते मरुपते त्वच्छत्रुपुर्यां परम् ॥ १ ॥

अत्रारिनगरशून्यतारूपं कारणं प्रस्तुतं, तदनुक्त्वाऽप्रस्तुतमुक्तकार्यमभिहितम् ॥

यथावा—

राजन्राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते ।
इत्थं नाथ शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥ १ ॥

अत्राप्यरिभवनशून्यतारूपं कारणं प्रस्तुतम् । तदनभिधायाप्रस्तुतोक्तकार्यमभिहितम् । इदमुदाहरणं प्रकाशकृता दर्शितम् ॥

यथावा—

नाथ त्वदङ्घ्रिनखधावनतोयलग्ना-
स्तत्कान्तिलेशकणिका जलधिं प्रविष्टाः ।
ता एव तस्य मथनेन घनीभवन्त्यो

* खन्याः खस्यार्थादाकाशस्य नीलिमा । अस्मिन्ननुप्रास एकवार खनीशब्दः सार्थकः । द्वितीयवारमर्थरहितः । कुन इत्युक्तौ खनीलिमशब्दौ पृथक् २ वर्तेते ॥

नूनं समुद्रनवनीतपदं प्रपन्नाः ॥

अत्र विष्णोश्चरणनखानामलौकिकप्रभारूपं कारणं प्रस्तुतम्। तदनुक्त्वोक्तमप्रस्तुतकार्यमभिहितम्। इदमुदाहरणं कुवलयानन्दकृता दत्तम्। मम तु मतं, अत्र सारूप्यनिबन्धनावद्वाच्यवृत्तान्तः सर्वथाऽप्रस्तुतो न ज्ञायते, कुत इति चेत्कार्यकरणयोः प्रकरणैक्यात्। अतोत्राप्रस्तुतप्रशंसायाश्चमत्कारो नास्ति। एवं हि वक्ष्यमाणसहोत्पत्त्यादिसंबन्धेष्वपि बोध्यम्। अपि च कारणकथनेन कार्यप्रतीतौ, कार्यकथनेन कारणप्रतीतौ च व्यङ्ग्य एव। न त्वप्रस्तुतप्रशंसालंकारः। 'याताः किं न मिलिन्ति' इत्यस्मिन्काव्ये नायिकया सूक्ष्मतया भाविमरणं सूचितम्, अतः सूक्ष्मालंकारः। 'हृतसारमिवेन्दु' इत्यत्र वस्तूत्प्रेक्षालंकारः। 'रत्यन्ते न करोति' इत्यत्र, 'राजन् राजसुता' इत्यत्र च पर्यायोक्त्यलंकारः। भोजमहाराजेन "राजन् राजसुता" इति पद्यं पर्यायोक्तावुदाहृतम्। 'नाथ त्वदङ्घ्रिनख' इत्यत्रोत्प्रेक्षालंकारः। अप्रस्तुतप्रशंसायाः साक्षात्स्वरूपज्ञाने तूक्तोदाहरणेष्वप्रस्तुतप्रशंसालंकारस्याभावोऽनुभवसिद्धः। कार्यनिबन्धनाकारणनिबन्धनेतिभेदद्वयप्रदर्शनादिदं सिद्धम्, प्राचीना अप्रस्तुतेन प्रस्तुतप्रतीतिरित्येवास्यालंकारस्य स्वरूपमज्ञासिषुरिति ॥

सामान्यनिबन्धना यथा—

सुहृद्वधूबाष्पजलप्रमार्जनं
करोति वैरप्रतियातनेन यः।
स एव पूज्यः स पुमान्स नीतिमान्
सुजीवनं तस्य स भाजनं श्रियः ॥

अत्राप्रस्तुतप्रशंसैवं रीत्या वर्तते, त्वं नरकासुरस्य हन्तारं कृष्णं हत्वा नरकासुरवधूः प्रसन्नाः करिष्यसि चेत्तदा श्लाघनीयो भविष्यसि। इदं नरकासुरस्य मित्रं प्रति नरकासुरस्य मन्त्रिणो विशेषवचनं प्रस्तुतम्। तस्मिन्प्रसङ्ग उक्तमप्रस्तुतसामान्यवचनमभिहितम् ॥

विशेषनिबन्धना यथा—

अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः।

केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥

अत्राप्रस्तुतप्रशंसैवं रीत्या वर्तते। कोमला निन्दनीया भवन्ति, क्रूराः श्लाघनीया भवन्तीतीदं कृष्णं प्रति बलदेवस्य सामान्यकथनं प्रस्तुतम्। तदनभिधायोक्तोऽप्रस्तुतविशेषः कथितः। यथा सारूप्यनिबन्धनायाः 'मरालवृन्दाय ददाति मुक्ताः' इत्यादीनि पूर्वोक्तोदाहरणानि सन्ति। तत्र राजराजेश्वरस्याखिलजगदभिलाषापूरणप्रसङ्गे तत्तुल्यस्य मानससरसोऽप्रस्तुतस्य कथनम्। मम तु मतं, उक्तस्थलेषूक्तरीत्याऽप्रस्तुतप्रशंसालंकारो वर्तते। किं च सामान्यमनभिधाय विशेषकथनं, विशेषमनभिधाय च सामान्यकथनमिति विवक्षायां तु पर्यायोक्त्यलंकारः॥ सर्वस्वकारादयोपि काव्यप्रकाशकारानुसारिणः। लोके रीतिद्वयं वर्तते। अन्यस्य प्रसङ्गेऽप्रस्तुतकथा कथ्यते, अथ च स्वस्य प्रसङ्गे स्वेनैवाप्रस्तुतकथा कथ्यते। धुरंधरस्येदमुदाहरणम्—

अन्नैरयत्नसुलभैस्तृणदर्भाङ्कुरादिभिः।
सुखं जीवन्ति हरिणा वनेष्वपरसेविनः॥

अत्र दुर्लभयाऽर्थाद्विलम्बेन कष्टसाध्यजीविकया पराधीनतया च निर्विण्णेन श्लाघनीयेन विरक्तमनसा केनचित्पुंसा स्वस्योक्तप्रसङ्गे मृगवृत्तेः स्तुतिरूपाऽप्रस्तुतकथाऽभिहिता। अस्यालंकारस्य साक्षात्स्वरूपमजानता दण्ड्याचार्येणोक्तोदाहरणाद्भ्रमित्वाऽस्यालंकारस्य स्वरूपमप्रस्तुतेषु स्तुतिरिति बुद्धम्। तदेवोक्तम्—

"सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते।
राजानुवर्तनक्लेशनिर्विण्णेन मनस्विना॥ १॥" इति।

ततश्चाप्रस्तुतप्रशंसानामार्थमप्रस्तुतेषु स्तुतिरिति मत्वेदं लक्षणमभिहितम्—

"अप्रस्तुतप्रशंसा स्यादप्रक्रान्तेषु या स्तुतिः॥" इति।

अयं च दण्डिनः प्रमादः। कुत इति चेदप्रस्तुतेषु स्तुतिरित्येतदस्यालंकारस्य स्वरूपं न भवति। अपि चाप्रस्तुतनिन्दायामप्यप्रस्तुतप्रशंसालंकारो भवति॥

'श्रान्तास्तु पान्थाः सुखिनो न वै कृता
विश्रान्तिदानादि कृतं न पक्षिणाम् ।
छाया कृता स्वात्मकृतेपि न त्वया
तालेदृशीं वृद्धिमवाप्य किं कृतम् ॥'

कोपि पुरुषोऽत्यन्तं वृद्धिं प्राप्य केनापि प्रकारेण स्वार्थान्परार्थान्वा नाकरोत्तस्य प्रसङ्गेऽयमप्रस्तुततालवृक्षवृत्तान्तः कथितः। अस्यालंकारस्य साक्षात्स्वरूपमजानन्भोजमहाराजोपि दण्डिदर्शितधुरंधरोक्तोदाहरणतो भ्रमित्वाऽस्यालंकारस्येदं स्वरूपमबोधि। केवलमप्रस्तुतवर्णनमसमञ्जसं भवति, ततस्तुत्यनर्हस्य केनापि निमित्तेन स्तुतिकरणमलंकार इति ज्ञात्वा तेनाप्रस्तुतप्रशंसाशब्दस्यायमर्थः कृतः, स्तुत्यनर्हस्य स्तुतिरिति। अत्र नञ् निषेधार्थकः, प्रेत्युपसर्गस्य तु स एवार्थो य एव स्तुधात्वर्थः। स्तुतशब्दार्थः स्तुतियोग्य इति। प्रशंसाशब्दार्थश्च स्तुतिः। भोजमहाराजस्येदं लक्षणम्-

"अप्रस्तुतप्रशंसा स्यादस्तोतव्यस्य या स्तुतिः ॥" इति ॥

महाराजः स्वलक्षणानुसारेणेमे उदाहरणे प्रददौ ॥

कामं वनेषु हरिणास्तृणानि खादन्त्ययत्नसुलभानि ॥
विदधति धनिषु न दैन्यं ते किल पशवो वयं सुधियः॥

अत्र मृगः पशुः, अतो मृगः स्तुतिं कर्तुमयोग्यः ; तस्य वक्रोक्त्या स्तुतिः ॥

यथावा—

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ॥
उत्कर्षः स च धन्विनां यदिषवः सिद्ध्यन्ति लक्ष्येऽचले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ १ ॥

अत्र "अहिंसा परमो धर्मः" इत्यनया वेदाज्ञया मृगया निन्दायोग्या, अतो मृगया स्तुतिं कर्तुमयोग्या, तस्याः स्तुतिः कृता। मम तु मतं, महाराजस्याप्ययं प्रमाद एव। अस्मिन्विषये तु मया स्पष्टीकृतो वक्ष्यमाणव्याघातालंकारो भवेत्। मृगो मृगया च लोके स्तुत्यनर्हे।

महाराज उक्तरीत्या स्तुतिं कृत्वा मृगस्य मृगयायाश्च प्रसिद्धास्तोतव्यताया आघातमकरोत्। अथ चास्य विषयस्य सर्वसंग्राहकव्याघातनाम्नैव संग्रहकरणं समीचीनम्। तच्च व्याघातप्रकरणे स्पष्टीकरिष्यते। भोजमहाराजमतानुसारेण तु निन्दानर्हस्य निन्दायामप्रस्तुतनिन्दानामकमप्यप्रस्तुतप्रशंसावैपरीत्येऽलंकारान्तरं भवितुमर्हति॥

यथा—

धन्या दरिद्रकान्ता या शयानेन्दुं प्रवन्दते॥
धिक्धिक् धनाढ्यतां यत्र कपाटानां तु कोटयः॥

धनं सर्वार्थसाधकत्वात्सर्वथा स्तुत्यर्हं, तस्यात्र गर्हा। मम तु मतं, सर्वसंग्राहकनामरूपलक्षणवति व्याघातेऽस्यापि संग्रहः। सारूप्यनिबन्धनाया अप्रस्तुतवृत्तान्तमुपमानं जानता सूत्रकारवामनेनाप्रस्तुतप्रशंसानाम्नोऽप्रस्तुतस्यार्थादुपमानमात्रस्य कथनमित्यर्थं मत्वेदं लक्षणं निर्मितम्—

"उपमेयस्य किंचिल्लिङ्गमात्रेणोक्तौ समानवस्तुन्यासोऽप्रस्तुतप्रशंसा॥" इति॥

उपमेयस्य किंचिल्लिङ्गमात्रेण कथनार्थं समानस्यार्थादुपमानरूपस्य वस्तुनो न्यासोऽप्रस्तुतप्रशंसेत्यर्थः॥

यथा—

लावण्यसिन्धुरपरैव हि कात्र्चनेयं
यत्रोत्पलानि शशिना सह संप्लवन्ते॥
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः॥

अत्रावयवसहितनायिकोपमेयं, तत्साक्षादनुक्त्वा किंचिच्चिन्हमात्रेण कथनार्थं तादृशसिन्धुरूपं समानं वस्तु कथितम्। अयमप्यप्रस्तुतप्रशंसायाः साक्षात्स्वरूपं नाबोधि। केवलोपमानकथने स्वभेदालंकार एव भवेत्। इममलंकारमन्योक्तिनाम्ना वदन् रुद्रटोऽस्येदं लक्षणमाह—

"असमानविशेषणमपि यत्र समानेतिवृत्तमुपमेयम्॥

उक्तेन गम्यते परमुपमानेनेति सान्योक्तिः ॥" इति ॥

यत्रासमानविशेषणवदपि समानवृत्तान्तवदुत्कृष्टमुपमेयं कथितेन केवलोपमानेन गम्यते सान्योक्तिः, उपमानमात्रस्योक्तिरित्यर्थः। अन्योक्तिनाम्नः प्रस्तुतं विहायान्यस्योक्तिरित्यर्थकरणे तु पर्यायोक्त्यलंकारः। एतत्कथनानुसारेणान्यशब्दार्थ उपमानमिति स्वीकारे त्वभेदालंकारः। गम्यता तु व्यङ्ग्यस्य विषयः। न त्वलंकारः। अतोस्य सर्वथा प्रमादः॥

यथा—

मुक्त्वा सलीलहासं विकसितकमलोज्ज्वलं सरः सरसम् ॥
बकलुलितजलं पल्वलमभिलषसि सखे न हंसोऽसि ॥

अत्र प्रस्तुतार्थस्य प्रतीतिराक्षेपाद्भवतीति काव्यप्रकाशकारादयो वदन्ति। केचन चतुर्थीमाक्षेपनामिकां वृत्तिमङ्गीकुर्वन्ति। "याऽऽकर्षणन्यायेनार्थस्य प्रतीतिमुत्पादयाति साऽऽक्षेपा वृत्तिः" इति। सर्वस्वकारोऽत्र "प्रस्तुतार्थस्य प्रतीतिर्व्यञ्जनया भवति" इति वदति। रत्नाकरकारोऽत्र "प्रस्तुतार्थस्य प्रतीतिर्लक्षणया" इति वदति। मम तु मतम्, एतदलंकारस्योदाहरणेषु कस्याश्चिदपि वृत्तेर्नियमकरणमनावश्यकम्। अत्र तु श्रोतॄणां बुद्ध्यनुसारेण वृत्तयो भवन्ति। सारूप्यनिबन्धनाऽप्रस्तुतप्रशंसाया वाच्यार्थः क्वापि तटस्थतया तिष्ठति, अर्थात्प्रतीयमानार्थेन सहारोपापेक्षां विना वर्तते। यथा— "आबाल्यादपि" इत्यत्र सिंहवृत्तान्ते श्रेष्ठपुरुषवृत्तान्तस्यारोपं विनापि सिंहवृत्तान्तः पर्यवसानं प्राप्नोति, अर्थात्सिंहस्य वर्णनमुपपन्नं भवति। अथ च क्वापि स वाच्यार्थः स्वसिद्ध्ये प्रतीयमानार्थस्यारोपमपेक्षते॥

यथा—

सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदृक्किं भूयसोक्तेन वा ॥
सर्वं विस्मृतवानसि भ्रमर हे यद्वारणोद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः ॥

हस्तिनो रसनेतरप्राणिभ्यो विपरीता भवति। वैपरीत्यं च

तस्याः कण्ठाभिमुखं तीक्ष्णत्वम्। पक्षे विपरीतवचनम्। हस्तिनः कर्णश्चञ्चलो भवति। पक्षे कर्णस्य गाम्भीर्याभावः, अर्थाच्छ्रवणमात्रेण विचारं विना वचनस्वीकारः। हस्तिनो मदजलं प्रसिद्धम्। पक्षे गर्वः। हस्ती सदा मलिनस्तिष्ठति। गजस्नानं वृथेति प्रवादो वर्तत एव। पक्षे मनसो मलिनता। आहारार्थं हस्ती कमलिनीष्वासक्तो भवति। पक्षे व्यसनवत्स्वासक्तिः। हस्तिनः शुण्डादण्डः सरन्ध्रो भवति। पक्षे धनशून्यहस्तत्वम्। वारण इति हस्तिनः पर्यायनाम। पक्षे निवारकः। "आबाल्यात्" इति पूर्वोदाहरणे प्रथममप्रस्तुतवाक्यार्थानां बोधो भवति। अत्र त्वप्रस्तुतवाक्यार्थानां बोधो न सिद्ध्यति। कुत इत्युक्तावप्रस्तुतभ्रमरस्य गजसेवात्यागे कर्णचपलतामात्रं हेतुः। रसनाविपर्ययादिकं न हेतुः। मदः प्रत्युत सेवने हेतुः। अतः प्रथममेव भ्रमरे मूढसेवकस्य, रसनाविपर्ययादिषु विपरीतवचनादीनां चारोपाद्वाक्यार्थबोधः सिद्धो भवति। कुत इत्युक्तौ गजस्य रसनाविपर्ययादिषु दुष्प्रभो रसनाविपर्ययादयो यावन्नारोप्यन्ते तावद्भ्रमरस्य गजसेवने गजस्य रसनाविपर्ययादीनां हेतुत्वाभावाद्वाक्यार्थो नोपपद्यते। अत्रारोपसत्त्वाद्रूपकस्य शङ्का न कार्या। अत्र रूपकमप्रधानम्। प्रधानं त्वप्रस्तुतप्रशंसैव। अत्र दुष्प्रभुसेवाहाठिपुरुषप्रसङ्ग उक्तभ्रमरस्याप्रस्तुतकथा कथिता। अथ च क्वचित्प्रतीयमानार्थोऽपि कस्मिंश्चिदंशे वाच्यार्थस्यारोपमपेक्षते। अथ च वाच्यार्थः कस्मिंश्चिदंशे प्रतीयमानार्थस्यारोपमपेक्षते॥

यथा—

सरजस्कां पाण्डुवर्णां कण्टकप्रकराङ्किताम्।
केतकीं सेवसे हन्त कथं रोलम्ब निस्त्रप॥

केतकीपक्षे रजः परागः। "परागः सुमनोरजः" इत्यमरः। नायिकापक्षे सरजस्कत्वं रजोधर्मवत्त्वम्। अत्र यथा वाच्यार्थव्यङ्ग्यार्थोभयनिष्ठं सरजस्कत्वं सेवनस्यानुचिततायां निमित्तम्, तथैव पाण्डुवर्णता सकण्टकता च न भवतः। कुत इत्युक्तौ पाण्डुवर्णः केतक्यां भ्रमरसेवायां न बाधकः। अतः पाण्डुवर्णांशे केतकी नायिकाया आरोपमपेक्षते। अपि च सकण्टकतांशो नायिकापक्षे रोमाञ्चः। स च नायिकासेवायां न

बाधकः। अतः केतक्या नायिकायामारोपोऽपेक्षितः। अत्र शङ्खिनीनायिकासक्तनायकप्रसङ्ग उक्तभ्रमरस्याप्रस्तुतकथा कथिता ॥
"आबाल्यात्" इत्यत्र वाच्यार्थान्वययोग्यता वर्तते ॥

समुपागतवति दैवादवहेलां कुटज! मधुकरे मा गाः।
मकरन्दतुन्दिलानामरविन्दानामयं महामान्यः ॥

इत्यादितिर्यक्प्रश्नोत्तरे वाच्यार्थान्वयस्य योग्यता नास्ति। "सोऽपूर्वो रसनाविपर्ययविधिः"—इत्यत्र वाच्यार्थान्वयस्य योग्यताऽयोग्यता च द्वे वर्तेते। यथा पूर्वमुक्तम्। प्रकाशकारादीनां त्वयं सिद्धान्तः। अप्रस्तुतप्रशंसा सारूप्यसंबन्धेन, सामान्यविशेषभावसंबन्धेन, कार्यकारणभावसंबन्धेन चेति त्रिभिरेव संबन्धैर्भवतीति। रत्नाकरकारादीनामयं सिद्धान्तः। एतदितरसंबन्धैरपि भवतीति। तदनुसारी कुवलयानन्दकार इदमुदाहरति—

तापत्रयौषधवरस्य तव स्मितस्य
निःश्वासमन्दमरुता निबुसीकृतस्य।
एते कडङ्करचया इव विप्रकीर्णा
जैवातृकस्य किरणा जगति भ्रमन्ति ॥ १ ॥

अत्र भगवतो वरदराजस्य हास्यं प्रस्तुतम्। चन्द्रकिरणा अप्रस्तुताः। तेषामप्रस्तुतचन्द्रकिरणानां कडङ्करचयत्वकथनाद्धास्यस्य धान्यसारता प्रतीयते। अत्र कडङ्कराणां धान्यस्य च सहोत्पत्तिसंबन्धः। प्राचीनमतानुसारेण त्वन्यैरपि बहुभिः संबन्धैरप्रस्तुतप्रशंसा भवति ॥
यथा—

स्तुत्वा तेऽप्सरसो मुखेन्दुमहसन्बाले! निशावल्लभं
प्रादान्नेत्रजितो मृगश्च कुमतिं तद्वैरभावादयम्।
आदायाङ्कविषं प्रधावति च मां हन्तुं न मर्ता स्वयं
विप्रत्वं कुरुते हि नूतनमहो विप्रेश्वरः सन्नपि ॥

प्रसङ्गविध्वंसमानमोचनोपायं कुर्वतो नायकस्य नायिका प्रतीयमुक्तिः। अत्र मानिन्या नायिकाया मुखस्यालौकिकसौन्दर्यं प्रस्तुतम्। अ-

प्सरोभिः कृतं तन्मुखस्य वर्णनमप्रस्तुतम् । अप्सरसां वर्णनकरणस्य कथनेन मुखस्यालौकिकसौन्दर्यं प्रतीयते । अप्सरोभिः कृतस्य वर्णनस्य मुखसौन्दर्यस्य च प्रतिपाद्यप्रतिपादकभावः संबन्धः । मम तु मतम् प्रायः सारूप्यसंबन्धेऽप्रस्तुतप्रशंसालंकारो भवति । अथ च क्वापि प्रस्तुतकथाया अप्रस्तुतकथायाश्च सामान्यविशेषभावसंबन्धेऽप्यप्रस्तुतप्रशंसालंकारो भवति । कार्यनिबन्धनादिस्थले त्वप्रस्तुतकार्यादिभिः प्रस्तुतकारणादेः प्रतीतिस्तु व्यङ्ग्यमात्रम् । इदं प्रथमं लिखितम् । 'तापत्रयौषधवरस्य' इति काव्ये हेत्वलंकारः। 'स्तुत्वा'- इत्यत्र प्रथमचरणे हेत्वलंकारो गम्यकाव्यार्थापत्तिरलंकारश्च । द्वितीयचरणस्य संबन्धाद्धेतुमाला, गम्यसमाध्यलंकारो वा बोध्यः। चतुर्थचरणे प्राचीनमतस्यासङ्गत्यलंकारो मन्मतस्य तु विचित्रालंकारो वर्तते

॥ इत्यप्रस्तुतप्रशंसाप्रकरणम् ॥ १२ ॥

## ॥ अभेदः ॥

अभेदशब्दार्थो भेदाभावः ॥

**अभेदो वर्ण्यते यत्र तत्राभेदो भवेन्नृप ॥**

यथा—

अयं हि धूर्जटिः साक्षाद्यशवन्तनरेश्वरः ॥
करालेनातिकोपेन येन दग्धाः पुरः क्षणात् ॥

अत्र राजराजेश्वरो यशवन्तसिंहो धूर्जटिना सहाभेदेन वर्णितः। अतोऽत्राभेदालंकारः। अत्रैवं नाशङ्कनीयं, अभेदे मुख्यार्थबाधाद्रूप्यमाणरूपक एवास्य पर्यवसानं भवेदिति । कुत इति चेदस्मिन्नलंकारशास्त्रे सर्वत्र बाधमूलकलक्षणाया अङ्गीकारो नास्ति । अन्यथा कल्पितोपमातिशयोक्त्यादीनां बहूनामलंकाराणामुच्छेदो भवेत् । अतोऽत्र विवक्षावशादभेद एव पर्यवसानम् । स चानुभवसिद्धचमत्कारकत्वादलंकारः ।

प्राचीना अभेदस्थलेपि रूपकं मन्यन्ते। काव्यप्रकाशे रूपकस्येदं लक्षणम्—

"तद्रूपकमभेदो य उपमानोपमेययोः॥" इति॥

प्राचीनानामयं प्रमादः। कुत इत्युक्तौ रूपकस्वरूपं तु रूपवत्ताकरणम्। यथा नाटके नटो रामादिरूपधारणं करोति तदा नटो रामादिस्थानापन्नो भवति, न त्वीदृशोऽभेदो भवति, अयमेव राम इति। इदं वक्ष्यमाणरूपकप्रकरणे स्पष्टं प्रतिपादयिष्यते॥

यथावा—

त्वय्यागते किमिति वेपत एष सिन्धु-
स्त्वं सेतुमन्थकृदतः किमसौ बिभेति।
द्वीपान्तरेऽपि न हि तेऽस्त्यवशंवदोऽद्य
त्वां राजपुङ्गव! निषेवत एव लक्ष्मीः॥ १॥

अत्र शब्देन राज्ञि रामचन्द्राभेदो न कथितः, किं त्वर्थसिद्धोऽभेदः। अतोऽत्र व्यङ्ग्यरूपोऽभेदः। प्राचीना अत्र व्यङ्ग्यरूपकमाहुः। उक्तरीत्याऽत्र रूपकं नास्ति॥

यथावा—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥

यथावा—

अखिलं वर्णितुं वाञ्छन्यशस्ते जिह्वया नृप!।
नलिनीरन्ध्रमार्गेण पातुमिच्छामि सागरम्॥

यथावा—

यद्दातुः सौम्यता सेयं पूर्णेन्दोरकलङ्कता।
या चेयं सरसा वाणी कला चन्द्रमसो नृप॥

यथावा—

मुग्धायामनुरागस्तु सुवर्णे सुरभिर्नृप!॥

अत्रासंभवद्वस्तुसंबन्धो वर्णितस्तथाप्यत्रातिशयोक्त्यलंकारो नास्ति। कुत इति चेन्नात्रातिशयांशे पर्यवसानम्, किं त्वभेदांश एव पर्यवसानमिति। अतोऽयं कल्पिताभेदः। रत्नाकरकारस्येदं लक्षणम्—

"नियतधर्महानावारोप्यमाणस्यातिसाम्यमभेदः।" इति॥

नियतधर्महानिप्रतिपादनेनेदं सिद्धं, यदारोप्यमाणस्यातिसाम्यं तदभेदालंकार इत्यर्थः॥

यथा—

वनेचराणां वनितासखानां
दरीगृहोत्सङ्गनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्या-
मतैलपूराः सुरतप्रदीपाः॥

दीपे नियतो धर्मस्तैलपूर्णतारूपस्तस्य हानौ प्रतिपादितायामितरसर्वप्रकारेण वनौषधीनां दीपकेन सहात्यन्तं साम्यं सिध्यति। अन्ये प्राचीना अत्र विषये दृढारोपरूपकमाहुः। मम तु मतम्, अस्मिन्विषये रूपकमपि नास्ति, किं तु विशेषोक्तेश्चमत्कारस्य प्राधान्यान्मया स्पष्टीकृतो वक्ष्यमाणो विशेषोक्त्यलंकारः। स च विशेषोक्तिप्रकरणे सविस्तरं प्रतिपादयिष्यते। रत्नाकरकृदाह "अभेदमात्रप्रतीतौ रूपकं, नियतधर्महानेरन्यतः सर्वथाऽभेदप्रतीतावभेदालंकारः। एवं रीत्या प्रतीतिभेदः। अन्यथा परिणामादेरपि रूपकान्तर्भावापत्तेः" इति। तथाचेदृशविषये रूपकं नास्ति, किं त्वभेदः। इदं त्वहं प्रथममवोचम्। अथ चाभेद उक्तकिंचिद्विलक्षणता तु प्रकारान्तरत्वसाधिका न त्वलंकारान्तरत्वसाधिका। अथ च रत्नाकरकारोऽस्मिन्प्रकरणे वदति "अभेदमात्रे रूपकाङ्गीकारे परिणामेऽप्यभेदसत्त्वात्तस्यापि रूपकेऽन्तर्भावः स्यात्" इति। रत्नाकरकारः परिणामस्य साक्षात्स्वरूपं नाज्ञासीत्, अत एवमाह। तत्परिणामप्रकरणे स्फुटीभविष्यति। अभेदालंकारस्य स्वरूपं तु धुरंधरस्य नामानुसारेणाभेदमात्रम्। रत्नाकरस्य लक्षणेऽभेदविवक्षाकरणेऽपि तस्य सर्वव्यापित्वाभावादव्याप्तिदोषग्रस्तत्वम्॥

॥ इत्यभेदप्रकरणम्॥ १३॥

## ॥ अल्पम् ॥

अल्पमिति स्तोकस्य नाम । उक्तं च चिन्तामणिकोषकारेण " अल्पं स्तोके " इति । अधिकालंकारविपरीतभावेऽयमलंकारः ॥

"अल्पालंकृतिरल्पत्वं रम्यं राजंस्त्वया किमु ॥
कुर्वताऽल्पं यशोऽन्येषां प्रागेव पठितं त्विदम्" ॥

यथा—

दानक्षीणधना लोक उदारपुरुषा इव ॥
मदक्षीणा गजा भान्ति यशवन्तमहीपतेः ॥

दानकरणाद्धनविषये उदारपुरुषस्याल्पता, मदेन शरीरविषये राजराजेश्वरस्य करिणामल्पता च रुचिकरत्वादलंकारः ॥

यथावा—

अद्यापि पूर्णं न च यौवनं ते
विद्यापि नो वा पठिता समग्रा ॥
तथापि लब्धं सुयशस्त्वयात्र
कुमार राज्ञः सरदारसिंह ॥

अत्र महाराजकुमारसरदारसिंहस्य वयसोऽल्पता, तन्निमित्ता च विद्याल्पताऽलौकिककीर्त्युत्पादकत्वाद्रुचिकरी सत्यलंकारः ॥

यथावा—

दद्यात्युदारहृदयो येन केनापि हेतुना ।
कपोलवादनेनापि वाञ्छां पूरयतीश्वरः ॥

अत्र वाण्या अल्पत्वम् ॥

यथावा—

न परागो न च मधु न विकासस्तथाप्यलिः ।
कल्यामपि समासक्तः किं वा चाग्रे भविष्यति ॥

अत्र पुष्पस्यावस्थाया अल्पता। इदमुदाहरणमप्रस्तुतप्रशंसासंकीर्णम्॥ क्वचित्केनचिन्निमित्तेनाल्पता भवति। कचिच्च स्वाभाविक्यल्पता भवति। "दानक्षीणधनाः" इत्यत्र दानेन निमित्तेन धनस्य, मदेन च निमित्तेन करिकलेवरस्य क्षीणता विद्यते। "न परागः" इत्यत्र कल्याः स्वाभाविक्यल्पता। चन्द्रालोकस्येदं लक्षणम्—

"अल्पं तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता।" इति॥

अस्येदमुदाहरणम्—

मणिमालोर्मिका तेऽद्य करे जपवटायते॥

अत्राधेयमुद्रिकाया मालावल्लम्बमानत्वाद्विरहिणीकररूपाधारस्याल्पत्वम्। अस्याभिप्रायस्त्वधिकालंकारवदत्राप्ययमस्ति, अल्पाधेयादाधारस्याल्पतेति। मम तु मतम्, लभ्योदाहरणानुसारेणात्राप्याधाराधेयनियमकरणं तु प्रमादः। कुत इति चेद्यत्राल्पता रमणीया भवेत्तत्राल्पालंकारो भवेत्। सा चाल्पता केनापि वा प्रकारेण भवतु। अन्यथा "दानक्षीणधनाः" इत्याद्यन्योदाहरणेष्वव्याप्तिर्भवेत्॥

इत्यल्पप्रकरणम्॥ १४॥



## अवज्ञा॥



अवज्ञाशब्दस्यार्थोऽनादरः। आह चिन्तामणिकोषकारः "अवज्ञा-अनादरे" इति। अत्रानादरस्त्वनङ्गीकारः। अनुज्ञालंकारविपरीतभावेऽय, मवज्ञालंकारः। अनङ्गीकारस्त्वनङ्गीकारयोग्यस्याङ्गीकारयोग्यस्यापि च भवति। अङ्गीकारयोग्यस्यानङ्गीकारश्च कारणेन कारणं विनापि च भवति। ततोत्रान्यत्रातिव्याप्तिवारणाय केनचिन्निमित्तेनाङ्गीकारयोग्यस्यानङ्गीकारे रूढिः॥

अवज्ञालंकृतिस्तु स्यादङ्गीकार्यस्य वस्तुनः।
अनङ्गीकरणे राजन्निमित्तेन तु केनाचित्॥

यथा—

अयाचकान्यान्व्यदधात्कवीशा-
ञ्जगत्प्रदाता यशवन्तसिंहः ।
वाञ्छन्ति नो कल्पमहीरुहांस्ते
चिन्तामणिं पारससंज्ञकं वा ॥

लोके कल्पमहीरुहादयोऽङ्गीकारयोग्यास्तेषामनङ्गीकारः । तत्र निमित्तं राजराजेश्वरस्य दानबाहुल्यम् । अनुज्ञालंकारेऽवज्ञालंकारे च हेत्वंशोपि वर्तते। परं त्वनुज्ञाऽवज्ञारूपचमत्कारस्य प्राधान्यम्। एवमन्यत्रापि ज्ञातव्यम् । चन्द्रालोककारोऽवज्ञालंकारमुल्लासालंकारस्य विपरीतभावमङ्गीकृत्य

"एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि ॥"

इत्युल्लासस्य लक्षणमुक्त्वाऽवज्ञाया इदं लक्षणमाह—

"ताभ्यां तौ यदि न स्यातामवज्ञालंकृतिस्तु सा ॥" इति ॥

अन्यस्य गुणदोषाभ्यामन्यस्य गुणदोषौ यदि न स्यातां तदाऽवज्ञालंकृतिरित्यर्थः ॥

क्रमेण यथा—

"संप्राप्यापि सरः कुम्भः स्वल्पं हि लभते जलम् ॥"

अत्र सरसोऽधिकजलरूपगुणात्कुम्भेनाधिकजलरूपगुणो न प्राप्तः ॥

"मीलन्ति यदि पद्मानि का हानिरमृतद्युतेः ॥"

अत्र पद्मस्य निमीलनदोषादमृतद्युतेर्न किंचिद्दोषप्राप्तिः । कुवलयानन्दानुसारी रसगङ्गाधरकारोऽप्युल्लासानन्तरमवज्ञालंकारस्येदं लक्षणमाह—

"तद्विपर्ययोऽवज्ञा ॥" इति ॥

उल्लासालंकारस्य वैपरीत्येऽवज्ञालंकार इत्यर्थः ॥

यथा—

निष्णातोपि च वेदान्ते वैराग्यं नैति दुर्जनः ॥

* "येषामिय दृढप्रतिज्ञा वयमन्य न याचामहे" इति तेऽत्रायाचकसञ्ज्ञकाः ।

चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥

मम तु मतं, अङ्गीकारानङ्गीकारौ कर्तुरिच्छाधीनौ, अतोऽङ्गीकारानङ्गीकारावन्यपदार्थौ; गुणदोषाभ्यां गुणदोषयोः प्राप्त्यप्राप्ती चान्यपदार्थौ। "संप्राप्यापि सरः कुम्भः" इत्यत्र घटस्याधिकजलग्रहणेऽनङ्गीकारो नास्ति, किंतु घटे तत्परिमाणापेक्षयाऽधिकजलस्य नावकाशः। अन्यस्य गुणदोषाभ्यां गुणदोषाभावस्त्वतद्गुणस्य विषयः। "संप्राप्यापि सरः कुम्भः" इत्यत्र घटस्याल्पतया सरोवरादधिकजललाभस्यासंभवाद्गुणाद्गुणाभावो नैव बुध्यते। अत्र त्वप्रस्तुतप्रशंसालंकारः। "मीलन्ति यदि पद्मानि" अत्रापि संकोचप्राप्तेः कर्तुः सरोजस्याभिहितत्वाद्दोषाच्चन्द्रस्य दोषप्राप्तेर्न संभवः, अतोऽत्रापि दोषाद्दोषाभावो न बुध्यते। अत्राप्यप्रस्तुतप्रशंसालंकारः। "निष्णातोपि च वेदान्ते" इत्यत्र चित्रहेतुः। यत्र कारणे सति कार्याभावे रोचकतास्वीकारस्तत्र तु कार्यकारणसंबन्धिनी विचित्रतैवालंकारो भवेत्। किं च गुणाद्गुणाभावे रोचकतास्वीकारे त्वतद्गुण एवालंकारः। गुणो द्विविधः। शुभोऽशुभश्च। तच्चातद्गुणप्रकरणे प्रदर्शितम्। प्राचीना अवज्ञालंकारस्य स्वरूपं नैवाबोधिषत ॥

॥ इत्यवज्ञाप्रकरणम् ॥ १५ ॥

## ॥ अवसरः ॥

अवसरः प्रस्तावः। उक्तं च चिन्तामणिकोषकारेण "अवसरः प्रस्तावे" इति। प्रस्तावस्य पर्यायः प्रसङ्गः। अवसरस्य स्वरूपं तु समये करणम्। समालंकारस्य स्वरूपं तु यथायोग्यता। इत्यनयोर्वैलक्षण्यमनुभवसिद्धम्। अवसरश्चमत्कारकारी चेदलंकारः ॥

भवेदवसरो यत्र तत्रावसरसंज्ञिका ॥
भवेदलंकृती राजन्भ्रूणोत्ववसरप्रद ॥

यथा—

अदातरि जलं शक्रे ग्रीष्मघर्मे च कुप्यति ॥
कृपयाऽपूरयत्सर्वांस्तडागान्मरुभूपतिः ॥

विक्रमाब्दसंख्ययाऽष्टचत्वारिंशदुत्तरैकोनविंशातिशततमे वर्षे मरुदेश इन्द्रो न ववर्ष। ग्रीष्मघर्मश्चातीव वृद्धिं प्राप्तः। तस्मिन्नवसरे राजराजेश्वरयशवन्तसिंहः कृपया प्रजापालनार्थं बालसमुद्रनामकतडागसंचितजलैर्योधपुरस्थगुलाबसागरादिनामकांस्तड़ागानपूरयत्। इदं च कार्यं राजराजेश्वरोऽवसरे कृतवांस्ततोऽत्रावसरालंकारः ॥

यथावा—

पञ्चेषुः पिकगीर्मरुन्मलयजश्चन्द्रो मधुर्मल्लिका
चैषां को दयिताविघातजमहापापस्य पात्रं भवेत् ॥
इत्थं चिन्तयति प्रवासविधुरे दैवात्तदानीमहो
तूतीजन्तुरुवाच मूर्धनि तरोस्तूहीति तूहीति च ॥

अत्र प्रवासविधुरस्योक्तविचारावसरे तूतीजन्तुस्तूहीति शब्देन त्वमेव नायिकाप्राणघातक इत्याह। "तूही" इति शब्दो लोकभाषायां "त्वमेव" इत्यर्थकः। तूतीजन्तोः कथनमिदमवसरे जातमित्यवसरालंकारः। अयमवसरालंकारोऽतिप्राचीनैरङ्गीकृतः। स एव भोजमहाराजप्राक्तनैः पर्यायनाम्ना कथितः। तदुक्तं भोजमहाराजेन—

"मिषं यदुक्तिभङ्गिर्याऽवसरो यः स सूरिभिः ॥
निराकाङ्क्षोथ साकाङ्क्षः पर्याय इति गीयते ॥" इति ॥

मिषं व्याजः, उक्तिभङ्गी रचनान्तरेण कथनम्, अवसरश्चेत्येते बुधैः पर्यायनाम्ना कथिताः। स च पर्यायो द्विविधः। साकाङ्क्षो निराकाङ्क्षश्च। महाराजोऽवसरस्येदमुदाहरणं ददौ—

अज्जँवि बालो दामोदरोत्ति इअ जम्पिए जसोआए ॥
कण्हमुहपेसिअच्छं णिहुअं हसिअं वअवहूए ॥

---

* संस्कृतम्—

अद्यापि बालो दामोदरोस्तीति जल्पिते यशोदया। कृष्णमुखप्रेक्षिताक्ष निभृत हसितं व्रजवध्वा ॥ १ ॥

कृष्णं यशोदा माता बालकमाह, तस्मिन्समये कृष्णेन सह यथा व्रजवध्वा क्रीडा कृता तस्याः सहासं कृष्णमुखप्रेक्षणस्यावसरः। अत्रावसरे हासः। कोषेऽवसरस्यापि नाम पर्याय इत्युक्तम् । तदेव लिखितं चिन्तामणौ "पर्यायोवसरे" इति । अतो भोजमहाराजप्रभृतिभिस्तदनुसारेणावसरस्यापि पर्यायनाम्ना संग्रहः कृतः। पर्यायशब्दस्य "परित्यज्य यानं पर्यायः" इति योगार्थः । अर्थादेकं परित्यज्यान्यत्र गमनम् । अत्र विषये प्राचीनैः पर्यायालंकारः स्वीकृतः, स त्वग्रे कथयिष्यते। महाराजः पर्यायेऽवसरं नान्तर्भावितवान्। किं तु कोषानुसारेणावसरालंकारस्यापि पर्यायनाममात्रेण संग्रहं कृतवानिति ज्ञातव्यम्। महाराजमतानुसारेण 'पञ्चेषुः' इत्यत्र निराकाङ्क्षोऽवसरः । तूतीजन्तोस्तिर्यक्त्वादत्र केनाभिप्रायेणैवमुक्तमित्याकाङ्क्षाया अनुदयात्। 'अद्यापि'—इत्यत्र व्रजवधूरस्मिन्समये किमर्थं हास्यमकरोदित्याकाङ्क्षोदयात्साकाङ्क्षः। मम तु मतं, इदमुदाहरणान्तरम् । प्रकारान्तरकथनं तु महाराजस्य प्रमादः ॥

## इत्यवसरप्रकरणम् ॥ १६ ॥



# ॥ आक्षेपः ॥



आक्षेपशब्दस्यार्थोऽपवादः। अपवादशब्दार्थश्च बाधकः। आह च चिन्तामणिकोषकारः "आक्षेपोऽपवादे । अपवादः बाधके:" इति । बाधकोऽनेकप्रकारोऽस्ति । अत्र निषेधे रूढिः ॥

**आक्षेपो यः स आक्षेपो यशवन्तनरेश्वर ॥**

यथा—

त्वत्समो नास्ति नाभूच्च नो भावी यशसां निधिः ॥

अत्र राजराजेश्वरस्य समतायाः निषेधः। अत्र समताया निषेधे पर्यवसानम्। वर्णनीयराजराजेश्वरोत्कर्षस्तूक्तनिषेधस्य फलम्। एवमन्यत्रापि बोध्यम् ॥

यथावा—

भूषणानि न दध्यास्त्वं सौवर्णानि यतोऽङ्गने ।
दृश्यन्ते तानि तेऽङ्गेषु मालिन्यानीव दर्पणे ॥

अत्र भूषणधारणस्य निषेधो वर्तते । आचार्यदण्डिन इदं लक्षणम्—

"प्रतिषेधोक्तिराक्षेपस्त्रैकाल्यापेक्षया त्रिधा ।
अथास्य पुनराक्षेप्यभेदानन्त्यादनन्तता ॥" इति

प्रतिषेधस्यार्थो निषेधः । तदाह चिन्तामणिकोषकारः "प्रतिषेधो निषेधे" इति ॥

यथा—

कुतः कुवलयं कर्णे करोषि कलभाषिणि ।
किमपाङ्गमपर्याप्तमस्मिन्कर्मणि मन्यसे ॥

अत्र कुवलयस्य धारणं क्रियमाणमेव निषिद्धम्, अतोऽत्र वर्तमानाक्षेपः । "त्वत्समो नास्ति" इत्यत्र त्रिषु कालेषु निषेधः ॥

यथावा—

धनं च बहु लभ्यं ते सुखं क्षेमं च वर्त्मनि ।
न च मे प्राणसंदेहस्तथापि प्रिय मास्मगाः ॥

अत्र नायकस्य विदेशगमननिषेधे कस्मिंश्चिदपि कारणेऽसति नायिकया केवलस्वकीयप्रभुत्वेन निषेधः कृतः । अत आचार्यदण्डीमं प्रभुत्वाक्षेपनामकमाक्षेपप्रकारमाह––

यथावा––

चक्षुषी तव रक्ते ते स्फुरत्यधरपल्लवः ।
भ्रुवौ च भुग्नौ न तथाप्यदुष्टस्यास्ति मे भयम् ॥

अत्र भयकारणस्यापराधस्य निषेधात्कारणाक्षेपः । दण्डिना धर्माक्षेप इत्यादयो बहवो भेदा उक्ताः । मम तु मतम्, एवं भेदा उदाहरणान्तराणि । भोजमहाराजस्येदं लक्षणम्—

विधिनाथ निषेधेन प्रतिषेधोक्तिरत्र या ।

शुद्धा मिश्रा च साक्षेपो रोधो नाक्षेपतः पृथक् ॥" इति ॥

केनचित्प्राचीनेन रोधालंकारः स्वीकृतस्तं महाराजो निषेधेऽन्तर्भावितवान् । "त्वत्समो नास्ति नाभूच्च" इत्यादिषूदाहरणेषु नञा निषेधस्योक्तिः ॥

गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥

अत्र विधिना निषेधस्योक्तिः ॥

मम तु मतं, विधिमुखनिषेधोऽप्युदाहरणान्तरमात्रम् । न तु प्रकारान्तरम् । यस्मिन्काव्ये विधिर्निषेधश्च भवेतां तत्र मिश्राक्षेपः । महाराजो रोधस्यैवमुदाहरणं ददौ—

जलाहरणमार्गे सा दृष्टा रिक्तघटा सखे ।

अत्र क्रियया प्रियगमनस्य रोधनं, न तूक्तिः । किं चात्रापशकुनद्वारा रोधनात्प्रतिकूलः ॥

यथावा—

पिण्डार्थं पितरो गृहं प्रथमतस्त्वायान्ति दुर्गां जना
अर्चन्त्याद्युमलं सुरालयमथो मोक्षं च मासेऽधुना ।
कासाराः कमलैः सुशोभिततराः स्वच्छं नभोमण्डलं
रासं वै तनुते हरिः प्रिय! कथं गच्छेर्विदेशं प्रति ॥ १ ॥

अत्र वचनद्वारा निरोधः । दुर्गापूजनद्वारा निरोधादनुकूलः । इदमप्युदाहरणान्तरम् । वाग्भटस्येदं लक्षणम्—

"उक्तिर्यत्र प्रतीतिर्वा प्रतिषेधाय जायते ।
आचक्षते तमाक्षेपमलंकारं बुधा यथा ॥" इति ॥

वाग्भटमतानुसारेण—

यशवन्तमहाराजसदृशो यशसां निधिः ।
नाभून्न चास्ति नो भावी युगेऽस्मिन्धरणीतले ॥

अत्र निषेधस्योक्तिर्वर्तते । "गच्छ गच्छसि चेत्" इत्यत्र "जलाहरण-

मार्गे सा" इत्यत्र च निषेधस्य प्रतीतिरस्ति। केषांचित्प्राचीनानामयं सिद्धान्तः। केवलनिषेधो लौकिकतया रुचिकरत्वाभावादलंकारो न भवति। अतो भगवान्वेदव्यास इदं लक्षणमाज्ञापयति—

"प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया॥
तमाक्षेपं ब्रुवन्त्यत्र॥" इति॥

विशेषाभिधित्सयाऽर्थाद्वर्णनीयस्य विशेषप्रतिपादनेच्छया य इष्टस्य प्रतिषेध इव, अर्थान्निषेधसदृशः। निषेध इवेति कथनस्य तात्पर्यं तु न वास्तवनिषेधः, किं तु निषेधस्याभासमात्रम्। व्यासमतानुसारिसर्वस्वकारादयोऽपि निषेधाभासमाक्षेपालंकारमङ्गीकुर्वन्ति॥

यथा—

नाहं दूती तनोस्तापस्तस्याः कालानलो महान्॥

अत्रेयं दूती स्वस्य दूतीत्वं निषेधति परं तु वस्तुतोऽस्यां दूतीत्वस्य निषेधो नास्ति, कुत इति चेदियमत्र दूतीत्वं करोत्येव, अतोऽयं निषेध आभासरूपः। अथ चात्र दूत्याः सत्यकथनज्ञापनरूपविशेषस्य प्रतीतिर्भवति। मम तु मतं, आभासमाननिषेधस्य निषेधालंकारत्वाङ्गीकारो न युक्तः। कुत इति चेदीदृशस्थले प्रधानचमत्कार आभासांशे भवति। निषेधस्त्वत्र गौणो भवति। अतोऽत्रालंकारताऽऽभासे वर्तते। अथ चाभासः केवलं निषेधस्यैव न भवति, अनेकेषां भवति, तच्चाभासालंकारप्रकरणे कथयिष्यते। दण्ड्याचार्यकृतकाव्यादर्शग्रन्थस्य टीकाकारः प्रेमचन्द्रः "प्रतिषेधोक्तिराक्षेपः" इति कारिकां व्यासभगवतो मतानुसारेण योजयति। प्रतिषेधस्योक्तिरर्थात्प्रतिषेधस्य कथनमात्रं, न तु वास्तवप्रतिषेधः। अतोऽत्रापि प्रतिषेधस्याभासस्याङ्गीकारः। कुत इति चेद्वास्तवनिषेधे विचित्रता नास्तीति। मम तु मतं, प्रेमचन्द्रस्यायं प्रमादः। कुत इति चेद्ग्रन्थकाराणामुदाहरणानि स्वस्वलक्षणानुसारेण भवन्ति। तथा च दण्ड्याचार्यस्याक्षेपोदाहरणेषु वास्तवनिषेधो वर्तते, न तु निषेधाभासः। अथ चोक्तेरर्थ आभासपरतया योजितश्चेत्समासोक्तिसहोक्त्यादय उक्तिपल्लववन्तः सर्वेऽलंकारा आभासरूपा भवेयुः। न च तथा। निषेधे विचित्रताऽऽनयनार्थं काव्यप्रकाशगतकारिकाकारेणेदं लक्षणमुक्तम्—

"निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ॥
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः" ॥ इति ॥

विशेषकथनेच्छया वक्तुमिष्टस्य, अर्थात्कथयितुं वाञ्छितस्य यो निषेधः स आक्षेपालंकारः। स च द्विप्रकारः। वक्ष्यमाणविषयः, उक्तविषयश्चेति ॥

क्रमेण यथा—

ए* एहि किंवि कीए वि कए णिक्किव भणामि अलमह वा ॥
अविआरिअकज्जारं भआरिणी मरउ ण भणिस्सं ॥ १ ॥

अत्र कथयितुं वाञ्छितस्य वक्ष्यमाणस्य निषेधः। स तु नायकस्नेहाभावस्य विशेषप्रतिपादनार्थकः। विशेषस्त्वाधिक्यम् ॥

देया शिला चाटुकवाटमुद्रा
श्रीखण्डशैलस्य दरीगृहेषु ॥
वियोगिनीकण्टक एष वायुः
कारागृहस्यास्तु चिरादभिज्ञः ॥ १ ॥
बाणेन हत्वा मृगमस्य यात्रा
निवार्यतां दक्षिणमारुतस्य ॥
इत्यर्थनीयः शबराधिराजः
श्रीखण्डशैलस्य दरीगृहस्थः ॥ २ ॥
यद्वा मृषा तिष्ठतु दैन्यमेत-
न्नेच्छन्ति वैरं मरुता किराताः ॥
केलिप्रसङ्गे शबराङ्गनानां
स हि श्रमग्लानिमपाकरोति ॥ ३ ॥

अत्र स्वेन कथितस्य निषेधः। स तु नायिकाया निजदैवप्रातिकूलताया विशेषप्रतिपादनार्थकः ॥

यथावा—

* एहि कस्यापि कृते निष्कृप भणामि अलमथवा। अविचारितकार्यारम्भकारिणी म्रियता न भणिष्यामि ॥ इति संस्कृतम् ॥

साहित्यपाथोनिधिमन्थनोत्थं
काव्यामृतं रक्षत भो कवीन्द्राः! ॥
यत्तस्य दैत्या इव लुण्टनाय
काव्यार्थचोराः प्रगुणीभवन्ति ॥ १ ॥
गृह्णन्तु सर्वे यदि वा यथेच्छं
नास्ति क्षतिः क्वापि कवीश्वराणाम् ॥
रत्नेषु लुप्तेषु बहुष्वमर्त्यै-
रद्यापि रत्नाकर एव सिन्धुः ॥ २ ॥

अत्रापि स्वेन कथितस्य निषेधः। अथ चायं समीचीनोक्तिरूपामृतरक्षाया निषेधः समीचीनोक्तेरक्षयतारूपविशेषार्थकः। मम तु मतं, केवलनिषेधेऽपि चमत्कारोऽनुभवसिद्धः। स तु तेषामुदाहरणैः स्पष्टः। दण्ड्याचार्यभोजमहाराजादयो महाकवयः केवलनिषेधेऽलंकारमङ्गीचक्रुः। किं च—

गुणिनोऽगुणिनः सर्वे लभन्ते धरणीं धनम् ॥
यशवन्तमहीपस्य समो नाभून्न वा भवेत् ॥

अयमुपमाया निषेधो वर्णनीयराजराजेश्वरस्योपमापेक्षयाऽधिकोत्कर्षदानात्सहृदयानामुपमातोऽप्यधिकाल्हादकारीत्यनुभवसिद्धम्। अथ चास्मिंस्थलेऽलंकारताप्राप्तौ, केवलनिषेधेऽलंकारतामनङ्गीकुर्वतां प्रकाशकारादीनामपि संमतिर्वर्तते। कश्चिदमुमनन्वयनाम्ना, कश्चिदसमनाम्नाऽलंकारमाह। तौ त्वन्तर्भावाकृतौ सविस्तरं दर्शयिष्येते। अथ च "विशेषाभिधित्सया" इति विशेषणमपि नावश्यकं, कुत इति चेद्विशेषप्रतिपादनं तु सर्वेष्वलंकारेषु वर्तते ॥

यशवन्तमहीपस्य समो नाभून्न वा भवेत्।

इत्ययं केवलनिषेधोऽपि राजराजेश्वरस्य विशेषं दर्शयति। मम तु मतं, केवलनिषेधो वक्ष्यमाणनिषेधो निजोक्तिनिषेधश्चेति सर्वे निषेधा आक्षेपालंकारोदाहरणभेदमात्रम्। एतेषां सर्वेषां नामार्थे संग्रहो भवति! काव्यप्रकाशगतकारिकाकारलक्षणस्य चान्यत्राव्याप्तिर्भवति ॥
यथावा—

राज्ये सज्जन राग ते मरुधराधीशस्य राज्येऽथ वा
प्राणान्स्वामिहिताय ये रणमुखे मुञ्चन्ति ते क्षत्रियाः ।
कीर्तेः संस्थितिकारिणश्च कवयः पूजापदं चारणा
वेश्याभण्डनटैन्द्रजालिकमुखानर्चन्ति भूपाः परे ॥

अत्र तृतीयस्य निषेधः।सोप्याक्षेपालंकारोदाहरणान्तरम् । चन्द्रालोककारस्येदं लक्षणम्—

"आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात्"॥ इति ॥

स्वेन कथितस्य विचारणाद्यो निषेधः स आक्षेपालंकार इत्यर्थः । तत्र "विचारणात्" इति विशेषणमपि व्यर्थम् । कुत इति चेत्स्वेन कथितस्य निषेधो विचारपूर्वको भवति चेत्तदेव रमणीयो भूत्वा भूषणं भवति । विचारेण विना स्वस्योक्तेर्निषेधस्तु दूषणं भवति । लभ्योदाहरणानुसारेणाक्षेपशब्दस्यार्थं तिरस्कारमङ्गीकुर्वन्वामन इदं लक्षणमुदाहरणं चाह—

"उपमानाक्षेपश्चाक्षेपः ॥" इति ॥

उपमानस्याक्षेपोऽर्थात्तिरस्कार आक्षेपालंकार इत्यर्थः । आह च चिन्तामणिकोषकारः "आक्षेपो भर्त्सने" इति ॥

यथा—

तस्याश्चेन्मुखमस्ति सौम्यसुभगं किं पार्वणेनेन्दुना
सौन्दर्यस्य पदं दृशौ च यदि चेत्किं नाम नीलोत्पलैः ॥
किं वा कोमलकान्तिभिः किसलयैः सत्येव तत्राधरे
हा धातुः पुनरुक्तवस्तुरचनारम्भेष्वपूर्वग्रहः ॥

मम तु मतं, तिरस्कारोऽप्येकप्रकारको निषेध एव । वामनो लभ्योदाहरणानुसारेण लक्षण उपमानस्य नियममकरोत्सोपि प्रमादः । अन्यत्रास्य लक्षणस्याव्याप्तेः । अथ चाकर्षणेन यार्थस्य प्रतीतिर्भवति तामप्याक्षेपं वदन्ति । अस्य विषयस्याप्याक्षेपनाम्ना संग्रहं कुर्वन्वामनो वृत्तौ लिखति "उपमानस्याक्षेपात्प्रतीतिरपि सूत्रस्यार्थः" इति । सूत्रे चकारो वर्तते, तेन वामन इमं द्वितीयमर्थमङ्गीचक्रे ।

ऐन्द्रं धनुः पाण्डुपयोधरेण
शरद्दधानार्द्रनखक्षताभम् ॥
प्रसादयन्ती सकलङ्कमिन्दुं
तापं रवेरप्यधिकं ततान ॥

अत्र शरद्वेश्येव, इन्दुः प्रतिनायक इव, रविर्नायक इवेत्युपमानानामाक्षेपो भवति। मम तु मतं, अर्थविशेषताऽलंकारतासाधिका न भवति। आक्षेप्यार्थेऽलंकारत्वाङ्गीकारे वाच्यार्थलक्ष्यार्थयोर्व्यङ्ग्यार्थेऽपि चालंकारता स्यात्। अथ चोक्ताक्षेपस्योपमाने नियमकरणमपि प्रमादः। कुत इति चेदाक्षेप्यार्थोऽलंकारश्चेत्तदा सकलवस्तूनामाक्षेपेऽलंकारो भवितुमर्हति ॥

॥ इत्याक्षेपप्रकरणम् ॥ १७ ॥

## ॥ आभासः ॥

आभास इत्यत्राङुपसर्ग ईषदर्थे। भास इत्यस्य भानमर्थः। तथा चाभास इति समुदितशब्दार्थः किंचिद्भानम्। परं तु साहित्यशास्त्रे यद्वस्तु वास्तविकं न भवति तस्य किंचित्कालभान आभासशब्दो रूढः। एतादृशरसाभासः समस्तप्राचीनै रसाभासत्वेनोक्तः। रसाभासश्चानुचितत्वे भवति। यथा कुलटाया अनेकविषयकरतेर्वर्णनेऽविचारदशायां क्षणं रसो भासते। अनुचितरतौ रसस्य किंचिद्भानं च रसदशां नाश्नुत इति रसज्ञानामनुभवसिद्धम्।

वस्तुतो वस्तु यन्नास्ति विद्युवद्भासते क्षणम् ॥
आभासालंकृतिः सेयं बहुधास्ति नराधिप ॥

यथा—

साङ्गोप्यनङ्गो विपुलदृगपि त्वं तु सूक्ष्मदृक् ॥
अद्भुतं तेऽस्ति चरितं यशवन्तमहीपते ॥

अत्र राजराजेश्वरस्याङ्गसहितत्वमुक्त्वाऽनङ्गत्वकथने श्रवणमात्रे विरोधो भासते, परं त्वत्राङ्गसाहितत्वमिदम्। स्वामी, अमात्यः, सुहृत्, कोशः, देशः, दुर्गः, सेना, इतीमानि राज्यस्य सप्ताङ्गानि। एवं च राजराजेश्वर एतदङ्गवद्राज्यसहितो वर्तत एव। अत्रानङ्गत्वं कामरूपत्वम्। दृक्शब्दार्थो विचारो नेत्रमपि। एवं च राजराजेश्वरो विशालाक्षो वर्तते, तथापि सूक्ष्मदृगितिकथनाच्छ्रवणमात्रे विरोधो भासते, परं तु विचारदशायां सूक्ष्मदृक् सूक्ष्मविचारवान्। अतो वस्तुतो विरोधो नास्त्यतो विरोधालंकारस्याभासो मनोरञ्जकत्वादलंकारः॥

यथावा—

नरेन्द्रमौले न वयं राजसंदेशहारिणः॥
जगत्कुटुम्बिनस्तेऽद्य न कश्चिच्छत्रुरीक्ष्यते॥

संदेशहरो दूतो भवति, अतोऽत्र वक्ता कस्यचिद्राज्ञो दूतो भूत्वा स्वस्मिन् राजदूतत्वनिषेधं निजसत्यवादिताद्योतनाय करोति। परं तु स वस्तुतो नास्ति। कुत इत्युक्तावुत्तरार्धेन निजनृपते राजराजेश्वरे शत्रुत्वपरिहाररूपं दूतत्वं करोत्येव। अतो दूतत्वनिषेधः श्रवणमात्रे भासते। विचारदशायां नास्त्येव। अयमाक्षेपालंकारस्याभासः॥

यथावा—

विषं जलधरैः पीतं मूर्छिताः पथिकाङ्गनाः॥

अत्र प्राचीनमतीयासङ्गतेरस्मन्मतीयविचित्रालंकारस्य चाभासः॥

यथावा—

गुणैरौदार्यगाम्भीर्यैः कर्मभिः कुशलैरिह।
भवानिव भवान् भाति यशवन्तमहीपते॥

अत्रोपमालंकारस्याभासः। द्वितीयसदृशव्यवच्छेदे पर्यवसानात्। तेनैव सह तस्यैवोपमाकथन उपमाया अन्वयानुपपत्त्योपमायास्त्वाभासमात्रम्॥

यथावा—

हस्तस्थितजले हस्ती ते मज्जति वराङ्गने।

अत्र वास्तवदन्तिनो न निमज्जनम्, किं तु हस्तिनः प्रतिबिम्बस्य मूर्तिरूपस्य वा दन्तिनो निमज्जनम्। अतोत्राधिकालंकारस्याभासः ॥

यथावा—

हृदि स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि ।

अत्र प्राचीनमतीय विशेषोक्त्यलंकारस्याभासः । स्नेहस्तैलं प्रीतिश्च ॥

यथावा—

नरेन्द्रानेव ते राजन्दशत्यसिभुजङ्गमः ।

अत्र प्राचीनोक्तायास्तृतीयविभावनाया आभासः । नरेन्द्रा राजानो विषवैद्याश्च ॥

यथावा—

कण्टकाञ्चितगात्राश्च मुक्ताभरणभूषिताः ।
विश्वस्ताः पूर्ववद्विद्विड्वनिताः सन्ति ते वने ॥

वनवासपक्षे कण्टकः पादभेदकः, मुक्ताभरणत्वमाभूषणरहितत्वं, भूषितत्वं भूमिस्थितिः, आसनाभाव इत्यर्थः । विश्वस्तात्वं विधवात्वम् । राज्यस्थित्यवस्थापक्षे कण्टकः संयोगशृङ्गारानुभावरूपो रोमाञ्चः, मुक्ताभरणभूषितत्वं मौक्तिकाभरणालंकृतत्वम्, विश्वस्तात्वं विश्वासयुक्तता। अत्र पूर्वरूपालंकारस्याभासः ॥

यथावा—

द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन्सैव चिरन्तनप्रणयिनी शून्येऽपि राज्यस्थितिः ॥

शत्रुमन्दिरस्य शून्यतापक्षे महिषी सैरिभी, खड्गी गेण्डामृगः, कञ्चुकी सर्पः । राज्यस्थितिपक्षे महिषी पट्टाभिषिक्ता राजस्त्री, खड्गी खड्गधारी पुरुषः, कञ्चुक्यन्तःपुररक्षको वर्षधरः। अत्रापि पूर्वरूपाभासः ॥

यथावा—

प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया ॥

मित्रपक्षे पराभूतिः परमैश्वर्यम् । शत्रुपक्षे पराभूतिः पराजयः । अत्र तुल्ययोगिताऽलंकारस्याभासः ॥

आसीत्प्रगे नेत्रयुगाद्धि निद्रां
त्यज त्यजालस्यमपां प्रसेकैः ।
प्रसेकमापादय नीतिवार्भी
राजश्रियः सज्जनराणशंभो! ॥

अत्र शृङ्खलालंकारस्याभासः। कुत इति चेच्छृङ्खलान्यायेन वस्तूनां संबन्धकरणे शृङ्खलालंकारो भवति ॥

यथा—

नेत्रे कर्णान्तविश्रान्ते कर्णौ दोःस्तम्भदोलिनौ ।
दोःस्तम्भौ जानुपर्यन्तप्रलम्बनमनोहरौ ॥

अत्र शृङ्खलान्यायेनावयवानां गुम्फनमलंकारः। शब्दानां गुम्फनं त्वौचित्यमात्रेणेष्टम् । शब्दगुम्फनमन्तरा शृङ्खलालंकारस्तु—

नेत्रे कर्णान्तविश्रान्ते श्रोत्रे दोःस्तम्भदोलिनी ।
बाहू च जानुपर्यन्तप्रलम्बनमनोहरौ ॥

अत्रापि भविष्यति। अतः केवलशब्दस्य पुनरावृत्तिरनुप्रासालंकारः। पूर्वोक्तसमस्तोदाहरणेषु भूषणाभासाः प्रदर्शिताः ॥

दूषणाभासो यथा—

तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः ।
तेजोधाम महःपृथुमनसामिन्द्रो हरिर्जिष्णुः ॥

अत्र तनुवपुः—करिकुञ्जर—रुधिररक्त—तेजोधाममहः—इन्द्रो हरिर्जिष्णुः, एवं श्रुतिमात्रेण पुनरुक्तदोषो भासते । परं तु विचारदशायां तनुशब्दार्थोऽल्पता। कुञ्जरशब्दार्थः श्रेष्ठत्वम्। रक्तशब्दार्थोऽरुणिमा। धामशब्दार्थ आश्रयः। महःशब्दार्थ उत्सवः। इन्द्रशब्दार्थो राजा। हरिशब्दार्थः सिंहः। जिष्णुशब्दार्थो जयशील इति। एवं रीत्यात्र पुनरुक्तदोषस्याभासः।

रसस्याभासे रसाभासः। भावस्याभासे च भावाभासः। अनयोरुदाहरणे रसप्रकरणे प्रदर्शिते। भूषणदूषणरसभावातिरिक्तवस्तुनोप्याभासो भवति॥

यथा——

पुरे प्रतिगृहं राम! कानने प्रतिभूरुहम्।
उन्मत्ता भ्रमते कीर्तिः कथं त्वत्पितृवल्लभा॥

रामचन्द्रस्य विवाहे चतुराः स्त्रिय इदं परिहासगानमकुर्वन्। अत्र वल्लभा-शब्दस्वारस्यात्कीर्तौ रामचन्द्रपितृपत्नीत्वप्रतीतिः श्रवणमात्राद्भवति तेन निन्दा भासते, परं तु विचारदशायां कीर्तौ वल्लभात्वं प्रीतिपात्रत्व-मात्रम्। अतो निन्दाबुद्धेर्निवृत्तौ सत्यां तव पितुः कीर्तिः सर्वव्यापिनीति स्तुतौ पर्यवसानं भवतीति निन्दाया आभासः॥

यथावा—

गर्वो न ते स्याद्यशवन्तभूपते!
खिन्नो न कोपीति मदीयशासने।
वंशाग्रणीरेष रविः प्रभिद्यते
क्षोणीपते शत्रुभिरग्रतस्तव॥

अत्र श्रवणमात्रेण राजराजेश्वरस्य यशवन्तसिंहस्य राज्याधिकार-समये शत्रुभिरस्य कुलमूलपुरुषस्य रवेर्भेदनाभिधानान्निन्दाया भानं भवति, परं तु विचारदशायां शत्रूणां निकन्दनकरणरूपस्तुतौ पर्यवसानं भवति, एवं रीत्यात्र निन्दाभासः। युद्धे तनुत्यागिनः सूर्यमण्डलं भित्त्वा स्वर्गं गच्छन्ति। उक्तं च धर्मशास्त्रे—

"द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ।
यो योगेन तनुत्यागी रणे चाभिमुखो हतः॥" इति॥

यथावा——

भण्डेभ्यो भोजवद्राजन्कुट्टिनीभ्यश्च कर्णवत्।
सन्ति ते विद्विष इति वर्णयन्ति कवीश्वराः॥

अत्र श्रवणमात्रेण राजराजेश्वरस्य विद्विषामत्यन्तोदारताप्रतीतौ स्तुतिर्भासते, परं तु विचारदशायामियमुदारताऽनुचितत्वात्तेषां निन्दायां

पर्यवस्यतीत्येवं रीत्याऽत्र स्तुत्याभासः। केवलं निन्दा स्तुतिर्वा नालंकारः। किं तु निन्दाव्याजेन स्तुतिः स्तुतिव्याजेन निन्दा च व्याजनिन्दा व्याजस्तुतिरित्यलंकारौ प्राचीनैरङ्गीकृतौ। मम तु मतं, अयमाभासालंकारस्य विषयः। आभासस्योक्तोदाहरणेषु बहून्युदाहरणानि श्लेषगर्भितानि वर्तन्ते, परं तु श्लेषं विनापि तेषु "पुरे प्रतिगृहम्"– इत्याद्युदाहरणानि सन्ति। धुरंधर आभासमात्रमलंकारमङ्गीचक्रे। तत्र लभ्योदाहरणानुसारेण प्राचीना विरोधस्याभासं विरोधाभासनामकमलंकारान्तरं, निन्दास्तुत्योराभासं व्याजनिन्दाव्याजस्तुतिनामकमलंकारान्तरं, निषेधस्याभासमाक्षेपनामकमलंकारान्तरं, पुनरुक्तदोषस्याभासं पुनरुक्तवदाभासनामकमलंकारान्तरं च स्वीचक्रुः। स च प्रमादः। एवं रीत्याऽऽभासस्य विशेषं विशेषं प्रति पृथक्पृथगलंकारत्वस्वीकारे व्यर्थोऽनन्तविस्तारो भवेत्। कुत इत्युक्तावाभासः प्राचीनोक्तेष्वेव स्थलेषु न भवति। किं त्वनेकवस्तुषु भवति। तस्य संग्रहो दिक्प्रदर्शनार्थं मया कृतः। किं च सर्वत्राभासांशे चमत्कारस्य प्राधान्यादाभासस्य सामान्यरूपेणालंकारतास्वीकरणं युक्तम्, न तु विशेषरूपैः। भूषणाभासदूषणाभासरसाभासभावाभासवस्त्वाभासाः प्रकारान्तराणि। भूषणाभासे च विरोधाभासनिषेधाभासादयश्चोदाहरणान्तराणि। रसाभासे च शृङ्गाराभासहास्याभासादयश्चोदाहरणान्तराणि। एवं दूषणाभासादिषु बोध्यम्॥

इत्याभासप्रकरणम्॥ १८॥



## ॥ उत्तरम् ॥



उत्तरं तु प्रतिवचनम्। तल्लोकोत्तरं चेदलंकारः॥

लोकोत्तरोत्तरं प्राप्नोत्यलंकारपदं नृप।
एकं तु प्रश्नतोऽभिन्नं द्वितीयं तूत्तरान्तरात्॥

प्रश्नाभिन्नमुत्तरं तु तद्यत्प्रश्न एवोत्तरं भवति। उत्तरान्तरादर्थादन्यस्मादुत्तरादभिन्नमुत्तरं तद्यदनेकप्रश्नानामेकमेवोत्तरं भवति॥

यत्र ज्ञातादन्यत्पृष्टस्तत्त्वेन वक्ति तत्तुल्यम् ।
कार्येणानन्यसमख्यातेन तदुत्तरं ज्ञेयम् ॥

प्रश्नकर्ता यद्वस्तु जानाति तस्मादन्यस्मिन्वस्तुनि पृष्टे सति, प्रश्नकर्ता यद्वस्तु जानाति तस्य स्वरूपेण तत्सदृशमन्यद्वस्तु, उत्तरदाता वदेत्, तच्च वस्त्वीदृशं भवेत्, तस्मिन्कार्ये तत्सदृशं तृतीयं वस्तु न स्यात्, इदं रुद्रटोक्तं तृतीयमुत्तरमप्यलंकारतायोग्यम् ॥

क्रमेण यथा—

कं नामयति शत्रूणां मरुनाथस्य विक्रमः ।
कं नामयति शत्रूणां मरुनाथस्य विक्रमः ॥

शत्रुः संधिविग्रहयोरेकं करोति । संधौ शिरो नामयति, विग्रहे धनुर्नामयति । एतद्विषयकसंदेहेऽयं प्रश्नः । राजराजेश्वरयशवन्तसिंहस्य विक्रमो रणे शत्रूणां "कं नामयति" इति । अस्य प्रश्नस्येदमेवोत्तरं "कं नामयति" इति । अत्र कं शिरः । इदमुत्तरं प्रश्नाभिन्नमर्थाद्यः प्रश्नः स एवोत्तरम् ॥

के खेऽटाः किं चलं वयः ॥

अत्र "ख आकाशे संचारिणः के" इत्येकः प्रश्नः । "किं चलम्" इत्यपरः प्रश्नः । तयोर्द्वयोः "वयः" इत्येकमुत्तरम् । अस्यार्थस्तु पक्षिण आयुश्च । अत्र प्रथमोत्तराद्द्वितीयमुत्तरमभिन्नमर्थाद्द्वितीयप्रश्नस्यापि तदेवोत्तरम् । प्रथमोत्तरे श्लेषः । द्वितीयोत्तरे श्लेषो दीपकमपि च वर्तते । तथाप्युत्तरचमत्कारस्य प्राधान्यादिहोत्तरमेवालंकारः ॥

किं मरणं दारिद्र्यं को व्याधिर्जीवितं दरिद्रस्य ।
कः स्वर्गः सन्मित्रं सुकलत्रं सुप्रभुः सुसुतः ॥

अत्र प्रश्नकर्त्रा ज्ञातमरणाद्यतिरिक्तं पृष्टम् । अत्रोत्तरदात्रा मरणादिस्वरूपेण मरणादिसदृशा दारिद्र्यादय उक्ताः । दुःखादिकार्यकरणे मरणदारिद्र्यादिसदृशस्तृतीयः कोऽपि नास्ति । एवमुत्तरत्रयमनुभवसिद्धचमत्कारकारित्वात्प्राचीना अलंकारतया स्वीचक्रुः । एवमन्यदपि किंचिदुत्तरं चमत्कारकारि मिलितं चेत्तदप्यलंकारतया स्वीकर्तव्यम् । उत्तरस्य प्रथ-

मप्रकारद्वयविषये तु कुवलयानन्दे परमतेनेयं प्राचीना लक्षणकारिका लिखिता--

"प्रश्नोत्तरान्तराभिन्नमुत्तरं चित्रमुच्यते।" इति।

प्रश्नाभिन्नमुत्तरमुत्तरान्तराभिन्नं चोत्तरं चित्रमर्थादलंकार इत्यर्थः। काव्यप्रकाश इयं लक्षणकारिका वर्तते—

"उत्तरश्रुतिमात्रतः।
प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति।
असकृद्यदसंभाव्यमुत्तरं स्यात्तदुत्तरम्।" इति॥

इयं कारिका "प्रश्नोत्तरान्तराभिन्नमुत्तरं चित्रमुच्यते"। एतदतिप्राचीनकारिकानुसारिणी। "उत्तरश्रुतिमात्रतः प्रश्नस्योन्नयनं यत्र क्रियते तत्र॥" अस्यार्थस्तु यत्रोत्तरस्य श्रवणमात्रात्प्रश्नस्योन्नयनं क्रियते तत्रोत्तरालंकारः। उन्नयनशब्दार्थस्तूपरि नयनम्। कथितं चिन्तामणिकोषकारेण "उन्नयनमुन्नये। उन्नयः कूपादेर्जलादेरूर्ध्वंनयने" इति। उत्तरात्प्रश्नस्योन्नयनमिति कथनस्य स्वारस्यमिदमेव। उत्तरमध्यादेव प्रश्नस्योन्नयनमिति। अनेनैतदेव सिद्ध्यति यत्प्रश्नोत्तरयोरभेद इति। यत्र प्रश्नादुत्तरस्योन्नयनं भवति, अथवोत्तरेण प्रश्नस्योन्नयनं भवति तत्रोभयत्रापि स्थले चमत्कारस्तु प्रश्नोत्तरयोरभिन्नताया एव। अतः प्रथमकारिकाकारस्य सर्वसंग्राहकं लक्षणं समीचीनम्। केनचित्प्रश्नोत्तरस्याभिन्नतायां प्रश्नं पृथगुक्त्वा पुनस्तदेवोत्तरार्थमभाणि। केनचिच्च पुनस्तस्यैवोत्तरार्थकथने गौरवं ज्ञात्वा तस्यैतावदेवोदाहरणमदायि। "कं नामयति शत्रूणां मरुनाथस्य विक्रमः" इति। ईदृशोदाहरणानुसारेण केनचिदियं कारिका निरमायि। परं त्वस्यामपि प्रश्नादभिन्नस्योत्तररूपालंकारस्य स्वरूपमुक्तरीत्या साक्षादस्ति। मम तु मतं, काव्ये प्रश्नमुक्त्वा प्रश्नाभिन्नमुत्तरमपि काव्ये कथ्यते चेत्तत्रापि प्रश्नाभिन्नोत्तररूपचमत्कारे न कापि क्षतिः। प्रत्युत स्फुटप्रतीतिः। "वा सति, असकृद्यदसंभाव्यमुत्तरं स्यात्तदुत्तरम्"। अस्यार्थस्तु प्रश्ने सति वाऽसकृद्यदुत्तरं स उत्तरालंकारो भवेत्। ईदृशोत्तरस्यासंभाव्यमितिविशेषणप्रदानं त्वीदृशेनोत्तरेण लोकोत्तरेणार्थाच्चमत्कारजनकेन भाव्यमित्यर्थकम्। अस्य लक्षणस्य तात्पर्यमिदम्। अने-

केषु प्रश्नेषु सत्सूत्तराण्यसकृद्भवेयुरर्थादेकमेवोत्तरमसकृद्भवेत्। काव्यप्रकाशकारेणात्रोन्नयनशब्दस्यार्थं कल्पनां ज्ञात्वा वृत्तौ लिखितम्। "प्रतिवचनोपलम्भादेव पूर्ववाक्यं यत्र कल्प्यते तदेकं तावदुत्तरम्" इति। उदाहरणं चेदम्—

वाणिअअ! हत्थिदन्ता कुत्तो अम्हाणं वग्घकत्ती अ।
जाव ललिआलअमुही घरम्मि परिसक्कई सोह्णा॥

प्रकाशकारोऽत्र लक्षणमेवमयोजयत्। "हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी, ता मूल्येन प्रयच्छेति क्रेतुर्वचनममुना वाक्येन प्रतीयते। न चैतत्काव्यलिङ्गम्। उत्तरस्य ताद्रूप्यानुपपत्तेः। न हि प्रश्नस्य प्रतिवचनं जनको हेतुः। नापीदमनुमानम्। एकधर्मिनिष्ठतया साध्यसाधनयोरनिर्देशादित्यलंकारान्तरमेवोत्तरं साधीयः" इति॥ मम तु मतं, एवं रीत्योत्तरात्प्रश्नज्ञानं त्वत्यन्तलौकिकत्वात्किंचिदपि न चमत्कारजनकं, ततोऽयं विषयोऽलंकारतायोग्यो न भवति। पूर्वोक्तरीत्योत्तरमध्यादेव प्रश्नस्योन्नयनस्य चमत्कारजनकत्वादलंकारतायोग्यता। अतोऽस्याः कारिकाया योऽर्थो मया कृतः स एवास्ति। अतो मया त्वेवं ज्ञायते। काव्यप्रकाशस्य लक्षणकारिका न मम्मटनिर्मिताः, किं तु प्राचीनाः। मम्मटनिर्मिताश्चेदस्यालंकारस्य साक्षात्स्वरूपाद्विरुद्धमर्थं न कुर्यात्। अथ च द्वितीयोत्तरलक्षणवाक्यस्य प्रकाशकार इममर्थमकरोत्। "प्रश्नादनन्तरं लोकातिक्रान्तगोचरतयाऽर्थादलौकिकबुद्धिविषयतया यदसंभाव्यरूपं प्रतिवचनं स्यात्तदपरमुत्तरम्।" वृत्तौ च "अनयोः सकृदुपादाने न चारुताप्रतीतिरित्यसकृदित्युक्तम्" इति लिखितम्। इदं चोदाहृतम्—

का विषमा दैवगतिः किं दुर्लभं यज्जनो गुणग्राही।
किं सौख्यं सुकलत्रं किं दुःखं यत्खलो लोकः॥

मम तु मतं, अत्रापि प्राचीनकारिकाया अभिप्रायं मम्मटो नाज्ञासीत्। एवं रीत्याऽनेके प्रश्नास्तेषां चानेकान्युत्तराण्यप्यत्यन्तलौकिकत्वान्न किंचिदपि चमत्कारजनकानि, ततोऽयमपि विषयो नालंकारतायोग्यः।

---

* वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च। यावल्ललितालकमुखी गृहे परिष्वक्कते स्नुषा॥ इति संस्कृतम्॥

अनेकप्रश्नानामेकमेवोत्तरं चमत्कारजनकत्वादलंकारतायोग्यम् । अथ चास्यां लक्षणकारिकायामसंभाव्यमिति विशेषणमेतदर्थं प्रदत्तम् ॥

किमापत्खण्डनं लोके किं गृहस्थस्य भूषणम् ॥
किमानयेद्दृशो वेश्यां धनं प्राहुर्मनीषिणः ॥

इदं वारंवारमुत्तरमर्थादनेकप्रश्नानामेकमुत्तरमपि लोकोत्तरत्वाभावान्नालंकारः । सर्वस्वकारोपि प्रकाशकारानुसारी । सर्वस्वस्येदं लक्षणम्—

"उत्तरात्प्रश्नोन्नयनमसकृदसंभाव्यमुत्तरं चोत्तरम् ॥" इति ॥

अनेनाप्येषां लक्षणशब्दानामर्थं प्रकाशकारवदेव स्थापयित्वा प्रकाशकारानुसारेणैवोदाहरणानि दत्तानि । साहित्यदर्पणकारादयोपि काव्यप्रकाशकारानुसारिणः । सर्वस्वस्य टीकायां विमर्शिन्यां लिखितं, "ग्रन्थकारः प्राचीनमतानुसारेणोदाहरणान्यदात् । वस्तुतस्त्वेषूदाहरणेष्वलंकारो नास्ति । परं तु लक्षणे दोषो नास्ति । उदाहरणान्तरेषु लक्षणयोजना भवति" इति । ममापि मते विमर्शिनीकारस्येदं कथनं समीचीनम् । इदं लक्षणं परंपरात आगतं युक्तं च । अस्यार्थावबोधे प्राचीनानां प्रमादः । विमर्शिनीकारोप्यस्यार्थं साक्षान्नाबोधि । विमर्शिनीकारः प्रथमोत्तरस्यैवमुदाहरणमदात् ॥

कस्मात्ते प्रिय! यज्ञसूत्रमरुणं क्षिप्राजलस्नानतः
केनाभूदरुणं तदम्बु सदृशं गङ्गाम्भसा मे वद ॥
वीरश्रीयशवन्तसिंहनृपते राठोड़संज्ञावतो
घोरोऽभूदवरङ्गजेबबलिना क्षिप्रातटे सङ्गरः ॥ १ ॥
कस्माच्छ्रीयशवन्तसिंहनृपतिर्युद्धं चकाराद्भुतं
भङ्क्त्वाऽऽज्ञामवरङ्गजेबयवनस्तातस्य दिल्लीपुरम् ॥
धर्तुं छत्रमयं जगाम महतीं सेनां समादाय स
कल्पान्ते जलधिर्यथा जलचरैर्निर्याति भूमण्डलम् ॥

युग्मम् ॥

अत्रोन्नयनशब्दस्य स्वारस्यं तु यन्मया पूर्वं लिखितं तदेव । त्रि-

मर्शनीकार उत्तरात्पुनः प्रश्नस्योत्थितिरित्यवबुद्धवान्। तत्तस्योदाहरणादेव स्पष्टम्। एतादृशस्थलेपि प्रश्नोत्तरावत्यन्तलौकिकावेव, अतो नालंकारतायोग्यौ। अस्मिन्विषयेऽलंकारस्तु शृङ्खलाभासः। द्वितीयोत्तरस्य विमर्शनीकार एवमुदाहरणं ददौ—

सन्तश्च लुब्धाश्च विरक्तचित्ता
विप्राः कृषिस्थाः खलु राजमान्याः॥
किं किं समिच्छन्ति च सर्वलोका
नेच्छन्ति किं माधवदाघयानम्॥

अत्र पूर्वं तु "सदादयः किं वाञ्छन्ति किं च न वाञ्छन्ति" इति प्रश्नानेकता। पुनश्च वाञ्छाविषये सन्तः किं वाञ्छन्ति, लुब्धाः किं वाञ्छन्तीत्यादयोऽनेके प्रश्नाः। तत्रैषामनेकप्रश्नानां "माधवदाघयानम्" इतीदमेकमेवोत्तरवाक्यम्। अत्र "सदादयः किं न वाञ्छन्ति" एतस्य तु शब्दाभङ्गेनेदमुत्तरं, माधवस्यार्थाद्वैशाखस्य दाघे घर्मे यानं गमनमिति। अथ च "सदादयः किं किं वाञ्छन्ति" इत्येतेषामुत्तराणयन्त्यनकारेण सह "मा" इत्याद्यक्षराणां क्रमेण योजने शब्दस्य सभङ्गतयेमानि भवन्ति। सन्तो मानं, लुब्धा धनं, विरक्तचित्ता वनं, विप्रा दानं, कृषिस्था धनं, राजमान्या यानमर्थान्नरवाहनम्। ममापि मते विमर्शनीकारस्येदमुदाहरणं लक्षणानुसारि। कुवलयानन्दकारः प्रश्नाभिन्नमुत्तरं, उत्तरान्तराभिन्नमुत्तरमिति भेदद्वयमङ्गीचकार। तत्तु समीचीनं, परं तु

किंचिदाकूतसहितं स्याद्गूढोत्तरमुत्तरम्।

इतीदं लक्षणमुक्त्वेदमुदाहरणं ददौ—

यत्रासौ वेतसी पान्थ! तत्रेयं सुतरा सरित्॥

तरणमार्गं पृच्छन्तं पथिकं प्रति कामयानाया नायिकाया इदमुत्तरम्। "हे पान्थ! यत्रासौ वेतसीलताकुञ्जस्तत्रेयं सरित्सुतरा वर्तते" इति। मम तु मतं, अत्रोत्तरस्य न कश्चिच्चमत्कारः। यः साभिप्रायांशे चमत्कारः, स तु प्राचीनमतीयगूढोक्त्यलंकारस्य, मन्मतीयस्य च वक्ष्यमाणसूक्ष्मालंकारस्यास्ति। अपि चोत्तरात्प्रश्नस्यानुमाने न कश्चिच्चमत्कारः, इदं पूर्व-

मुक्तम् । कुवलयानन्दकारो वदति । इदं तून्नेयप्रश्नस्यार्थादुत्तरादनुमितप्रश्नस्योदाहरणम् । निबद्धप्रश्नोत्तरस्यार्थात्कथितप्रश्नोत्तरस्येदमुदाहरणम्—

कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तम् ॥
पुनरपि तदेव कथयसि मृतां नु कथयामि या श्वसिति ॥

अत्र प्रियायाः कुशलप्रश्नेऽधुनापि जीवतीत्युत्तरमेतदभिप्रायेण वर्तते, यावद्विरहिणी जीवति तावत्तस्याः कुतः कुशलमिति । साभिप्रायांशे तु वक्ष्यमाणः सूक्ष्मालंकार इति पूर्वमुक्तम्। अथ च प्रश्नोत्तरयोर्द्वयोः कथनमित्यंशस्यात्यन्ततरलौकिकत्वान्नालंकारतायोग्यता ॥

॥ इत्युत्तरप्रकरणम् ॥ २० ॥

## ॥ उत्प्रेक्षा ॥

उत्प्रेक्षेत्यत्र "उद्" इत्युपसर्गस्यार्थः प्रधानता । आह चिन्तामणिकोषकारः "उद् प्राधान्ये" इति । "प्र" इत्युपसर्गस्यार्थो बलम् । आह चिन्तामणिकोषकारः "प्र शक्तौ" इति। शक्तिश्च बलम्। ईक्षधातुर्दर्शनार्थे वर्तते। "ईक्ष दर्शनाङ्कनयोः" इति शास्त्रात्। ईक्षधातोः "गुरोश्च" इत्यप्रत्ययः। ततष्टापि कृत ईक्षाशब्दो निष्पन्नः। ईक्षा दर्शनम्। उत्प्रेक्षेत्यत्र 'खरि च' इति पाणिनिसूत्रेणोदो दकारस्य तकारः। उत्प्रेक्षेति समुदितशब्दस्यार्थस्तु बलात्प्रधानतया दर्शनम् । अत्रेक्षाशब्देन दर्शनं, स्थापनं, स्वीकरणं, आशङ्कनमित्यादीनां संग्रहो विवक्षितः । यत्र यद्वस्तु प्रधानं तस्य वस्तुनस्तत्र प्रधानतया दर्शने बलस्यावश्यकता नास्ति । बलस्यावश्यकता तु यत्र यद्वस्तु प्रधानतया नास्ति तस्य वस्तुनस्तत्र प्रधानतया दर्शने वर्तते। अत इदमर्थसिद्धं, यत्र यन्न विद्यते तत्र तस्य प्रधानतया बलाद्दर्शनम् । अत्रैवमपि बोध्यं, मुख्यगौणभावो द्वयोः संबन्धे भवति। अत्र चैकं रूपद्वयेन कथयन्कविरेकं बलात्प्रधानतया पश्यति ॥

बलात्प्रधानभावेन कवे राजन्यदीक्षणम् ।
उत्प्रेक्षालंकृतिः सा स्यादेषाऽत्यन्तमनोहरा ॥
वस्तुहेतुफलानां तु भेदादेषा त्रिरूपिणी ।
अस्यास्तूदाहृती राजन्क्रमशो दर्शयाम्यहम् ॥

यथा—

मृगस्य पश्चाद्धावन्तं हयं मरुपतेरमुम् ।
कस्तूरीसौरभे लुब्धं समीरं मन्महे वयम् ॥

अत्र धावनमश्वस्य, अतोऽस्मिन्धावने प्रधानताऽश्वस्यैवास्ति। न समीरस्य । तत्र तं समीरं मृगमदपरिमललोभस्वभावरूपबलेन कविः प्रधानतया पश्यति । मृगस्य नाभ्यां कस्तूरी भवति। समीरो गन्धग्राहकः प्रसिद्धः। गन्धवाह इति समीरस्य नामैव। अत्र हयं हयत्वेन समीरत्वेन चोभयरूपेण कथयन्कविः समीरमुक्तबलेन प्रधानतया पश्यति । एवं सर्वत्र बोध्यम् । क्वचिद्विषयस्यानुक्तिश्चेत्तत्र तस्य विषयविषयिभावसंबन्धाल्लाभः ॥

यथावा—

श्रीयशवन्तनृपालः काले सिंहासनाधिरोहस्य ।
दत्वा लक्षं दानं* चकार संधां यदा तु परिपूर्णाम् ॥ १ ॥
निजवंशोन्नतिदर्शाद्रागोऽवर्धत दिवाकरस्वान्ते ।
तत्रामानरुणोदयमिषतो नूनं बहिर्विनिर्यातः ॥ २ ॥

अरुणोदयसमये राजराजेश्वरयशवन्तसिंहस्य राज्याभिषेको जातस्तत्रत्यमिदं वर्णनम् । अत्रारुणोदयशब्देनोदयसमयरागो विवक्षितः । उदयसमये सूर्ये स्वाभाविक्यरुणता वर्तते, अनुरागो नास्ति । परं तु पुत्रपौत्रादीनां वैभवं दानादिकं च विलोक्य पितृपितामहादीनामत्यन्तानुरागो भवतीति प्रसिद्धिः। राजराजेश्वरः सूर्यवंशीयः, अनेन बलेन कविरुदयतः सूर्यस्यारुणतास्थानेऽनुरागममन्यत । उक्तोदाहरणयो-

* मरुधराधीशराठोडराजानामिय प्रतिज्ञा । राज्यतिलकसमये तिलकसमकाल योग्यचारणाय लक्षदानं ददतीति ॥

ईयस्यारुणोदयस्य च वस्तुनः स्थाने पवनरूपस्यानुरागरूपस्य च वस्तुन उत्प्रेक्षास्ति। अतोऽत्र वस्तूत्प्रेक्षा। भ्रान्तावतिसादृश्यनिमित्ताद्वस्तुनः साक्षात्स्वरूपस्य ज्ञानेऽसत्यन्यस्य ज्ञानं भवति। अत्र तु वास्तववस्तुनो ज्ञाने स्थिते तस्य स्थाने बलादन्यस्य विधानम्। इदं तु "मन्ये" इत्याद्युत्प्रेक्षाव्यञ्जकशब्दैरपि स्पष्टम्। धुरंधरेणोत्प्रेक्षाव्यञ्जकशब्दानामियं गणना कृता॥

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोपि तादृशः॥

केनचित्तर्केणाप्युत्प्रेक्षा व्यञ्जिता॥

यथा—

उदरद्वयभरणभयादर्धाङ्गीकृतदारः।
नैवं चेदेकसुतः कथमद्यापि कुमारः॥

महेश्वरपुत्रस्य कार्तिकेयस्य कुमार इत्यपि नाम वर्तते, एतन्नामस्वारस्यबलेनैव कविनेयमुत्प्रेक्षा कृता। अत्र फलोत्प्रेक्षा। वस्तूत्प्रेक्षां स्वरूपोत्प्रेक्षामप्याहुः। वस्तुन उत्प्रेक्षा वस्तूत्प्रेक्षा। तथैव हेतोः फलस्य चोत्प्रेक्षा हेतूत्प्रेक्षा फलोत्प्रेक्षा च भवतः॥

हेतूत्प्रेक्षा यथा—

सैषा स्थली यत्र विचिन्वता त्वां
लब्धं मया नूपुरमेकमुर्व्याम्॥
अदृश्यत त्वच्चरणारविन्द-
विश्लेषदुःखादिव बद्धमौनम्॥

अत्र नूपुरस्य मौने हेतुर्नूपुरस्य स्थिरता, अतो मौने प्रधानता स्थिरताया वर्तते। वियोगव्यथायाः प्रधानता नास्ति। जडे वियोगव्यथायोग्यताया अभावात्। तत्र तां विरहव्यथां, विरहदशायामपि मौनं भवतीत्यस्माद्बलात्कविः प्रधानतया हेतुत्वेन पश्यति॥

यथावा—

नलिनी हंसविश्लेषं यतः सोढुं न चाशकत्।
निमज्जत्यम्बुपूरेषु वर्षायामिति मे मतम् ॥

अत्र नलिन्याः सलिलप्रवेशे हेतुर्जलवृद्धिः, न तु हंसवियोगमूलकमसह्यं दुःखम्। परं तु प्रियवियोगजनितासह्यदुःखसमये स्त्रियो जले निमज्य म्रियन्तेऽपि च, अनेन बलेन कविर्जलवृद्धिरूपहेतुस्थले मरालवियोगजनितमसह्यं दुःखं हेतुतया स्थापितवान् ॥

फलोत्प्रेक्षा यथा—

मध्यंदिनार्कसंतप्तः सरसीं गाहते गजः ।
मन्ये मार्तण्डगृह्याणि पद्मान्युद्धर्तुमिच्छया ॥

अत्र करिणः सरसि प्रवेशस्य फलं तापनिवारणम्, न तु मार्तण्डमित्रं ज्ञात्वा पद्मपीडनम् । परं तु ग्रीष्ममध्यान्हे सूर्यः करिणमत्यन्तं तापयति । अपि च पद्मं सूर्यस्य संबन्धि । शत्रुसंबन्धिनां बाधने लोके रीतिर्वर्तते । अनेन बलेन तापनिवारणरूपफलस्थाने पद्मपीडनं फलमुत्प्रेक्षितम् । वस्तूत्प्रेक्षाया उक्तविषयाऽनुक्तविषयेतिप्रकारद्वयं प्राचीना वदन्ति। "श्रीयशवन्तनृपालः"—इत्यत्र सूर्यस्य स्वाभाविको रागो विषयः । अयमुक्तः । अत इयमुक्तविषया ॥

अनुक्तविषया यथा—

केचिद्रात्रिवधूविलाससमये लग्नं वदन्त्यञ्जनं
शृङ्गारं हृदये सुलग्नमपरे स्नेहात्स्वसेनापतेः ।
मेघोयं रजताचलभ्रमवशाल्लग्नः सुधास्वादना—
त्यक्तुं नेच्छति चन्द्रबिम्बमिति मे राजन्मुरारेर्मतम् ॥

अत्र चन्द्रस्य कलङ्को विषयः। स त्वनुक्तः। अत इयमनुक्तविषया। मम तु मतं, एतेषु विभागेषु लुप्तोपमावच्चमत्कारविलक्षणता नास्ति । एवं प्रकाराङ्गीकार उक्तबलाऽनुक्तबलेत्यपि प्रकारौ मन्तव्यौ स्याताम्। "श्रीयशवन्तनृपालः" इत्यत्र राजराजेश्वरेण राज्याभिषेकसमये लक्षदानं प्रदत्तमिति बलमुक्तम् ॥

अनुक्तबला यथा—

शरद्राकाशशाङ्कोसावुदेत्यवहिता भव ॥
श्वेतच्छत्रममुं मन्ये मदनस्य महीपतेः ॥

अत्र चन्द्रस्य कामच्छत्रताविधाने बलं तु जगज्जेतुः कामनृपस्य संचारसमयः। तस्यानुक्तत्वादियमनुक्तबला। अथ च प्राचीना हेतूत्प्रेक्षाफलोत्प्रेक्षयोः सिद्धास्पदाऽसिद्धास्पदत्वेन प्रकारान्वदन्ति। अत्रास्पदशब्दस्यार्थ आश्रयः ॥

क्रमेण यथा—

रक्तौ तवाङ्घ्री मृदुलौ भुवि विक्षेपणाद्ध्रुवम् ॥

अत्र नायिकायाश्चरणारुणताया हेतुः स्वभावः, न तु भूविक्षेपणम्। स्वभावस्य स्थाने भूविक्षेपणं हेतुतया स्थापितम्। अत्रान्यहेतुस्थापने भूविक्षेपणस्याश्रयः कृतः। अयमाश्रयः सिद्धः। कुत इत्युक्तौ नायिका भुवि संचरत्येव, अतोऽत्र सिद्धास्पदा हेतूत्प्रेक्षा। अत्राश्रयताऽनया रीत्या वर्तते। यथा स्तम्भकरणार्थं काष्ठस्याश्रयणम्। यतस्तेनैव काष्ठेन स्तम्भः क्रियते। तथात्र कंचिदाश्रित्य हेतुः क्रियते। अत्र बलं तु कोमलाङ्गस्य कठिनवस्तुसंयोगजातश्रमवशादरुणतोत्पत्तेः संभवः ॥

त्वन्मुखाभेच्छया नूनं पद्मैर्वैरायते शशी ॥

अत्र शशिन उदये कमलानां म्लानता, कमलविकाससमये च शशिनो द्युतिहीनता भवति। अयमेव वैरभावः। अस्य वैरभावस्य हेतुः स्वभावः। न तु नायिकाया मुखद्युतिरूपैकार्थलिप्सा। स्वभावस्य स्थान एकार्थलिप्सा हेतुतया स्थापिता। अत्रान्यहेतुस्थापन एकार्थलिप्साया आश्रयः कृतः। अयमाश्रयोऽसिद्धः। कुत इत्युक्तावचेतनचन्द्रकमलयोरिच्छा नास्त्येव। अत इयमसिद्धाऽऽस्पदा हेतूत्प्रेक्षा। अत्र बलं त्वेकार्थलिप्सावतां वैरभावप्रसिद्धिः ॥

मध्यः किं कुचयोर्धृत्यै बद्धः कनकदामभिः ॥

अत्र नायिकाया मेखलाधारणफलं तु शोभा, न तु कुचभारधारणम्। शोभायाः स्थाने कुचभारधारणरूपफलं स्थापितम्। अत्रान्यफलस्थापने कुचभारधारणस्याश्रयणं कृतं, तत्तु सिद्धम्। कुत इत्युक्तौ नायिका

कुचधारणं करोत्येव। अत इयं सिद्धास्पदा फलोत्प्रेक्षा। अत्र बलं तु फलभारवतो वृक्षस्य नमनाभावार्थं रज्ज्वा बन्धनं लोकरीतिः॥

प्रायोऽब्जं त्वत्पदेनैक्यं प्राप्तुं तोये तपस्यति॥

अत्र कमलस्य जलसेवनफलं तु निजजीवनम्, न चरणैकताप्राप्तिः। निजजीवनस्थाने चरणैक्यप्राप्तिः फलत्वेन स्थापिता। अत्रान्यफलस्थापने चरणैक्यप्राप्तेराश्रयः कृतः। अयमाश्रयोऽसिद्धः। कुत इत्युक्तौ नायिकायाश्चरणैकताप्राप्तिः जडकमले नास्त्येव। अत इयमसिद्धास्पदा फलोत्प्रेक्षा। अत्र बलं तु वाञ्छितार्थप्राप्तये जले तपःकरणस्य प्रसिद्धिः। मम तु मतं, इदमुदाहरणान्तरं, न तु प्रकारान्तरम्। चमत्कारवैलक्षण्यसाधकाभावात्। अथ च प्राचीना द्रव्यगुणक्रियाजातिभिरपि प्रकारान्तराण्याहुः॥ क्रमेण यथा—

देहस्था दर्पणे यस्य पश्यति प्रतिमामुमा॥
अन्यार्धाभ्यामिवोत्पन्नमर्धनारीश्वरान्तरम्॥

दर्पणे बिम्बस्य वामभागः प्रतिबिम्बस्य दक्षिणभागतया दृश्यते। बिम्बस्य दक्षिणभागः प्रतिबिम्बस्य वामभागतया दृश्यते। अतः पार्वती दर्पणेऽर्धनारीश्वरप्रतिबिम्बं दृष्ट्वा दंपत्योरवशिष्टाभ्यामर्धाङ्गाभ्यां निर्मितमर्धनारीश्वरान्तरमुत्प्रेक्षितवती। जगत्यर्धनारीश्वर एक एव। अतोऽस्य द्रव्यत्वादियं द्रव्योत्प्रेक्षा। "श्रीयशवन्तनृपालः" इत्यत्रानुरागगुणस्योत्प्रेक्षणाद्गुणोत्प्रेक्षा॥

सेनागजाः स्वकरपल्लवलेखनीभि-
र्गण्डस्थलान्मदमषीर्मुहुराददानाः॥
मन्ये नरेन्द्र! तव तोयधितीरताली-
पत्रोदरेषु विजयस्तुतिमालिखन्ति॥

अत्र लेखनरूपक्रियाया उत्प्रेक्षणात्क्रियोत्प्रेक्षा। अत्र बलं त्विदम्। गजाः सेनाङ्गम्। इमे हयरथपदात्यपेक्षयोन्नता भवन्ति। अथ च वर्णनीयगजानां ताडपत्रस्पर्शकरणेनात्यन्तमुच्चत्वं प्रतीयते। अत इमे गजा युद्धचरित्रमधिकमपश्यन्। गजाः सर्वेषु मृगेषु चतुरा भवन्ति।

अथ च ताडपत्रे लिखनस्य रीतिर्वर्तते। "मृगस्य पश्चाद्धावन्तम्" इत्यत्र प्राणोदानादिभेदेनानेकप्रकारकत्वात्पवनो जातिः। अतोत्र जातेरुत्प्रेक्षणाज्जात्युत्प्रेक्षा। प्राचीनाश्चेतनाचेतनवृत्तिभेदादप्युत्प्रेक्षायाः प्रकारावाहुः। "सेनागजाः" इत्यत्र चेतनानां गजानां वर्तनस्योत्प्रेक्षा। अतश्चेतनवृत्त्युत्प्रेक्षा॥

अचेतनवृत्त्युत्प्रेक्षा यथा—

दग्धुः पुष्पशरस्य यत्पुररिपोर्वंशच्छिदो भूभुजां
मातृघ्नस्य च भार्गवस्य च करासङ्गोत्थपापं च यत्॥
तच्छान्त्यै हरकार्मुको निजतनुं तत्याज भक्त्यानघे
तीर्थे मोक्षकरे करे रघुपतेर्नूनं धरावल्लभ!॥

अत्र धनुषोऽचेतनस्य तनुत्यागरूपवर्तनस्योत्प्रेक्षणादियमचेतनवृत्त्युत्प्रेक्षा। कुत्रचिदुत्प्रेक्षा धर्म्याश्रया भवति, कुत्रचिच्च धर्माश्रया भवति॥

क्रमेण यथा—

त्वत्प्राङ्गणे श्रीयशवन्तभूप!
मतङ्गजाः शृङ्खलिनो वसन्ति॥
आवासदानादरिभूपतीना-
माशान्तशैला इव सापराधाः॥

अत्र गजान्धर्मिण आश्रित्य गिरीणामुत्प्रेक्षा कृता॥

नेदं रात्रिनिशाचरीविनिहितं सिद्धाञ्जनं कर्परे
नायं मन्थनजो व्रणो मरुपतौ न स्पर्द्धया श्यामता॥
काङ्क्षत्येष तु मान्यतां द्विजकुले राजा द्विजानां यतो
मन्येऽहं मधुकोषपद्मदलनात्क्रान्तः शशी षट्पदैः॥

अत्र चन्द्रधर्मिणः कलङ्करूपधर्ममाश्रित्य सिद्धाञ्जनादीनामुत्प्रेक्षा कृता। अपि च सिद्धाञ्जनादिनिषेधपूर्वकं भ्रमराणामुत्प्रेक्षणात्प्राचीना अत्र सापन्हवोत्प्रेक्षामपि वदन्ति॥ निषेधो नापन्हव इत्युक्तमपन्हवप्रक-

रणे। अथ चोत्प्रेक्षाव्यञ्जकानां "मन्ये" इत्यादिशब्दानामभावे प्राचीना गम्योत्प्रेक्षानामकं प्रकारं स्वीकुर्वन्ति। मम तु मतं, इमानि सर्वाण्युदाहरणान्तराण्येव, न प्रकारान्तराणीति। क्वापि वस्तुहेतुफलोत्प्रेक्षामध्यादेकाऽन्यस्याः साधिकापि भवति॥

यथा—

तनयमैनाकगवेषणलम्बीकृतजलधिजठर-
प्रविष्टहिमगिरिभुजायमानाया भगवत्या भा-
गीरथ्याः सखीति॥

गङ्गारूपविषये श्वेतता, शीतलता, प्रसरणं, समुद्रप्रवेशश्चेत्येते चत्वारो धर्माः सन्ति। एते चत्वारो धर्मा विषयिणि भुजेप्यपेक्षिताः। एवं च शीतलता श्वेतता चेत्येतौ धर्मौ हिमगिरिसंबन्धादेव सिद्धौ भवतः, परं त्वन्यधर्मद्वयसिद्ध्यर्थं मैनाकगवेषणफलस्योत्प्रेक्षा कृता। परं त्वत्र फलोत्प्रेक्षा न प्रधाना, किं तु भुजरूपवस्तूत्प्रेक्षा प्रधाना। प्रधानवस्तुन एव नाम भवति। अत्र फलोत्प्रेक्षा तु वस्तूत्प्रेक्षायाः साधिका। इवशब्दोप्युत्प्रेक्षाव्यञ्जकः कथितः॥

यथा—

बालेन्दुवक्राण्यविकाशभावा-
द्बभुः पलाशान्यतिलोहितानि।
सद्यो वसन्तेन समागतानां
नखक्षतानीव वनस्थलीनाम्॥

अत्रोपमाशङ्का न कार्या। कुत इत्युक्तौ साधर्म्यमात्रेणोपमासिद्धौ सत्यां वसन्तवनस्थलीरूपनायकनायिकासमागमरूपबलस्यानुसरणं व्यर्थं भवति। अतोऽत्रोत्प्रेक्षाया एव विवक्षा वर्तते। वास्तववस्तुनः स्थानेऽन्यस्य स्थापनेऽन्यस्य बलं साधकं भवति। तथैव वास्तवस्य निर्बलत्वमप्यन्यस्य स्थापने साधकमस्माभिर्दृष्टम्। वास्तवस्य निर्बलत्वमप्यत्रान्यस्मावेकविधं बलमस्ति॥

यथा—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥

अत्रोत्प्रेक्षाव्यञ्जकशब्दो नुशब्दः । अत्र वर्णनीयनायिकाया रचनायां हेतुर्ब्रह्मैव; न तु वसन्तकामादयः । ब्रह्मणः स्थाने वसन्तादयो हेतुतया स्थापिताः। अत्रान्यहेतुस्थापने स्त्रियाः सुन्दररचनाकरणे ब्रह्मणो वृद्धावस्थावेदाभ्यासजडतारूपानिर्बलता वसन्तकामादीनां रचनायाः साधकत्वाद्वसन्तकामादीनामेकाविधं बलम्। धुरंधरदत्तोत्प्रेक्षानाम्नोऽवयवार्थविचारमकुर्वाणाः प्राचीना भिन्नभिन्नलक्षणानि वदन्ति । भगवतो वेदव्यासस्येदं लक्षणम्—

"अन्यथोपस्थिता वृत्तिश्चेतनस्येतरस्य वा ।
अन्यथा मन्यते यत्र तामुत्प्रेक्षां प्रचक्षते ॥" इति ।

अनेन लक्षणेनोत्प्रेक्षायाः संपूर्णं स्वरूपं न सिद्ध्यति। दण्डिन इदं लक्षणम्—

"अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा ।
अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्यथा ॥" इति ।

दण्ड्याचार्यो वेदव्यासस्यैव लक्षणं स्थापितवान्। "अन्यथोपस्थिता" इत्यत्र "अन्यथैव स्थिता" इति। "प्रचक्षते" इत्यत्र "विदुर्यथा" इति पपाठ। अस्मिंस्तु न किंचिद्वैलक्षण्यम्। "मन्यते" इत्यस्य स्थाने पठितः "उत्प्रेक्ष्यते" इतिशब्दः संभावनावाचकः । दण्ड्याचार्योऽस्यालंकारस्य स्वरूपं संभावनामज्ञासीत् । भोजमहाराजो दण्ड्यनुसारी। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ॥ " इति ॥

सर्वस्वरत्नाकरसाहित्यदर्पणकारादयः सर्वे काव्यप्रकाशानुसारिणः। एते सर्वे उत्प्रेक्षायाः स्वरूपमुपमेयस्योपमानतया संभावनां वदन्ति। अस्यालंकारस्य स्वरूपं संभावना न भवति। एवं च हेतूत्प्रेक्षा फलोत्प्रेक्षा-

स्थल उत्प्रेक्ष्यमाणयोरुपमेयोपमानभावाभावादेतेषां लक्षणानामव्याप्तिरपि । एतदपेक्षया चन्द्रालोकस्य लक्षणमेतावत्समीचीनम् । यत्स उपमानोपमेयभावनियमं नाकरोत् । तस्येदं लक्षणम्—

"संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना ॥" इति ।

संभावनायाः स्वरूपं केचित्तु "उत्कट एकतरकोटिकसंशयः संभावना" इति वदन्ति । संदेहे कोटिद्वयं समकक्षं भवति । अत्रैका कोटिरुत्कटा भवति, अर्थात्प्रबला भवति । संदेहस्त्वनियतोभयपक्षावलम्बी, संभावना त्वेकपक्षावलम्बिनी । केचनाहुः, संभावनाज्ञानं तु संदेहनिश्चययोर्मध्यवर्ति, संभाव्यमानविषयिणो दृढत्वात्संदेहाद्विलक्षणत्वम् । विषयस्य शिथिलत्वान्निश्चयादपि भेदः । प्राचीना उत्प्रेक्षालंकारस्य स्वरूपं संभावनेति जानन्ति स्म । अत एनां संदेहालंकाराद्व्यावर्तयितुमुक्तयत्नं चक्रुः । स च प्रमादः । कुत इत्युक्तौ संभावनाया उक्तविलक्षणता तु संदेहस्यैव प्रकारान्तरतायाः साधिका भवेत् । न त्वलंकारान्तरतायाः साधिका । अथ च यद्येतेषां प्राचामिदं तात्पर्यम् । यदुत्प्रेक्षेत्युच्यते तज्ज्ञानं संशयरूपमथवा निश्चयरूपमिति शङ्कायामुत्प्रेक्षाज्ञानं संदेहनिश्चयमध्यवर्ति स्थापितमिति । तदपि नोपपद्यते । कुत इति चेदुत्प्रेक्षाज्ञानं संशयरूपमपि भवति । निश्चयरूपमपि भवति । धुरंधरेणोत्प्रेक्षाव्यञ्जकशब्दः "शङ्के" इत्यप्युक्तः । "ध्रुवम्" इत्यप्युक्तः । संभावनाशब्दस्यार्थो योग्यताप्यस्ति । आह चिन्तामणिकोषकारः । "संभावना योग्यतायाम्" इति । एवं चात्र संभावनाशब्दस्यार्थं योग्यतां मत्वा यद्येवं योजना क्रियते । अन्यस्य स्थापने बलरूपयोग्यतास्तीति । तथा च योग्यताप्युत्प्रेक्षायाः स्वरूपं न भवति । यतो योग्यता तु बहुष्वलंकारेषु वर्तते । उपमायां यदुपमेयमस्ति तस्योपमानभावस्योपमाने योग्यता वर्तते । अपि च तस्योपमानस्योपमेयभावयोग्यतोपमेये वर्तत इत्यादि । अथ च संभावनाशब्दस्यार्थः संभवः क्रियते चेद्वक्ष्यमाणसंभावनालंकारेऽतिव्याप्तिर्भवति । अथ च "सम्यग्भावना संभावना" इति संभावनाशब्दस्य पृथगवयवौ कृत्वार्थः क्रियते, तदा भावनाशब्दस्यार्थः कल्पना भवति । आह चिन्तामणिकोषकारः "भावना कल्पनायाम्" इति । कल्पना तु कल्पितोपमादिष्वनेकेष्वलंकारेषु वर्तते ।

अतः कल्पनासिद्धसमस्तालंकारेष्वतिव्याप्तिर्भवेत्। अथ च भावनाशब्द-स्यार्थोऽधिवासनमपि विद्यते। आह चिन्तामणिकोषकारः। "भावना, अ-धिवासने" इति। अयमर्थः कृतश्चेद्वक्ष्यमाणरूपकस्य विषयः। रूपक उपमानस्य रूपेणोपमेयरञ्जनं वर्तते। तदाह रूपकलक्षणे चन्द्रालोक-कारः--

"विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत्।
रूपकम्" इति॥

मम तु मतं, केनापि प्रकारेणोत्प्रेक्षायाः स्वरूपं संभावना भवि-तुं नार्हति। सूत्रकारो वामन इदं लक्षणमाह—

"अतद्रूपस्याऽन्यथाऽध्यवसानमतिशयार्थमुत्प्रेक्षा॥" इति।

अध्यवसानस्वरूपमतिशयोक्तिप्रकरणे लिखितम्। अध्यवसानं तु केवलोपमानस्य कथने भवति।

यथा--

द्विबाणं कार्मुकं धत्ते हेमवल्ल्यां निशाकरः।

अस्मिंस्थले तु दृढाभेदालंकारः। अत्रोत्प्रेक्षालंकारे तूपमानोपमे-ययोर्द्वयोः कथनमस्ति। अतोऽत्राध्यवसायो नास्ति। सर्वस्वकारो यद्वदति "अध्यवसायस्य सिद्धतादशायामतिशयोक्त्यलंकारः। अध्यवसायस्य साध्यतादशायामुत्प्रेक्षालंकारः" इति। उत्प्रेक्षायां च निगरणं न विद्यते। इदमप्यतिशयोक्तिप्रकरणे सविस्तरं लिखितम्। एवं भेदस्तु प्रकारान्तर-तासाधकः। न त्वलंकारान्तरतासाधकः। अथ च तद्रूपरहितस्य तद्रूपवत्ता-करणं तु रूपकस्य विषयः। अलंकारतिलके भानुदत्त इदं लक्षणमाह—

"उपमैवान्यथाभानरूपोत्प्रेक्षा॥" इति॥

अन्यथाभानरूपोपमैवोत्प्रेक्षा। तात्पर्यमिदम्। अत्रापि भ्रान्त्यादि-वत्साधर्म्ये पर्यवसानमिति। वृत्तावपि लिखितम्। "अन्यथाभानरूपा यो-पमा सैवोत्प्रेक्षा। तथापि संप्रदायानुसारेण पृथगुच्यते" इति। अयमप्यु-त्प्रेक्षायाः स्वरूपं नाजानात्। अत एवमाह। वस्तूत्प्रेक्षायां तु कदाचिदेवं भ्रमस्यावकाशो भवति। परं तु हेतुफलोत्प्रेक्षयोरेवं भ्रमोपि न भवितुमर्हति।

साहित्यसुधासिन्धौ लिखितम्-"अत्र व्यङ्ग्योपमैवालंकारः,उत्प्रेक्षा तु तस्या ज्ञापिका। अनेन हेतुनोत्प्रेक्षायामप्यलंकारव्यवहारः। अथ च संशयभ्रान्तिरूपकादावपि व्यङ्ग्योपमैवालंकारः । वाच्यापेक्षया व्यङ्ग्यं चमत्कारकारि भवति। अतो वाच्या योत्प्रेक्षा तां परित्यज्य व्यङ्ग्यरूपोपमाऽलंकारत्वेन स्वीकृता" इति। अयमप्युत्प्रेक्षादीनां साक्षात्स्वरूपं नाजानात्। तस्मादेवमाह । विरोधादिमूलका अनेकेऽलंकाराः सन्ति। तथा साधर्म्यमूलका अप्यनेकेऽलंकाराः सन्ति। परं त्वेतेषां स्वरूपाण्यत्यन्तविलक्षणानि। तत्तत्स्वरूपेषु चमत्कारस्य पर्यवसानात् । हठेन संशयादीनां पर्यवसानं साधर्म्येऽङ्गीकृतं चेत्साधर्म्यस्य पर्यवसानमुत्कर्षादिषु भवति । तत्तस्यैवालंकारता मन्तव्या स्यात्। अथ चोत्प्रेक्षास्थल उपमायां तात्पर्यं चेत्तस्याः साधर्म्यमात्रेण सिद्धौ बलस्यानुसरणं किमर्थम् ॥

इत्युत्प्रेक्षाप्रकरणम् ॥ २० ॥



## ॥ उदात्तः ॥



उदात्त इत्यत्र "उद्" इत्युपसर्गः प्रकटतायाम्। आह चिन्तामणिकोषकारः-"उद् प्राकट्ये" इति। अत्र प्रकटता निःसंदेहज्ञानम्। आह चिन्तामणिकोषकारः-"प्रकटो निसंदिग्धं भातीति व्यवहारगोचरे" इति। आङित्युपसर्गपूर्वकदाधातोः क्तप्रत्यये कृत आत्तशब्दो निष्पन्नः। आत्तशब्दार्थो गृहीत इति। आह चिन्तामणिकोषकारः "आत्तो गृहीते" इति। उदात्त इति शब्दसमुदायार्थस्तु निःसंदेहज्ञानार्थं गृहीतोर्थः। प्राकट्यार्थं कथितोर्थ उदात्तालंकार इति यावत् ॥

निःसंशयपरिज्ञानकृते योर्थस्तु कथ्यते ॥
उदात्तालंकृतिः सा स्याद्यशवन्तनरेश्वर! ॥

यथा—

योभूपानकरोद्रङ्कान्रङ्कान्भूपाँश्च निर्जलाम् ।

पृथ्वीं च सजलां सोऽयं यशवन्तमहीपतिः ॥

अत्र मरुधराधीशराजराजेश्वरयशवन्तसिंहस्य निःसंदेहज्ञानार्थमुक्तगुणाः कथिताः । अयं यशवन्तसिंहो राजास्तीति कथनादेतावन्मात्रं ज्ञानं भवेदयं यशवन्तसिंहनामको राजेति । तथा च यशवन्तसिंह इति नामको वर्तमानसमये भरतपुरस्य राजाप्यस्ति । यस्य जातिः " जाट " इति प्रसिद्धा । अतो निःसंदेहज्ञानं न भवति, कोयं यशवन्तसिंहराजेति । परं तूक्तगुणकथनेन निःसंशयं ज्ञायते, अयं मारवाड़देशस्य राजा यशवन्तसिंह इति । गुणादयः क्वापि विशेषणरूपा भवन्ति । क्वाप्युपलक्षणरूपा भवन्ति । तत्र सर्वदा वर्तमानं विशेषणम् । कदाचिद्वर्तमानमुपलक्षणम् । अत्र राजराजेश्वर उक्तगुणाः सर्वदा सन्तीति विशेषणरूपाः ॥

यथावा--

नूपुरकः—वँअस्स मंजीरअ ! को इमो सीदाकरग्गहवासनावसन्तलच्छीविलसंतपुलअमुउलजालमंडिदं निअभुजसहआरसाहिजुअलं पुलोअंतो चिट्ठदि ॥

मञ्जीरकः—स एष निजयशःपरिमलप्रमोदितचारणचञ्चरीकचयकोलाहलमुखरितदिक्चक्रवालक्ष्मापालकुन्तलालंकारो मल्लिकापीडो नाम " इति ॥

प्रसन्नराघवनाटकस्य प्रथमाङ्क इदं वर्णनम् । सीतास्वयंवरसमये बहवो राजानः समागताः, तान्नूपुरको मञ्जीरकं पृच्छति । मञ्जीरक उत्तरं ददाति । तत्र "वअस्स मंजीरअ को इमो" इति नूपुरकस्य प्रश्नः । नृपमण्डलस्थितं यं राजानमस्मिन्क्षणे नूपुरको लक्ष्यमकरोत्तस्य "सीदाकरग्गहवासनावसन्तलच्छी " इत्येतच्चेष्टाकथनेन निःसंदेहज्ञानं कारयति । अत्र रोमाञ्चगुण उपलक्षणम् । कुत इत्युक्तौ रोमाञ्चरूपसात्त्विकानुभावस्य सर्वदा संबन्धो नास्ति । कस्मिंश्चित्समये भवति । "स एष मल्लिकापीडः " इतीदं मञ्जीरकस्योत्तरम् । अयं मल्लिकापीडनामकनृपस्य

---

* संस्कृतम्—वयस्य मञ्जीरक ! कोय सीताकरग्रहवासनावसन्तलक्ष्मीविलसत्पुलकमुकुलजालमण्डित निजभुजसहकारशाखियुगलं विलोकयस्तिष्ठति ॥

"निजयशःपरिमलप्रमोदितचारणचञ्चरीकचयकोलाहलमुखरितदिक्चक्रवालक्ष्मापालकुन्तलालंकारः" इति गुणकथनेन निःसंदेहज्ञानमकारयत्। कुत इत्युक्तौ तस्यां सभायां मल्लिकापीड़नामका अन्येपि राजान आसन्। मल्लिकापीड़स्य राज्ञोयं गुणोपि विशेषणरूपः ॥

उदात्तमाला यथा—

अष्टौ येन करेण देशपतयो दिल्लीशितुर्निर्जिता
वीरश्रीगजसिंहभूमिपतिना चोज्जासि भीमो नृपः।
नानाजातियुता हताश्च यवना वै मेघ*मालायुता
दत्तः पुष्परदश्च† तेन‡ मधु वै संपायिताश्चारणाः॥

अत्र स्वहस्तेन चारणानासवं पाययितुर्गजसिंहनृपस्य विषये कालान्तरे शङ्का भवेत्, अयं को वा गजसिंहो राजाऽभूदिति। तस्या निवृत्त्यर्थं वक्ता "अष्टौ येन करेण देशपतयो दिल्लीशितुः" इत्यादिगुणैर्मरुधराधीशं गजसिंहमहाराजं प्रकटमकरोत्। दोषेणापि प्रकटीकरणं भवति ॥

यथा—

येन दत्तं विषं लाक्षामन्दिरे ज्वालिता वयम्।
द्रौपद्या हारितं वस्त्रं सोयं दुर्योधनोऽधमः॥

रणे दुर्योधनं घ्नतो भीमस्य लोकान्प्रतीयमुक्तिरपराधैर्दुर्योधनस्य प्रकटीकरणार्थम्। उदात्ते प्रकटीकरणं वर्तते। अज्ञातज्ञापनं नास्ति। धुरंधरस्य नामार्थानुसारेणोदात्तालंकारस्य स्वरूपं तु मया यत्स्पष्टीकृतं तदेव। उदाहरणैर्भ्रमित्वा प्राचीना अन्यत्स्वरूपमजानन्। धुरंधरस्येमे उदाहरणे—

गुरोः शासनमत्येतुं न शशाक स राघवः।
यो रावणशिरश्छेदकार्यभारेऽप्यविक्लवः॥

राम इति नाम त्वनेकेषां वर्तते, अतः कविर्दशशिरसः शिरश्छेदनसमये विकलो न जात इति गुणेन दाशरथिं रामं प्रकटीचकार॥

---

* मेघमालानामककरिणी † पुष्पदन्तनामको गजः। ‡ पूर्ववर्णितेन करेण॥

रत्नभित्तिषु संक्रान्तप्रतिबिम्बशतावृतः ।
ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः ॥

लङ्केश्वरा अनेके बभूवुः। कविः "रत्नभित्तिषु संक्रान्तप्रतिबिम्बशतावृतः" इति विभूत्या वर्णनीयरावणं प्रकटीचकार । स्वर्गादिलुण्टनेनेदृशविभूतिमाँल्लङ्केश्वरेषु रावण एव जातः । "गुरोः शासनम्" इत्युदाहरणे रामचन्द्राशयस्य महत्त्वं, "रत्नभित्तिषु" इत्युदाहरणे लङ्केश्वरस्य विभूतेर्महत्त्वं च ज्ञात्वा तदनुसरणेन "उद्" इत्युपसर्गस्योर्ध्वमित्यर्थं कुर्वन्नाचार्यदण्ड्युदात्तालंकारस्येदं लक्षणमाह—

"आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम् ।
उदात्तं नाम तं प्राहुरलंकारं मनीषिणः ॥" इति ॥

"उद्" इत्युपसर्गस्योर्ध्वमप्यर्थो वर्तते। आह चिन्तामणिकोषकारः। "उद् ऊर्ध्वे" इति। रमणीयतार्थं लक्षणे "अनुत्तमम्" इति विशेषणं दत्तम्। मम तु मतं, आशयस्य विभूतेर्वा महत्त्वमलंकारान्तरं भवितुं न योग्यम्। महत्त्वे पर्यवसानाङ्गीकारेऽधिकालंकारेऽन्तर्भावो भवेत्। अनया रीत्योदात्तस्यालंकारान्तरत्वाङ्गीकारे तस्य विपरीतभावेऽनुदात्तालंकारोपि मन्तव्यः स्यात् ॥

यथा—

करान्न निर्याति कपर्दिकापि
यस्यास्ति युद्धे न हि धैर्यलेशः ।
सोप्युच्यते पण्डितमण्डलीभि-
र्दाता च शूरो निजकुक्षिपूर्त्यै ॥

अत्राशयस्यामहत्त्वम् ॥

अंशाच्छेखरमंशतो हुतभुजः केलिः प्रदीपास्तथा
अंशाद्वाद्यकला चतुर्भिरपरैः पक्वान्नमंशैर्बहु ॥
तद्वच्चाष्टभिरंशकैर्वितरणं दासादिलोकेऽभव-
दित्थं रूप्यकलैकया परिणयश्चैत्राभिधस्याभवत् ॥

अत्र विभूतेरमहत्त्वम् । मम तु मतं, अनयोरुदाहरणयोरल्पालंकारेऽन्तर्भावो भविष्यति । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"उदात्तं वस्तुनः संपत् ॥" इति ॥

इदं लक्षणं दण्ड्यनुसारि। वृत्तौ लिखति "संपत्समृद्धियोगः" इति। प्रकाशकृतेदमुदाहृतम्—

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ॥
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥

अत्रापि धनाधिक्ये पर्यवसानकरणे त्वधिकालंकारः । परं त्वत्र प्रधानभूतालंकारौ तु तद्गुणो भ्रान्तिश्च । काव्यप्रकाशगतकारिकाकारस्य द्वितीयोदात्तस्येदं लक्षणम्—

"महतां चोपलक्षणम् ॥" इति ॥

उपलक्षणमङ्गभावः ॥

काव्यप्रकाशकारेणेदमुदाहरणं दत्तम्—

तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी ॥
निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः ॥

अत्र महापुरुषो रामचन्द्रो वर्णनीयस्याङ्गिनो दण्डकारण्यस्याङ्गम्। मम तु मतं, महापुरुषस्याङ्गताऽलंकारान्तरं भवितुं नार्हति । अङ्गाङ्गिभावस्तु रसादीनामेव चमत्कारकारी भवति । हठेनैतादृशाङ्गाङ्गिभावेऽप्यलंकारताङ्गीकारेऽस्यापि रसवदादिष्वन्तर्भावो भविष्यति । अस्मिन्धुरंधरदत्तोदाहरणे उदात्तस्य संगतिस्त्वनया रीत्या वर्तते । उक्तगुणेन वर्णनीयवनस्य प्रकटनं कृतमिति । अस्य साक्षात्स्वरूपज्ञानाभावात्प्राचीनैरत्र महापुरुषस्याङ्गत्वमुदात्तालंकारस्य स्वरूपं ज्ञात्वैवं लक्षणं निर्मितम्। सर्वस्वकारः प्रथमोदात्तस्येदं लक्षणमाह—

" संभाव्यमानविभूतियुक्तस्य वस्तुनो वर्णनं

कविप्रतिभोत्थापितमैश्वर्यलक्षणमुदात्तम्॥" इति॥

रम्यत्वार्थं कविप्रतिभोत्थापितमिति विशेषणं दत्तम्। अथ चातिशयोक्तिवारणार्थं संभाव्यमानेति विशेषणं दत्तम्। सर्वस्वकारोपि "मुक्ताः केलिविसूत्रहारगलिताः" इतीदमेवोदाजहार। विमर्शनीकारो वदति। "सर्वस्वस्य लक्षणेऽसंभाव्यमानविभूतियुक्तस्य" इति पाठो वर्तते। कुत इत्युक्तौ संभाव्यमानविभूतियुक्तस्य वर्णनमस्यालंकारस्य न विषयः॥ तद्यथा—

एताश्चकासति गृहोदरकुट्टिमाग्र-
विच्छिद्ररत्नकिरणप्रकरावकीर्णाः।
अभ्युद्गतारुणकराहतिपात्यमान-
नक्षत्रराशिशबला इव यत्र रथ्याः॥

अत्र भगवन्नगर्यां रत्नकिरणप्रकरावकीर्णताया वस्तुतः संभवः। असंभाव्यमानविभूतिवर्णन एवायमलंकारः। अत एव लक्षणे कविप्रतिभोत्थितमित्युक्तम्। एवं सिद्धे सत्यस्योदात्तनामापि सार्थकम्। अथ चालंकारसारकारोप्यमुमतिशयोक्तेः प्रकारमाह।" इति॥ मम तु मतं, असंभाव्यमानवर्णने त्वतिशयोक्त्यलंकार एव भवेत्। विमर्शनीकारस्यायं प्रमादः। किं च सर्वस्वकारस्य लक्षणं काव्यप्रकाशस्य लक्षणखण्डनेन खण्डितम्। द्वितीयोदात्तस्य सर्वस्वकार इदं लक्षणमाह—

"अङ्गभूतमहापुरुषचरितं चोदात्तम्" इति॥

सर्वस्वकारोपि काव्यप्रकाशस्थमेवोदाहरणं ददौ। सर्वस्वकारो वृत्तावलिखत् "महापुरुषचरितमुदात्तं वदन्ति। महापुरुषचरितमत्र न वर्णनीयं किंतु दण्डकारण्यम्, तथाप्युदात्तरूपमहापुरुषचरित्रस्याङ्गतारूपसंबन्धस्य भावादस्याप्युदात्तनाम्नः प्राप्तिर्वर्तते" इति। अयमप्युदात्तालंकारस्य स्वरूपं नाजानात्। साहित्यदर्पणे प्रथमोदात्तस्य विमर्शनीकारमतानुसारेणेदं लक्षणम्—

"लोकातिशयसंपत्तिवर्णनोदात्तमुच्यते॥" इति॥

अयं त्वतिशयोक्तेर्विषयः। अथ च दर्पणे द्वितीयं लक्षणं सर्वस्वा-

नुसारेणोक्तम्। चन्द्रालोककारादयः काव्यप्रकाशानुसारिणः। उदात्तालंकारस्य विषये समस्तप्राचीनानां प्रमादः॥

॥ इत्युदात्तप्रकरणम् ॥ २१ ॥

## ॥ उदाहरणम् ॥

उदाहरणमित्यत्र "उद्" इत्युपसर्गार्थः प्रकाशः। आह चिन्तामणिकोषकारः। "उद् प्रकाशे" इति। "आङ्" इत्युपसर्गार्थ ईषत्। आह चिन्तामणिकोषकारः "आङ् ईषदर्थे" इति। हृञ् हरणे। भावे ल्युट्। एवं च हरणशब्दार्थ आदानम्। उदाहरणमितिशब्दसमुदायार्थः प्रकाशायेषदादानम्। लक्षणोदाहरणे प्रसिद्धे। लोके वस्तुनः स्वरूपप्रकाशनार्थं तन्मध्यादीषत्प्रदर्श्यते। तच्च लोकभाषायां "नमूना, अथवा वानगी" इत्युच्यते। अनेन लोकव्यवहारानुसारेणोदाहरणालंकाराङ्गीकारः॥

प्रकाशाय भवेदीषद्धरणं यत्तु वस्तुनः॥
तदुदाहरणं राजन्नलंकारतया मतम्॥

यथा—

गर्वं न कुर्वन्ति महानुभावा-
स्ते संलभन्ते भुवि पूर्णशोभाम्॥
विलोक्यतां, श्रीयशवन्तसिंह
ऋजुस्वभावाज्जगतो विभूषा॥ १॥

अत्र पूर्वार्धकथितप्रकाशनायोत्तरार्धं ईषद्ग्रहणम्। अलंकाररत्नाकरकार उदाहरणालंकारस्येदं लक्षणमाह—

"सामान्योद्दिष्टानामेकस्य निदर्शनमुदाहरणम्॥" इति॥

यथा—

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम्॥

एको हि दोषो गुणसंनिपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥

अत्रोपमा नास्ति। उपमा तूपमेयोपमानयोर्भेदे सति भवति। अत्र पूर्वोदाहरणे महतां राजराजेश्वरस्य च भेदो नास्ति, किं तु सामान्यविशेषभावः। उत्तरोदाहरणे दोषकलङ्कयोर्गुणकिरणयोर्भेदो नास्ति। किं तु सामान्यविशेषभावः। अपि चात्र सादृश्यं न विवक्षितम्। अत उपमा नास्ति। अत्रैवं शङ्का न कार्या। दार्ष्टान्तिकस्यानेकेषु दृष्टान्तेषु सत्स्वेकस्य दृष्टान्तस्य प्रदर्शनमप्युक्तरीत्योदाहरणमेव। भानुदत्तो दृष्टान्तस्य लक्षणमपीदमाह—

"उदाहरणमुखोऽर्थनिश्चयो दृष्टान्तः॥" इति॥

एवं चोदाहरणालंकारं वक्ष्यमाणदृष्टान्तात्पृथक्कथमङ्गीकरोषि? कुत इति चेद्दृष्टान्तो वर्णनीयदार्ष्टान्तिकस्य न विशेषः। किं त्ववर्णनीयदृष्टान्तानां विशेषः। परं तु विशेषप्रदर्शनाय तस्य कथनं नास्ति। किं तु निश्चयस्थलप्रदर्शनविवक्षया। अतः स उदाहरणालंकारो न भवति। किं तु दृष्टान्तालंकारः। अत्र तु सामान्यार्थस्य हृदयंगमत्वार्थं विशेषस्य प्रदर्शनम्। अतश्चमत्कारपर्यवसानमुदाहरण एव। उदात्तालंकारे तु प्राकट्ये तात्पर्यमस्ति। अत्र त्वंशमात्रेण संपूर्णस्य ज्ञापनम्। अत अनयोरलंकारयोरपि महान्भेदः॥

यथावा—

संजातेऽनुभवज्ञाने शास्त्रज्ञानेन किं ततः॥
स्त्रीणां स्वाभाविकी चेष्टा कृच्छ्राद्वर्ण्या कवीश्वरैः॥

इति योधनगराधीशराजराजेश्वरमानसिंहस्य ॥

॥ इत्युदाहरणप्रकरणम् ॥ २२ ॥

## ॥ उल्लेखः ॥

उल्लेख इत्यत्र "उद्" इत्युपसर्गार्थ उत्कर्षः। आह चिन्तामणिः

कोषकारः। "उद् उत्कर्षे" इति। लिखधातोर्लेखशब्दो निष्पन्नः। "लिख-अक्षरविन्यासे"। भावे घञ्। अक्षरविन्यासो लिपिः। आह चिन्तामणि-कोषकारः। "अक्षरविन्यासो लिपौ" इति। उल्लेख इति शब्दसमुदायार्थ उत्कर्षवती लिपिः, अर्थाच्छ्रेष्ठा लिपिः। दीपकन्यायेन योऽलंकारो भवति तस्य नाम दीपकमिति स्थापितम्। तथैवोल्लेखन्यायेनास्यालंकारस्य भावाङ्कुरंधरोऽस्य नामोल्लेख इति स्थापितवान्। लेखस्येयं रीतिः। एकमप्यकाराद्यक्षरमनेकैर्लेखकैर्लिखितमनेकधा भवति। सदृशं न भवति। इदं प्रत्यक्षम्। अथ च लोके प्रवादोऽप्यस्ति—

"उष्णीषः प्रकृतिर्भाग्यमक्षरं च तथैव गीः॥
*उक्तिर्विवेकिता क्वापि नैकवद्दृश्यते भुवि॥" इति॥

एकस्याप्यक्षरस्य लिपेरनेकधा भवने निमित्तं लेखकानां हस्तक्रियाभेदः। अभ्याससमय एकस्यापि लेखकस्याक्षरलिपिरनेकधा भवति, परं तु तत्र चमत्कारो नास्ति, अतस्तन्निवारणार्थं नाम्न्युत्कर्षार्थस्य "उद्", इत्युपसर्गस्य योजनम्। अभ्यासकालिकी लिपिः श्रेष्ठा न भवति, लिपिः सिद्धावस्थायां श्रेष्ठा भवति। अस्मिन्नलंकार उल्लेखन्यायस्त्वयम्। यदनेकैरेकस्य वस्तुनोऽनेकधावेदनं, भवनमित्यादि॥

अनेकधैकं यत्र स्यादनेकैर्मरुवल्लभ!॥
न्यायेन श्रेष्ठलेखस्य स तूल्लेख इहेष्यते॥

यथा—

रेलाख्ययानस्य जलाशयानां
जानन्ति कर्तारमिमाः प्रजास्ते॥
लक्षप्रदं त्वां कवयोऽरिवर्गा
विध्वंसहेतुं यशवन्तसिंह!॥

अत्रैकमेव यशवन्तसिंहराजराजेश्वरं प्रजाः पालनरुच्या रेलाख्ययानस्य जलाशयानां च कर्तारं जानन्ति। कवयो लाभेच्छया लक्षप्रदं जानन्ति। अरिवर्गा भीत्या विरोधिनां विध्वंसहेतुं जानन्ति॥

यथावा—

* कथनशैली॥

गजत्रातेति वृद्धाभिः श्रीकान्त इति यौवतैः ॥
यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकम् ॥

अत्र पुर्यां प्रविशन्नेक एव कृष्णो मोक्षरुच्या वृद्धाभिरयं गजत्रातेति दृष्टः । कामक्रीडारुच्या युवतीभिरयं श्रीकान्त इति दृष्टः । निष्कामकन्याभिः कौतुकरुच्या यथास्थितः, अर्थाद्गोपालतया दृष्टः ॥

यथावा—

सपत्न्यस्तामनीतिं सुनीतिं प्रियसखीजनः ।
गुरुलोकस्तु लज्जेति प्रीतिं वेद पतिः प्रियाम् ॥

अत्रैकामेव नायिकां सपत्न्यः स्वामिनः स्ववशे करणादनीतिरूपां जानन्ति । सखीजनो यथायोग्यं वर्तनात्सुनीतिरूपां जानाति । गुरुजनः कुलीनाचरणकरणाल्लज्जारूपां जानाति । प्रियतमस्तु प्रियकार्यकरणात्प्रीतिरूपां जानाति । उक्तोदाहरणेषु ग्रहीतॄणामनेकत्वादेकस्य वस्तुनोऽनेकता वर्तते । एतदलंकारचमत्कारस्त्वनेकैरेकस्यानेकतायां वर्तते । एवं च ग्रहीतॄणां भेदादेकस्यानेकतावदाश्रयभेदेन, अर्थादनेकाश्रयभावादथ च विषयभेदादर्थादनेकविषयभावादेकस्य वस्तुनोऽनेकतायामप्युल्लेखालंकारः ॥

क्रमेण यथा—

मूर्ध्न्यद्रेर्धातुरागस्तरुषु किसलयं विद्रुमौघः समुद्रे
दिङ्मातङ्गोत्तमाङ्गेष्वभिनवनिहितः सान्द्रसिन्दूररागः ॥
सीम्नि व्योम्नश्च हेम्नः सुरशिखरिभुवो जायते यः प्रकाशः
शोणिम्नासौ खरांशोरुषसि दिशतु वः शर्म रश्मिप्रतानः ॥

अत्रैकमेव रविरश्मिप्रसरणं गिरिशिखराद्यनेकाश्रयभेदेन धातुरागाद्यनेकधा दर्शितम् ॥

सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ॥

सेर्ष्या जन्हुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥

अत्रैकस्या एव पार्वतीदृष्टेर्विषयभेदादनेकधात्वमस्ति । बुद्धौ यो भासते स विषयः ॥

दीने दयावत्यदया तु दुष्टे
द्रव्येष्वलुब्धा यशसि प्रलुब्धा।
रणे न भीता परलोकभीता
श्लाघ्या मतिस्ते यशवन्तसिंह! ॥

अत्रैकस्या एव राजराजेश्वरयशवन्तसिंहस्य मतेर्विषयभेदेनानेकधात्वमस्ति । सर्वस्वकारस्येदं लक्षणम् ॥

"एकस्यापि निमित्तवशादनेकधा ग्रहणमुल्लेखः" इति ।

चन्द्रालोकस्येमे लक्षणे—

" बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते ॥
एकेन बहुधोल्लेखेप्यसौ विषयभेदतः ॥ " इति ॥

विषयभेदेनैकेन बहुधोल्लेखेऽर्थात्कथनेप्यसावुल्लेखालंकारः। दीक्षितेन चित्रमीमांसायामिमे लक्षणे कृते—

"निमित्तभेदादेकस्य वस्तुनो यदनेकधा ।
उल्लेखनमनेकेन तदुल्लेखं प्रचक्षते ॥
ग्रहीतृभेदाभावेपि विषयाश्रयभेदतः ।
एकस्यानेकधोल्लेखमप्युल्लेखं प्रचक्षते ॥" इति ॥

प्राचीना उल्लेखशब्दार्थं कथनमित्यजानन् । आह चिन्तामणिकोषकारः । " उल्लेखः कथने " इति । एकस्यानेकधा कथने च रूढिरङ्गीकृता । परं त्वत्रैकस्यानेकधाकथनमात्रमेव नास्ति; किं त्वेकस्यानेकधाज्ञानं भाव इत्यादि वर्तते । एवमेकस्यानेकधा कथनं मालोपमादिष्वपि भवति, अतोत्र ग्रहणे कथनाविवक्षां कृत्वा चित्रमीमांसाकारेण लक्षणे ग्रहणशब्दो निवेशितः। अस्मिन्नलंकारे श्रेष्ठलेखन्यायज्ञानेन या रोचकता

यथा चास्यालंकारस्य स्वरूपं स्फुटीभवति, तथान्यथा न भवति। अत्र सहृदयहृदयमेव साक्षि। प्राचीनैरस्यालंकारस्य साक्षात्स्वरूपं न ज्ञातं, अत एव तैर्ग्रहीतृभेदेनाश्रयविषयभेदेन चैकस्यानेकधात्वार्थं भिन्नभिन्नलक्षणानि निर्मितानि। प्राचीना उल्लेखशब्दार्थं कथनं ज्ञातवन्तस्तदा चन्द्रालोके चित्रमीमांसायां च विषयभेदविषय एवमुदाहृतम्—

"गुरुर्वचस्यर्जुनोयं कीर्तौ भीष्मः शरासने॥"

इति चन्द्रालोके॥

गुरुर्वचसि, पृथुरुरसि, विशालो मनसि,
जनकस्तपसि, सुमित्रस्तेजसि,
सुमन्त्रो रहसि, बुधः सदसि,
अर्जुनो यशसि, भीष्मो धनुषि॥"

इति चित्रमीमांसायाम्।

इदं श्लेषसंकीर्णम्। गुरुर्बृहस्पतिरुपदेशकश्च। अर्जुनः पाण्डुपुत्रविशेषः श्वेतश्च। भीष्मः पाण्डवानां पितामहो भयानकश्च। श्लेषरहितस्येदमुदाहरणं दत्तम्—

अकृशं कुचयोः कृशं विलग्ने
विपुलं चक्षुषि विस्तृतं नितम्बे॥
अधरेऽरुणमाविरस्तु चित्ते
करुणाशालि कपालिभागधेयम्॥

मम तु मतं, अस्यालंकारस्य स्वरूपं तु लेखन्यायेनानेकैरेकस्यानेकतायाश्चमत्कारः। "गुरुर्वचसि" इत्यत्रैकस्मिन् राजराजेश्वरे वचनचातुर्यादयोऽनेके गुणाः सन्ति, तान् "गुरुर्वचसि" इत्याद्यनेकप्रकारेणाह। अत्रानेकैरेकस्यानेकतायाश्चमत्कारोऽनुभवसिद्धो नास्ति। यथा "सव्रीडा दयितानने"—इत्यत्रानेकैरेकस्या दृष्टेरनेकतायाश्चमत्कारो वर्तते। अन्यथा बहूपमादिस्थलेष्वप्युल्लेखेन भवितव्यम्। चित्रमीमांसाकार एवाह—

कीर्तिगङ्गाहिमक्ष्माभृदोजःसूर्योदयाचलः ॥
शत्रुसेनाब्धिमन्थाद्रिर्गुणरत्नैकरोहणः॥" इति॥

एवं मालारूपक एकस्यैव राज्ञो यशःप्रभृतिधर्मयोगरूपैरनेकैर्निमित्तैर्हिमाद्र्याद्यनेकप्रकारेणोल्लेखादतिव्याप्तिः । तस्या वारणार्थं लक्षणे ग्रहीतॄणामनेकत्वमित्युक्तम् । तदस्य मतेनाप्यस्यां रूपकमालायामुल्लेखो नास्ति । तदा "गुरुर्वचस्यर्जुनोयं" इत्यत्रोल्लेखः कथं स्यात् । अत्रापि मालारूपकमेव । अथ च "अकृशं कुचयोः" इत्यत्रैकस्यां नायिकायां वस्तुतोऽकृशत्वाद्यनेकं वर्तते। तत्त्वनेकैरेकस्यानेकतावच्चमत्कारस्य द्योतनं न करोति । अस्मिन्नलंकाराङ्गीकारे तु स्वभावोक्तिर्भवति। एतादृशस्थलेषूल्लेखालंकाराङ्गीकारे समुच्चयेप्युल्लेखालंकारेण भाव्यम्। कुत इति चेत्तत्रापि क्वचिदेकस्यानेकताकथनं भवति ॥

यथा—

बुद्धौ शुद्धिरथो मुखे मधुरता लज्जा परं नेत्रयो-
र्गाम्भीर्यं हृदये करे शिथिलता कच्छेऽति निर्बन्धनम्॥
उक्तौ सत्यमुदारता च मनसि स्थैर्यं रणे पादयो-
र्यत्रैतानि भवन्ति मानववरे किं तस्य भूषान्तरैः॥

अपि च चित्रमीमांसाकारो वदति ॥

कीर्तौ विस्फूर्जयन्त्यां ते मृणालक्षीरशङ्किनः ॥
द्वयेपि नागास्तन्वन्ति जिव्हान्तोल्लेखनं मुहुः॥

अस्मिन् भ्रान्त्युदाहरण एकस्या एव कीर्तेरनेकगजभुजङ्गमैर्ग्रहीतृभिर्मृणालदुग्धरूपतयाऽनेकधोल्लेखो वर्तते, अतोऽतिव्याप्तिः । तस्या वारणाय लक्षणे "निमित्तभेदात्" इत्याह । अत्र द्वयोरुल्लेखयोर्यशस एकैव धवलता निमित्तम् । यद्यपि गजभुजङ्गमयोः स्वकीयेष्टाहारप्राप्तिरूपनिमित्तभेदोप्यस्ति । अर्थाद्गजस्य मृणालरूपेष्टाहारस्य प्राप्तिः । भुजङ्गमस्य दुग्धरूपेष्टाहारस्य प्राप्तिरिति । तथापि लक्षणे निमित्तभेदकथनादेकनिमित्ताभावो विवक्षितः । अतोऽत्रोल्लेखो नास्ति ॥

संकुचन्ति सरोजानि प्रहृष्यन्ति चकोरकाः ।

भवत्युत्तरलोऽम्भोधिर्बुध्वा ते शशिनं मुखम् ॥

अत्र ग्रहीतारोऽनेके सन्ति, तथाप्येकस्यानेकधा ग्रहणं नास्ति, अत उल्लेखालंकारो नास्ति। मम तु मतं, "कीर्तौ विस्फूर्जयन्त्यां" इति काव्य उल्लेखालंकारो वर्तते ॥

यथा—

इन्द्राणीमिति मातङ्गाः शार्दूलास्तु शिवामिति।
विदुर्मृगा रोहिणीति कपिस्तां जानकीमिति ॥

इत्यत्रैकस्या एव शत्रुस्त्रिया अनेकधा ज्ञाने तस्याः स्त्रियः सुन्दरतारूपमेकमेव निमित्तम्। अथ च "संकुचन्ति सरोजानि" इत्यत्र नामार्थानुसारेणोल्लेखशङ्काया अवकाश एव नास्ति। एते प्राचीना नामार्थविचारं विना लक्षणानि कृतवन्तः। अथ च तेषु निमित्तभेद इत्यादिविशेषणानि लभ्योदाहरणानुसारेण योजितवन्तः। स तु प्रमादः। आचार्यदण्डी भोजमहाराजो मम्मटश्चेत्येत उल्लेखालंकारं नाकथयन्। अथ चान्यालंकाराणां संकीर्णतयाप्युल्लेखालंकारो भवति ॥

यथा—

किं भानुः किं कृशानुः किमु सुरविटपी कोपि चिन्तामणिर्वा
किं योगी मैथिलेन्द्रः किमुत शुकमुनिर्भार्गवो राघवो वा।
किं कामः किं मधुर्वेत्यरिवरकवयो योगिनो युद्धवीराः
कामिन्यस्तर्कयन्ते मरुधरणिपतिं वीक्ष्य तत्तद्गुणेषु* ॥

अत्रैकस्यैव राजराजेश्वरस्य ग्रहीतृभेदेनानेकधात्वमस्ति। तत्संदेहसंकीर्णम् ॥

छत्रं शिरःसु भूपानां हारो योषित्कुचोपरि।
रसिकानां शिरोभूषा यशवन्तयशोऽजनि ॥

अत्रैकस्यैव राजराजेश्वरस्य यश आश्रयभेदेनानेकप्रकारकं भवति। अयं परिणामसंकीर्णः ॥

---

* अरिकवियोगियुद्धवीरकामिनीभिः सह क्रमेण द्वे द्वे वाक्ये योजनीये ॥

वेदैः स्तुता या जगतामधीशा
श्चित्ते मतिः सा तव तख्तसिंह! ॥
जाता च लज्जा नयनद्वयान्त-
र्हस्ते च जाता खलु खड्गवल्ली ॥

अत्रापि परिणामसंकीर्णता ॥

वीरश्रीयशवन्तसैन्यपटहध्वानश्रवाद्विद्रुताः
कान्तारे रिपुयोषितो विधिवशाद्व्रजन्ति हिंस्राः स्वयम् ॥
इन्द्राणीति गजाः शिवेति हरयः सीतेति शाखामृगा
एणाश्चन्द्रवधूरिति ध्रुवधियः कुर्वन्ति सेवाविधिम् ॥

अत्रैकामेव राजराजेश्वरयशवन्तसिंहस्य शत्रुस्त्रीं गजादयोऽनेके स्वस्वसंबन्धानुसारेण शचीत्याद्यनेकधा जज्ञुः। अत्र भ्रान्तिसंकीर्णता ॥

व्यङ्ग्योल्लेखो यथा—

वज्रं सौराज्यसाक्षी परिकलितमहाः शक्तिमार्द्रापराधो
दण्डं खड्गं रिपुस्त्रीप्रसभहरणवित्कूपवाप्यादिदृश्वा ॥
पाशं पाणावपश्यन्ध्वजमपि बलवित्कोषवेदी गदां च
स्वाच्छन्द्यज्ञस्त्रिशूलं लिखति करतले देव चित्राकृतौ ते ॥

राज्ञो विभवसाक्ष्यादयो राज्ञश्चित्रनिर्माणे वज्राद्यायुधधारणं कारयन्ति। इन्द्रस्य वज्रम्, अग्नेः शक्तिः, यमस्य दण्डः, निर्ऋतेः खड्गः, वरुणस्य पाशः, वायोर्ध्वजः, विष्णोर्गदा, महादेवस्य त्रिशूलं, इत्यायुधानि। अत्रैकस्यैव राज्ञ इन्द्रादिरूपतयाऽनेकधात्वं व्यङ्ग्यम् ॥

इत्युल्लेखप्रकरणम् ॥ २३ ॥

## ॥ काव्यार्थापत्तिः ॥

आपत्तिरापतनम्। अर्थस्यापतनमर्थापत्तिः। मीमांसादिशास्त्रे-

ऽर्थापत्तिप्रमाणं स्वीकृतम्। तत्रार्थस्यापतनमनुपपत्तिज्ञानाद्विवक्षितम्। अनुपपत्तिशब्दस्याक्षरार्थस्तूपपत्त्यभावः। एकार्थं विनाऽन्यार्थस्यानुपपत्तौ तस्यार्थस्यापतनं भवति। अर्थापत्तिप्रमाणस्येदमुदाहरणम्—

"पीनो देवदत्तो दिवा न भुङ्क्ते" इति॥

अत्र दिने भोजनमकुर्वतो देवदत्तस्य रात्रिभोजनमन्तरा पुष्टत्वमनुपपन्नमित्यनुपपत्तिज्ञानाद्रात्रिभोजनमापतति। शास्त्रकारैरेवेदृशार्थापत्तिप्रमाणस्यानुमानप्रमाणेऽन्तर्भावः कृतः। अनुमानप्रमाणस्य च ज्ञापकहेत्वलंकारेऽन्तर्भावो भवतीत्यन्तर्भावाकृतौ प्रदर्शयिष्यते। अतः शास्त्रीयार्थापत्तिप्रमाणात्पृथक्करणार्थं धुरंधरेण काव्येति विशेषणं नाम्नि निवेशितम्। काव्यरीत्याऽर्थाद्येनकेन प्रकारेण रमणीयतामात्रेणार्थस्यापतनमस्मिञ्शास्त्रेऽलंकारः। यथा प्रबलकार्यकरणसामर्थ्ये निर्बलकार्यकरणरूपोऽर्थ आपतति॥

अर्थस्यापतनं यत्र काव्यरीत्या भवेन्नृप॥
काव्यार्थापत्तिराख्याताऽलंकृतिः कविपुङ्गवैः॥

यथा—

सुयशो भोजराजस्य त्वदीययशसा जितम्॥
का कथाऽन्यमहीपालयशसां मरुवल्लभ!॥

राजराजेश्वरयशवन्तसिंहस्य यशो भोजमहाराजस्य यशोऽजयदिति कथनेनाऽन्यराजयशसो जयकरणमापतितम्॥

यथावा—

"स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम्॥"

अत्र नायिकामुखं चन्द्रमजयदिति कथनेन कमलानां जयकरणमापतितम्। सर्वस्वस्येदं लक्षणम्—

"दण्डापूपिकयाऽर्थापतनमर्थापत्तिः॥" इति॥

दण्डापूपन्यायेनार्थस्यापतनमर्थापत्तिरित्यर्थः। दण्डापूपन्यायस्त्वयम्। मूषिकया दण्डभक्षणं कृतमिति कथने तल्लग्नापूपभक्षणमापतति।

यतो दण्डस्य भक्षणे तल्लग्नापूपः कथं वा शिष्यते। अलंकाररत्नाकरकारादयः सर्वस्वानुसारिणः। चन्द्रालोकस्येदं लक्षणम्—

"कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते॥" इति॥

कैमुत्यन्यायेनार्थस्य सिद्धौ काव्यार्थापत्तिरलंकार इष्ट इत्यर्थः। किंशब्दार्थो निषेधः। उतशब्दार्थः प्रश्नः। उक्तं च चिन्तामणिकोषकारेण "किम् निषेधे। उत प्रश्ने" इति। किमुतेति शब्दसमुदायार्थस्तु प्रश्ननिषेध इति। किमुत, एव कैमुत्यम्। स्वार्थे ष्यञ्। कैमुत्यन्यायस्तु सामान्यः। दण्डापूपिकान्यायस्तु कैमुत्यन्यायस्य विशेषः। "मूषिकया दण्डो भक्षितः" इत्युक्ते "तल्लग्नापूपस्य भक्षणं कृतं न वा" इति प्रश्नस्य निषेधः। कुत इत्युक्तौ दण्डो भक्षित इत्युक्ते दण्डलग्नापूपभक्षणं स्वयमापतति। मम तु मतं, एकस्य वस्तुनोऽनेकेषां प्रकाशकत्वे दीपकन्यायस्य, अनेकैश्चैकस्यानेकधाभावे चोल्लेखन्यायस्य चमत्कारोऽस्ति। तादृशोऽर्थापतन उक्तन्यायस्य चमत्कारो न विद्यते। इदं चानुभवसिद्धम्। तादृशचमत्कारे तु धुरंधरोऽस्यालंकारस्य नामापि तथैव दण्डापूपिकेति कैमुत्यमिति वा किमिति न कुर्यात्। नवीनानामिदं गौरवकरणं प्रमादः। लाघवस्य समस्तशास्त्रेषु स्वीकारात्॥

यथावा—

पञ्चाननपदोद्भूतरजःस्पृष्टतृणोच्चयः॥
ऊर्ध्वशुष्को न चाखादीन्मृगैः स्वादुतरोपि सन्॥

सिंहपदोद्भूतरजःस्पृष्टतृणानि भक्षयितुं मृगा न शक्नुवन्ति। अत्र सिंहभक्ष्यं को वा भक्षयितुं समर्थ इत्यस्यार्थस्यापतनम्। इदमुदाहरणमप्रस्तुतप्रशंसासंकीर्णम्। न च वाच्यं, आक्षेपार्थोपि व्यङ्ग्यार्थ इति स्वीकारादाक्षेपशब्दार्थो हि "आ समन्तात् क्षिप्यते प्रेर्यत इत्याक्षेपः" इति। तथा चार्थस्यापतनमप्याक्षेप एव। पुनश्च काव्यार्थापत्तिर्व्यङ्ग्याद्भिन्नीभूय कथमलंकार इति? कुत इति चेदत्र बलात्कारेणार्थसिद्धस्यार्थान्तरस्यापतनम्। तच्च स्थूलरूपतया वाच्यार्थप्रायम्। व्यञ्जनावृत्तिलभ्यो न जीववत्सूक्ष्मः। इदंचानुभवसिद्धम्॥

॥ इति काव्यार्थापत्तिप्रकरणम्॥ २४॥



## ॥ क्रमः ॥

क्रमस्त्वनुक्रमः। आह चिन्तामणिकोषकारः- "क्रमोऽनुक्रमे" इति। यथा वृक्षे मूलं काण्डं शाखा पल्लवः पुष्पं फलमिति क्रमोऽस्ति।

शब्दानामथवाऽर्थानां क्रमेण कथनं नृप!।
क्रमाख्यं भूषणं प्राहुः सर्वेऽपि विदुषां वराः॥

भोजमहाराजस्येदं लक्षणम्—

शब्दस्य यदि वाऽर्थस्य द्वयोरप्यनयोरथ॥
भणनं परिपाट्या यत्क्रमः स परिकीर्तितः॥" इति॥

शब्दक्रमो यथा—

नवघनहिमराशिस्वर्णभूभृत्सवर्णाः
कधिगिरिकमलेषु स्थायिनो लोकनाथाः।
विपवृषकलहंसा यानभूताश्च येषां
हरिहरविधयस्त्वां पान्तु राठोड़नाथ!॥

अत्र हरिहरविधीनां वर्णस्थानवाहनानि क्रमेण कथितानि, अतः शब्दानां परिपाटी। अर्थपरिपाटिः कालेन देशेन च द्विधा।

क्रमेण यथा—

हस्ते लीलाकमलमलकं बालकुन्दानुविद्धं
नीता लोध्रप्रसवरजसा पाण्डुतामाननश्रीः॥
चूडापाशे नवकुरबकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम्॥

लोध्रपुष्परजसा वदनश्रियः पाण्डुरीकरणं क्वचिद्देशविशेषे प्रसिद्धम्। तदनुसारेणेदं वर्णनम्। अत्र कमलं शरदि भवतीत्यादिर्ऋतुपरिपाटिर्गम्या। अयमर्थानां क्रमः। स च कालरूपः॥

पायाद्वो रचितत्रिविक्रमतनुर्देवः स दैत्यान्तको
यस्याकस्मिकवर्द्धमानवपुषस्तिग्मद्युतेर्मण्डलम् ॥
मौलौ रत्नरुचि श्रुतौ परिलसत्ताटङ्ककान्ति क्रमा-
ज्जातं वक्षसि कौस्तुभाभमुदरे नाभौ सरोजोपमम् ॥

अत्र वामनभगवतो वृद्धिसमये क्रमेण मौलिश्रुतिवक्षोनाभिदेशेषु संबद्धस्य सूर्यमण्डलस्य चूडारत्नताटङ्ककौस्तुभकमलैर्योयमौपम्यलाभः सोयमत्र शिखामारभ्य वर्णने देशपरिपाटिरूपोऽर्थानां क्रमः । शब्दार्थोभयपरिपाट्योर्मिश्रण उभयपरिपाटिः । सा च द्विविधा । शब्दप्रधाना, अर्थप्रधाना च ।

क्रमेण यथा—

करनयनाधरवदनैर्विजितं पङ्के सरोवरे वृन्ते ।
नभसि च कञ्जं कुमुदं बिम्बं चन्द्रं निचिक्षिपे स्रष्टा ॥ १ ॥

अत्र पङ्कजकुवलयबिम्बीफलचन्द्रमसां करनयनाधरवदनैर्यथासंख्यं पराजय इति शब्दपरिपाट्यैव पङ्कजानि पङ्के न्यस्तानि, कुवलयानि ह्रदे क्षिप्तानि, बिम्बं वृन्ते प्रकीर्णम्, चन्द्रो नभसि निरस्त इत्याधाराणामुपर्युपरिभावः । क्रियाणां च त्यागतारतम्यमित्यर्थपरिपाटिर्न्यग्भवति। सोयं शब्दप्रधानोभयपरिपाटीक्रमः । वस्तुसमुदायं हस्ते समादाय हस्तदोलनं कृत्वा यदा प्रकीर्यते तदा क्रमशः किञ्चिद्भूमौ किञ्चिदन्तरिक्षे किञ्चिदाकाशे पतति ॥

गङ्गे देवि दृशा पुनीहि यमुने मातः पुनर्दर्शनं
संप्रश्नोस्तु पितः प्रयाग भगवन्न्यग्रोध मां ध्यास्यसि ।
त्वं हारासिलतावतंसविपुलस्थूलांसवक्षोभुजां
पुंभावं भवतामवन्तिनगरीनाथं दिदृक्षामहे ॥

अवन्तिरित्युज्जयनीनगरस्य नाम । उज्जयन्यां यो महाकालेश्वरो महादेवः, स तु निरञ्जनो निराकारः, तस्य पुरुषरूपता तु गङ्गादिभिर्जाता । हे गङ्गे त्वं तस्य हाररूपा, हे यमुने त्वं खड्गलतारूपा, हे प्रयाग त्वं अवतंसरूपः, हे न्यग्रोध त्वं विपुलस्थूलांसवक्षोरूपः । अत्र

गङ्गायमुनाप्रयागन्यग्रोधमहाकालेश्वराणां यात्राकरणपरंपरारीतिरर्थपरिपाटिः। गङ्गायमुनाप्रयागन्यग्रोधा हारखड्गावतंसविपुलस्थूलांसवक्षोरूपाः शब्दपरिपाटी, सा चोक्तयाऽर्थपरिपाटया न्यग्भूता, अतोत्रार्थप्रधानोभयपरिपाटिः। आचार्यदण्डी रुद्रटवाग्भटप्रभृतयश्च शब्दक्रमस्यैव क्रमालंकारत्वमङ्गीकुर्वन्ति। दण्डयाचार्यस्येदं लक्षणम्—

"उद्दिष्टानां पदार्थानामनूद्देशो यथाक्रमम्।
यथासंख्यमिति प्रोक्तं संख्यानं क्रम इत्यपि॥" इति।

पूर्वोद्दिष्टपदार्थैः सह पश्चादुक्तपदार्थानां यथाक्रमं संबन्धो यथासंख्यमिति कथितम्। इदं संख्यानं क्रम इत्यप्युच्यते। काव्यप्रकाशेप्येतदनुसार्येव लक्षणम्। अलंकाररत्नाकरकारस्त्वर्थक्रमस्यैवालंकारत्वमाह। तस्येदं लक्षणम्--

"आरोहावरोहादिः क्रमः। क्रमेणेत्यनुषज्यते" इति।

यथा--

नन्वाश्रयस्थितिरियं तव कालकूट!
केनोत्तरोत्तरविशिष्टपदोपदिष्टा।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठे पुनर्वससि वाचि पुनः खलानाम्॥

अत्र कालकूटस्य हृदयाद्युत्तरोत्तरोच्चस्थानप्राप्तिरारोहक्रमेण वर्तते। यद्यप्यत्रैकस्य कालकूटस्यानेकेषु स्थानेषु क्रमेण वर्तनात्पर्यायोऽस्ति, तथाप्युत्तरोत्तरमुच्चस्थानप्राप्तिरूपः क्रमोपि वर्तते॥

यथावा—

तव राज्याभिषेकस्य होमधूमो मरुप्रभो!।
सौधशृङ्गं स्पृशत्यादौ ततो भास्करमण्डलम्॥

अत्र धूमः सौधाग्रमपरित्यज्य भास्करमण्डलमगात्। अतोत्र पर्यायच्छायापि नास्ति॥

यथावा—

शिरः शार्वं स्वर्गात्पशुपतिशिरस्तः क्षितिधरं
महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् ।
अधोधो गङ्गेयं स्वयमुपगता नूनमथवा
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥

अत्र गङ्गायाः शिवशिरःप्रभृत्युत्तरोत्तरमधःस्थानप्राप्तिरवरोहक्रमः। लक्षण आदिपदस्याधानादिदं सूचितम् । आरोहावरोहातिरिक्तक्रमेपि क्रमालंकारो भवतीति ॥

यथा—

प्रथमं पीयते दृष्ट्या ततो नासिकया सुरा ।
अनन्तरं रसनया यत्सौधेषु मृगीदृशा ॥

मद्यपानसमये तस्य तिक्तताबलाच्छिरःकम्पनादयश्चेष्टा भवन्ति। तथैव स्त्रीणां स्वभावादसहनतासूचिका मद्यपानपात्रभरणसमये मद्यदर्शनेन तस्य समीपानयने गन्धागमनमात्रेणापि च तादृशी चेष्टा भवति। अतो दृष्ट्या नासिकयापि च स्त्रीणां मद्यपानकरणमुक्तम् । लोके खाद्यपेयवस्तूनि प्रथमं दृष्ट्वा पश्चादाघ्राय दृष्ट्या नासिकयापि च परीक्षां कृत्वा खादन्ति, पिबन्ति वा । सोयं क्रमोत्र प्रतीयत इति क्रमालंकारः ॥

यथावा—

नीलाब्जानां नयनयुगलद्राघिमादत्तपत्रः
कुम्भावैभौ कुचपरिकरः पूर्वपक्षीचकार ॥
भ्रूविभ्रान्तिर्मदनधनुषो विभ्रमानन्ववादी-
द्वक्त्रज्योत्स्नाशशधररुचं दूषयामास यस्याः ॥

शास्त्रार्थे पूर्वं पत्रदानं, पश्चात्पूर्वपक्षः, ततोऽनुवादः, तदनन्तरं च खण्डनं भवतीत्यस्य क्रमस्य स्फूर्तेः क्रमालंकारः। शब्दपरिपाटीं क्रममलंकारमनङ्गीकुर्वतामयं सिद्धान्तः। उद्देश्यविधेयानां क्रमेणाकथनेऽक्रमो दोषः, क्रमेण कथनं तु दोषवारणमात्रम्, न त्वलंकार इति । शब्द-

परिपाटिं क्रममलंकारमङ्गीकुर्वतामयं सिद्धान्तः । तत्तदुद्देश्यैः सह तत्तद्विधेया अपि वक्तुं शक्याः, परं तूद्देश्यानेकीकृत्य तेषां क्रमानुसारेण तत्तद्विधेयानेकीकृत्य कथने चमत्कारोऽनुभवसिद्धः। अत्र सहृदयहृदयमेव साक्षि । अर्थपरिपाट्यां क्रमालंकारमनङ्गीकुर्वतां सिद्धान्तस्तु पदार्थानां वास्तवपरिपाट्या कथने न कश्चिच्चमत्कारः । यथा मनुष्यस्य बाल्यकौमारयौवनवार्द्धक्यपरिपाट्यादौ । अर्थपरिपाट्यां क्रमालंकारमङ्गीकुर्वतामयं सिद्धान्तः, क्वापि स्वतः परिपाटिरागच्छति चेत्सा चमत्कारकारिणी भूत्वाऽलंकारो भवतीति। अत्रापि सहृदयहृदयमेव साक्षि। "हस्ते लीलाकमलम्" इत्यत्र स्त्रीणां पुष्पाणि शृङ्गारा भवन्ति। तेषां समुच्चयकरणे शरदाद्यृतूनां परिपाट्याः स्वत आगमनं क्रमालंकारः। तथाहि कमलं शरदि, कुमुदं हेमन्ते, लोध्रपुष्पं शिशिरे, कुरबकं वसन्ते, शिरीषं ग्रीष्मे, नीपं वर्षायाम्, इत्येवं रीत्या षड्तुषु स्त्रीणां पुष्पाणि शृङ्गारा भवन्ति। "पायाद्वो रचित" इत्यत्र भगवतो वामनस्य शरीरवर्द्धनसमये शरीरस्योपर्युपरिगमनमारोहक्रमः। अपि च रवेः प्रथमं वामनस्य शिरःस्पर्शः, पश्चाच्छ्रवणादावधोधःस्पर्शादवरोहक्रमः। एतौ क्रमावलौकिकत्वाभावान्नालंकारः। परं तु शिरःप्रभृतिसंबन्धेन सूर्यस्य शिरोरत्नप्रभृतिभूषणरूपपरिणामप्राप्त्या शिखामारभ्य वर्णनक्रमस्यागमः क्रमालंकारः। "शिरः शार्वम्" इत्यत्र गङ्गा स्वर्गान्मर्त्यलोकमवतरन्ती सोपानक्रमेण बुद्धिपूर्वकं नावातरत्, किं तु हिमाचलनिवासी हरो गङ्गाया वेगसहनार्थं भगीरथेन प्रार्थितस्तां स्वशिरसि प्रथमं दधौ । इत्यादिवर्णन एवं रीत्या सोपानक्रमस्य स्फुरणं क्रमालंकारः। "पङ्क्त्र पङ्क्तिश्र"- इत्यत्र शब्दपरिपाट्याऽलंकारता प्रागुक्ता। एतेषां वस्तूनां वास्तव उपर्युपरिभावक्रमो नालंकारः। किं तु धान्यकणादीन्यनेकानि वस्तूनि हस्त आदाय हस्तदोलनं कृत्वा प्रक्षिप्यन्ते, तर्हि तेषां पतन आरोहक्रमो भवति। अत्र तस्य क्रमस्य स्फूर्तिः क्रमालंकारः। एवमन्यदपि ज्ञातव्यम्। ननूक्तक्रमो व्यङ्ग्यः, कथमस्यालंकारत्वमिति नाशङ्कनीयम्। अत्र न केवलं व्यङ्ग्यरूपश्चमत्कारः, किं तु व्यङ्ग्यार्थगतविचित्ररूपः क्रमः प्रधानतया

चमत्कारकारित्वादलंकारः । मम तु मतं, शब्दपरिपाटिरर्थपरिपाटिश्चो-भेऽलंकारतया भवितुं योग्ये, इति ॥

॥ इति क्रमप्रकरणम् ॥ २५ ॥



## ॥ तद्गुणः ॥



तस्य गुणोऽस्मिन्नस्तीति तद्गुणः। तात्पर्यं त्वन्यदीयगुणस्य संबन्ध इति । बहवो ग्रन्थकारा वर्णस्य तद्गुणताया एवोदाहरणानि दर्शयामासुः। अत एव ज्ञायते लभ्योदाहरणानुसारेण वर्णस्यैव तद्गुणतायां तद्गुणं स्वीचक्रुरिति । परं त्वत्र गुणशब्दो धर्ममात्रपरः । उक्तं च चिन्तामणिकोषकारेण " गुणः शुक्लादौ । शौर्यादौ " इति। वर्ण एव नियमकरणे त्वाकृत्यादेरसंग्रहः । अथ च गुणदोषयोरपि संग्रहो न भवेत् । अतो रत्नाकरकारः " अन्यधर्मस्वीकारस्तद्गुणः " इति सर्वसंग्राहकं लक्षणमाह । तत्तु समीचीनम् । परं त्वत्र स्वीकार इति कथनं न सम्यक् । कुत इति चेत्स्वीकारस्त्विच्छापूर्वकग्रहणं, स तूदाहरणेषु सर्वत्र नोपलभ्यते ॥

**परकीयस्य गुणस्य हि संबन्धस्तद्गुणो राजन् ।**
**वर्णाकृतिशीलाद्यैस्तस्योदाहृत्यनन्तता ज्ञेया ॥**

यथा—

इभानैरावतान्कुर्वन्सर्पाञ्छेषानशेषतः ।
ददात्युच्चैःपदं सद्भ्यो यशस्ते मरुवल्लभ ! ॥

अत्र श्वेतवर्णो न्यायशास्त्रमतीयो गुणः। उच्चैस्त्वं समस्तशास्त्रमतसिद्धो गुणः ॥

यथावा—

पङ्काद्यं तु समुद्धृत्य स्वसमं यद्व्यधादलिः ॥
विस्मरेदुपकारं तं कथं कीटो महीपते ! ॥

अत्र वर्णाकृतिशीलानां त्रयाणां संबन्धः। अत्र परिणामाप्रस्तुतप्रशंसयोः संकीर्णता। भ्रमरः कीटमादाय स्वसदृशं करोतीत्यभिप्रायेण वेदान्ते भ्रमरकीटन्यायस्य प्रसिद्धिः॥

यथावा—

निरन्तरं प्रियध्यानात्प्रियीभूता मृगेक्षणा॥
स्वात्मानं दर्पणे वीक्ष्य प्रणयं कुरुतेतराम्॥

अत्र शीलमात्रस्य संबन्धो ध्यानरूपप्रियसंसर्गाज्जातः॥

यथावा—

विषं फणिमुखे राजन्कर्पूरं कदलीगतम्॥
मौक्तिकं शुक्तिकागर्भे जायते स्वातिसीकरः॥

स्वातिनक्षत्र उक्तस्थलेषु पतितो मेघबिन्दुरेवंरूपो भवतीति लोकप्रसिद्धिः। अत्र स्वातिसीकरस्याहिसंगत्या दोषरूपदुर्गुणस्य, कदलीशुक्तिकयोः संगत्या च गुणस्य संबन्धो जातः। अत्र परिणामोल्लेखयोः संकीर्णता॥

यथावा—

भवति हि सङ्गाद्दोषः सखि कथनं नो मृषा भवत्येतत्॥
कुटिलभ्रुवोस्तु सङ्गात्कुटिलगती ते विलोचने दृष्टे॥

अत्राकृत्याः संबन्धः। काव्यप्रकाशानुसारिसर्वस्वस्येदं लक्षणम्—

"स्वगुणत्यागादत्युत्कृष्टगुणस्वीकारस्तद्गुणः"॥ इति॥

अस्मिँल्लक्षणे स्वगुणत्यागोऽत्युत्कृष्टगुणस्य स्वीकारश्चेत्यंशद्वयमुपात्तम्। स तु प्रमादः। कुत इति चेत् "इभान्"—इत्यत्र राजराजेश्वरयशवन्तसिंहस्य यशसा, इभादयः श्वेता अभवन्। तत्र ते स्वीयश्यामगुणादित्यागं नाकुर्वन्। यथा "पङ्कात्" इत्यत्र कीटः कीटत्वं परित्यज्य भ्रमरो भवति। किं तु राजराजेश्वरयशसः श्वेतगुणेन श्यामादिवर्णस्याच्छादनमभूत्। अत्र तद्गुणस्य प्राधान्यात्पिहितालंकारो नास्ति। किं

तु पिहितसंकीर्णतास्ति। किं चोत्कृष्टशब्दस्य तात्पर्यमपकृष्टाभावे चेत् "सङ्गात्संजायते" इत्यत्रापकृष्टधर्मसंबन्धेऽव्याप्तिर्भवेत्। उत्कृष्टपदेन प्राबल्यस्य विवक्षायां

शेषः श्रीकण्ठकण्ठस्य संपर्काच्छ्यामलोऽभवत् ॥
पुनस्त्वद्यशसः सङ्गाच्छ्वेतोऽभून्मरुवल्लभ! ॥

एतादृशस्थले तु गुणस्य प्राबल्यात्तद्गुणो भवति। कुत इत्युक्तौ हरगलस्थगरलेन श्यामतायाः प्राबल्याच्छेषस्य श्वैत्यमाच्छाद्य श्यामत्वं कृतम्। शेषस्य श्वेतता प्रबला चेद्धरगलस्थगरलं श्वेतं कुर्यादेव। एवं गरलसंपर्कजनितायाः शेषस्य श्यामताया अथवा गरलस्य श्यामताया राजराजेश्वरयशोधावल्यापेक्षया प्राबल्यं चेद्यशः श्यामं कुर्यादेव। परं तु राजराजेश्वरयशसः श्वेततायाः प्राबल्यात्तादृशशेषस्य शिवगलगरलसंबन्धे सत्यपि पुनः श्वेतता जाता। परं तु "सङ्गात्"—इत्यत्र ज्ञातयौवनायाः सखीकृतपरिहासरूपोत्प्रेक्षायां भ्रुवोः कौटिल्येन स्वीयप्राबल्येन सरलनेत्रयोः कौटिल्यं न कृतं, किं तु तत्संसर्गमात्रेण नेत्राभ्यामपि कौटिल्यमधारि, एतादृशस्थलेऽव्याप्तिः स्यात्। चन्द्रालोकस्येदं लक्षणम्—

"तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः।" इति।

काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत्।
वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः ॥" इति।

ग्रहणशब्दस्यानावश्यकत्वं पूर्वमुक्तम्। अपि चात्रोज्ज्वलताया अर्थः श्वेततेति क्रियते चेत् "प्राप्य कान्ताकरस्पर्शं मुक्ता माणिक्यतां गता" इत्यत्राव्याप्तिर्भविष्यति। अथ चोज्ज्वलताया अर्थ उत्कृष्टतेति क्रियते चेदपकृष्टतास्थलेऽव्याप्तिर्भविष्यति। प्राचीनालभ्योदाहरणानुसारेण भ्रमित्वा धुरंधरस्य तद्गुणनामार्थे विशेषणान्यमेलयन्, स तु प्रमादः। स्वगुणत्याग इत्यादिकं तूदाहरणान्तरमात्रम्। तद्गुणे वस्त्वन्तरसंबन्धरूपो हेतुर्वर्तते, तथापि परगुणसंबन्धस्य प्रधानतया चमत्कारकारित्वात्तद्गुण एवालंकारः। न हेतुः ॥

॥ इति तद्गुणप्रकरणम् ॥ २६ ॥

# ॥ तुल्ययोगिता ॥

तुल्ययोगिनो भावस्तुल्ययोगिता। वस्तुनस्तुल्ययोगः सदा सर्वत्राऽपि च भवति, कदाचित्कुत्रचिद्वापि च भवति। अत्रान्यत्राव्याप्तिवारणाय कदाचित्कुत्रचिद्वा तुल्ययोगित्वे रूढिः। कदाचित्कुत्रचिद्वा तुल्ययोगस्यैव लोकोत्तरत्वात् ॥

कदाचित्कुत्रचिद्वापि तुल्ययोगो भवेद्यदा।
अलंकारो भवेद्राजंस्तदा तु तुल्ययोगिता ॥

यथा—

विद्युच्छटाभूषणभूषिताङ्गै-
रनेकवर्णैरतिशोभमानैः।
जन्यैरनेकैश्च घनैश्च सज्जौ
समगताविन्द्रमरुस्थलेन्द्रौ ॥

विवाहसमये राजराजेश्वरो नानावर्णैर्वस्त्रैर्भूषणैश्च शोभमानैर्जन्यैः सह सज्जः समागतः। तस्मिन्नेव समय इन्द्रो विद्युद्भूषितैर्नानावर्णैर्मेघैः सह सज्जः समागतः। राजराजेश्वरस्येन्द्रस्य चैवं तुल्ययोगः कदाचिज्जातः, अतोऽत्र तुल्ययोगितालंकारः ॥

यथावा—

तल्पे पुष्पाणि तारा खे निद्रया नयने मम।
म्लानानि सखि नायातः प्रेयान्मे सुखसागरः ॥

प्रभातसमये ताराणां म्लानत्वं नियमेन भवति, कुसुमनयनयोः प्रत्युत प्रभातसमये विकासः प्रसिद्धः। तत्र कुसुमानां वृक्षवल्लीभ्यः समाचित्य तल्पे स्थापनेन, नयनयोस्तूत्कण्ठया जागरणेन, प्रभातसमये ताराभिः सह म्लानतारूपतुल्ययोगस्य कदाचिद्भावात्तुल्ययोगिताऽलंकारः ॥

यथावा—

मनोहरेण मरुता मलयस्य मधौ सखे ।
चकम्पे चारुनयना प्रोषिता चापि वल्लरी ॥

समीराद्वल्लर्यास्तनुत्वात्कम्पनं नियमेन भवति। वनितायाः कम्पनमेतादृशसमीरेण सर्वदा न भवति। वियोगदशायां तादृशसमीरस्योद्दीपकतया वनिताया वल्लर्या सह कम्पनरूपतुल्ययोगः कदाचिज्जात इति तुल्ययोगितालंकारः। अस्यालंकारस्य साक्षात्स्वरूपमजानद्भिः प्राचीनैर्लभ्योदाहरणैर्भ्रमित्वा भिन्नभिन्नानि लक्षणानि कृतानि। धुरंधरस्येदमुदाहरणम्—

यमः कुबेरो वरुणः सहस्राक्षो भवानपि ।
विभ्रत्यनन्यविषयां लोकपाल इति श्रुतिम् ॥

अत्र तुल्ययोगितासंगतिस्त्वेवम्। लोकपालपदमिन्द्राद्यष्टानामेव देवानां शास्त्रप्रसिद्धम्। तदुक्तम्—

"इन्द्रो वन्हिः पितृपतिर्निर्ऋतिर्वरुणोऽनिलः ।
धनदः शंकरश्चैव लोकपालाः पुरातनाः ॥" इति ॥

इदं लोकपालपदमन्येषामलभ्यम्। वैभवमहत्त्वपराक्रमप्रजापालनादिभिर्वर्णनीयनृपस्यापि लोकपालपदप्राप्त्येन्द्रादिभिः सह लोकपालतारूपतुल्यधर्मयोगो जातः। स च नरनाथेषु काचित्कः, अतो रोचकतयाऽलंकारः ॥ अनेनोदाहरणेन भ्रमित्वा दण्ड्याचार्य इदं लक्षणमाह—

"विवक्षितगुणोत्कृष्टैर्यत्समीकृत्य कस्यचित् ।
कीर्तनं स्तुतिनिन्दार्थं सा मता तुल्ययोगिता ॥" इति ॥

विवक्षितगुणोत्कृष्टैः सह समीकृत्य यत्कस्यचित्स्तुत्यर्थं निन्दार्थं वा कथनं सा तुल्ययोगितेत्यर्थः। भोजमहाराजेनापीमे एव लक्षणोदाहरणे निहिते। चन्द्रालोककार इमं विषयं तुल्ययोगितायास्तृतीयप्रकारमङ्गीकृत्येदं लक्षणमाह—

"गुणोत्कृष्टैः समीकृत्य वचोऽन्या तुल्ययोगिता ॥" इति ॥

उत्कृष्टगुणवद्भिः सह समीकृत्य यद्वचनं साऽपरा तुल्ययोगितेत्यर्थः।

अस्य लक्षणस्येदं तात्पर्यम् । उत्कृष्टगुणवद्भिः सह समीकृत्य कस्यचिद्गुणनमिति ॥

धुरंधरस्येदमुदाहरणम्—

आहूतस्याभिषेकाय विसृष्टस्य वनाय च ॥
न मया लक्षितस्तस्य स्वल्पोप्याकारविभ्रमः ॥

अत्र तुल्ययोगितासंगतिस्त्वेवं रीत्या वर्तते । रामचन्द्रस्य राज्याभिषेकोत्साहाद्ये वदनविकासादयोऽनुभावाः संजातास्त एव वनवासरूपपित्राज्ञापरिपालनोत्साहस्याप्यभूवन् । सुखानुभावैः सह दुःखानुभावानां तुल्ययोगः क्वचित्कदाचिच्च भवति ॥

धुरंधरस्येदमुदाहरणम्—

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ॥
यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः ॥

अत्र तुल्ययोगितासंगतिस्त्वेवं रीत्या वर्तते । अस्यामप्रस्तुतप्रशंसायां मनुष्येषु शत्रुमित्रयोः साम्यरूप ईदृशस्तुल्ययोगः क्वापि भवति । एतैरुदाहरणैर्भ्रमित्वा केनचित्प्राचीनेन लक्षणं निर्मितम् । तल्लक्षणं भोजमहाराजः परमतेन लिखति—

" अन्ये सुखनिमित्ते च दुःखहेतौ च वस्तुनि ।
स्तुतिनिन्दार्थमेवाहुस्तुल्यत्वे तुल्ययोगिताम् ॥" इति ॥

प्रथमोदाहरण इदं लक्षणमेवं रीत्या योजितवान् । अत्र राज्याभिषेकायाऽऽह्वानं सुखनिमित्तं वस्तु, वनवासाय विसर्जनं तु दुःखनिमित्तं वस्तु, अनयोरुभयो रामचन्द्राकृतेस्तुल्यत्वात्तुल्ययोगितालंकारः । इयं तुल्ययोगिता स्तुत्यर्था । द्वितीयोदाहरणे लक्षणमेवं रीत्या योजितवान् । अत्र च्छेदनं तु दुःखनिमित्तं वस्तु, सेचनं पूजनं च सुखनिमित्तं वस्तु, अनयोरुभयोर्निम्बस्य कटुतायास्तुल्यत्वात्तुल्ययोगितालंकारः । इयं तुल्ययोगिता निन्दार्था । चन्द्रालोककार इदं तुल्ययोगिताया द्वितीयं प्रकारं मत्वेदं लक्षणमाह—

" हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता ॥" इति ॥

मम तु मतं, धुरंधरस्य नामरूपसर्वव्यापिलक्षणे सत्युदाहरणमुदाहरणमनुसृत्य लक्षणनिर्मितिः प्राचीनानां प्रमादः। एवं प्रत्युदाहरणं लक्षणनिर्माणे त्वनन्तव्यर्थविस्तारो भवेत्। धुरंधरस्येदमुदाहरणम्—

"संकुचन्ति सरोजानि स्वैरिणीवदनानि च॥" इति।

अत्र तुल्ययोगितासंगतिस्त्वेवं रीत्या वर्तते। प्रियसमागमस्य समीपतया संध्यासमये स्त्रीणामाननानि विकसितानि भवन्ति। परं तु परकीयानायिकाया अभिसारे चन्द्रोदयस्य बाधकत्वात्संध्यासमये कमलैः सह स्वैरिणीवदनानामपि संकोचरूपतुल्ययोगप्राप्तिः। अनेनोदाहरणेन भ्रमित्वा काव्यप्रकाशगतकारिकाकार इदं लक्षणमाह—

"नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता।" इति॥

अस्यार्थः काव्यप्रकाशकारेण वृत्तावेवं लिखितः—"नियतानां प्राकरणिकानामेवाप्राकरणिकानामेव वा" इति। एतत्कारिकाकारेण—

"सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्॥" इति॥

इदं दीपकालंकारलक्षणमुक्त्वा तदनन्तरं तुल्ययोगिताया उक्तलक्षणमुक्तम्। तस्य वैलक्षण्यप्रदर्शनार्थं पुनः शब्द उपात्तः। एतत्कारिकाकारस्यायं सिद्धान्तः, प्रकृतानामप्रकृतानां वा सकृत्कथितो धर्मस्तुल्ययोगितालंकारः। प्रकृतैः प्रकृतानामप्रकृतैरप्रकृतानां च परस्परं तुल्यत्वात्। प्रकृतानामप्रकृतानां च परस्परतुल्यत्वाभावादनयोः सकृदुक्तो धर्मो न तुल्ययोगिता। किं तु दीपकालंकारः। काव्यप्रकाशकारेणेदमुदाहरणं प्रदत्तम्—

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः॥

अत्र "पाण्डु क्षामं वदनं" इत्यादिकं विरहदशायां रोगदशायां च वर्णनीयत्वात्प्रकृतम्। तस्य क्षेत्रियरोगस्यावेदनरूपो धर्मः सकृदुक्तः। अत्र क्षेत्रियशब्दे श्लेषः। रोगविशेषो जारश्च। उक्तं च चिन्तामणिकोषकारेण "क्षेत्रियः परदाररते" इति॥

कुमुदकमलनीरनीरजालि-
र्ललितविलासजुषोर्दृशोः पुरः का ।
अमृतममृतरश्मिरम्बुजन्म
प्रतिहतमेकपदे तवाननस्य ॥

अत्र वर्णनीये नेत्रे । अतः कुमुदादेरप्रकृतस्य तुच्छतारूपो धर्मः सकृदुपात्तः । चन्द्रालोककार इमं तुल्ययोगितायाः प्रथमं प्रकारमङ्गीकुर्वन्निदं लक्षणमाह—

"वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता" इति ॥

चन्द्रालोकपथगामिकुवलयानन्दकारेण "संकुचन्ति सरोजानि" इतीदमेवोदाहरणं प्रदत्तम् । अत्र काव्यप्रकाशगतकारिकाकारस्य लक्षणानुसारेण तुल्ययोगितैवं रीत्या वर्तते । कमलपरकीयामुखयोः प्राकरणिकयोः संकोचरूपो धर्मः सकृदुक्तः । चन्द्रालोकलक्षणानुसारेण तु तुल्ययोगितैवमस्ति । अत्र कमलपरकीयामुखयोः प्राकरणिकयोः संकोचरूपो धर्म एक इति। मम तु मतं, एकस्मै निहितो धर्मोऽन्यस्यापि प्रकाशकश्चेत्तत्र दीपकालंकार एव । प्रकृतानामप्रकृतानां प्रकृताप्रकृतानां वा प्रकाशकत्वेऽलंकारान्तरत्वयोग्यता तु दूरे, प्रकारान्तरत्वयोग्यतापि नास्ति। किं च सर्वदा स्थायिनां प्रकृतादीनामेकधर्मेऽप्यलंकारान्तरयोग्यश्चमत्कारो नास्ति। ईदृशविवक्षायां त्वत्र समुच्चयालंकारो भवेत् । यतः संध्यासमये प्रकाशवत्संकोचवद्वस्तूनां समुच्चयः कृतः । सर्वस्वकारस्त्वस्मिन्धुरंधरोदाहरणे सरोजवत्स्वैरिणीमुखानि संकुचन्तीति गम्यमौपम्यं ज्ञात्वेदंलक्षणमभिहितवान्—

"औपम्यगम्यत्वे पदार्थगतत्वेन प्रस्तुतानामप्रस्तुतानां वा समानधर्माभिसंबन्धे तुल्ययोगिता ॥" इति ॥

यथा—

संजातपत्रप्रकरान्वितानि
समुद्वहन्ति स्फुटपाटलत्वम् ॥

विकस्वराण्यर्ककराभिमर्शा-
द्दिनानि पद्मानि च वृद्धिमीयुः ॥

अत्रास्य लक्षणसंगतिरेवं वर्तते। अत्र ग्रीष्मर्तुवर्णने दिनानां पद्मानां च प्रकृतानां वृद्धिरूपसमानधर्माभिसंबन्ध उक्तः। कमलानि दिनवद्वृद्धिमीयुरित्यौपम्यं गम्यम् । वृद्धिरूपधर्मश्च सकृदुक्तः। मम तु मतं, धर्मस्य सकृत्कथने, द्वयोः प्रस्तुताप्रस्तुतत्वे, औपम्यस्य गम्यत्वे चोपमातो न वैलक्षण्यमतो नालंकारान्तरता। उक्तोदाहरण उपमाया-सर्वथैव विवक्षा नास्ति। अत्र तु समुच्चयः। ग्रीष्मर्तौ समृद्धिमतां समुच्चयात्। किं च प्राचीनाः प्रकृतानामौपम्यगम्यत्वे द्वितीयस्येदृशमुदाहरणमदुः—

न गञ्जनं यत्र दिने रिपूणां
न रञ्जनं यत्र च मित्रवर्गे।
कवीशदैन्यस्य न यत्र भङ्गो
वृथेति तद्वेत्ति मरुस्थलेशः ॥

अत्रैषां लक्षणसंगतिरेवं रीत्या वर्तते। कविवरदैन्यभङ्गमन्तरा राजराजेश्वरो दिवसस्य निष्फलत्ववदरिजयादिकरणमन्तरापि दिवसं निष्फलं मन्यत इत्यौपम्यगम्यत्वम्। धर्मस्य सकृत्कथनादिकं पूर्ववद्बोध्यम्। मम तु मतं, अत्रापि राजराजेश्वरो यद्यत्कार्यकरणमन्तरा दिवसं निष्फलं मन्यते तेषां कार्याणां समुच्चय इति। प्राचीनैरप्रकृतानामौपम्यगम्यत्वस्येदृशमुदाहरणं प्रदर्शितम् ॥

राज्यासनस्थे यशवन्तसिंहे
कीर्तिस्तदीया रिपुयोषितश्च ॥
दिने दिने शुक्लरुचिं प्रपन्नाः
परस्परभ्रान्तिजुषो भवन्ति ॥

अत्र भ्रान्त्यलंकार एव। यद्यत्र राजराजेश्वरस्य कीर्त्या सह रिपुयोषितां कादाचित्कशुक्लवर्णप्राप्तिरूपतुल्ययोगस्य विवक्षा तदा तुल्ययोगिः

तालंकारः। कीर्तिरिव रिपुस्त्रियः श्वेता भवन्तीति गम्यौपम्यविवक्षायां गम्योपमैवालंकारः॥

॥ इति तुल्ययोगिताप्रकरणम् ॥ २७॥

## ॥ दीपकम् ॥

"दीपयतीति दीपकम्" इति व्युत्पत्त्या प्रकाशकारीति दीपकशब्दार्थः। यत्र दीपकन्यायश्चमत्कारकारी तत्र दीपकालंकारः॥

दृश्यते दीपकन्यायो यत्र काव्ये महीपते!॥
दीपकं तत्र जानीहि भवत्येतदनेकधा॥

भगवतो भरतस्येदं लक्षणम्—

"नानाधिकरणार्थानां शब्दानां संप्रकीर्तनम्॥
एकवाक्येन संयोगात्तद्दीपकमिहोच्यते॥" इति॥

भगवतो भरतस्येदमुदाहरणम्—

सरांसि हंसैः कुसुमैश्च वृक्षा
मत्तैर्द्विरेफैश्च सरोरुहाणि॥
गोष्ठीभिरुद्यानवनानि चैव
तस्मिन्नशून्यानि सदा क्रियन्ते॥

केचन प्राचीना लभ्योदाहरणानुसारेणैकवस्तुप्रदर्शनार्थं कृतं दीपकमन्यदपि वस्तु प्रकाशयतीतीमं दीपकन्यायं दीपकालंकारमङ्गीचक्रुः। तत्र काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्॥" इति॥

प्रकृताप्रकृतयोर्धर्मस्यैकवारं वर्तने दीपकालंकार इत्यर्थः। एते प्राचीनाः प्रकृतयोरेव, अथवाऽप्रकृतयोरेव, एकधर्मे तुल्ययोगितालंकारमङ्गीकुर्वन्तः प्रकृताप्रकृतयोरेकधर्मे दीपकालंकारमनेनाभिप्रायेण स्वीकुर्वन्ति।

यत्रोभावपि प्रकृतौ, अथवाऽप्रकृतौ भवतस्तत्र तु ते प्रकृततयाऽथवाऽप्रकृततया तुल्याः। यत्र चैकः प्रकृतोऽन्यश्चाप्रकृतः, तत्र तु न तुल्ययोगः। सर्वस्वकारो वृत्तावाह "प्राकरणिकाप्राकरणिकयोर्मध्यादेकत्र निर्दिष्टः समानो धर्मः प्रसङ्गादन्यत्रोपकाराद्दीपनाद्दीपसादृश्येन दीपकालंकारः" इति। कुवलयानन्दकार आह "अत्र धर्मस्यानेकेषु युगपदन्वयेप्येकं प्रधानमन्यदानुषङ्गिकं भवेदेव" इति। वस्तुतस्तु प्रस्तुतार्थं निहितस्य धर्मस्याप्रस्तुतेप्यन्वयो भवति। यथा जामात्रर्थं कृतः पाकः प्रथममतिथिभ्यो दीयते चेदपि जामातुः प्रधानता। अतिथेरानुषङ्गिकत्वमेव। मम तु मतं, प्रकृताप्रकृतयोर्धर्मस्य सकृत्कथने दीपकालंकारः। प्रकृतानामप्रकृतानामेव वा धर्मस्य सकृत्कथने तुल्ययोगितालंकार इति किंचिद्वैलक्षण्यं नालंकारान्तरत्वसाधकम्। अस्मिन्विषये तु सर्वत्र दीपकालंकारेणैव भाव्यम्॥

अमन्दशोभामाधत्ते कीर्त्या मरुमहेश्वरः।
सिन्धुः सुरतरङ्गिण्या ज्योत्स्नया च निशाकरः॥

अत्र प्रस्तुतः कीर्तिप्रयुक्तामन्दमहिमधारी राजराजेश्वरो यशवन्तसिंहः। तदर्थं "सिन्धुः सुरतरङ्गिण्या" इत्याद्यप्रकृतस्यापि वर्णनं कृतम्। अत्र "अमन्दशोभामाधत्ते" इति धर्मोपि प्रधानतया राजराजेश्वरार्थमेव न्यस्तः प्रसङ्गप्राप्ताप्रकृतयोरपि प्रकाशं करोति, अर्थादप्रकृतेपि युक्तो भवति। अतोऽत्रैकवस्तुप्रकाशनार्थं कृतेन दीपेनान्यवस्तुप्रकाशनन्यायो वर्तते। प्रकाशकारस्येदमुदाहरणम्—

*किविणाणं धणं णाणाणं फणमणी केसराइं सीहाणम्।
कुलबालिआणं अत्थणा कुतो छिप्पन्ति अमुआणम्॥

अत्र प्रकृतकृपणधनार्थं न्यस्तः "कुतः स्पृश्यन्तेऽमृतानाम्" इति धर्मो नागफणामण्याद्यप्रकृतान्यपि प्रकाशयति। सर्वस्वकृता वृत्तौ लिखितं "औपम्यस्य गम्यत्व इत्यनुवर्तनीयम्" इति। अयमभिप्रायः। पूर्वं तुल्ययोगितालक्षणोक्तमौपम्यगम्यत्वमत्र लक्षणेऽनुषञ्जनीयमिति।

* संस्कृतम्—कृपणानां धनं नागानां फणामणिः केसराणि सिंहानाम्। कुलबालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम्॥

मम तु मतं, तुल्ययोगितायां दीपके च नौपम्यगम्यत्वस्यावश्यकत्वम्। एतद्विवक्षायामत्राप्युपमालंकारो भवेत्। विमर्शनीकारेणापि दीपकप्रकरण उक्तम् "न चैतावतैवानयोः पृथग्लक्षणं युक्तम्। औपम्यगर्भत्वाख्यस्य सामान्यस्य द्वयोरप्यनुगमात्। एवं च समुच्चितोपमादेरपि पृथग्लक्षणं स्यात्। ग्रन्थकृता पुनश्चिरन्तनानुरोधात्कृतम्" इति। तुल्ययोगितायां दीपके चौपम्यगर्भत्वस्य स्वीकारो विमर्शनीकारस्यापि प्रमादः। कतिपयप्राचीना लभ्योदाहरणानुसारेणैकं दीपमनेकवस्तूनि प्रकाशयतीतीमं दीपकन्यायं दीपकालंकारमङ्गीचक्रुः। भानुदत्तस्येदं लक्षणम्—

"अर्थोपकारको दीपकम्॥" इति॥

अर्थानामुपकारी दीपकमित्यर्थः॥

यथा—

न गञ्जनं यत्र दिने रिपूणां
न रञ्जनं यत्र च मित्रवर्गे॥
कवीशदैन्यस्य न यत्र भङ्गो
वृथेति तद्वेत्ति मरुस्थलेशः॥

अत्र "वृथा वेत्ति" इत्येको धर्मो गञ्जनाद्यनेकवाक्यानि प्रकाशयति। अत्र वर्णनीयराजराजेश्वरे रिपुादीनां गञ्जनादयः सर्वे धर्माः प्रकृताः। नात्र पूर्ववदेकं प्रधानमन्यदप्रधानमिति। अतो "वृथा वेत्ति" इति धर्मोऽपि न प्राधान्येनैकस्य; किं तु सर्वेषां समानः। भानुदत्तस्येदमुदाहरणम्—

मेखलीयति मेदिन्याः ककुभः कङ्कणीयति॥
हयस्ते मण्डलीकुर्वञ्जगत्याः कुण्डलीयति॥

अत्रैक एव हयो "मेखलीयति" इत्याद्यनेकक्रियास्वन्वेति। कतिपयप्राचीना लभ्योदाहरणानुसारेणैकत्र स्थापितो दीपो भवनगतसमस्तवस्तूनि प्रकाशयतीतीमं दीपकन्यायं दीपकालंकारमङ्गीचक्रुः। भोजमहाराजस्येदं लक्षणम्—

"जातिक्रियागुणद्रव्यवाचिनैकत्र वर्तिना॥

सर्ववाक्योपकारश्चेद्दीपकं तन्निगद्यते ॥" इति ॥

यथा—

चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः ॥
चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥

अत्रैकस्थाने स्थितं "चरन्ति" इति क्रियापदं समस्तवाक्यानामुपकारं करोति। यद्यपि "न गञ्जनं यत्र दिने" इत्यत्रैकेनानेकप्रकाशनोदाहरणेपि क्रियापदमेकत्रैव वर्तते, परं त्वेको दीपोऽनेकवस्तूनि प्रकाशयति, भवनैककोणस्थदीपश्च समस्तभवनं प्रकाशयतीत्युभे व्यवस्थिती पृथक्पृथग्भवतोऽतो भोजमहाराजेन "सर्ववाक्योपकारः" इत्युक्तम्। यद्यपि भानुदत्तस्य लक्षणं दीपकनामार्थानुसारि भवितुमर्हति। परं तु तस्योदाहरणेनायमेव सिद्धान्तः स्पष्टः, एकेनानेकप्रकाशनमिति। काव्यप्रकाशस्थं लक्षणं स्वरूपलक्षणं न भवति; किं तु तटस्थलक्षणम्, अतो भ्रमोत्पादकम्। उक्तस्थलेष्वनेकपदार्थानां कृते एकक्रियास्थापनं लाघवेच्छया वर्तते। तच्च रोचकतयालंकारः। यथा देवकोपशान्त्यर्थं धार्यमाणा कनकप्रतिमा कामिन्या भूषणं भवति। मम तु मतं, अस्मिंस्थलत्रयेपि दीपकालंकारोस्तीति। परं त्वेतेषां प्राचीनानां लभ्योदाहरणानुसारेण निर्मितानि लक्षणानि परस्परोदाहरणेष्वव्याप्तानि भवन्ति। अपि चैतदतिरिक्तदीपकन्यायस्थलेष्वप्यव्याप्तानि भवन्ति। उक्तदीपकन्यायातिरिक्तदीपकन्यायो मया प्रदर्श्यते। प्रत्येकं पदार्थानां स्पष्टं प्रकाशनार्थं प्रत्येकपदार्थानां समीपे दीपं नीत्वा तत्तत्प्रदर्शनस्यापि लोके रीतिर्वर्तते। अस्य दीपकन्यायस्येदमुदाहरणम्—

प्रकाशयन्पश्य रसालमञ्जरीः
सरःसु पद्मानि विकासयन्मधुः।
समागतः संप्रति पञ्चमीदिने
प्रिय! प्रवासे कथमद्य ते रुचिः॥
मृजन्ति कण्ठान् पिकशावका वने
मृजन्ति तन्त्रीर्भवनेषु गायकाः।

मृजन्ति शृङ्गारमथो मृगेक्षणाः
कामोऽपि संमार्ष्टि शरान्दुरासदान् ॥

युग्मम् ॥

अत्र "मृजन्ति" इत्येकमेव क्रियापदं "कण्ठान्" इत्यादिप्रत्येकपदानां समीपे कृत्वा कृत्वा तेषां प्रकाशः कृतः। यद्यप्यत्राप्येकेनानेकेषां प्रकाशनमस्ति, तथापि प्रत्येकं संबन्धं कृत्वा प्रकाशनरूपश्चमत्कारः पृथगेवानुभवसिद्धः। एकेनानेकप्रकाशनं त्वेकत्र स्थितक्रियापदस्थलेऽपि विवक्षावशाद्भवितुमर्हति। अत्र पुनरुक्तदोषस्याशङ्का न कर्तव्या। कुत इत्युक्तौ सहृदयहृदयोद्वेजकत्वाभावे न दोषत्वम्। तदुक्तं दण्ड्याचार्येण—

"न लिङ्गवचने भिन्ने न हीनाधिकतापि वा।
उपमादूषणायालं यत्रोद्वेगो न धीमताम्।" इति ॥

अपि च महाकवय एवं प्रयोगानकुर्वन् ॥

अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम्।
अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः॥

इति शुक्रनीतौ।

यथावा—

दोलन्त्या राधिकायास्तु हारो दोलति वक्षसि।
चित्ते दोलति पञ्चेषुः श्यामो दोलति नेत्रयोः ॥

"मृजन्ति कण्ठान्" इत्यत्र समुच्चयालंकारसंकीर्णता वर्तते, तथापि प्राधान्येन चमत्कारो दीपकस्यैव। उदाहरणेषु बहुधाऽलंकारान्तरसंकीर्णता भवति। तथापि प्रधानस्यैव व्यपदेशो भवतीत्यसकृदुक्तम्। अत्र प्रत्येकपदार्थानां कृते क्रियायाः पुनः पुनर्न्यासः सुगमतेच्छया वर्तते। कुत इति चेदेकक्रियाया अनेकेषु पदार्थेषु योजनापेक्षया प्रतिपदार्थं क्रियाया न्यासोऽर्थविधौ सुगमतोत्पादकः। मैवं वद, त्वयैवैकक्रियाया न्यासे लाघवं स्वीकृतम्, तदत्र गौरवदोषः कुतो न भवेदिति। कुत इति चेदेतादृशस्थले सुगमतागुणेन गौरवदोष आच्छाद्यते। प्रवादोऽत्र "कवेरिच्छा

बलीयसी " इति। अतो यस्य कवेरिच्छा लाघवे भवति स अनेकपदार्थानां कृते एकां क्रियां न्यस्यति। यस्य कवेरिच्छा सुगमतायां भवति स प्रतिपदार्थं पुनः पुनः क्रियां न्यस्यति। भवनस्यात्यन्तं प्रकाशनायानेकदीपकरणस्यापि लोके रीतिर्वर्तते। तादृशदीपकन्यायोप्यलंकारो भवितुमर्हति॥

सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम्।
नागरिकः किं मिलितो न हि न हि सखि! हैमनः पवनः॥

अत्र प्रकाशनं तु वाक्यार्थबोधः। तथा चात्र नागरिकपदार्थेन सह नहि पदार्थमनेकवारं योजयित्वा नागरिकाभावः प्रकाशितः॥

यथावा—

कृच्छ्रात्कृच्छ्रात्समुत्थाय पर्यङ्के दंपती प्रगे।
परस्परं समालिङ्ग्य निद्रालू पततो मुहुः॥

अत्र दंपत्यो रात्रिजागरणजनितालस्यप्रकाशनार्थं "कृच्छ्रात्" इति पदमनेकवारमुपन्यस्तम्। भवनदेहलीस्थो दीपो भवनमङ्गणं च प्रकाशयति। अयमपि दीपकन्यायोऽलंकारो भवितुं योग्यः॥

यथा—

धृत्वा नरेन्द्रपदवीं यशवन्तसिंहः
संमान्य काव्यनिपुणान्धनदानकार्षीत्।
भीत्या विना च मरुदेशनिवासिलोकान्-
भीतानरींश्च नितरां रणरङ्गधीरः॥

अत्राकार्षीदित्येका क्रिया पूर्वार्धोत्तरार्धयोः संधौ न्यस्ता पूर्वार्धोत्तरार्धौ प्रकाशयति। देहलीदीपेप्येक एवानेकप्रकाशकः। परं तु देहलीदीपवत्संधिस्थितिमूलकचमत्कारांशः पृथगेव। रुद्रटस्येदं लक्षणम्—

"यत्रैकमनेकेषां वाक्यार्थानां क्रियापदं भवति।
आदौ मध्ये चान्ते वाक्ये तत्संस्थितं च दीपयति॥" इति॥

मम तु मतं, एककोणस्थदीपकं समस्तभवनं प्रकाशयति। देहली-

दीपश्च बहिरन्तश्च प्रकाशयति। तादृशचमत्कारो वाक्यस्यादिमध्यान्तस्थितो नास्ति। यथा दृष्टान्तस्थले दृष्टान्तदार्ष्टान्तिकयोः पूर्वापरीभावे चमत्कारविशेषो नास्ति। भोजमहाराजप्रभृतयो बहवः प्राचीनाः पदावृत्तिरर्थावृत्तिरुभयावृत्तिरिति दीपकप्रकारानाहुः ॥

क्रमेण यथा—

उत्कण्ठयति मेघानां माला वर्गं कलापिनाम्।
यूनां चोत्कण्ठयत्यद्य मानसं मकरध्वजः ॥

अत्र वर्षर्तुवर्णने "उत्कण्ठयति" इति पदस्यावृत्तिर्वर्तते। मयूरपक्षे–मेघो मयूरान् "उद्" अर्थादुपरि कण्ठवतः कारयति। तरुणपक्षे–उत्कण्ठा, अर्थात्कालक्षेपस्यासहनम् ॥

हृष्यति चाम्रेषु चिरं तुष्यति वकुलेषु मोदते मरुति।
इह हि मधौ कलकूजिषु पिकेषु कामी त्यजत्यसूंस्त्वरितम् ॥

अत्र "हृष्यति, तुष्यति, मोदते" इति क्रियापदानि भिन्नभिन्नानि, परं त्वेकार्थकानि। अतोऽत्रार्थावृत्त्या दीपकालंकारः। कामुको वसन्त आम्रादिभिर्मोदते। "मृजन्ति" इत्यत्रोभयावृत्तिरस्ति। एषु स्थलेषु मम तु मतं, ईदृशपदावृत्तौ न दीपकन्यायः, किं त्वनुप्रासालंकारः। ईदृशार्थावृत्तिस्त्वर्थज्ञाने भ्रमोत्पादकत्वाद्दूषणम्, न तु भूषणम्। उभयावृत्तौ च यो दीपकन्यायोऽस्माभिः पूर्वं प्रदर्शितः, स एव नान्यः। भगवतो भरतस्य लक्षणं त्वनेकवस्तुदर्शनार्थं कृतस्य दीपकस्यैकेन वस्तुना सह संबन्ध इति दीपकन्यायपरत्वादन्यत्राऽध्यासम् ॥

## इति दीपकप्रकरणम् ॥ २८ ॥

## ॥ दृष्टान्तः ॥

दृष्टान्तशब्दस्येयं व्युत्पत्तिः। दृष्टोऽन्तो निश्चयो यत्र स दृष्टान्त इति। अत्र वाक्यार्थद्वयं वर्तते। तत्रैको दृष्टान्तवाक्यार्थः। द्वितीयो दृष्टान्ता-

पेक्ष्यनिश्चितवाक्यार्थः । तं दार्ष्टान्तिकं वदन्ति । दृष्टान्तस्य निबन्धनं तु दार्ष्टान्तिकस्य निश्चयप्रदर्शनार्थम् । चमत्कारपर्यवसानं तु प्रधानतया दृष्टान्त एव । अतो दृष्टान्तस्यैवालंकारता । निश्चयस्त्वनेकेषु स्थलेषु दृश्यते । अत्रान्यत्रातिव्याप्तिवारणायोक्तस्थले दृष्टान्तशब्दस्य रूढिः ॥

**दृश्यते निश्चयो यत्र दृष्टान्तालंकृतिस्तु सा।**
**अस्या उदाहृतीरेवं जानीहि मरुनायक! ॥**

यथा—

यशवन्तपरो नास्ति नास्ति लोको ध्रुवात्परः ।
अङ्कं नवपरं नास्ति गणना न शतात्परा ॥

नवपरमङ्कं नास्ति, अग्र एतैरेवाङ्कैर्गणना क्रियते । अपि च शतात्परा गणना नास्ति, अग्रे शतैरेव गणना क्रियते । दशभिः शतैः सहस्रं, शतसहस्रैर्लक्षमित्यादि । जगत्येकस्मादेकं परं वर्तते, "अतो यशवन्तपरो नास्ति" इति कथने संदेहो भवति, इदं कथमुपपद्यत इति। तस्य च निश्चयो "ध्रुवात्परो लोको नास्ति" इत्यादिस्थलेषु दृष्टः। इयं च दृष्टान्तमाला। कतिपयप्राचीना मालोपमां खण्डयन्ति । एकयैवोपमया सादृश्यसिद्धौ पुनरुपमाप्रदर्शनं व्यर्थमिति । मम मते त्वत्र न तथा, कुत इत्युक्तावधिकदृष्टान्तदर्शने दार्ष्टान्तिकनिश्चयस्य दृढता भवति ॥

यथावा—

कामं नृपाः सन्तु सहस्रशोऽन्ये
राजन्वतीमाहुरनेन भूमिम् ॥
नक्षत्रतारागणसंकुलापि
ज्योतिष्मती चन्द्रमसैव रात्रिः ॥

अत्रेतरेषां राज्ञां सत्त्वेपि प्रकृतेनैव राज्ञा भूमी राजन्वती कथमिति संदेहो भवति। एतद्दार्ष्टान्तिकस्य निश्चयार्थं तारास्वपि प्रकाशो वर्तते । तथापि रात्रिश्चन्द्रमसैव ज्योतिष्मतीत्ययं दृष्टान्तः प्रदर्शितः। भोजमहाराजादयो पूर्वं दार्ष्टान्तिकः, पश्चाद् दृष्टान्तः, पूर्वं दृष्टान्तः पश्चाद् दार्ष्टान्तिक इत्येवं भेदानदर्शयन् । अत्र न कोपि चमत्कारः ॥

यथावा—

सरसं विरसं वापि तस्मै ते रोचतेऽखिलम् ॥
शीतोष्णजलसेकाभ्यां यथा वन्हिः प्रशाम्यति ॥

लोके सरसं वचनं क्रियादिकं च रोचते। परं तु विरसवचनादिरोचने संदेहो भवति। इदं कथमिति, तस्य निश्चयः शीतोष्णेत्यादिस्थलप्रदर्शनेन कृतः। अत्र यथाशब्दो दृष्टान्तवचनः। दृष्टान्तस्थलेपि कचिद्वाचकशब्दप्रयोगो भवति। कचिन्न भवति। अथ च कापि दृष्टान्तस्थल इवशब्दस्य प्रयोगो भवति चेत्स दृष्टान्तवाचकः। यद्यपि दृष्टान्तस्थल औपम्यमस्ति, तथाप्यत्रौपम्ये पर्यवसानं नास्ति। किं त्वौपम्यात्परतो दृष्टान्त एव पर्यवसानं भवति। अतोत्र दृष्टान्त एव प्रधानतयालंकारः। उक्तं च भोजमहाराजेन—"इवशब्दाप्रयोगे दृष्टान्तः" इति। अत्रेवशब्दाप्रयोगकथनस्याभिप्रायस्तु न वाचकलोपे, किं त्वौपम्यविवक्षाऽभावे। अन्यथा वाचकलुप्तोपमैव भवेत् ॥

पलायमानेषु दलेषु पश्चा-
द्रणाजिरं यान्ति नवाश्ववाराः ॥
प्रयात्यवाच्यां तरसा भचक्रे
प्राचीं यथा याति गणो ग्रहाणाम् ॥

अत्र पूर्वार्धगतवस्तुस्थितौ संदेहाभावादुत्तरार्धवाक्यार्थो न दृष्टान्तः। किं त्वत्रोपमालंकारः ॥

ताराणां प्रतिबिम्बैर्वञ्चितहंसः सरःसु नाश्नाति ॥
मुक्ता यथा खलैस्तु वञ्चितचित्तः सतो न विश्वसिति ॥

अत्र हंसस्य मुक्ताफलानि प्रत्यक्षाणि, तथापि तेषामभक्षणे ताराप्रतिबिम्बैः प्रथमं वञ्चित इति हेतोर्न्यासादियं शङ्का न भवति, मुक्ताफलानि प्रत्यक्षाणि सन्ति तथापि किं न भक्षयतीति। अतोऽत्रोत्तरवाक्यार्थो न दृष्टान्तः। किं त्वत्रोपमालंकारः। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥" इति ॥

उपमानोपमेयभावमूलकालंकारप्रस्तावे प्रतिवस्तूपमानन्तरं दृष्टान्तालंकारं वदन्काव्यप्रकाशगतकारिकाकार इदं लक्षणं न्यस्तवान् । अत्र पुनःशब्दस्त्वर्थकः । एतेषां सर्वेषामर्थादुपमानोपमेयधर्माणां प्रतिबिम्बने तु दृष्टान्तालंकार इत्यर्थः । अयमाशयः । “इन्दुरिवाननम्” इत्याद्युपमोदाहरणेषु धर्मस्याभिन्नतया न धर्मस्य बिम्बप्रतिबिम्बभावः। दृष्टान्तालंकार उपमानोपमेयधर्माणां सर्वेषां बिम्बप्रतिबिम्बभावो भवति। प्रतिवस्तूपमायामेकस्यैव धर्मस्य द्विवारमुच्चारणादुपमातो वक्ष्यमाणप्रतिवस्तूपमातश्चेमं व्यावर्तयितुं लक्षणे “सर्वेषां” इति पदं दत्तम् । लोकबिम्बप्रतिबिम्बभावन्यायेनोपमानोपमेययोः परस्परं सादृश्यात्तयोर्बिम्बप्रतिबिम्बभावव्यवहारः । प्रतिवस्तूपमायामुपमानोपमेययोर्बिम्बप्रतिबिम्बभावो वर्तते। तथापि धर्मैक्याद्धर्मस्य बिम्बप्रतिबिम्बभावो नास्ति । यथा—“तापेन भ्राजते सूर्यः सूरश्चापेन राजते” इत्यत्र राजनरूपो धर्म उपमानोपमेययोरेकोऽस्ति । स च पुनरुक्तदोषवारणाय “भ्राजते, राजते” इति पृथक्शब्दाभ्यामुपात्तः । दृष्टान्ते धर्मस्य भिन्नत्वाद्धर्मस्यापि बिम्बप्रतिबिम्बभावः । यथा—“ कामं नृपाः सन्तु सहस्रशोऽन्ये ” इत्यत्रोपमानं रात्रिः, उपमेयं भूमिः, उपमानपक्षे “ चन्द्रमसैव ज्योतिष्मती ” इति, उपमेयपक्षे “अनेन राज्ञा राजन्वती” इति धर्मौ। अनयोर्धर्मयोः परस्परं भिन्नत्वाद्बिम्बप्रतिबिम्बभावः । सर्वस्वकारादयः सर्वे प्रकाशानुसारिणः । मम तु मतं, दृष्टान्ते धर्मस्यापि बिम्बप्रतिबिम्बभाव इति कथनेनोपमातो बहिर्भावो न सिद्ध्यति । कुत इति चेदुपमायामपि बिम्बप्रतिबिम्बभावापन्नधर्मः प्राचीनैः प्रदर्शितः । तत्तूपमाप्रकरणे प्रपञ्चितं प्राक् । उपमातो व्यावर्तयितुं रत्नाकरकारः—

“वाक्यद्वये प्रतिबिम्बनं दृष्टान्तः ॥” इति ॥

इदं लक्षणमाह । कुत इति चेदुपमायामेकं वाक्यं भवति। दृष्टान्ते तु वाक्यद्वयं भवतीतीयं किंचिद्विलक्षणतापि नालंकारान्तरतासाधिका । अपि च दृष्टान्तस्थले धर्मस्य बिम्बप्रतिबिम्बभावस्य नियमोऽपि नास्ति। “यशवन्तपरो नास्ति”– इत्यत्र पर इत्येको धर्मः । तस्य चार्थ उल्लङ्घ्य वर्तनम् । लोकदृष्टान्तानुसारेण धुरंधरेण दृष्टान्तालंकारोऽङ्गीकृतः। लोकदृष्टान्तस्य भगवान्भरत इदं लक्षणमाह—

"सिद्धं पूर्वोपलब्धौ यः समत्वमुपपादयेत् ॥
निदर्शनकृतस्तज्ज्ञैः स दृष्टान्त इति स्मृतः ॥" इति ॥

निदर्शनशब्दस्य दृष्टान्तार्थोऽपि वर्तते। उक्तं हि चिन्तामणिकोषकारेण "निदर्शनं दृष्टान्ते" इति। "कामं नृपाः सन्तु सहस्रशोऽन्ये" इत्यत्रेतरराजसत्त्वे प्रकृतेनैव राज्ञा भूमी राजन्वतीत्यस्य, तारागणसत्त्वे रात्रिश्चन्द्रमसैव ज्योत्स्नावतीति समता कवेरुपलब्धौ प्रथमतः सिद्धा तस्या दृष्टान्तरूपेणार्थान्निश्चयप्रदर्शनरूपेण प्रतिपादनं कृतं, तच्च रमणीयत्वादलंकारः। उपमायां सामान्यज्ञानं वर्तते, तत्र विशेषज्ञानकरणम्। दृष्टान्ते तु साध्यस्य सिद्धीकरणमिति वैलक्षण्याद्धुरंधरेण दृष्टान्त उपमातः पृथगलंकारः स्वीकृतः ॥

॥ इति दृष्टान्तप्रकरणम् ॥ २९ ॥

# ॥ निदर्शना ॥

अत्र नीत्युपसर्गार्थो विन्यासः। उक्तं च चिन्तामणिकोषकारेण "नि विन्यासे" इति। विन्यासो रचना। आह चिन्तामणिकोषकारः— "विन्यासो रचने" इति। दर्शनं प्रत्यक्षीकरणम्। स्त्रीलिङ्गताद्योतनायात्र टाप्। निदर्शनेति समुदितशब्दार्थस्तु रचनेन दर्शनम्, अर्थात्कृत्वा दर्शनम्। लोक इयं रीतिर्वर्तते। स्वकथितस्य सत्यतादर्शनं, स्वकृतस्य च सम्यक्तया हृदयंगमकारयितृत्वमित्यादिप्रयोजनेन तत्स्वयं कृत्वा दर्शयन्ति। यथा व्याकरणशास्त्रस्य पाठको गुरुः "अकुहविसर्जनीयानां कण्ठः" इति वाक्येनावर्णादीनामुच्चारणस्थानं कण्ठ इत्युपदिश्य शिष्यस्य सम्यक्तया हृदयंगमताकरणाय स्वयमपि कण्ठस्थानेन तेषां वर्णानामुच्चारणं कृत्वा दर्शयति। अस्मिन्विषये ज्ञापकहेतोरंशोऽपि वर्तते, परं तु स्वयं कृत्वा दर्शनरूपचमत्कारस्योद्धरकंधरतयाऽलंकारान्तरत्वयोग्यता। अत्र सहृदयहृदयमेव साक्षि ॥

कृत्वा तु दर्शनं राजञ्जानीहि त्वं निदर्शनाम् ॥
लोकप्रथानुसारेणालंकारोयमुदीरितः ॥

यथा—

श्रीमद्राष्ट्रवराधिपाः प्रददते राज्याभिषेकक्षणे
लक्षं स्वोत्तमचारणाय सुमुदा सिंहासनाधिष्ठिताः ॥
लाभो मर्त्यकलेवरस्य यदिह स्थैर्यं हि नाम्नश्चिर-
मित्युक्तिः स्वकुलस्य तैर्नृपवरैः कृत्वाशु संदर्श्यते ॥

योधपुरराठोड़नृपाणां परंपरयेयं रीतिर्वर्तते । यद्राज्याभिषेकसमकालमेव चारणवराय लक्षदानं कुर्वन्तीति । अस्मिन्विषये कवेरिदं वर्णनम् । राष्ट्रवरकुलस्येदं कथनं, नरशरीरस्य फलं नाम्नः स्थिरीकरणमिति । तद्योधपुरमहाराजा अस्य निजकुलकथनस्य सत्यतादर्शनाय राज्यसिंहासन उपविशन्त एव लक्षं दत्वा नाम्नः स्थिरीकरणं स्वयं कृत्वा दर्शयन्ति ॥

यथावा—

अयं चलत्केसरपुच्छयोर्मिषा-
द्वहँश्चलच्चामरयुग्मलक्षणम् ।
तुरङ्गमस्ते यशवन्तभूपते !
संदर्शयत्येष निजाश्वराजताम् ॥

एकं चामरं सामन्तसचिवादीनामपि भवति, परं तु चामरद्वयं राज्ञ एव भवति । अत्र राजराजेश्वरयशवन्तसिंहस्याश्वेन निजाश्वराजता चामरद्वयरूपं राजचिन्हं धृत्वा स्वयं कृत्वा दर्शिता ॥

यथावा—

मतङ्गजः सज्जनराणभूप !
नियुध्यमानोऽपरहस्तिना ते ।
कुर्वंश्च चीत्काररवं रणोत्थं
प्रबोधयत्यर्जुनशङ्खघोषम् ॥

अत्र चित्रकूटाधिपमहाराणासज्जनसिंहगजोऽर्जुनस्य युद्धकालिकशङ्खघोषं स्वस्य वीरत्वदर्शनाय स्वयं कृत्वा दर्शयति ॥

यथावा—

चपला पयोमुचा सह चन्द्रमसा चापि चन्द्रिका यान्ती ॥
प्रियसहगमनसुधर्मं पत्न्याः कृत्वा स्वयं प्रदर्शयतः ॥

अत्र चन्द्रिकाविद्युद्भ्यां स्त्रीणां प्रियसहगमनस्वधर्मः स्वयं कृत्वा दर्शितः ॥

यथावा—

कण्ठे गृहीत्वा चाणूरो युधि संमर्दितस्त्विति ।
वदन् राधागले लग्नः कृष्णोऽन्यमहिलान्तिके ॥

अत्र कृष्णस्य स्वेष्टसाधनार्थं स्वकृतस्य स्वयं कृत्वा दर्शनमस्ति । अत्र मिषालंकारस्य संकीर्णत्वम् । निदर्शनायां कथनीयार्थस्य पर्यायतात्पर्येण क्रियया बोधनं नास्ति; किं तूक्ताय कस्मैचित्प्रयोजनाय स्वयं कृत्वा दर्शनमस्ति । अतो निदर्शनायाः पर्यायोक्तेश्च महदन्तरम् ॥

विदेशे बहून्वासरान्संनिनीय
गृहासे तु कान्ते प्रिया ज्ञापयन्ती ।
सुवर्णं सुवर्णैः स्मितेनापि रौप्यं
बभूवाशु मुक्ता मुदश्रुप्रपातैः ॥ १ ॥

अत्र सुवर्णस्य रौप्यस्य मुक्तानां च साक्षात्कथनस्य विरसत्वाद्वचनक्रियया, हसनक्रियया, अश्रुपातक्रियया च बोधनं पर्यायोक्त्यलंकारः । इदमागतपतिकाया गणिकाया वर्णनम् । धुरंधरस्येदमुदाहरणम्—

उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् ।
विभावयन्समृद्धीनां फलं सुहृदनुग्रहः ॥

अत्र धुरंधरस्येयं विवक्षा । वैभवफलं सुहृदामनुग्रहः । इदमुपदेशं भगवान्सूर्य उदयन्नेव निजसुहृत्पद्मेषु श्रियोऽर्थाच्छोभाया अर्पणद्वारा स्वयं कृत्वा दर्शयति । अस्मिन्नुदाहरण उदयन्नेव कमलेषु श्र्यर्पणरूपे-

ऽर्थान्तरे प्रवृत्तो भगवान्सूर्यो वैभवफलं मित्रेष्वनुग्रहकरणमित्यर्थान्तरं दर्शयति। एवं ज्ञात्वाऽऽचार्यदण्डी निदर्शनाया इदं लक्षणमाह—

"अर्थान्तरप्रवृत्तेन किंचित्तत्सदृशं फलम् ॥
सदसद्वा निदर्श्येत यदि तत्स्यान्निदर्शनम् ॥" इति ॥

एतज्ज्ञानादेवाऽऽचार्यदण्डी "नि" इत्युपसर्गस्य पृथगर्थं न कृतवान्। दर्शनशब्दस्य योऽर्थस्तमेव निदर्शनशब्दस्याप्यर्थं स्थापितवान्। अथ चान्यस्मिन्प्रवृत्तेनान्यदर्शने रूढिः स्वीकृता। निदर्शनाशब्दः स्त्रीलिङ्गः। निदर्शनमिति शब्दो नपुंसकलिङ्गः। अयं च लिङ्गमात्रभेदः। अनेनार्थभेदो न भवति। उक्तोदाहरणं सदर्थविषयम् ॥

असदर्थविषयं यथा—

याति चन्द्रांशुभिः स्पृष्टा ध्वान्तराजी पराभवम् ॥
सद्यो राजविरुद्धानां सूचयन्ती दुरन्तताम् ॥

धुरंधरस्यास्मिन्नुदाहरणे नामार्थसंगतिः पूर्वोदाहरणवद्बोध्या। राजशब्दार्थो नरेश्वरश्चन्द्रश्च। मम तु मतं, अत्र कमलेषु श्रियमर्पयता भगवता सूर्येण संपदः फलं सुहृदनुग्रह इत्यपि दर्शितमिति विवक्षायां तु—

"किंचिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्च सः ॥" इति ॥

उक्तप्राचीनाङ्गीकृतविशेषालंकारस्य तृतीयः प्रकारो भवति। मया त्वस्य विशेषालंकारतृतीयप्रकारस्याधिकेऽन्तर्भावः कृतः। तद्वक्ष्यमाणान्तर्भावाकृतौ द्रष्टव्यम्। विमर्शनीकारो वदति "विशेषालंकारस्य लक्षणं तु—

"अशक्यवस्त्वन्तरकरणम् ॥" इति ॥

यथा—

त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम् ॥

एवं च

चूडामणिपदे धत्ते यो देवं रविमागतम् ॥

सतां कार्याऽऽतिथेयीति बोधयन्गृहमेधिनः ॥

अत्र सत्पुरुषार्थमतिथिपूजनरूपं विशेषज्ञानं नाशक्यं, अतोऽत्र न विशेषालंकारः।" इति। मम तु मतं, विमर्शिनीकारस्येदं समाधानं लक्षणानुसारि. तथापि न समीचीनम्। कुत इत्युक्तौ विशेषालंकारस्य जीवनं तु नामार्थानुसारेण वस्त्वन्तरकरणम्। स च शक्यो भवत्वशक्यो वा, विशेषालंकारे न कापि क्षतिः। प्राचीना अशक्येति विशेषणमदुस्तच्च व्यर्थम्। अशक्यांशस्तु वक्ष्यमाणविचित्रालंकारस्य विषयः। अपि च शक्याशक्येति किंचिद्विलक्षणतयालंकारान्तरता न भवति। प्रकारान्तरता, उदाहरणान्तरता वा भवतु। कदाचिच्छक्यार्थान्तरं लौकिकं विज्ञायास्मिन्नलंकारताया अस्वीकारे त्वत्रापि कथमलंकारत्वम्। रमणीयता सर्वत्राभिमता। दण्ड्याचार्येण च सदसदिति प्रकारान्तरे प्रदर्शिते। तेप्युदाहरणान्तरमात्रे। अथ च भोजमहाराजः "उदयन्नेव सविता"—इति धुरंधरस्योदाहरणे "विभावयन्समृद्धीनां फलं सुहृदनुग्रहः" इत्यस्यार्थस्य सिद्धये "उदयन्नेव सविता पद्मेष्वर्पयति श्रियम्" इत्यस्मिन् सिद्धेऽर्थे दृष्टान्तोऽर्थान्निश्चयदर्शनमिति ज्ञात्वा निदर्शनाया इदं लक्षणमाह—

"दृष्टान्तः प्रोक्तसिद्ध्यै यः सिद्धेऽर्थे तन्निदर्शनम्।
पूर्वोत्तरसमत्वे तदृजु वक्रं च कथ्यते॥" इति ॥

कथितार्थसिद्ध्ये सिद्धेऽर्थे यो दृष्टान्तः, अर्थान्निश्चयदर्शनं स निदर्शनालंकारः। पूर्वोत्तरत्वेऽर्थात्साध्यसिद्धयोरर्थयोः पूर्वापरीभावे, अथ च समत्वेऽर्थात्साध्यार्थसिद्धार्थौ यत्र समकालतया वर्णितौ तत्र तदर्थान्निदर्शनालंकारः। तच्च, ऋजु वक्रं च कथ्यत इत्यर्थः। एवं मन्वानो महाराजो निदर्शनशब्दस्येममर्थं ज्ञातवान्। नीत्युपसर्गार्थो निश्चयः। उक्तं च चिन्तामणिकोषकारेण "नि निश्चये" इति। दर्शनशब्दार्थः प्रत्यक्षीकरणम्। निदर्शनमिति समुदायशब्दार्थस्तु निश्चयो यत्र दृश्यते तन्निदर्शनमिति। कोषकारेण निदर्शनशब्दस्य पर्यायो दृष्टान्तो लिखितोऽपि च। "निदर्शनं दृष्टान्ते" इति चिन्तामणिकोषे। महाराजो दृष्टान्तः पूर्वं, दार्ष्टान्तिकः पश्चादित्यस्य "उदयन्नेव" इत्येवोदाहरणमदात्। अत्र सूर्यदृष्टान्तः पूर्वमुक्तः, वैभवफलं निजसुहृत्स्वनुग्रह इति दार्ष्टान्तिकः पश्चादुक्तः।

स च सर्वजनानङ्गीकृतत्वात्सिद्धीकरणमपेक्षते । उदयन्नेव सूर्यः कमलेषु श्रियमर्पयतीत्ययमर्थः सिद्धः । तस्मिन्नुक्तसाध्यार्थनिश्चयस्य दर्शनं कृतम् । अथ चात्र वक्रतया कथनं नास्ति, अत ऋजु, अर्थात्सरलम् । दार्ष्टान्तिकः पूर्वं, दृष्टान्तः पश्चादित्यस्य महाराज इदमुदाहरणं ददौ—

उपरि घनं घनपटलं दूरे दयिता किमेतदापतितम् ॥
हिमवति दिव्यौषधयः कोपाविष्टः फणी शिरसि ॥

अत्र दार्ष्टान्तिकः पूर्वं, दृष्टान्तः पश्चादस्ति। पूर्वार्धगतोर्थः सिद्धीकरणमपेक्षते, स चोत्तरार्धेन सिद्धीकृतः। अत्र दयिता समीपे न वर्तते। दिव्यौषधयश्च समीपे न सन्ति। अयं निषेधः कथनीयः, स च विधिवचनेनोक्तः, अत इयं वक्रोक्तिः । अथ च दुःसहदुःखमापतितं, इदं कथनीयं तच्च किमेतदापतितं, इत्येवमुक्तम्। इयमपि वक्रोक्तिः। महाराजः समकालस्य "याति चन्द्रांशुभिः स्पृष्टा" इत्युदाहरणं ददौ । अत्र दर्शयन्तीति शतृप्रत्ययेन दृष्टान्ते वर्तमानकाललाभः । "सद्यः" इति तद्धितेन दार्ष्टान्तिकेऽपि वर्तमानकालस्य लाभः । एवं रीत्या दृष्टान्तदार्ष्टान्तिकयोः समानकालता । महाराजो निदर्शनालंकारस्य विषये धुरंधरस्य तात्पर्यं नाबोधि। महाराजो यन्निदर्शनेति ज्ञातवांस्तद्विषये धुरंधरो दृष्टान्तालंकारमुक्तवान् । तच्च दृष्टान्तप्रकरणे स्फुटीकृतम्। धुरंधरस्य निदर्शनालंकारे दृष्टान्तालंकारे च महदन्तरम्। यतो दृष्टान्ते प्रस्तुतार्थस्य सिद्धये स्थलान्तरे निश्चयदर्शनम्। अत्र तु स्वयं कृत्वा दर्शनम्। अथ च दृष्टान्ते सिद्धीकरणस्यापेक्षा वर्तते, निदर्शनायां तु न सिद्धीकरणापेक्षा। स्वयं कृत्वा दर्शनरूपश्चमत्कारः सर्वथा विलक्षणः। किं च पूर्वोत्तरेत्यादि सर्वमुदाहरणान्तरम्। न तु प्रकारान्तरम्। धुरंधरस्येदमुदाहरणम्—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥

अत्र धुरंधरस्य निदर्शनालंकारसंगतिस्त्वेवम् । अनेन कविना मोहवशादुडुपेन समुद्रतरणेच्छा स्वयमल्पया मत्या सूर्यवंशवर्णनेच्छया

दर्शिता । अत्र धुरंधरस्य तात्पर्यमजानन्काव्यप्रकाशगतकारिकाकार इदं ज्ञातवान् । अत्र पूर्वार्धवाक्यार्थोत्तरार्धवाक्यार्थरूपवस्तुनोरेकताया वर्णनमस्ति । अयं च संबन्धोऽनुपपद्यमान उपमाकल्पनां करोति, यन्मन्दमतेर्मम सूर्यवंशवर्णनेच्छा मोहवशादुडुपेन समुद्रतरणेच्छासदृशी । अत एव निदर्शनाया इदं लक्षणमाह—

"अभवन्वस्तुसंबन्ध उपमापरिकल्पकः ॥" इति ॥

एवं ज्ञानाच्चैतेनापि निदर्शनाशब्दसमुदायार्थो दर्शनमिति ज्ञात्वोक्तस्थल उपमादर्शने रूढिरङ्गीकृता । धुरंधरस्येदमुदाहरणम्—

उन्नतं पदमवाप्य यो लघु-
र्हेलयैव स पतेदिति ब्रुवन् ।
शैलशेखरगतो दृषत्कण-
श्चारुमारुतधुतः पतत्यधः ॥

अत्र धुरंधरनिदर्शनालंकारसंगतिस्त्वेवम् । लघुरुन्नतपदमवाप्य त्वरितं पतति । इदं वातवशाद्गिरिशिखरात्पतन्दृषत्कणः स्वयं कृत्वा दर्शयति । अत्रापि धुरंधराभिप्रायमजानन्काव्यप्रकाशगतकारिकाकार इदमबोधि । अत्र दृषत्कणपतनरूपक्रिययैव दृषत्कणस्य लघुत्वे सति गिरिशिखरारोहणरूपः पतनस्य हेतुर्ज्ञापितः । अत एवेमां द्वितीयनिदर्शनां मत्वेदं लक्षणमाह——

"स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च सापरा ॥" इति ॥

क्रिययैव स्वस्य स्वस्य हेतोः संबन्धस्य च यत्ख्यापनं सा द्वितीया निदर्शनेत्यर्थः । प्रथमप्रकारे वस्तुनः संबन्धाभावादुपमादर्शने, द्वितीयप्रकारे च कार्येण कारणदर्शने च निदर्शनाशब्दस्य रूढिः स्वीकृता । मम तु मतं, एषां प्रथमा निदर्शनोपमायामन्तर्भवति । वाच्यार्थबाधादुपमायाः गम्यत्वाच्चालंकारान्तरता भवितुं नार्हति । लक्ष्यार्थे लक्ष्योपमा, व्यङ्ग्यार्थे च व्यङ्ग्योपमेत्युपमाप्रकाराः प्राचीनैरङ्गीकृताः । अथ च द्वितीयनिदर्शनायां ज्ञापकहेतुरलंकारः । कार्येण कारणज्ञानमिति विलक्षणता तूदाहरणान्तरमात्रम् । न त्वलंकारान्तरम् । अत एव मया धुरंधर-

स्य य आशयः स्पष्टीकृतः स एव विषयोऽलंकारत्वस्य, अलंकारान्तरतायाश्च योग्यः। अलंकाररत्नाकरकारः काव्यप्रकाशानुसारी। सर्वस्वकारोपि तथैव। परं तु काव्यप्रकाशगतकारिकाकारेणाभवद्वस्तुसंबन्ध एव निदर्शनालंकारोऽङ्गीकृतः। सर्वस्वकारस्तु "चूडामणिपदे धत्ते"–इति धुरंधरस्य निदर्शनोदाहरणे निदर्शनायाः साक्षात्स्वरूपमजानन्संभवद्वस्तुसंबन्धां निदर्शनां मत्वा प्रथमनिदर्शनायाः प्रकारद्वयमाह। काव्यप्रकाशानुसारेण त्वभवद्वस्तुसंबन्धेति, स्वमतानुसारेण च संभवद्वस्तुसंबन्धेति। "चूडामणिपदे धत्ते" इत्यत्रायान्तं सूर्यं शिरसि धारयन्तमुदयाचलं पश्यतां सज्जनानां बोधो भवति, यदुदयगिरिवदस्माभिरप्यातिथिसत्कारः कर्तव्य इति। अत एवोक्तप्रकारबोधकरणसामर्थ्यसंबन्ध उदयाचले संभवति। अयं सर्वस्वकारस्य प्रमादः। एवं विवक्षायां त्वत्राप्युपमालंकार एव स्यात्। सर्वस्वकारादिभिः प्रथमनिदर्शनाया इदं भेदद्वयं स्वीकृतम्। पदार्थवृत्तिर्वाक्यार्थवृत्तिश्चेति॥

क्रमेण यथा—

अव्यात्स वो यस्य निसर्गवक्रः
स्पृशत्यजस्रं स्मरचापलीलाम्।
जटापिनद्धोरगराजरत्न-
मरीचिलीढोभयकोटिरिन्दुः॥

अत्र स्मरचापलीला स्मरचापस्य धर्मः। अतोऽपरवस्तुत्वाच्चन्द्र असंभवन्ती सा तल्लीलासदृशलीलां बोधयति। अत्र लीलेत्येकस्यैव पदार्थस्य संबन्धोऽन्यत्र कथितः, अत इयं पदार्थवृत्तिः॥

त्वत्पादनखरत्नानां यदलक्तकमार्जनम्।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः॥

अत्र पूर्वार्धगतवाक्यार्थस्योत्तरार्धगतवाक्यार्थस्य च संबन्धः कथितः। अथ चात्र वाक्यार्थयोरभेदसंबन्धोऽसंभवन्सादृश्यप्रतीतिं कारयति। उक्तं च तेन "असंभवद्वस्तुसंबन्धा तूपमेयवृत्तान्तस्योपमानेऽसंभवेपि भवति। स्थलद्वयेपि संबन्धविघटनस्य विद्यमानत्वादिति॥

यथा—

वियोगे गौड़नारीणां यो गण्डतलपाण्डिमा ।
अदृश्यत स खर्जूरीमञ्जरीगर्भरेणुषु ॥

अत्रोपमेयनायिकाकपोलगतपाण्डुतायाः खर्जूरीमञ्जर्यां साक्षाद्भासाभावादुपमेयोपमानभावस्य प्रतीतिः । अथ च क्वचिन्निषेधसामर्थ्याक्षिप्तसंबन्धस्यानुपपन्नत्वेनापि भवति ॥

यथा—

यत्कोपे त्वयि किंचिदेव चलति प्राग्गुर्जरक्ष्माभृतां
मुक्ता भूर्न परं भयान्मरुजुषां तावत्तदेणीदृशाम् ।
पद्भ्यां हंसगतिर्मुखेन शशिनः कान्तिः कुचाभ्यामपि
क्षामाभ्यां सहसैव वन्यकरिणां गण्डस्थलीविभ्रमः॥

अत्र पादादिषु हंसगत्यादीनामभावे तु निषेधो नोपपद्यते, अतः पादादिषु हंसगत्यादीनामाक्षेपः । अपि च पादादिषु हंसगत्यादीनां साक्षात्संबन्धो नास्ति, अत औपम्यं प्रतीयते ॥

यथावा—

सारसारतरवस्तुसंग्रहे त्वन्मुखं किमपि पण्डितं प्रिये ।
कान्तिमिन्दुशकलाद्यदाददे तन्मृगादपि यदीक्षणद्वयम् ॥

अत्र चन्द्रादिसंबन्धिकान्त्यादेर्ग्रहणस्यासंभवाच्चन्द्रादिकान्तिसदृशकान्त्यादिः प्रतीयते । मम तु मतं, पदार्थवृत्तिनिदर्शनायां तूपमालंकार एव । जयदेवकविरप्येतादृशस्थले ललितोपमानामकमुपमाप्रकारमेवाह । अथ च वाक्यार्थवृत्तिनिदर्शनास्थले प्राचीनमतस्य वक्ष्यमाणरूपकं, मन्मतीयश्चाभेदालंकारः । रत्नाकरकारोप्याह "त्वत्पादनखरत्नानां" इत्यत्र तु वाक्यार्थरूपकम् । अन्यथा "मुखं चन्द्रः" इत्यादिपदार्थरूपकेपि निदर्शना स्यात् । अपि च कुवलयानन्दकारो वाक्यार्थवृत्तिनिदर्शनातो रूपकस्येमं भेदमाह "सदृशविशेषणसहितविशेष्यैक्यारोपे निदर्शना । असदृशविशेषणसहितविशेष्यैक्यारोपे तु विशिष्टरूपकम्", इति ॥

यथा—

यद्दातुः सौम्यता सेयं पूर्णेन्दोरकलङ्कता ।

अत्र दातृपुरुषस्य सौम्यतारूपोपमेयवाक्यार्थस्य पूर्णचन्द्रस्याकलङ्कतारूपोपमानवाक्यार्थस्य च यत्तच्छब्दाभ्यामैक्यारोपोस्ति । अतः सदृशविशेषणसहितविशेष्यैक्यारोपस्य सत्त्वान्निदर्शना । उक्तोदाहरणे सौम्यताऽकलङ्कता च विशेष्ये, दातृपूर्णेन्दू विशेषणे, अनयोर्विशेषणयोरपि परस्परं सादृश्यात्सदृशविशेषणसहितयोर्विशेष्ययोरारोपः । किं च—

अस्तीदं मरुनाथस्य मुखं राकानिशाकरः ।
प्रलोभयति नारीणां दृक्चकोरमनांसि यत् ॥

अत्र मुखं शशी च विशेष्ये, मरुपती राका च विशेषणे, परं त्वत्रानयोर्विशेषणयोः परस्परं सादृश्याभावादिदं विशिष्टरूपकम् । मम तु मतं, इयं किंचिद्विलक्षणता प्रकारान्तरताया उदाहरणान्तरताया वा हेतुः । न त्वलंकारान्तरतायाः । उपमेयोपमानयोर्विशेषणसादृश्यस्य बिम्बप्रतिबिम्बभावसंज्ञा । विमर्शनीकारो बिम्बप्रतिबिम्बभावेन रूपकं मत्वेदमुदाहृतवान्—

कंदर्पद्विपकर्णकम्बुमसितैर्दानाम्बुभिर्लाञ्छितं
संलग्नाञ्जनपुञ्जकालिममलं गण्डोपधानं रतेः ।
व्योमानोकहपुष्पगुच्छमलिभिः संछाद्यमानोदरं
पश्येदं शशिनः सुधासहचरं बिम्बं कलङ्काङ्कितम् ॥

अथ च रसगङ्गाधरकारो निदर्शनारूपकयोरिमं भेदमाह "कर्त्रोरभेदे वाच्ये क्रिययोरभेदे चार्थे निदर्शना । कर्त्रोरभेद आर्थे क्रिययोरभेदे च शाब्दे रूपकम्" इति ॥

यथा—

त्वत्पादनखरत्नानि यो रञ्जयति यावकैः ॥
इन्दुं चन्दनलेपेन पाण्डुरीकुरुते हि सः ॥

अत्र कर्तृभ्यां सह यत्तच्छब्दयोः संबन्धो विद्यते, तस्मान्निदर्शना। "त्वत्पादनखरत्नानां" इत्यत्र यावकै रञ्जनं, घनसारेण च सितीकरणमिति क्रियावाचकपदाभ्यां सह यदिदंशब्दयोः संबन्धेन क्रिययोरभेदः

शाब्दः, अथ च कर्तृभ्यां सह यत्तच्छब्दयोः संबन्धाभावात्कर्त्रोरभेद आर्थः, अतोऽत्र रूपकम्। मम तु मतं, इयमपि विलक्षणताऽकिंचित्करा। पूर्वोदाहरणे क्रिययोरभेद आर्थः, उत्तरोदाहरणे कर्त्रोरभेद आर्थः। तत्रैकस्मिन्निदर्शनाया अन्यस्मिन्रूपकस्य च स्वीकारो न युक्तः। अपि च रसगङ्गाधरकारः पुनरेवमनयोर्भेदमाह। "निदर्शनायामभेदस्तुलादण्डन्यायेन स्थलद्वयेपि विश्राम्यति, "मुखं चन्द्रः" इत्यादिरूपकस्थले त्वभेदो मुखमात्रे विश्राम्यति।" इति॥ मम तु मतं, इयमपि किंचिद्विलक्षणता नालंकारान्तरसाधिका॥ चन्द्रालोककारः प्रथमनिदर्शनाया इदं लक्षणमाह—

"वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना॥" इति॥

यथा—"यद्दातुः सौम्यता—" इत्यत्र दातुः सौम्यतारूपोपमेयवाक्यार्थस्य पूर्णेन्दोरकलङ्कतारूपोपमानवाक्यार्थस्य च यत्तच्छब्दाभ्यामैक्यारोपः। मम तु मतं, चन्द्रालोकस्येदृशलक्षणोदाहरणाभ्यामस्मिन्विषयेऽभेदालंकार एव सिद्ध्यति। अयमपि प्रकाशकारादीनां प्रथमनिदर्शनोदाहरणैर्भ्रमित्वेदं लक्षणं कृतवान्। तत्र चारोपं ज्ञात्वाऽऽरोपदर्शने निदर्शनाशब्दस्य रूढिमङ्गीकृतवान्। अपि च काव्यप्रकाशादीनां द्वितीयनिदर्शनोदाहरणैर्भ्रमित्वा तृतीयनिदर्शनायाश्चन्द्रालोककार इदं लक्षणमाह—

"अपरां बोधनं प्राहुः क्रिययाऽसत्सदर्थयोः॥" इति॥

चन्द्रालोकपथगामी कुवलयानन्दकार इदं लक्षणमेवं व्याचख्यौ। "कस्यचित्किंचित्क्रियाविशिष्टस्य स्वक्रियया परान्प्रत्यसतः सतो वार्थस्य बोधनं यन्निबध्यते तदपरां निदर्शनामाहुः" इति। असदर्थबोधनस्य चेदमेवोदाहृतम्। "नश्येद्राजविरोधी"— इति। अथ च सदर्थबोधनस्येदमेवोदाहृतम्। "उदयन्नेव सविता"— इति। अनयोरुदाहरणयोरस्य लक्षणसंगतिस्त्वेवम्। सूर्यः कमलविकासक्रियावान्। तमश्चन्द्रकिरणैर्विनाशक्रियावत्। इत्येते उभे स्वस्वक्रियया सदसदर्थं बोधयतः। अनेन प्रकाशकारादीनां द्वितीयनिदर्शनायां क्रियया बोधनं ज्ञातम्, क्रियया दर्शने च निदर्शनानाम्नो रूढिरङ्गीकृता। कुवलयानन्दकार उदाहरणे लक्ष-

णमेवं योजयति स्म। "राज्ञा चन्द्रमसा सह विरुध्य स्वयं नाशक्रियाविशिष्टं तमो दृष्टान्तभूतया स्वनाशक्रिययाऽन्योपि राज्ञा विरोधं करोति चेदेवं नश्येदित्यनिष्टपर्यवसायिनमर्थं बोधयदेव विनष्टमित्येतस्य निबन्धनादियमसदर्थनिदर्शना" इति। मम तु मतं, एवं क्रियया बोधनं तु वक्ष्यमाणसूक्ष्मालंकारस्य विषयः। निदर्शनाविषये सर्वेषां प्राचीनानां प्रमादः॥

## ॥ इति निदर्शनाप्रकरणम् ॥ ३० ॥

# ॥ नियमः ॥

अत्र नियमशब्दस्यार्थो निरोधः। आह चिन्तामणिकोषकारः—"नियमो यन्त्रणे। यन्त्रणं बन्धने" इति॥ एकत्र नियमकरणादन्यत्र निषेधः सिध्यति। परं त्वत्र नियमे पर्यवसानात्प्रधानीभूय नियमोऽलंकारः॥

**नियमं भूषणं प्राहुर्नियमं मरुभूपते!॥**

यथा—

कलौ त्वमेव यशसां ग्राहकोऽसि क्षमापते!॥

अत्र यशोग्राहकता राजराजेश्वरे नियमिता। उक्तोदाहरणेऽन्यत्र निषेध आर्थः॥

वाच्येन यथा—

धनं न चामीकरमत्र किं तु
सुसंचयः सज्जनपुङ्गवानाम्॥
भूषा न रत्नानि यशो विशालं
वक्तीति युक्तं यशवन्तसिंहः॥

अत्र सज्जनेषु सुवर्णेषु च विद्यमानस्य धनत्वस्य सुवर्णे निषेधं कृत्वा सज्जनेषु नियमः कृतः। यशसि रत्ने च भूषणत्वमस्ति, रत्ने भूष-

णत्वस्य निषेधं कृत्वा यशसि भूषणताया नियमः कृतः। इदमुदाहरणान्तरम्। रत्नाकरकारोऽस्य प्रकारद्वयमाह। प्रश्नपूर्वकमप्रश्नपूर्वकं चेति। उक्तोदाहरणमप्रश्नपूर्वकस्य॥

किं भूषणं यशो नैव रत्नमित्याह भूपतिः।

अयं प्रश्नपूर्वकः। मम तु मतं, ईदृशप्रकारेषु विलक्षणता नास्ति। उदाहरणान्तरमात्रता। एवं प्रकारताङ्गीकारेऽन्यत्र संबन्धे सत्यन्यत्र निषेधं कृत्वैकत्र नियमः, अन्यत्र संबन्धेऽसत्यन्यत्र निषेधं कृत्वैकत्र नियम इति च प्रकारौ मन्तव्यौ भवेताम्। अन्यत्र संबन्धे सत्येकत्र नियमस्य पूर्वोदाहरणानि॥

द्वितीयो यथा—

सागराः सरितो भूपा बहवः सन्ति केवलम्।
चातको याचते मेघान्मुरारिर्मरुवल्लभम्॥

अत्र चातकस्य मुरारिकविराजस्य च याचनाया अन्यत्रासंबन्धेप्येकत्र नियमः॥

इति नियमप्रकरणम्॥ ३१॥

## ॥ निरुक्तिः॥

निर् शब्दो नृधातोर्जातः। नृ नये। नयो युक्तिः। सा च योजना। उक्तं च चिन्तामणिकोषकारेण "नयो युक्तौ। युक्तिर्योजनायाम्" इति। उक्तिर्वचनम्। निरुक्तिरितिशब्दसमुदायार्थस्तु वचनस्य योजनम्। वचनयोजनं तु सर्वासु रचनासु विद्यते। अत्र स्वेच्छानुसारेण वचनस्य योजनायां रूढिः॥

स्वेच्छानुसारतो या स्याद्योजना वचनस्य हि।
तां निरुक्तिं विजानीहि यशवन्तनरेश्वर!॥

यथा—

उदारराज्ञां गणनाप्रसङ्गे
कनिष्ठिकास्थे यशवन्तनाम्नि ।
अद्यापि तादृङ्नृपतेरभावा-
दनामिका सार्थवती बभूव ॥

अङ्गुलिषु मध्ये सर्वाभ्योऽपि ह्रस्वाङ्गुलिः कनिष्ठिकेत्युच्यते। तस्याः समीपवर्तिन्या अङ्गुलेरनामिकेति रूढं नाम। अत्रानामिकेति वचनं कविः स्वेच्छानुसारेणास्मिन्नर्थे योजितवान्। अङ्गुल्या गणनाप्रसङ्गे कनिष्ठिकामारभ्य गणना भवति। एवं चात्युदारनृपाणां गणनाप्रसङ्गे कनिष्ठिकायां राजराजेश्वरस्य नाम्नि गणिते सति राजराजेश्वरयशवन्तसिंहसमानस्योदारराजान्तरस्य वर्तमानकालेऽभावात्कनिष्ठिकाऽनन्तराङ्गुलौ कस्यापि नृपस्य नाम नायाति, अत इयमङ्गुलिरनामिकेति॥

यथावा—

अबलानां वियुक्तानां दुःखदस्त्वं यतः शशिन् ।
ईदृशैश्चरितैर्जाने नूनं दोषाकरो भवान् ॥

अत्र दोषा रात्रिः, चन्द्रो रात्रेः कर्ता, अतश्चन्द्रस्य नाम दोषाकर इति। अत्र दोषाकर इति वचनं कविर्निजेच्छानुसारेण वियोगिनीनामबलानां दुःखप्रदानात्त्वं दोषाणामपगुणानामाकर इत्यस्मिन्नर्थे योजितवान् ॥

यथावा—

अर्थिभ्यो नेति वचनं मानसिंह ! मुखात्तव ।
नोद्गच्छतीति मानेति नाम चक्रे पितामहः ॥

राजराजेश्वरस्य मानसिंहेति नाम मानवत्सु सिंह इत्यभिप्रेत्य कृतम्। कविस्तन्निजेच्छानुसारेण राजराजेश्वरस्यात्युदारताप्रसङ्गे योजितवान् ॥

यथावा—

विहाय सौन्दर्यगुणा व्रजाङ्गना
यतो हि कुब्जामनुरज्य वर्तसे ।
अतो हि वेदाः स्मृतयश्च निर्गुणं
भवन्तमाहुर्वसुदेवनन्दन ! ॥

अत्र कृष्णे परमात्मनि सत्त्वरजस्तमोगुणराहित्यान्निर्गुणशब्दः प्रसिद्धः, अतः स निर्गुणः । प्रकृते निर्गुणवचनं कविना स्वेच्छानुसारेणास्मिन्नर्थे योजितं, सौन्दर्यादिगुणसहिता व्रजाङ्गनाः परित्यज्य कुब्जादासीवशंवदतया गुणग्रहणराहितोसीति ॥ चन्द्रालोकस्येदं लक्षणम्—

"निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम् ॥ " इति ॥

योगेन नाम्नामन्यार्थत्वप्रकल्पनं निरुक्त्यलंकार इत्यर्थः ॥

॥ इति निरुक्तिप्रकरणम् ॥ ३२ ॥

## ॥ परिकरः ॥

परिकरशब्दार्थ उपकरणम् । लोके प्रसिद्धिरियं, अमुकस्य महान् परिकर इति । उक्तं चिन्तामणिकोषकारेण "परिकरः परिवारे। परिवारः शोभाजनक उपकरणे छत्रचामरादौ" इति । तथा च यत्र परिकरे चमत्कारस्य पर्यवसानं भवति तत्र परिकरालंकारः ॥

भूषा परिकरनाम्नी तत्र भवेत्परिकरो यत्र॥
जानास्यस्य हि रूपं दशया स्वस्यैव राजेन्द्र! ॥

यथा—

मरुनाथः सत्यसिन्धुर्यशवन्तनरेश्वरः ॥
जगत्त्राता कृता येन कविश्रेष्ठा धराधिपाः ॥१॥

अत्र कविकृतवर्णने कवीश्वरान्धराधीशान्कुर्वतो राजराजेश्वरस्य

मरुधराधीशत्वादय उपकरणम्। यथा राज्ञश्छत्रचामरादयो लोकोपकरणानि। तच्च रोचकतयाऽलंकारः॥

यथावा—

गरलसहोदरचन्द्र इतश्च यमादिक्समागतः पवनः॥
इतः पलाशप्रसवा वियोगिनीनां कथं नु जीवाशा॥

वियोगावस्थायां विरहिणीनां चन्द्रादय उद्दीपनत्वात्प्राणहराः। तत्र प्राणहरणदशायां चन्द्रस्य विषसहोदरत्वं, पवनस्य यमदिङ्निवासः, पलाशस्य द्व्यर्थता च परिकरः। चन्द्रविषावुभावपि समुद्रोत्पन्नत्वात्सहोदरौ। मलयमारुतो दक्षिणदिशात आयाति। सा च यमदिशा। पलाश इति वृक्षविशेषस्य रूढं नाम, तत्र पलमश्नातीति पलाश इति व्युत्पत्त्या मांसभक्षकस्यापि लाभः। विषकृतान्तमांसभक्षकेषु प्राणहरणकारणता विद्यते। परं त्वत्र चन्द्रादिषु या प्राणहरणरूपकारणता सा चन्द्रादीनां रोचकत्वात्तेषामुद्दीपनतैव। तत्र विषादीनामतिशयितारोचकानां न सहकारिकारणता। किं तूद्दीपनतया वियोगिनीप्राणहरणं कुर्वतां चन्द्रादीनां परिकरता। ननु कोषकारेण शोभाजनकोपकरणानि परिकरत्वेनोक्तानि, ततश्च विषादीनां कथं परिकरत्वमिति चेन्न। उपलक्षणेनानुचितकार्यं कुर्वतोऽशोभाकराण्येव परिकरो भवेत्। उक्तकार्यं कुर्वतामीदृशान्येव शोभाकराणि भवेयुः। अनेन दिक्प्रदर्शनेन साराद्यलंकारेष्वप्येवं बोध्यम्। परिकरस्तु सहकारिकारणं न भवति। यथा घटकार्ये मृत्तिकोपादानकारणम्। कुलालो निमित्तकारणम्। दण्डचीवरादयश्च सहकारिकारणानि सन्ति। किंतु शोभाजनकमुपकरणं परिकरस्य स्वरूपम्। तस्योदाहरणं च कोषकारेण च्छत्रचामरादयः प्रदत्तम्। छत्रचामरादयश्च राज्ञो राजत्वे कथमपि कारणानि न भवेयुः, किं तु शोभाजनकत्वात्परिकरमात्रम्॥

यथा—

मन्दं मन्दं वृष्टिरथेन्द्रगोपा बकालिकेकिरवाः॥
सरित्तरङ्गाश्चैतान्सह नीत्वाऽऽयादयं नभोमासः॥

अत्र सहभावस्याप्रधानतया न सहोक्त्यलंकारः। कुत्रचित्सहका-

रिकारणे चमत्कारपर्यवसाने तु हेत्वलंकारस्य प्रकारः स्यात्। कारणेन सह सहकारिकारणे समकक्षे तु कारणसमुच्चय इति समुच्चयालंकारस्य प्रकारः स्यात्। धुरंधरस्येदमुदाहरणम्—

राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य मिषतः कर्णस्य शल्यस्य च॥
पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षसः॥

दुर्योधनस्य समक्षं जीवतो दुःशासनस्यासृक् पिबतो भीमस्योक्तिरियम्। अत्र "कार्मुकभृतः, मानधनस्य" इति च विशेषणे परिकरविवक्षया प्रदत्ते। न तूपस्कारविवक्षया। तत्र भोजमहाराजेनेदमबोधि। अत्र "कार्मुकभृतः, मानधनस्य" इति विशेषणे रक्षणार्हतारूपं प्रतीयमानार्थं क्रोडीकुर्वन्ती भीमस्य पराक्रमं पोषयतः। एतदनुसारेण भोजमहाराज इदं लक्षणमाह—

"क्रियाकारकसंबन्धिसाध्यदृष्टान्तवस्तुषु।
क्रियापदाद्युपस्कारमाहुः परिकरं बुधाः॥" इति॥

क्रियायां कारके संबन्धिनि साध्ये दृष्टान्ते वस्तुनि च क्रियापदादिभिरुपस्कारः पुष्टिः परिकरालंकार इत्यर्थः। अत्र दृष्टान्तकथनेन सिद्धपदार्थ इष्टः। महाराजेन स्वसिद्धान्तानुसारेण परिकरनाम्नः "परितः करोतीति परिकरः" इत्यर्थं कृत्वोपस्कारे रूढिरङ्गीकृता। मम तु मतं, उपस्कारकवस्तुनः कारणरूपतया कारणप्रकारत्वम्। यथा घटोत्पत्तौ कुलालदण्डचीवरादयः कारणानि। अयं च हेत्वलंकारेऽन्तर्भूतः, अतो नालंकारान्तरयोग्यता। कोषकार उपकरणस्योदाहरणं छत्रचामरादय इति प्रदर्शितवान्। राज्ञश्छत्रचामरादयश्च कथमपि न राजत्वकारणानि। रसगङ्गाधरकारो वदति "हेत्वलंकारे व्यङ्ग्यस्य नावश्यकत्वम्। इह तु वर्तते" इति। व्यङ्ग्याव्यङ्ग्यभेदाच्चालंकारान्तरत्वं न भवति। "मरुनाथः सत्यसिन्धुः" इत्यत्र मरुधराधीशतोक्तोदारताया हेतुर्न भवति। कुत इति चेन्मरुनाथास्त्वन्यवंश्याः क्षत्रिया अप्यभूवन्। तेषामीदृशोदारता क्व प्रसिद्धा। एवमन्यान्यपि विशेषणान्युपकरणरूपाणि। न तूपस्काररूपाणि।

"गरलसहोदरचन्द्रः" इत्यत्राप्युद्दीपनतायां चन्द्रस्य विषसहोदरत्वं, पवनस्य यमदिङ्निवासः, पलाशस्य च मांसभक्षकता न हेतुरूपाः। काव्यप्रकाशगतकारिकाकारोपि महाराजपथगामी। अयमप्यस्मिन्विषये विशेषणस्य साभिप्रायत्वं, धुरंधरस्योक्तोदाहरण उपकरणसमुदायदर्शनाद्भ्रमित्वाऽस्मिन्नलंकारेऽनेकविशेषणभावस्यावश्यकतां च परिज्ञायेदं लक्षणमभ्यधात्—

"विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः॥" इति॥

साभिप्रायैर्विशेषणैरुक्तिः परिकर इत्यर्थः। अत्रानेकविशेषणानामावश्यकताप्रदर्शनार्थं कारिकाकारेण लक्षणे "विशेषणैः" इति बहुवचनमभिहितम्। सर्वस्वकारादयः काव्यप्रकाशानुसारिणः। सर्वस्वकारः कथयति "विशेषणानां साभिप्रायत्वं तु प्रतीयमानार्थगर्भीकारः। अत एव प्रसन्नगम्भीरपदत्वान्नायं ध्वनेर्विषयः" इति। अनेन कथनेन सर्वस्वकारस्यायमाशयः। अत्र व्यङ्ग्यस्य गूढत्वाभावाद्गुणीभूतत्वम्। अपि च सर्वस्वकारेणोक्तम् "एवं स्थितौ सिद्धायां प्रतीयमानार्थस्य वाच्योन्मुखत्वात्परिकरनाम्नः सार्थकता भवति। अर्थाद्व्यङ्ग्यार्थो वाच्यार्थस्य पोषकः" इति। अनेनापि "परितः करोतीति परिकरः" अर्थात्सर्वतः करोतीत्यर्थं विधाय नाम्नः संगतिः कृता। अस्मिन्नलंकारेऽनेकविशेषणानामावश्यकत्वाङ्गीकारकर्तॄणां मते "समन्तात्पोषणकरणम्" इति नामार्थः स्फुटीभवति। सर्वस्वकारेण "राज्ञो मानधनस्य" इत्येवोदाहृतम्। अत्रास्य लक्षणसंगतिस्त्वेवं रीत्या वर्तते। अत्र कार्मुकभृतो मानधनस्येति च विशेषणे रक्षणार्हतारूपप्रतीयमानार्थं गर्भीकुरुतः। अस्यां भीमोक्तावयं वाच्यार्थः। यदीदृशानां दुर्योधनादीनामग्रतो जीवतो दुःशासनस्य रुधिरं मया पीतमिति। उक्तप्रतीयमानार्थस्य वाच्यार्थोन्मुखत्वमिदम्। भीमस्य पराक्रमरूपमिमं वाच्यार्थं स पुष्णातीति। अपि च सर्वस्वकारो वदति। "साहित्यशास्त्रेऽपुष्टार्थदोषः स्वीकृतः। तन्निवृत्त्यर्थमर्थपोषणमङ्गीकृतम्। तत्त्वेकविशेषणेनापि भवति, तथापि तत्रानेकविशेषणन्यसनस्य चमत्कारजनकत्वात्तस्यालंकारेषु गणनम्" इति॥ काव्यप्रदीपकारो वदति, "मया त्वेवं विचार्यते, साभिप्रायैकविशेषणसत्त्वेप्यलंकारता तु-

चितैव। कुत इति चेद्व्यर्थविशेषणस्थलेऽपुष्टार्थदोषो भवति। अतो निर्विशेषणत्वेनाप्यपुष्टार्थदोषनिवृत्तिः सिध्यति। एवं रीत्या साभिप्रायविशेषणमलंकारः।" इति। गङ्गाधरकारोप्याह— "विशेषणस्यैकत्वमनेकत्वं वा भवतु। विशेषणमूलकचमत्कारो विलक्षणो न भवति। सुन्दरत्वे सत्युपस्कारकत्वमलंकारस्य स्वरूपम्। चमत्कारापकर्षकाभावत्वं दोषाभावत्वम्। तदेतद्धर्मद्वयं विविक्तविषयम्। यदि दैवादेकस्मिन्विषयविशेषे समाविशेत्तदा का हानिः" इति। काव्यप्रदीपगङ्गाधरकारयोरिदं कथनं समीचीनम्। परं तु परिकरालंकारस्य स्वरूपं साभिप्रायविशेषणमिति न भवति। अस्यालंकारस्य साक्षात्स्वरूपपरिज्ञाने सर्वेषामपि प्राचीनानां प्रमादः। प्राचीनानां विशेषणनियमोपि न समीचीनः। कुत इति चेत्परिकररूपविशेष्येणापि परिकरालंकारभावे न कापि बाधा। तच्च प्राचीनाभिमतपरिकराङ्कुरालंकारप्रसङ्गेऽन्तर्भावाकृतौ स्फुटीभविष्यति। विशेषणस्य साभिप्रायत्वं तु व्यङ्ग्यस्य विषयः॥

॥ इति परिकरप्रकरणम् ॥ ३३ ॥

## ॥ परिणामः ॥

निजस्थितेरन्यथा भावः परिणामः। आह चिन्तामणिकोषकारः। "परिणामः प्रकृतेरन्यथा भावे" इति। प्रकृतिस्तु स्वभावः। आह चिन्तामणिकोषकारः "स्वभावः प्रकृतौ" इति। अत्र स्वभावशब्दस्यार्थो निजस्थितिः। यथा मृत्तिकायाः परिणामो घटः। मृत्तिका स्वाकारं परित्यज्य कम्बुग्रीवाद्याकारं प्राप्नोति, अथ च निजां मृत्तिकात्वजातिं त्यक्त्वा घटत्वजातिं प्राप्नोतीत्यादि। एवमवस्थान्तरं सांख्ये परिणामत्वेन स्वीकृतम्। तस्य च्छायया धुरंधरेण परिणामालंकारः स्वीकृतः॥

परिणामो भवेद्राजन्परिणामाख्यभूषणम्॥

यथा—

त्वं रङ्कमपि राजानं करोषि मरुवल्लभ!॥

अत्र रङ्कस्य राजभावोऽवस्थान्तरम् ॥

यथावा—

तिग्मप्रतापिन्यशवन्तसिंह !
तव द्विषत्पक्ष्मदृशां कृते तु ॥
दीपा भवन्त्योषधयो वनस्था-
स्तिरस्करिण्यो जलदा भवन्ति ॥

अत्र वनौषधीनां दीपत्वं जलदानां च तिरस्करिणीत्वं चावस्थान्तरम् । अत्रैवं शङ्का न कार्या । शास्त्रीयपरिणामोदाहरणं त्विदम् । मृत्तिकाया घटो भवतीति । तत्र तु प्रथमं मृत्तिकायाः स्वरूपमन्यदासीत्, घटस्य स्वरूपमन्यज्जातम् । प्रथमं मृत्तिकायां जलादिधारणकार्यं नासीत्, घटत्वप्राप्तौ जातमित्यवस्थान्तरम् । अत्र त्वोषधयः पूर्वमपि प्रकाशनं कुर्वन्त्य आसन्, जलदाश्च पूर्वमप्याच्छादनं कुर्वन्त आसन् । तथैव राजराजेश्वरस्य शत्रुस्त्रीणां वनवासेऽपि वनौषधयो जलदाश्चोक्तकार्यं कुर्वन्तीत्यत्र कथमवस्थान्तरमिति ? कुत इति चेद्दीपानां कार्यं वस्तुदर्शनापेक्षिणां वस्तुदर्शनम् । तिरस्करिण्याः कार्यं तिरस्करिण्यन्तर्हितयोग्यानामन्तर्हितत्वकरणम् । निर्जनस्थले प्रथमं वनौषधयो गिरिवृक्षादीन्प्रकाशयन्ति स्म, परं तु कस्यचिद्दर्शनापेक्षिणो दर्शनानुत्पादनाद्दीपका नासन् । अथ च जलदा गिरिशृङ्गवृक्षाग्रानाच्छादयन्ति स्म, परं तु कस्याप्यन्तर्हितत्वयोग्यस्यान्तर्हितत्वाकरणात्तिरस्करिण्यो नासन् । उक्तसमये चैवं भावाद्दीपास्तिरस्करिण्यश्च जाताः । अत एव पूर्वमेषां दीपकतिरस्करिणीसंज्ञा नासीत्; किं त्वोषधिजलदसंज्ञा । एवं रीत्यात्रावस्थान्तरमनुभवसिद्धम् ॥

यथावा—

नायाते निशि कामिनी प्रियतमे भ्रूभङ्गवक्रं स्थिता
तावत्कान्त इतः पपात पदयोरस्या मृगाक्ष्या द्रुतम् ॥
कोपाश्रूण्यभवंस्तदातिबहुलानन्दाश्रुरूपाण्यथ
रोषारुण्यमपि प्रजातमनुरागोद्बोधहेतुः क्षणात् ॥

अत्राश्रूणि वदनारुणिमा च कोपानुभावा आसंस्त एवानन्दस्यानुभावा जाताः ॥

यथावा—

पङ्कात्कीटं समुद्धृत्य स्वसमं यद्व्यधादलिः ॥
विस्मरेदुपकारं तं कथं कीटो महीपते ! ॥

लोक एवं प्रसिद्धिरस्ति । भ्रमरः कीटमादाय भ्रमरं करोतीति । अयं न्यायो वेदान्तशास्त्रेऽपि प्रचलितः । अत्राप्रस्तुतप्रशंसासंकीर्णता वर्तते ॥

यथावा—

वीरश्रीयशवन्तसिंहनृपतेर्वैरिस्त्रियः सत्वरा
आरूढाः सभयं ससंभ्रमधियश्चैतावदुच्चान्गिरीन् ।
भानोर्बिम्बमभूत्कदाचिदमलं रम्यं श्रुतौ कुण्डलं
ताराणां निचयः कदाचिदभवत्सीमन्तमुक्तामणिः ॥

अत्रातिशयोक्तिसंकीर्णता ॥

यथावा—

यशवन्तसिंहराज्ये मूर्खजना येऽभवन्सुविद्वांसः ।
चपला यतयोऽभूवन्हिंसकलोका दयालवो जाताः ॥

अत्र मनोवृत्तेः परिणामः । पूर्वोदाहरणे साधर्म्यपरिणामः । अत्र तु वैधर्म्यपरिणामः । आचार्यदण्डी भोजमहाराजः प्रकाशकारादयश्च परिणामालंकारं पृथङ्नोक्तवन्तः । सर्वस्वकारादयः परिणामालंकारमप्याहुः । सर्वस्वकारादीनामयं सिद्धान्तः । "अप्रकृतं प्रकृतस्य रञ्जनमात्रं करोति तत्र तु रूपकालंकारः । अप्रकृतस्य प्रकृतोपयोगित्वे परिणामालंकारः" इति । एतद्व्यवस्थानुरोधेन सर्वस्वकारः परिणामस्येदं लक्षणमाह—

"आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः ॥" इति ॥

आरोप्यमाणं प्रकृतात्मतां प्राप्याचरणं करोतीत्यर्थः । उक्तं च चिन्तामणिकोषकारेण "उपयोग आचरणे" इति । विमर्शिनीकारः स्पष्टीकरोति । एकं वस्तूचितं भवति, एकं वस्तूपयोगि भवति । तत्रोचितं तु

सिद्धस्य पोषकम् । उपयोगि तु प्रकृतार्थस्य सिद्धौ साधकम् । यथाऽनन्वयालंकारे " इन्दुरिन्दुरिव " इत्यत्र "इन्दुश्चन्द्र इव" इति कथनेप्यनन्वयः सिध्यति । अतोऽनन्वयसिद्धौ शब्दैक्यस्य नोपयोगित्वम्, तथाप्यनन्वयेऽप्यर्थैक्यवत् "इन्दुरिन्दुरिव" इतीदृशशब्दैक्येऽर्थस्य सुगमता भवति। अत्रेदमेव पोषकत्वम् । अतोऽत्र शब्दैक्यमुचितरूपम् । किं च लाटानुप्रासे शब्दैक्यस्योपयोगित्वम् । यतः शब्दैक्यमन्तरा लाटानुप्रासो न सिध्यति । तथा परंपरितरूपकेऽन्यरूपकाकरणेऽपि प्रथमरूपकस्यासिद्धिर्नास्ति; परं त्वन्यरूपकं प्रथमरूपकस्य पोषकत्वादुचितरूपम् । एवं च क्रियाकरण आरोप्यमाणस्यौचित्ये रूपकम् । उपयोगित्वे तु परिणामः ॥ क्रमेण यथा—

आह्लादयत्याननचन्द्र एषः ॥

अत्राह्लाददानक्रियायामारोप्यमाणचन्द्रमन्तरापि मुखं स्वयं शक्तम् । तत्र मुखे चन्द्रस्यारोपकरण औचित्यमात्रम् ॥

तमो हरत्याननचन्द्र एषः ॥

अत्रान्धकारहरणक्रियायां चन्द्रारोपमन्तरा मुखस्य स्वयमशक्तत्वाच्चन्द्र उपयोगी । मम तु मतं, नामार्थानुसारेण रूपकपरिणामयोः स्वरूपमत्यन्तविलक्षणम् । उक्तवैलक्षण्यप्रदर्शनं तु प्राचीनानां प्रमादः । अपि च चित्रमीमांसाकारो वदति—"रूपके प्रकृतमप्रकृतरूपापन्नं भवति । परिणामेऽप्रकृतं प्रकृतरूपापन्नं भवति" । मम तु मतं, इयं किंचिद्विलक्षणता नालंकारान्तरसाधिका, किं तु प्रकारान्तरसाधिका । यथा विपरीतोपमोपमायाः प्रकारः । सर्वस्वकारस्य त्विदं मतं, प्रकृतमप्रकृतत्वेऽप्रकृतस्य कार्यं करोतीति । सर्वस्वस्येदमुदाहरणम्—

तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनाऽसौ तृतीय-
स्तस्मै सौमित्रिमैत्रीमयमुपकृतवानातरं नाविकाय ॥
व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं
कृच्छ्रादन्वीयमानस्त्वरितमथ गिरिं चित्रकूटं प्रतस्थे ॥

तरणमूल्यमातर इत्युच्यते । सर्वस्वकारेणास्मिन्नुदाहरणे स्वसिद्धान्त

एवं रीत्या योजितः। अत्र प्रकृता, अर्थात्प्रकरणस्थिता तु गुहेन सह लक्ष्मणस्य मैत्री। सा चाप्रकृतातरीभूता, अर्थात्सौमित्रिमैत्री तरणस्य मूल्यं जाता। तात्पर्यमिदं, सौमित्रिमैत्र्यैव गुहो रामादीन् गङ्गायाः पारं निनाय। अत्र तरणमातरकार्यम्। तथा च सौमित्रिमैत्र्या आतरत्वे साऽऽतरकार्यं कृतवती। चन्द्रालोकस्यायं सिद्धान्तः, प्रकृतस्याप्रकृतत्वेऽप्रकृतं प्रकृतस्य कार्यं करोतीति। एतद्व्यवस्थानुसारेण चन्द्रालोकस्येदं लक्षणम्—

"परिणामः क्रियार्थश्चेद्विषयी विषयात्मना॥" इति॥

तात्पर्यं त्वप्रकृतं प्रकृतकार्यं करोतीति। चन्द्रालोकपथगामिकुवलयानन्दकारस्य सिद्धान्त उक्तसर्वस्वोदाहरण एवं घटते। सौमित्रिमैत्र्या अवस्थान्तरमातरो गुहाय मोक्षादिदानरूपकार्ये समर्थो जातः। इदं च कार्यं पूर्वावस्थारूपप्रकृतसौमित्रिमैत्र्याः॥ मम तु मतं, अयमपि नियमो न समीचीनः। कुत इति चेद्वस्तु, अवस्थान्तरप्राप्तौ क्वचिदवस्थान्तरकार्यं करोति। क्वचिच्च पूर्वावस्थाया अपि कार्यं करोति। यथा—सुवर्णभस्म सुवर्णस्यावस्थान्तरम्। तच्च कश्चिन्महादेवपूजन उपयुङ्क्ते चेद्भस्मरूपावस्थान्तरकार्यं करोति। अपि च तदेव भस्म कस्मैचिद्दुर्दिने भक्षणार्थं दीयते चेत्सुवर्णरूपपूर्वावस्थाया बलवीर्यादिवर्धनरूपं कार्यं करोति। "तिग्मप्रतापिन्यशवन्तसिंह" इत्यत्रौषधयो जलदाश्च प्रकाशाच्छादनरूपं कार्यं स्वस्य पूर्वावस्थाया एव कुर्वन्ति॥

यथावा—

भाले लिखितं धात्रा कथमपि मार्ष्टुं न शक्यते क्वापि॥
करिकरटौ सृणिभीतेः कुचभावेऽपि हि नखक्षतं प्राप्तौ॥

अत्र क्षतप्राप्तिरूपो धर्मोऽवस्थाद्वयेऽप्येक एव। प्राचीनानां परिणामे प्रकृतमप्रकृतरूपापन्नं भवतीति नियमोऽपि न समीचीनः। कुत इति चेदत्र वर्णनीयतया कुचौ प्रकृतौ। करिकुम्भावप्रकृतौ। अतोऽत्राप्रकृतस्य प्रकृतीभावः॥

यथावा—

चन्द्रे चकोरवद्ये नयने स्पृहयालुनी पुराऽभूताम्।
म्लाने कञ्जवदद्यान्यथैव जाता गतिर्ऋते त्वत्तः॥

अत्र नायकं प्रति नायिकाया विरहनिवेदने पूर्वावस्थोत्तरावस्थयोरुभयोरपि वर्णनीयतया ते उभे अपि प्रकृते। ततः प्रकृतस्यावस्थान्तरमपि प्रकृतमेव ॥

यथावा—

गङ्गायाश्चरितं निरीक्ष्य यमराड्ब्रूते न कोप्यन्तिकं
पापीयानुपयात्यनेन किमु मे मिथ्याधिकारेण हि ॥
यस्यामस्थिनिमज्जनादपि लघु क्रूरा महापापिनः
केचिच्छंकरतां परे च हरितामिन्द्रत्वमन्ये गताः ॥

अत्र प्रकृता तु गङ्गा। पातकिनो देवाश्चोभयेऽप्यप्रकृताः। अतोऽत्राप्रकृतस्यावस्थान्तरमप्यप्रकृतम्। अयं प्राचां परिश्रमः परिणामस्य रूपकाद्व्यवच्छेदार्थम्। स तु प्रमाद एव। कुत इति चेत्परिणामस्य स्वरूपमवस्थान्तरम्। वक्ष्यमाणरूपकस्वरूपं तु नाटकन्यायेन कस्यचिद्रूपस्यानुकरणम्। तच्चात्यन्तं विलक्षणम्। किं च प्राचीनानां परिणामे विषयविषयिभावकथनमपि प्रमादः। कुत इति चेदवस्थान्तरे विषयविषयिभावो नास्ति। विषयविषयिभावभ्रमं विनाप्यवस्थान्तरं दृश्यते। अत्र विषयविषयिभावो न विद्यते। अलंकारोदाहरणकारस्येदं लक्षणोदाहरणम्—

"उपमानोपमेययोरन्यतरत्वेन परिणतौ परिणामः ॥" इति ॥

क्रमेण यथा—

तरङ्गभ्रूभङ्गक्षुभितविहगश्रेणिरशना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ॥
यथाऽऽविद्धं याति स्खलितमभिसंधाय बहुशो
नदीरूपेणेयं ध्रुवमसहमाना परिणता ॥

अत्रोपमेयनायिकाया नदीरूपमुपमानमवस्थान्तरम् ॥

असावम्भोजानां करचरणरूपा परिणति-
र्मुखं पीयूषांशोरुपनतमवस्थान्तरमिदम् ॥

* गोत्रस्खलनयुक्तम् ॥

दृशा सैषा काचित्तुलयति वनस्येत्तणयुगं
नवैर्दुःस्थं दृष्टेस्तरलनयनाया जनयति ॥

अत्रोपमानस्य पङ्कजस्य सुधांशोश्चोपमेयकरचरणरूपतया मुखरूपतया चावस्थान्तरम् ॥

एतस्य प्रकृताप्रकृतयोरुभयोरवस्थान्तरकथनं तु समीचीनम्। परं तूपमेयोपमानयोर्नियमकरणं प्रमादः। कुत इति चेद्रङ्कस्य राजभवने चपलस्य यतीभवने च साधर्म्याभावादुपमेयोपमानभावो नास्ति। प्रत्युत वैधर्म्यं विद्यते। ईदृशोदाहरणेष्वस्य लक्षणस्याव्याप्तिर्भवति। साहित्यदर्पणस्य रामचरणकृतप्रकाशिकाविवृतावुक्तम् "परिणामे प्रायो भवति करोत्यर्थकधातूनां प्रयोगो भवति" इति। स च समीचीनः। उत्प्रेक्षाव्यञ्जकाः "मन्ये" इत्यादयः, उपमावाचका इवादयः, संदेहवाचकाः किमित्यादयः, विकल्पवाचकाः "वा" इत्यादयः शब्दाः सन्ति, तथैते परिणामवाचकाः ॥

यथा—

क्रूरेऽवरङ्गाव्हयभूभुजो रणे
नेत्रेषु वै रेणुतमोवृतेष्वलम्।
खड्गप्रहारैर्यशवन्तवर्मणो
रक्तोद्गमोऽभूदरुणोदयस्तदा ॥

"रेणुतमः" इत्यत्र परिणामवाचकशब्दाभावाद्रूपकभ्रमो भवति। "रक्तोद्गमोऽभूदरुणोदयः" इत्यत्र परिणामवाचकस्याभूदित्यस्य सत्त्वात्स्फुटं परिणामबुद्धिर्भवति ॥

॥ इति परिणामप्रकरणम् ॥ ३४ ॥

## ॥ परिसंख्या ॥

गणना संख्येत्युच्यते। परिरत्र वर्जने। उक्तं हि चिन्तामणिकोषकारेण "परि वर्जने" इति। परिसंख्येतिशब्दसमुदायार्थस्तु परि वर्जना-

र्थिका संख्या परिसंख्येति । तथा च विषयस्यान्यत्र वर्जनं तु संख्यायाः स्वभावेनैव सिद्धम् । यस्मिन्विषये येषां गणना क्रियते तेषु तस्य विषयस्य नियमो भवति । यथा युधिष्ठिरादयः पञ्च पाण्डवाः। अत्र युधिष्ठिरादीनां पाण्डुपुत्रताया विषये पञ्चतया गणने पाण्डुपुत्रताया युधिष्ठिरादिपञ्चसु नियमो भवति । तदा चान्यत्र वर्जनमर्थसिद्धम् । षष्ठे पाण्डुपुत्रता नास्तीति । अतोत्र परीत्युपसर्गयोजनेनेदमिष्टं, संख्यायामपि वर्जनमिति । एवं च संख्याया आश्रयेपि तस्य विषयस्य वर्जनं परिसंख्याऽलंकारः । अन्यसंख्या तु विषयमन्यत्र वर्जयति, इयं तु स्वाश्रयेऽपि तं विषयं वर्जयतीति लोकोत्तरत्वम् ॥

संख्यास्थलेऽपि यत्र स्याद्वर्जनं विषयस्य चेत् ।
भवेत्तत्र महाराज! परिसंख्याख्यभूषणम् ॥

यथा—

याचन्ते खलु चातका मदगजाः क्षीणा ध्वजाग्रे धुति-
र्मालिन्यं कुचयोर्मुखे कुटिलता शीतद्युतौ दृश्यते ॥
दोषस्वीकरणं रसाकुलकवौ चित्तस्य चौर्यं प्रभो !
इत्थं श्रीयशवन्तसिंह! भवतो राज्यस्थितिः स्तूयते ॥

अत्रैकचातकपक्षिषु याचनकथनान्मनुष्यादिष्वन्यजातिषु याचनस्य वर्जनमस्ति । परं तु वर्जनीययाचनं दूषणरूपं विवक्षितम् । तस्य तु चातकेष्वपि वर्जनमस्ति । कुत इत्युक्तौ चातकेष्वपि दारिद्र्यनिमित्तकदोषरूपयाचनं नास्ति । किं त्वेकव्रतनिमित्तकगुणरूपम् । एवं रीत्याऽन्यत्र वर्जितयाचनस्य संख्याश्रयेषु चातकेष्वपि वर्जनमस्ति। एवमेव मदमत्तमतङ्गजेषु क्षीणत्वकथनाद्धयादिष्वन्यजातिषु मदरहितगजेषु च क्षीणत्वस्य वर्जनम्। परं तु वर्जनीयक्षीणत्वं दूषणरूपं विवक्षितम्। तस्य तु मदमत्तमतङ्गजेष्वपि वर्जनमस्ति । कुत इत्युक्तौ मदमत्तमतङ्गजेषु दोषरूपा क्षुधाजन्यक्षीणता नास्ति। किं तु मदस्वभावजन्यं क्षीणत्वम्। यथा नायिकाया उदरे कट्यां च यौवनजनितं क्षीणत्वं भवति। एवं रीत्यान्यत्र वर्जितस्य

क्षीणत्वस्य संख्याश्रयेषु मतङ्गजेष्वपि वर्जनमस्ति । एवमन्यत्रापि योजनीयम् ॥

यथावा—

यशवन्तमहीपाले राज्यं शासति संप्रति ॥
दण्डा यतिषु दृश्यन्ते वनवासो मृगेषु च ॥

अत्र दण्डवनवासौ न दोषरूपौ । अत्र दण्डशब्दे श्लेषः ॥

यथावा—

यतयः कनकैर्हीना जिव्हाभोगो न चाहिषु ॥
अतृप्तिः काव्यनिर्माणे राज्ये मरुनरेशितुः ॥

संन्यासिषु कनकविहीनत्वं न दोषरूपम् । प्रत्युत गुणरूपम् । सर्पेषु रसनाभोगाभावो न दोषरूपः । तेषां स्वभावेन पवनाहारित्वप्रसिद्धेः । काव्यनिर्माणेऽतृप्तिर्न दोषरूपा ॥

यथावा—

यशवन्तधरानाथ! त्वयि राज्यं प्रशासति ॥
द्वावेव कामजलदौ प्रजोपरि धनुर्धरौ ॥

अत्र धनुर्धारणं दोषरूपं न भवति । प्रत्युत गुणरूपम् । परिसंख्यास्थलेऽन्यत्र प्रतिषेधसत्त्वादाक्षेपांशः प्रतिपादितस्य वस्तुतोऽभावादाभासांशश्च वर्तते । परं त्वस्यालंकारस्य स्वरूपं तु स्वाश्रयेऽपि वर्जनं कुर्वती संख्या । अस्य चमत्कारस्योद्धरकंधरतया प्रधानोऽलंकारः परिसंख्यैव । धुरंधरस्येदमुदाहरणम्—

स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवाम् ॥

अत्र नामार्थसंगतिरेवं वर्तते । एकदीपकजातौ स्नेहहानिकथनादन्यत्र स्नेहहानिं वर्जयन्त्या संख्यया स्वाश्रये दीपजातावपि दोषरूपानुरागहानेर्वर्जनं कृतम् । कुत इति चेद्दीपे तैलहानिर्विद्यते । न त्वनुरागहानिः । स्नेहस्तैलमनुरागश्च । अस्यालंकारस्य साक्षात्स्वरूपं प्राचीना न ज्ञातवन्तः । अत एव "कथितं वस्तु तादृशान्यवस्तुवर्जनार्थं भवति चेत्परिसंख्यालंकारः" इति ज्ञात्वा काव्यप्रकाशगतकारिकाकार इदं लक्षणमाह—

"किंचित्पृष्टमपृष्टं वा कथितं यत्प्रकल्प्यते ।
तादृगन्यव्यपोहाय परिसंख्या तु सा मता ॥" इति ॥

उक्तोदाहरणेऽस्य लक्षणसंगतिरेवं रीत्या वर्तते । अत्र दीपके कथिता स्नेहहानिरन्यवस्तुनि स्नेहहानिवर्जनार्था संजाता । अयं च विषय आर्थाक्षेपालंकारस्य । किं च "पृष्टमपृष्टम्" इति विभागस्त्वत्यन्तमरोचकः । एकस्य वस्तुन एकत्र स्थले प्रतिषेधं कृत्वाऽन्यत्र नियमनं परिसंख्यालंकार इति जानंश्चन्द्रालोककार इदं लक्षणमाह—

"परिसंख्या निषिध्यैकमेकस्मिन्वस्तुयन्त्रणम् ॥" इति ॥

चन्द्रालोककारेणेदमेवोदाहृतम् ॥

" स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवाम् " इति ॥

अस्मिन्नुदाहरणेऽस्य लक्षणस्य संगतिरेवं रीत्या वर्तते । अत्र नायिकानां स्वान्तेषु स्नेहक्षयं प्रतिषिध्य दीपकेषु नियमनं कृतम् । अयं च विषयो नियमालंकारस्य । एतैः प्राचीनैः स्वस्वलक्षणानुसारेण परिसंख्यानाम्न ईषदप्यर्थो न ज्ञातः । एतस्मादिदं सिद्धं प्राचीनैरत्र परिसंख्यानाम रूढत्वेन परिज्ञातम् । परिसंख्यालंकारस्य स्वरूपं तु मत्स्पष्टीकृतनामार्थ एव ॥

इति परिसंख्याप्रकरणम् ॥ ३५ ॥

---

## ॥ पर्यायः ॥

---

पर्यायशब्दार्थोऽनुक्रमः । उक्तं च चिन्तामणिकोषकारेण—"पर्यायोऽनुक्रमे । वारीति भाषायाम्" इति । अस्य स्वरूपं द्विविधम् । अनुक्रमेणैकस्य वस्तुनोऽनेकैः सह संबन्धः । अनेकेषां चैकेन सह संबन्धः ॥

पर्यायेण तु संबन्धोऽनेकैरेकस्य भूमिप! ॥
एकेन चाप्यनेकेषां पर्यायो द्विविधो भवेत् ।

क्रमेण यथा—

मरौ पयोहारिवधूजनानां
जलाय नेत्रेषु जलं समायात् ।
तव प्रभावाद्यशवन्तसिंह !
पदेषु तासां परिवर्तते तत् ॥

अत्र पयोहारिवधूजनानां चरणेषु जलवर्तनकथनस्येदं तात्पर्यम् । पूर्वं स्त्रियः कूपेभ्योऽतिकृच्छ्राज्जलमाकृष्यानयन्ति स्म । अधुना तु राजराजेश्वरयशवन्तसिंहो यत्र तत्र सरांसि व्यरचयत् । अतः पानीये पदं धृत्वा पानीयमानयन्तीति । अत्रैकस्यैव जलस्य पूर्वं योधपत्तनस्त्रीणां नेत्रेषु संबन्ध आसीत् । इदानीं तस्य त्यागपुरःसरं तासां चरणेषु संबन्धो जातः । एवं चैकस्यैव जलस्य पर्यायेणानेकैः सह संबन्धः ॥

यत्रासीद्गजबन्धनं करिघटा तत्राधुना गर्जति
धावन्ति स्म च मूषका बहुतरास्तत्राद्य दासा जनाः ॥
यत्राभून्मुसलध्वनिः कटुतरस्तत्राद्य वाद्यध्वनि-
श्चक्रे श्रीमरुपो बहूनि सदनान्येतादृशानि क्षणात् ॥

अत्राजगजादीनामनेकेषां पर्यायेणैकेन गेहेन सह संबन्धः । अत्र परिणामस्य संकीर्णतास्ति । क्रमालंकारे तु सोपानपरंपरान्यायेन क्रमाङ्गीकारः । अत्र तु पर्यायरूपेण विवक्षितः । काव्यप्रकाशगतकारिकाकारस्य प्रथमपर्यायस्येदं लक्षणम्—

"एकं क्रमेणानेकस्मिन्पर्यायः ॥" इति ॥

द्वितीयपर्यायस्येदं लक्षणम्—

"अन्यस्ततोऽन्यथा ॥" इति ॥

काव्यप्रकाशकार उभयोर्द्वौ द्वौ प्रकारौ मन्वानो वृत्तौ लिखति "एकं वस्तु क्रमेणानेकस्मिन्, अनेकं वस्तु क्रमेणैकस्मिन् भवति क्रियते वा स पर्यायः" इति ॥

क्रमेणोदाहरणम्—

नन्वाश्रयस्थितिरियं तव कालकूट !
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ॥

प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥

तँत्ताणं सिरिसहोअररयणाहरणम्मि हिअअमेकरसम् ॥
बिंबाहरे पिआणं णिवेसिअं कुसुमबाणेण ॥

एवं द्वितीयपर्यायस्याप्युदाहरणे बोध्ये। मम तु मतं, उक्तवैलक्षण्ये न कोपि चमत्कार इति । प्रकाशकारेणाधाराधेयभावे नियमः कृतः । स च तस्योदाहरणैस्तदनुसारिणः सर्वस्वकारस्य च द्वितीयपर्यायस्य—

"एकस्मिन्नाधारेऽनेकमाधेयं यत्स द्वितीयः पर्यायः॥"

इति लक्षणेन स्फुटतरः। प्राचीनानामाधाराधेयभावे नियमकरणं प्रमादः। कुत इति चेत्पर्यायत्वमनेकविधैः संबन्धैर्भवति ॥

यथा—

सायं राजकुमारैर्योऽक्रीडन्मे तनयः प्रियः ॥
हाहा !! रामः स एवाद्य रमते शबरैः सह ॥

नात्राधाराधेयभावः। अपि तु सहभावसंबन्धः। सर्वे प्रकाशकारानुसारिणः ॥

॥ इति पर्यायप्रकरणम् ॥ ३६ ॥

## ॥ पर्यायोक्तिः ॥

अत्र पर्यायशब्दार्थः प्रकारः। आह चिन्तामणिकोषकारः "पर्यायः प्रकारे" इति। पर्यायोक्तिरिति शब्दसमुदायार्थस्तु पर्यायेण कथनम्। अनेन कथनेनेदमनुभवसिद्धम् । प्रकारान्तरेण कथनमिति। तदेव स्पष्टीकुर्वन् भगवान्वेदव्यास इदं लक्षणमाज्ञापयामास—

* संस्कृतम्—तत्तेषां श्रीसहोदररत्नाभरणे हृदयमेकरसम् ॥
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥

"पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते" ॥ इति ॥
पर्यायस्य तु योक्तिः सा पर्यायोक्तिर्निगद्यते ।
स्पष्टीचकार भगवान्वेदव्यासस्त्विमां नृप! ॥

यथा—

आदाय खड्गं यशवन्तसिंह-
सेनासमक्षं प्रतियान्ति ये तु ।
सुराङ्गनोरःस्थललग्नगात्राः
स्वपन्ति ते देवपुरे सुखेन ॥

अत्र शत्रुसुभटानां मरणमुक्तप्रकारान्तरेणोक्तम् । तच्च रम्यत्वादलंकारः ॥

यथावा—

त्वत्कार्यं हर यद्धनं लगति नो तत्ते धनं चन्दनं
गेहे यत्र न तेऽर्चनं भवति वै तत्ते विहारस्थलम् ।
चर्चा यत्र न विद्यते सदसि ते तत्ते सदः शंकरे-
त्येवं वङ्ककवीश्वरः कथयते धन्यस्तव ध्यायकः ॥

अत्र भस्म, श्मशानभूमिः, प्रेतसभा चेत्येतानि क्रमेण हरचन्दनं, हरविहारस्थली, हरसभेत्येवं प्रकारान्तरेण कथितानीति सचमत्कारत्वादलंकारः ॥ मम तु मतम्—

लावण्यसिन्धुरपरैव हि कापि चेयं
यत्रोत्पलानि शशिना सह संप्लवन्ते ।
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कलितकाण्डमृणालदण्डाः ॥

अत्रापि पर्यायेण कथनविवक्षा चेत्पर्यायोक्त्यलंकारः ॥

यथावा—

बीजं यस्य वृकोदरे विषविधिर्लाक्षागृहं त्वङ्कुरः
सेकस्तेऽनुमतिः कुमन्त्रणाविधौ द्यूतं विटाद्भिर्नृप ।

पाञ्चालीकचकर्षणं तु कलिका पुष्पं गवां हारणं
न च्छेदो विदुरस्य वाक्परशुना तस्येदमायात्फलम् ॥

अत्र धृतराष्ट्रं प्रति संजयो दुर्योधनमरणमुक्तप्रकारान्तरेण कथयामास। मम तु मतं, क्रियया कथनीयार्थबोधनस्योपलक्षणतया पर्यायोक्तौ संग्रहकरणमुचितम्। कुत इत्युक्तावस्यां विवक्षायां पर्यायः। सूक्ष्मतायां पर्यवसाने तु सूक्ष्मालंकारो भवेत् ॥

यथा—

ब्रूतो निषेधतश्चैव तुष्यतः कुप्यतस्तथा।
नयनैरेव कुरुतो वार्तां तौ दंपती रसात् ॥

मिषालंकारादपरिचितो दण्ड्याचार्यः

दशत्यसौ परभृतः सहकारस्य मञ्जरीम्।
तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम् ॥

अस्मिन्मिषालंकारोदाहरणे प्रकारान्तरेण कथनं परिज्ञायेमं विषयं पर्यायोक्तिं मन्वान इदं लक्षणमाह—

"अर्थमिष्टमनाख्याय साक्षात्तस्यैव सिद्धये ॥
यत्प्रकारान्तराख्यानं पर्यायोक्तं तदिष्यते ॥" इति ॥

"दशत्यसौ परभृतः" इत्येतदेव चोदाजहार। अस्मिन्नुदाहरणे दाण्डिनो लक्षणसंगतिस्त्वेवम्। अस्या वक्तृसख्या इष्टार्थस्तु नायकनायिकयो रतोत्सवसिद्धीकरणम्। तदनुक्त्वा तस्य साक्षात्सिद्धये परभृतो रसालमञ्जरीं भक्षयति तन्निवारणायाहं गच्छामि युवाभ्यामत्र स्वैरमास्यतामितीदं प्रकारान्तरकथनम्। अयं च दण्ड्याचार्यस्य प्रमादः। पर्यायोक्ताविष्टार्थस्याकथनं न विद्यते। "आदाय खड्गं यशवन्तसिंह", इत्यत्रारिमरणकथनमिष्टं, तदेव "सुराङ्गनोरःस्थललग्नगात्राः स्वपन्ति ते देवपुरे सुखेन" इति पर्यायेणोक्तम्। मरणस्योक्तप्रकारेण कथनं साक्षान्नेति न। पर्यायोक्तौ न कस्यचित्सिद्धीकरणम्। न चोक्तमिषोदाहरणे पर्यायेण कथनम्। कुत इति चेत् "परभृतो रसालमञ्जरीं भक्षयति, तन्निवारणार्थमहं यामि" इति दम्पत्यो रतोत्सवसिद्धीकरणस्य पर्यायो न भवति। धुरंधरस्य नामार्थानुसारेण मिषपर्यायोक्त्यो

रतीव वैलक्षण्यं वर्तते । भोजमहाराजः परमतेन मिषोक्तिभङ्ग्यवसरा-न्पर्यायनाम्ना प्रोवाच—

"मिषं यदुक्तिभङ्गिर्याऽवसरो यः स सूरिभिः ॥
निराकाङ्क्षोऽथ साकाङ्क्षः पर्याय इति गीयते ॥" इति ॥

मिषस्य पर्यायस्तु व्याजः । उक्तं चिन्तामणिकोषकारेण " मिषं व्याजे " इति ॥ भङ्गिशब्दस्यार्थो विभागः । आह चिन्तामणिकोषकारः " भङ्गिर्भक्तौ । भक्तिर्विभागे" इति । विभागस्तु प्रकारः । महाराजो मिषालंकारस्य "दशत्यसौ परभृतः" इत्येतदेवोदाहृतवान् । उक्तिभङ्गेरर्था-त्पर्यायोक्तेरिदमुदाहरणमदात्—

राजन्! राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे! भोजय मां कुमार! कुशलं नाद्यापि किं भुज्यते ।
इत्थं नाथ! शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य वेश्मवलभीष्वेकैकमाभाषते ॥

अत्र राज्ञोऽरिनगर्याः शून्यत्वं प्रकारान्तरेणाभिहितम् । दण्ड्याचा-र्येण "दशत्यसौ परभृतः" इत्यत्र पर्यायोक्त्यलंकारोऽभिहितः । महाराजे-न तु पर्यायनाम्ना मिषोक्तिभङ्गी उक्त्वा—

"दशत्यसौ परभृतः" इति । इदं तु मिषस्य; "राजन् राजसुता न पाठयति" इति । इदं चोक्तिभङ्गेरुदाहृतम् । अत उभे अपि पर्यायोक्तेः प्रकारान्तरे मन्वानश्चन्द्रालोककारो व्याजेनेष्टसाधनं पर्यायोक्तेः प्रकार-मुक्त्वेदं लक्षणमाह—

"पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम् ॥" इति ॥

चन्द्रालोकपथगामी कुवलयानन्दकार इदं स्वीकृतवान् । अथ च ताभ्यामिदमुदाहृतम्—

यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह ॥

अत्र लक्षणमेवमयोजयत् । नायिकां नायकेन सह संगमय्य रसालमञ्जरीदर्शनव्याजेन गच्छन्ती सखी दंपत्योः स्वेच्छाचारकारित्वरूप-

मिष्टार्थसाधनमकरोदतः पर्यायोक्तिः। कुवलयानन्दकारो द्वितीयमिदमुदाजहार—

देहि मत्कन्दुकं राधे! परिधाननिगूहितम्।
इति विस्रंसयन्नीवीं तस्याः कृष्णो मुदेऽस्तु नः॥

मम तु मतं, अस्मिन्विषये तु प्राचीनमतानुसारेण मिषालंकारोस्ति। न तु पर्यायोक्तिः। भोजमहाराजात्पूर्वं केनापि कविना पर्यायनाम्नोऽनेकार्थवाचकतया मिषोक्तिभङ्ग्यवसराख्योपि पृथग्भूता अलंकारा एकेन पर्यायनाम्ना भणिताः। एते पर्यायोक्तेः प्रकारा न भवन्ति। हठान्मिषे पर्यायेण कथनस्याङ्गीकारेऽप्यवसरालंकारे त्वयमपि हठो न निर्वाहहेतुः। प्राचीनैरेषु पर्यायतां विदित्वा तत्तात्पर्येण त्रयोऽपि पर्यायनाम्ना भणिताश्चेत्तदाऽवसरेऽपि पर्यायतया भाव्यम्। सा च न विद्यते। दण्ड्याचार्यस्य साहाय्येन भ्रमित्वा मिषस्य पर्यायोक्तेः प्रकारत्वाङ्गीकारे चन्द्रालोककारस्यापि प्रमादः। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"पर्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः॥" इति॥

काव्यप्रकाशकार इदं वृत्तौ स्पष्टमकरोत्—"वाच्यवाचकभावातिरिक्तेनावगमनव्यापारेण यत्प्रतिपादनं तत्पर्यायेण कथनात्पर्यायोक्तिः" इति। अवगमनव्यापारो व्यञ्जनाव्यापारः॥

यथा—

यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता।
मदेनैरावणमुखे मानेन हृदये हरेः॥

अत्र काव्यप्रकाशगतलक्षणस्य संगतिरनया रीत्या भवति। ऐरावत इन्द्रश्च मदमानमुक्तौ जातावित्यर्थोऽभिधावृत्त्या न कथितः। किं तूक्तकथनद्वारा व्यञ्जनावृत्त्या कथितः। व्यासादिभिस्तु पर्यायता धुरंधरमतानुसारेण धर्मस्याङ्गीकृता। प्रकारान्तरेण कथनमर्थाद्धर्मान्तरेण कथनमिति। "आदाय खड्गम्"—इत्यत्र मरणं प्राप्ता भटा उक्तस्वर्गवासरूपधर्मान्तरेण कथिताः। "त्वत्कार्यं हर यद्धनम्"—इत्यत्र भस्मादीनि हरचन्दनत्वादिरूपधर्मान्तरेण कथितानि। "बीजं यस्य" इत्यत्र दुर्योधनमरणं फलरूपधर्मान्तरेण कथितम्। अथ च काव्यप्रकाशकारिकाकारो वृत्तेः

पर्यायतां स्वीचकार। अभिधया न कथनं, व्यञ्जनया कथनमिति। ध्वनि-गुणीभूतव्यङ्ग्यव्यावृत्तये प्रकाशकारो वृत्तावाह—"ध्वनौ गुणीभूतव्यङ्ग्य-स्थले च व्यङ्ग्योऽर्थोऽन्यो भवति। वाच्यार्थश्चान्यो भवति। पर्यायोक्तौ तु य एव वाच्यार्थः स एव व्यङ्ग्यार्थः" इति। कुत इत्युक्तावत्र व्यङ्ग्यमपि शब्देनोच्यते। अत्र व्यङ्ग्यदशायां वाच्यदशायां चेदमेवान्तरं, यथा व्यङ्ग्यं तथा वाच्यं नास्तीति। "यं प्रेक्ष्य चिररूढापि"-इत्यत्र व्यङ्ग्यं त्विदं,ऐरावतेन्द्रौ मदमानमुक्तौ जाताविति। वाच्यं त्वेतत्,मदमानाभ्यामैरावतस्य मुख इन्द्रस्य च हृदि चिररूढापि निवासप्रीतिरुज्झितेति। अत्र यदेव वाच्यं तदेव व्यङ्ग्यं त्वेवम्, ऐरावतेन्द्रौ मुखमनसी मदमानौ चेत्येतानि यानि वाच्यानि, तान्येव व्यङ्ग्यानि। अत एवात्र व्यङ्ग्यमपि शब्देनाभिहितम्। अत्र काव्यप्रकाशकार इमं दृष्टान्तमाह। यथा "गवि शुक्ले चलति दृष्टे, अयं गौः शुक्लश्चलतीति विकल्पः। यदेव दृष्टं तदेव विकल्पयति। न तु यथा दृष्टं तथा। यतोऽभिन्नासंसृष्टत्वेन दृष्टं भेदसंसर्गाभ्यां विकल्पयति" इति। ध्वनेरिदमुदाहरणम्—"उव णिच्चलणिप्पन्दा" इति॥ अत्र स्थाननिर्जनता व्यङ्ग्या। सा च वाच्यार्थात्सर्वथा भिन्ना। अत्र वाच्यार्थस्तूक्तबकीवृत्तान्तः। व्यङ्ग्यार्थस्तु निर्जनस्थानम्। गुणीभूतव्यङ्ग्यस्येदमुदाहरणम्—

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्॥
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया॥

अत्र वाच्यार्थस्तु तत्कालच्छिन्नवञ्जुलमञ्जरीसनाथकरं कृष्णमवलोक्य नायिकाया मुखच्छाया मलिना भवतीति। व्यङ्ग्यार्थस्तु कृतसंकेतस्थाने गमनाभावजन्यो विषादः। स च वाच्यार्थात्सर्वथा भिन्नः। अपि च—

लावण्यसिन्धुरपरैव हि काचनेयं
यत्रोत्पलानि शशिना सह संप्लवन्ते॥
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः॥

अत्रापि वाच्यार्थस्त्वयमपर एव लावण्यसिन्धुः, यत्र कमलैः सह चन्द्रादयस्तरन्ति। अथ च व्यङ्ग्यार्थस्तु नायिकाशरीरम्। तस्याश्चक्षुरादयोऽवयवाश्च। स च वाच्यार्थात्सर्वथा भिन्नः। इमं पर्यायोक्तेः प्रकारं मन्वानश्चन्द्रालोककार एतल्लक्षणमाह--

"पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम्॥" इति॥

मम तु मतं, व्यङ्ग्यमादाय पर्यायोक्तिलक्षणकथनं तु प्रमादः। प्रकारान्तरेण कथने वाच्यार्थस्य व्यङ्ग्यार्थेन कथने त्वत्र धर्मान्तरकथनमूलकचमत्कारे पर्यवसानं भवति। न तु व्यङ्ग्यार्थचमत्कारे। अतो भगवतो व्यासस्य लक्षणं समीचीनम्॥

"गम्यस्यापि पर्यायान्तरेणाभिधानं पर्यायोक्तम्"॥

सर्वस्वकारः स्वग्रन्थ इदं प्राचीनलक्षणं निधाय वदति। अत्र केवलं पर्यायान्तरे चमत्काराभावात्कारणस्य कार्येण कथनेऽथवा कार्यस्य कारणेन कथने पर्यायोक्त्यलंकारो भवति॥

यथा—

स्पृष्टास्ता नन्दने शच्याः केशसंभोगलालिताः॥
सावज्ञं पारिजातस्य मञ्जर्यो यस्य सैनिकैः॥

अत्र हयग्रीवराजस्य स्वर्गजयरूपं कारणमुक्तनन्दनवनाविध्वंसनकार्यद्वारा कथितम्। सर्वस्वकारस्येममाशयं स्पष्टीकुर्वन्विमर्शनीकारो वक्ति। पर्यायान्तरकथनमात्रं नालंकारः। कुत इत्युक्तौ वस्तूनां पर्यायान्तरेण कथनं काव्यस्वरूपसिद्ध्यर्थम्॥

यथा—

स्वभ्यस्तपूर्णविजयस्तनयस्तदीयः
क्ष्मामाररक्ष जयवाहननामधेयः।
दुर्वारवैरिवरवीरविलासिनीनां
स्वप्नावशेषमकरोत्प्रियदर्शनं सः॥

अत्र शत्रवो मारिता इत्युक्ते कविकर्माभावात्काव्यं न भवेत्। अत ईदृशपर्यायेण कथनमकाव्यत्वदोषनिवारणार्थम्। अथ च दोषाभाव-

मात्रस्यालंकारता न युक्ता। अतः कार्यद्वारा कारणस्य, अथवा कारण-द्वारा कार्यस्य कथने पर्यायोक्त्यलंकारो भवति ॥

यथा--

जागरयति मरुभूपं रिपुनृपनिगडध्वनिः प्रगे एतम्।
तस्माद्बन्दिजनानां शब्दः श्रोत्रे हि नैति संछन्नः ॥

अत्र बन्दिजनस्य निगडध्वनिभिर्निद्राभङ्गो भवतीत्येतावन्मात्रे न तात्पर्यम्, किं त्वेतावन्तः शत्रवो राजराजेश्वरस्य कारागारे सन्ति येषां निगडध्वनिः स्तुतिपाठकानां रवमाच्छाद्य राजराजेश्वरस्य निद्राभङ्गं करोतीति। अनेन प्रकारेण बहवः शत्रवो जिताः, इदं कारणमुक्तकार्यद्वारा कथितम्। अथ च कार्यनिबन्धनाकारणनिबन्धनारूपाऽप्रस्तुतप्रशंसाभ्यामस्यायं भेदः। अप्रस्तुतप्रशंसायां त्वेकमप्रस्तुतमन्यत्प्रस्तुतम्। अत्र तु कार्यकारणे द्वे अपि प्रस्तुते। "स्पृष्टास्ता नन्दने शच्याः"-इत्यत्र हयग्रीवस्य स्वर्गजये पारिजातमञ्जरीणां सावमानं स्पर्शः "जागरयति मरुभूपम्"-इत्यत्र अनन्तशत्रुबन्दीकरणं चेत्युक्तकार्यमपि प्रस्तुतमेव। एवं च मम मतं, विमर्शिनीकारसहितस्य सर्वस्वकारस्यायं प्रमादः। कुत इति चेत्

खड्गं गृहीत्वा येऽभूवन्मरुराट्सैन्यसंमुखाः।
तेऽरयो मारिताः सर्वे ज्ञातमेतद्धरातले ॥

अत्रैवं कथनमपि राजराजेश्वरसेनायाः सामर्थ्यसाधकतया रमणीयमस्तीति काव्यत्वम्। मारिता इति स्थाने

सुराङ्गनाभिराश्लिष्टाः सुखं सुप्ताः सुरालये ॥

एवं पर्यायेण कथनं रमणीयं भूत्वा पर्यायोक्त्यलंकारः। अपि च

चक्रे नन्दनविध्वंसो हयग्रीवस्य सैनिकैः ॥

एवं कथनेऽप्यशक्यकार्यकारितारूपतया रमणीयतया काव्यत्वम्। तत्र "स्पृष्टास्ता नन्दने शच्याः"-इति पर्यायेण कथनं रमणीयतया पर्यायोक्त्यलंकारः। अपि च

अनन्ता अरयो बद्धा निगडैर्मरुभूभुजा ॥

एवं कथनमपि सामर्थ्यसाधकतया रमणीयं भूत्वा काव्यं भवति। तस्योक्तपर्यायेण कथनं रमणीयमिति पर्यायोक्तयलंकार इत्यादि। एवं रीत्या पर्यायमात्रेण पर्यायोक्त्यलंकारे सिद्धे कार्यकारणपर्यन्तानुधावनमनावश्यकम्। अपि च "स्पृष्टास्ता नन्दने शच्याः" इतीदं नन्दनवनविध्वंसनस्य पर्यायः। न तु स्वर्गजयरूपार्थस्य पर्याय इत्यनुभवसिद्धम्। अतः कारणकथनेन कार्यज्ञाने, कार्यकथनेन कारणज्ञाने वा कार्यकारणयोः पृथक्पृथग्भावात्तयोरन्यतरदेकस्य पर्यायो न भवति। पर्यायोक्तिस्तु धर्मान्तरेण कथने भवति। इदं पूर्वमुक्तम्। अपि च कार्यकारणनिबन्धनाऽप्रस्तुतप्रशंसाप्रकारयोः खण्डनमप्रस्तुतप्रशंसाप्रकरणे लिखितम्। अलंकाररत्नाकरकारः पर्यायोक्तेः प्रकारद्वयमङ्गीकुर्वन्निदं लक्षणमाह—

"सापेक्षत्वादुपादाने नान्यप्रतीतिर्भङ्ग्यन्तरेण वाऽभिधानं पर्यायोक्तम्॥" इति॥

सापेक्षत्वादुपादानलक्षणयाऽन्यस्य प्रतीतिः, अथवा रचनान्तरेण कथनं पर्यायोक्तिरित्यर्थः। निरपेक्षत्वादन्यस्य प्रतीतौ ध्वनिः। सापेक्षत्वादन्यस्य प्रतीतौ लक्षणा भवति। तत्राप्यप्रस्तुतप्रशंसायां लक्षणलक्षणा भवति। पर्यायोक्तौ तूपादानलक्षणा भवति॥

क्रमेण यथा—

स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम्॥

अत्रोक्तपर्यायेण राजराजेश्वरशत्रुस्त्रीणां भर्तृवधस्योपादानलक्षणया ग्रहणम्। अत्र कवेस्तात्पर्यं पतिवधपर्यन्तम्। न त्वरिस्त्रीणामुक्तावस्थामात्रे। उक्तेऽरिस्त्रीणामवस्थामात्रे पर्यवसाने तु कवितात्पर्यस्य बाधादुपादानलक्षणया पतिवधस्य ग्रहणम्। पतिवधः कारणम्। उक्तावस्था कार्यम्॥

"स्वभ्यस्तपूर्णविजयस्तनयस्तदीयः"-

इत्यत्र प्रियदर्शनाभावः स्वप्नावशेष इति पर्यायेणोक्तः। मम तु

मतं, अस्मिन्नुदाहरणे तु पर्यायोक्तिः । कुत इति चेत्स्वप्नावशेषप्रियदर्शनं तु पतिवधस्य पर्यायः । अपि च "स्तनयुगमश्रु"—इत्यस्मिन्नुदाहरणे न पर्यायोक्तिः । कुत इत्युक्तावरिस्त्रीणां तादृश्यवस्था प्रियवधस्य पर्यायो न भवति किं तु ज्ञापकहेतुः । एतेषां प्राचीनानां मते कार्यकारणाऽभाव उपादानलक्षणाभावे च न पर्यायोक्त्यलंकारः । मन्मते तेषामयं प्रमादः । अस्यालंकारस्य स्वारस्यं तु पर्यायान्तरेण कथनम् । एतावन्मात्रे चमत्कारोऽनुभवसिद्धः। यथा—"त्वत्कार्ये हर यद्धनं लगति नो"—इत्यादिषु । अप्रस्तुतप्रशंसायां त्वेकोर्थोऽन्यार्थस्य शोभाकरो भवति । अत्र तु स्तम्भचित्रन्यायेन स एवार्थस्तस्यैवार्थस्य शोभाकरः । यद्यप्युत्कीर्णचित्रं चित्ररूपेण स्तम्भाद्भिन्नं प्रतीयते; तथापि वस्तुतः स्तम्भान्नातिरिच्यते ॥

॥ इति पर्यायोक्तिप्रकरणम् ॥ ३७ ॥



## ॥ पिहितम् ॥



पिहितशब्दार्थ आच्छादनम् । "पिहित आच्छादिते" इति चिन्तामणिकोषकारः ॥

पिहितं वर्ण्यते यत्र पिहितालंकृतिस्तु सा ॥

यथा—

यशसा मरुभूपस्य पिहितं हि जगद्यशः ॥

यथावा—

मरुनाथप्रसादे तु पिधीयन्ते सुदुर्गुणाः ॥
भीरुः शूरश्च मूढोऽपि दक्षो लोकैर्निगद्यते ॥

यथावा—

उद्घाटयामास कृपाणमेकं
मरुस्थलेन्द्रो यशवन्तसिंहः ॥

आच्छादितान्यन्यमहीपतीनां
छिद्राणि राजन्नवरङ्गकाले ॥

मिलितालंकारे नीरक्षीरन्यायेन मेलनम् । पिहिते तु मेघपटलेन चन्द्राद्याच्छादनवदाच्छादनम् । रुद्रटस्येदं लक्षणम्—

यत्रातिप्रबलतया गुणः समानाधिकरणमसमानम् ॥
अर्थान्तरं पिदध्यादाविर्भूतमपि तत्पिहितम् ॥

यथा—

प्रियतमवियोगजनिता कृशता कथमिव तवेयमङ्गेषु ॥
लसदिन्दुकलाकोमलकान्तिकलापेषु लक्ष्येत ॥

अत्र नायिकारूपैकाधिकरणे स्थितस्य प्रकटितस्यापि कान्तिकलापेनासमानस्य कृशतारूपार्थान्तरस्य कान्तिकलापरूपगुणेनातिप्रबलतयाऽऽच्छादनं कृतम् । मम तु मतं, अस्मिन्नुदाहरणे पिहितालंकारस्य संगतिरेतावतैव सिद्धा । कृष्णवियोगजन्यराधिकाकृशता कान्तिकलापेनाच्छादितेति कृशता न प्रतीयते । रुद्रटेन मिलितालंकारव्यावृत्तये "असमानम्" इति विशेषणमुक्तम् । स तु प्रमादः, कुत इति चेन्मेलनाच्छादनयोः स्वरूपं भिन्नभिन्नमस्ति । समानगुणस्थलेऽपि मेलने पर्यवसाने मिलितं भवति । आच्छादने पर्यवसाने पिहितं भवति ॥

यथा—

यशवन्तयशोराशौ मग्नं कैलासपर्वतम् ॥
स्वकीयं न महादेवो ज्ञातुं शक्तः कथंचन ॥

अत्र मेलनान्मिलितालंकारः । अपि च—

यशवन्तमहाराजयशसाऽन्यमहीभुजाम् ॥
यशांसि च्छादितान्यासन्नुदाराण्यपि भूतले ॥

अत्र समानगुणातिरिक्तजात्यापि समानता वर्तते । तथापि मेलनस्य विवक्षा नास्ति, किं तु राजराजेश्वरयशसाऽन्यराजयशसामाच्छादनं कृतं, यतस्तानि न दृश्यन्ते । उदाहरणानुसारेणैकाधिकरणत्वविशेषणदानमपि प्रमादः। "उद्घाटयामास"- इत्यत्राच्छाद्याच्छादकयोश्छिद्रखड्गयोर्विभिन्ना-

धिकरणत्वात् । खड्गं राजराजेश्वरकरे, छिद्राणि त्वन्यराजसु वर्तन्ते । अतिप्रबलतयेतिविशेषणमप्यनावश्यकम् । तस्यार्थसिद्धत्वात् । प्रबल एवान्यमाच्छादयति स्वस्मिन्नन्तर्भावयति वेतीदं प्रसिद्धम् । चन्द्रालोकस्येदं लक्षणम्—

"पिहितं परवृत्तान्तज्ञातुः साकूतचेष्टितम् ॥" इति ॥

परवृत्तान्तज्ञातुर्यत्साभिप्रायचेष्टितं तत्पिहितमुच्यत इत्यर्थः ॥

यथा—

प्रिये गृहागते प्रातः कान्ता तल्पमकल्पयत् ॥

अत्र पती रात्रावजागरीत् । इत्येवं वृत्तान्तं जानन्त्या नायिकायाः प्रातस्तल्पकरणचेष्टैतदभिप्रायसहिता । सपत्न्या सहाखिलां रात्रिं जागरितोऽस्यधुना शयनं कुर्विति ॥

यथावा—

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ॥
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥

अत्र नायिकाया विपरीतरतिरूपवृत्तान्तं जानन्त्याः सख्यास्तस्या नायिकाया हस्ते खड्गलेखनरूपचेष्टैतदभिप्रायसहिता, त्वं पुरुषकार्यं करोषीति । मम तु मतं, अस्य लक्षणेंऽशद्वयमस्ति । एकः परवृत्तान्तपरिज्ञानरूपः । अन्यः साभिप्रायचेष्टारूपः । इमावुभावप्यंशौ न पिहितशब्दार्थौ । एवं परवृत्तान्तज्ञानं त्वनुमानम् । अपि च तस्याभिप्रायस्य चेष्टया ज्ञापनं सूक्ष्मालंकारस्य पर्यायोक्तेर्वा विषयः । कुत इत्युक्तौ सूक्ष्मतया कथनविवक्षायां सूक्ष्मालंकारः । पर्यायेण कथनविवक्षायां पर्यायोक्त्यलंकारः । शब्दरचनया कथनस्य पर्यायश्चेष्टया कथनम् । यथाऽक्षरस्य पर्यायः करपल्लवचेष्टातन्त्रीसंकेतादयः । मया त्वेवमनुमीयते, अत्राच्छादितपरवृत्तान्तपरिज्ञानेन तज्ज्ञातवृत्तान्तमाच्छादयित्वा ज्ञापनेन वा चन्द्रालोककारः पिहितनाम्नः संगतिं कृतवानिति; स तु प्रमादः । अस्य लक्षणस्य पूर्वांशे त्वनुमानं प्रधानमुत्तरांशे तु सूक्ष्मं प्रधानम् । अंशद्वयेपि

पिहितं तु गौणम्। अपि चालंकारव्यवहारस्तु प्रधानस्य भवति। अत ईदृशविषये पिहितालंकारो भवितुं नार्हति। केनाचिदुदाहरणेन अभिस्वोदाहरणानुसारेणेदं लक्षणं निर्मितम्। अपि चापन्हुतौ गोपनमस्ति, पिहिते त्वाच्छादनमस्ति, गोपनं त्वन्यज्ञाननिरोधः। आच्छादनं तु वस्तुस्वभावेनाच्छादनम्। एवं रीत्याऽनयोर्महती विलक्षणता। अपि चास्य लक्षणे परवृत्तान्तज्ञानं, साभिप्रायचेष्टेत्यंशद्वयमस्ति। एतदंशद्वयेपि गोपनमस्ति। आच्छादनं नास्त्यपि॥

॥ इति पिहितप्रकरणम् ॥ ३८ ॥

## ॥ पूर्वरूपम् ॥

रूपशब्दोऽनेकार्थः। उक्तं चिन्तामणिकोषकारेण "रूपं स्वभावे, आकारे, शुक्लादौ" इति। पूर्वरूपमर्थात्प्राक्तनं रूपम्। अत्र पूर्वरूपस्य प्राप्तिर्विवक्षिता। पूर्वस्वभावस्य पूर्वाकारस्य पूर्वस्य शुक्लादिवर्णस्य वा प्राप्तौ पूर्वरूपालंकारः। स्वभावस्तु निजस्थितिः॥

**पूर्वरूपस्य संप्राप्तौ पूर्वरूपं नराधिप! ॥**

यथा—

त्वं पुनर्जयचन्द्रोऽभूः कृत्वा भूपतिमण्डलम्॥

महाराजजयचन्द्रस्य राज्ञां मण्डलमभूत्। तदैव च तेन राजसूयेनायाक्षीत्। तदनन्तरमस्मिन्वंश इयमवस्था नास्थात्। राजराजेश्वरयशवन्तसिंहस्य राजकुमारसरदारसिंहस्य विवाहोत्सवेऽनेकेषां राज्ञामामन्त्रणेन तस्याः पूर्वावस्थायाः प्राप्तिर्जाता। परिणामेऽवस्थान्तरप्राप्तिः। अत्र तु पूर्वावस्थाप्राप्तिरित्यनयोरतीव विलक्षणता॥

यथावा—

सर्पाधिराजः क्षितिकण्ठकण्ठ-
त्विषोपरक्तः शितिमानमाप॥

सितीकृतस्ते यशसा पुनः स
किं ब्रूमहे ते यशसो विभूतिम् ॥

अत्र शेषः स्वभावाच्छ्वेतः। स च हरकण्ठस्थशितिविषा नीलवर्णतामाप। पुना राज्ञो यशसा सितीकृत इति पूर्वरूपता। अत्र तद्गुणस्य संकीर्णत्वम् ॥

धुरंधरस्येदमुदाहरणम्—

विभिन्नवर्णा गरुडाग्रजेन
सूर्यस्य रथ्याः परितः स्फुरन्तः ॥
रत्नैः पुनर्यत्र रुचा रुचं स्वा-
मानिन्यिरे वंशकरीरनीलैः ॥

अत्रापि तद्गुणतामेव मत्वा पूर्वरूपमलंकारं पृथगनुक्त्वा काव्यप्रकाशकारस्तद्गुण इदमुदाहृतवान्। सर्वस्वकारादयः काव्यप्रकाशानुसारिणः। एतेषामनुसारी रसगङ्गाधरकारः—

अधरेण समागमाद्रदाना-
मरुणिम्ना पिहितोपि शुद्धभावः ॥
हसितेन सितेन पक्ष्मलाक्ष्याः
पुनरुल्लासमवाप जातपक्षः ॥

इदमुदाहृत्य वदति। अत्र पूर्वार्धे स्पष्ट एव तद्गुणः, परं तूत्तरार्धगतेन प्रतिप्रसवतुल्येन हासेनापोह्यमानत्वाद्भङ्गुरः। यदि तु हासेनाधरासितीकरणद्वारा दन्तगतारुणिम्नो बाधस्तदा तत्राप्यपरस्तद्गुणः। इमं केचित्पूर्वरूपमामनन्तीति। मम तु मतं, एतादृशस्थलेऽन्यगुणसंपर्कात्पृथक् पृथग्द्वौ तद्गुणौ स्तः, परं तूत्तरस्मिंस्तद्गुणे जाते सति पूर्वावस्थाप्राप्तेश्चमत्कारो भवति। तस्यैवोद्धरकंधरत्वेन प्रधानतयाऽलंकारत्वम्। तद्गुणस्तु तस्याङ्गभूत एवेति। एषां प्राचां दृष्टौ तद्गुणताया अंशं विना पूर्वरूपस्योदाहरणं नायात्तदैते रूपशब्दार्थं शुक्लादिवर्णमात्रं ज्ञातवन्तः। अत एतादृशोदाहरणानां तद्गुणेऽन्तर्भावं कृत्वा पूर्वरूपालंकारं पृथङ्नाङ्गीकृतवन्तः। अयमेषां प्रमादः। तद्गुणतांशं विनापि पूर्वरूपं भवति ॥

यथा—

हयैश्चूर्णीकृता भूमिर्यात्रायां मरुभूपतेः ।
मातङ्गमदधाराभिः पुनः पिण्डीकृताऽभवत् ॥

अत्रातिशयोक्तिसंकीर्णता ॥

यथावा—

राजन्सप्ताप्यकूपारास्त्वत्प्रतापाग्निशोषिताः ।
पुनस्त्वद्वैरिवनिताबाष्पपूरेण पूरिताः ॥

अत्राप्यतिशयोक्तिसंकीर्णता ॥

यथावा—

भाले लिखितं धात्रा कथमपि मार्ष्टुं न शक्यते क्वापि ।
करिकरटौ सृणिभीतेः कुचभावेऽपि हि नखक्षतं प्राप्तौ ॥ १ ॥

यथावा—

त्रस्ता विधूदये काचिदर्धमार्गे मृगेक्षणा ।
भाग्यात्सुगन्धसंसक्तैर्मधुपैर्विहितं तमः ॥

चन्द्रालोककारः पूर्वरूपद्वयं स्वीकृत्येमे लक्षणे प्राह—

"पुनः स्वगुणसंप्राप्तिः पूर्वरूपमुदाहृतम् ।
पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि ॥" इति ॥

क्रमेण यथा—

"विभिन्नवर्णा गरुडाग्रजेन"—इति ॥

अत्र रविहयानां हरिद्वर्णगुणस्य पुनः प्राप्तिः ॥

दीपे निर्वापितेप्यासीत्काञ्चीरत्नैर्महन्महः ॥

अत्र विकृतस्य प्रकाशवस्तुनः पूर्वावस्थायाः पुनः प्राप्तिः । मम तु मतं, अत्र रूपशब्दस्यानेकार्थतया धुरंधरस्य नामरूपलक्षणे सर्वस्य समावेशात्पृथक्पृथक्लक्षणनिर्मितिस्तु प्राचीनानां प्रमादः ॥

इति पूर्वरूपप्रकरणम् ॥ ३९ ॥

# ॥ प्रतिमा ॥

प्रतिनिधेः पर्यायः प्रतिमा । उक्तं च चिन्तामणिकोषकारेण "प्रतिनिधिः प्रतिमायाम्" इति । मुख्यस्याभावे तत्सदृशो य उपादीयते स प्रतिनिधिरुच्यते । यथा देवानामभावे या देवानां मूर्तयः स्थाप्यन्ते ताः प्रतिमा इत्युच्यन्ते । एतल्लोकच्छायानुसारेण धुरंधरेणायमलंकारः स्वीकृतः ॥

वर्णनं प्रतिमात्वेन प्रतिमालंकृतिर्नृप ।
उपमादेरलंकारादस्य रूपं पृथग्भवेत् ॥

यथा—

विद्याप्रवृद्धिं कविसत्कृतिं च
कुर्वन्यशःसंचयमप्यजस्रम् ।
राजेश्वरश्रीयशवन्तसिंह !
स्थानेऽस्ति भोजस्य भवानिहाद्य ॥

विद्यावर्धनादिकार्येषु भोजमहाराजो मुख्यो बभूव । तस्याभावे विद्यावर्धनादिकार्येषु भोजस्य सदृशतया राजराजेश्वरयशवन्तसिंहः परमेश्वरेण तत्स्थानापन्नः कृतः ॥

यथावा—

देशान्तरं गते कान्ते विरहेण कदर्थिता ।
ननान्दृमुखमालोक्य जीवत्येषा विलासिनी ॥

अत्र विदेशस्थपत्युरसांनिध्ये पत्युः सदृशाकारतया ननान्दा नायिकया तत्स्थानापन्ना कृता । रत्नाकरकारस्येदं लक्षणम्—

"अन्यधर्मयोगादार्थमौपम्यं प्रतिमा॥" इति ॥

"स च प्रसिद्धगुणवदर्थान्तरसंबन्धिभिः कार्यकारित्वादिभिर्धर्मैः संबन्धोपनिबन्धात्सामर्थ्यलभ्यमौपम्यं प्रकृतस्यार्थान्तरप्रतिमतया प्रतिमा नामायमलंकारः । अत्रेवाद्यनुपादानान्नोपमा" इति वृत्तावुक्त्वेदमुदाहरति—

अधरव्रणसीत्काररोमाञ्चान्रचयन्नसौ ।
प्रियस्य सर्वकार्याणि करोति शिशिरः सखि ! ॥

अत्र प्रियतमकार्यस्य शिशिरेण करणाच्छिशिरे प्रियतमतुल्यताप्रतीतेरार्थमौपम्यम् । अतः प्रतिमा ॥

यथावा—

दृष्टिं हठेन पिदधाति न केलिकारः
संवेदनं हरति हन्त न मूर्छनापि ।
मर्माणि संस्पृशति नो पिशुनश्च कश्चि-
दत्यद्भुतो बलभरोयमदृष्टपूर्वः ॥

अत्र तारुण्ये केलिकारादिकारणाभावेपि हठेन दृष्टिपिधानादितत्तत्कार्यनिबन्धनाद्विभावनासंकीर्णता ॥

यथावा—

गण्डयोररुणिमा दृशि भावः
कोपि च भ्रुकुटिविभ्रमहेतुः ।
सुभ्रुवां दयितसान्त्वनवर्ज्जं
मानकार्यकरणाय मदोऽभूत् ॥

मम तु मतं, अत्रार्थ औपम्ये पर्यवसाने नूपमायामन्तर्भावो भविष्यति। किंच रत्नाकरकारः कथयति, अत्रेवाद्युपादानाभावान्नोपमेति । परभिवादीनां लोपेऽपि लुप्तोपमानामक उपमाप्रकारोऽभिहितः । अत्र चमत्कारः प्रातिनिध्यमूलकः। स एवालंकारान्तरतासाधकः । अतो धुरंधरस्य नामरूपलक्षणमेव समीचीनम् । अत्रैवं शङ्का न कार्या

"अकारणात्कार्यजन्म चतुर्थी स्याद्विभावना ॥"

इति लक्षणलक्षितविभावनायां प्रतिमाया अन्तर्भावः कुतो नेति। कुत इत्युक्तावत्र प्रतिमायां प्रतिनिधिबुद्धिर्वर्तते । अकारणबुद्धिर्नास्ति । अलंकारस्य वैवक्षिकत्वादित्युक्तमसकृत्

॥ इति प्रतिमाप्रकरणम् ॥ ४० ॥



# ॥ प्रत्यनीकम् ॥

अनीकशब्दस्य सेनामात्रं, सेनासमवेतश्चार्थः। उक्तं च चिन्तामणिकोषकारेण "अनीकं सैन्ये। सेनामात्रे। सैन्यं सेनासमवेते" इति। समवेतशब्दस्तु मिलितार्थकः। उक्तं च चिन्तामणिकोषकारेण "समवेतो मिलिते" इति। अत्र प्रतीत्युपसर्गार्थः सांमुख्यम्। उक्तं च चिन्तामणिकोषकारेण "प्रति आभिमुख्ये" इति। लोके यस्य संमुखीभूय कथनदानादिकं क्रियते, तदुद्देशे प्रतिशब्दस्य प्रयोगो भवति। अमुकं प्रति कथितं, अमुकं प्रति दत्तमित्यादि। प्रत्यनीकमिति शब्दसमुदायार्थस्त्वनीकं प्रतीति। साक्षात्कर्तारं प्रति करणं त्वन्योन्यालंकारस्य विषयः। तस्य पक्षे करणं तु प्रत्यनीकालंकारस्य विषयः। एवं द्वयोः स्वरूपं विलक्षणम्। पक्षस्तु संबन्धी। यद्यपि शत्रोः सेना शत्रोः पक्षस्तथापि शत्रुसेना शत्रुवद्युध्यते। अतः शत्रुसेनां प्रति पराक्रमकरणं त्वन्योन्यालंकारस्यैव विषयः। गजहयरथपदातिसमूहः सेनेत्युच्यते। योद्धा पदातिरपि युध्यते। गजाश्वरथादिकमारुह्यापि युध्यते। अत एते सर्वे युद्धकर्तारः। सेनायां मिलितास्त्वन्नपानादिप्रापका भारवाहादयश्चाते सेनायाः केवलं पक्षा एव। लोके चैतान्सेनापक्षानपि घ्नन्ति। अनेन प्रत्यनीकन्यायेन धुरंधरः प्रत्यनीकालंकारं मेने। यथा दीपकन्यायेन दीपकालंकारः। धुरंधरस्य तात्पर्यं तु पक्षमात्रविषयकम्। अतः शत्रुमित्रादीनामनेकेषां पक्षेऽयमलंकारो भवति। अस्यालंकारस्य निमित्तान्यपि साक्षाद्वस्तुनि करणाशक्तताद्यनेकानि भवन्ति। अपि च करणमप्यपकारापकारादिरूपतयाऽनेकविधं भवति। अस्यालंकारस्य स्वरूपं तु संबन्धिनः संबन्धिविषयकत्वम्। अतः कश्चिरसंबन्धिनः संबन्धिनं प्रति कुर्यात्, संबन्धिनः संबन्धी कंचित्प्रति वा कुर्यात्, यद्वा संबन्ध्यर्थं कश्चित्कंचित्प्रति कुर्यात्, इत्यादीनामुपलक्षणतयात्र संग्रहो भवति। एषां सर्वेषामुदाहरणानि मया प्रदर्शयिष्यन्ते॥

भवेद्यत्र प्रत्यनीकन्यायस्तु मरुवल्लभ!॥

जानीहि तत्रालंकारं प्रत्यनीकमनुत्तमम् ॥

यथा—

विलोक्य मरुनाथस्य विभवं पाकशासनः ॥
असहिष्णुरनावृष्ट्या तदीया बाधते प्रजाः ॥

वैभवदानादिभिः साम्यकरणाद्राजराजेश्वरेण सहेन्द्रस्येर्ष्या वर्तते। राज्ञां प्रजानां च पाल्यपालकभावसंबन्धः। साक्षान्मरुनरेश्वरं प्रत्यपकर्तुमशक्त इन्द्रो वर्षाकाले वृष्टिं न कृत्वा मरुनरेश्वरस्य प्रजापीडां करोति। मरुदेशे बहुधा वृष्टिर्न्यूना भवति। अनेन बलेन कविरुत्प्रेक्षामकरोत्, परं त्वत्रोत्प्रेक्षा गौणी। प्रधानालंकारस्तु प्रत्यनीकम् ॥

यथावा—

निर्जितस्तव रूपेण मदनो मधुसूदन! ॥
त्वद्रतां दुर्मतिर्मुग्धां पञ्चभिर्बाधते शरैः ॥

अत्र नायिकानायकयोः पतिपत्नीभावः संबन्धः। अत्र संबन्धिन्यां नायिकायामुक्तपराक्रमकरणस्य निमित्तं मदनस्य साक्षान्नायकं प्रति रूपविषये पराक्रमकरणाशक्तिः। सा च "निर्जितः" इति शब्देन व्यञ्जिता ॥

यथावा—

यस्य किंचिदपकर्तुमक्षमः
कायनिग्रहगृहीतविग्रहः ॥
कान्तवक्त्रसदृशाकृतिं कृती
राहुरिन्दुमधुनापि बाधते ॥

अत्र सादृश्यसंबन्धः॥

यथावा—

रिपुसूर्यानुरक्तेति बाधते पद्मिनीं शशी ॥

अत्र रवेः पद्मिन्याश्च विकास्यविकासकभावः संबन्धः ॥

यथावा—

इदं मदं चन्द्रमसः समन्ता-

दस्मत्सपत्नस्य हरिष्यतीति ॥
अस्मिन्पुरन्ध्रीवदनस्य लक्ष्मीं
निजां ददुः प्राभृतमम्बुजानि ॥

रिपोः संबन्धिनौ द्वौ; एकस्तु शत्रोर्मित्रं, अपरः शत्रोः शत्रुरिति। अम्बुजानां चन्द्रमा रिपुः, चन्द्ररूपसाक्षाच्छत्रोरपकारेऽक्षमाण्यम्बुजानि चन्द्रेण सह शत्रुभावसंबन्धवतः पुरंध्रीमुखस्य स्वश्रियोऽर्पणेनोपकारं कुर्वन्ति ॥

यथावा—

रामाज्ञालङ्घनेऽशक्तो भरतो लक्ष्मणोपमम् ।
रामेण सह नो गत्वा सिषेवे पादुके प्रभोः ॥

अत्र पादुकयो राघवस्य चोपकरणोपकरणिभावः संबन्धः । आज्ञालङ्घनाशक्तो रामेण सह वने स्थित्वा साक्षाद्राघवसेवां कर्तुमक्षमो भरतस्तदीयपादुकासेवामकरोत् । अत्र निमित्तमशक्तता । सा शाब्दी । भक्तेरुत्कटतारूपं निमित्तं स्वर्थसिद्धम् ॥

यथावा—

प्राज्ञो यौवनभूपालः स्वाङ्गबुद्ध्या तवाङ्गने ।
स्तनौ नेत्रे नितम्बौ च विवर्धयति सादरम् ॥

अत्र यौवनं नायिकाशरीरे प्रविष्टं, अतो नायिकाशरीरं यौवनस्य देशो जातः । अङ्गशब्दस्यार्थो देशः शरीरमपि च । अत्र श्लेषस्यापि चमत्कारः । यौवननृपतिः स्तनादीन्स्वाङ्गस्येति मत्वाऽवर्धयत् । प्राज्ञो राजा स्वदेशीयान्विवर्धयतीति लोकरीतिः । शरीरस्य यौवनस्य चाश्रयाश्रयिभावः संबन्धः । स्तनादीनां शरीरस्य चावयवावयविभावः संबन्धः । अत्र यौवनभूपालस्य स्वाश्रयसंबन्धिषूपकारकरणे निमित्तं राजनीतिः ॥

यथावा—

यः कृष्णमिलनाद्धर्षः स चेच्चित्रे प्रजायते ।
तदा हि साक्षात्कृष्णेन को मिलेन्मृगलोचने ॥

अत्र कृष्णस्य कृष्णचित्रस्य च बिम्बप्रतिबिम्बभावः संबन्धः। प्रतिमाया अपि प्रतिबिम्बसंज्ञास्ति। आह चिन्तामणिकोषकारः। "प्रतिबिम्बः प्रतिमायाम्" इति। चित्रमपि प्रतिमैव। कृष्णासक्ता राधा तत्संबन्धिनि चित्रे प्रीतिं करोति। अत्र साक्षात्कृष्णमिलनमनभिलषन्त्या राधिकायाः कृष्णसंबन्धिचित्रे प्रीतिकरणनिमित्तं तु मुग्धावस्था। तच्च नायकस्य प्रत्यक्षमेलनसुखस्याज्ञानाद्व्यञ्जितम्॥

त्वद्रूपविजितः कामो बाधते त्वां तु युज्यते।
निरागस्कां भवत्कान्तां बाधते तन्न युज्यते॥

अत्र साक्षाद्रिपौ तत्संबन्धिनि चेत्युभयत्र करणम्। अत्र निमित्तं तु शत्रुत्वस्योत्कटता। साक्षाच्छत्रौ शत्रुताकरणांशस्त्वन्योन्यालंकारस्य विषयः। तेनान्योन्यस्य प्रत्यनीकस्य चात्र संकरः। उक्तोदाहरणानि संबन्धिनं प्रति करणविषये प्रदर्शितानि। संबन्धिनः करणमुदाह्रियते॥

यथा—

ग्रथिता कुसुमैर्वेणी राजते सुमनोहरा।
मन्ये स्वनाथविद्वेषी राहुरग्राहि तारकैः॥

चन्द्रस्ताराणां पतिः। चन्द्रस्य तारागणस्य च स्वस्वामिभावः संबन्धः। अत्र चन्द्रसंबन्धिन्यस्ताराश्चन्द्रशत्रुं राहुं प्रति पराक्रमं चक्रुः। अत्र निमित्तं स्वामिभक्तिः॥

यथावा—

विजित्य निखिलं लोकं मार्गशीर्षः स्वयंभटः।
कामाय स्वामिने मार्गं न ददात्याहवं प्रति॥

ऋतुर्मासादयश्चोद्दीपकत्वात्कामस्य सैनिकाः। अत्र कामस्य जगज्जयारम्भे कामसंबन्धिमार्गशीर्षमासो जगज्जये पराक्रममकरोत्। सेनायाः सेनापतेश्च शास्यशासकभावः संबन्धः। अत्र निमित्तमवश्यकर्तव्यता। मृगशिरोनक्षत्रयुतपौर्णमासीयुक्ते मासे मार्गशीर्षशब्दो रूढः। स च स्वयं जगज्जयकरणात्कामस्य जगज्जयप्रयाणसमय आगत्य मार्गे शीर्षं निधाय प्रार्थयामास, भवता जगज्जयाय न गन्तव्यं, मया सर्वं कृतमिति। अत्र मासवाची मार्गशीर्षशब्दो मार्गे शीर्षं यस्येत्यर्थे योजितः, अतोऽत्र

निरुक्तिसंकीर्णत्वम् । लोकेपि भृत्येन स्वयं जयः कृतश्चेत्स्वामिनि जयोन्मुखे मार्गे शिरो निधानपूर्वकप्रार्थनाकरणस्य रीतिर्विद्यत एव ॥

संबन्ध्यर्थं करणस्योदाहरणं यथा—

मधुव्रतौघः कुपितः स्वकीय-
मधुप्रपापद्मनिमीलनेन ।
बिम्बं समाक्रम्य बलात्सुधांशोः
कलङ्कमङ्के ध्रुवमातनोति ॥

अत्र मधुव्रताः स्वसंबन्धिनः पद्मस्य कृते चन्द्रं प्रति पीडां कुर्वन्ति । अस्मिन्धुरंधरोदाहरणे प्रत्यनीकस्य संगतिर्या मया कृता सैवास्ति । तत्तात्पर्याज्ञानात्साक्षाच्छत्रुं प्रति पराक्रमकरणेऽपि प्रत्यनीकं जानन्कुवलयानन्दकारो वदति—"बलवति प्रतिपक्षे प्रतिकर्तुमशक्तस्य तदीयबाधनं प्रत्यनीकमिति स्थिते साक्षात्प्रतिपक्षे पराक्रमः प्रत्यनीकमिति कैमुतिकन्यायेन फलति" इति । अपि च कुवलयानन्दे दीक्षितेन "मधुव्रतौघः—" इत्यस्मिन्धुरंधरोदाहरण उक्तरीत्या प्रत्यनीकालंकारस्य संगतिः कृता । मम तु मतं, अयं कुवलयानन्दकारस्य प्रमादः । कुत इत्युक्तावस्यालंकारस्य चमत्कारस्तु संबन्धिविषयकः, न तु साक्षाद्विषयकः । अपि च पराक्रमकरणांशेऽस्यालंकारस्य चमत्कारो नास्ति । येन पक्षे पराक्रमकरणे साक्षाच्छत्रुप्रभृतिषु पराक्रमकरणे वा चमत्कारैक्यं स्यात् । साक्षान्मित्रं प्रति शत्रुं प्रति वोपकारापकारकरणं त्वन्योन्यस्य विषयः ॥

यथा—

संकेतदेशे गमनस्य काले
जहास चन्द्रं वदनं मृगाक्ष्याः ।
प्राप्तेरभावात्प्रियदर्शनस्य
जहास चन्द्रो मलिने तु तस्मिन् ॥

मित्रशत्रुपक्षयोरुपकारापकारकरणेऽपि तत्फलं प्रायो मित्रशत्रुपर्यन्तं प्राप्नोति, परं त्वीदृशवर्णने चमत्कारस्य पर्यवसानं तु पक्ष एव ॥

छायापि कान्तविषये न विश्वासपदं ततः ।

लज्जामपि सखीं त्यक्त्वा सखि यामि हरिं प्रति ॥

अत्रान्यसंभोगदुःखिताया नायिकाया दूतीविषयकेर्ष्याया उत्कटत्वात्स्त्रीलिङ्गरूपदूतीसंबन्धवतीषु लज्जादिषु प्रतीतित्यागः। यद्यप्यत्र दूतीप्रतीतित्यागपूर्वकं लज्जायां प्रतीतित्यागो वर्तते; न तु दूतीप्रतीतित्यागं विना केवलं लज्जायां प्रतीतित्यागः। तथाप्यत्र चमत्कारस्य पर्यवसानं तु संबन्धिनं प्रति करणे वर्तते ॥ काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया।
या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते"॥ इति ॥

अनीकमर्थाच्छत्रुसैन्यस्यान्नपानादिप्रापकान् भारवाहकाँश्च प्रति त्वपकार एव भवति। एवं कर्तुश्च साक्षाच्छत्रुं प्रति करणस्याशक्ततया निन्दा, शत्रोश्च स्तुतिर्भवति। परं त्वेतयोरंशयोर्न चमत्कारः, चमत्कारस्तु पक्षे करणांशमात्रे। तदेवादाय धुरंधरेणास्मिन्न्यायेऽलंकारोऽङ्गीकृतः। एतत्स्वारस्यापरिज्ञानादेतत्कारिकाकारस्य समस्तांशानादाय लक्षणकथनं तु प्रमादः। यतः केवलस्य प्रतिपक्षिणः पक्ष एव नायमलंकारः, किं तु मित्रस्य पक्षेऽप्यस्माभिः प्रदर्शितः। पक्षे करणस्य च निमित्तं न केवलमशक्तत्वम्, अस्माभिरनेकानि निमित्तानि प्रदर्शितानि। अपि च न केवलं तिरस्कारकरणमेव। सत्कारकरणमपि मया प्रदर्शितम्॥

यथावा—

ये जना भगवद्भक्ताः पूज्यन्ते ते महात्मभिः।
यथार्च्यन्ते वरप्रीत्यै जन्या जगति सर्वदा ॥

अपि च प्रतिपक्षस्य पक्षे तिरस्कारक्रियाकरणस्य फलं प्रतिपक्षस्य स्तुतिरित्युक्तम्। तदपि प्रमाद एव। कुत इति चेत्साक्षात्प्रतिपक्षं प्रति करणस्याशक्ततया पक्षं प्रति करणे प्रतिपक्षस्य स्तुतिरूपं फलं भवति। परं तु द्वेषस्योत्कटतया प्रतिपक्षस्य पक्षं प्रति पराक्रमः क्रियते तत्र प्रतिपक्षस्य स्तुतिरूपं फलं न भवति ॥

यथा—

"छायापि कान्तविषये"

इत्यत्र दूतीरूपप्रतिपक्षस्य स्तुतिरूपं फलं नास्ति, प्रत्युत निन्दा-

रूपं फलम्। काव्यप्रकाशकारेणानीकशब्दार्थस्तु सेनामात्रमिति, प्रति शब्दस्य च प्रतिनिधिरिति ज्ञात्वा प्रत्यनीकेति शब्दसमुदायस्य सेनायाः प्रतिनिधिरित्यर्थः कृतः। अपि च प्रकाशकारः "अनीकप्रतिनिधितुल्यत्वात्प्रत्यनीकमभिधीयते" एवमुक्त्वेदमेव स्पष्टीचकार। "यथाऽनीकेऽभियोज्ये तत्प्रतिनिधिभूतमपरं मूढतया केनचिदभियुज्यते, तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयत इत्यर्थः" इति। मम तु मतं, अस्येदं नामार्थकरणमपि प्रमादः। कुत इति चेत्सेनाया अन्नपानादिप्रापका भारवाहादयश्च न सेनायाः प्रतिनिधयः। प्रतिनिधिस्तु स भवति, यः स्वस्य स्थानापन्नः। उक्तं च चिन्तामणिकोषकारेण "मुख्याभावे तत्सदृशो य उपादीयते स प्रतिनिधिरित्युच्यते" इति। तथा च सेनाया भारवाहादयो न सेनाप्रतिनिधयः। तेषां प्रतिनिधित्वाङ्गीकारे सेनायाः सदृशत्वात्तेषु पराक्रमकरणं तु सेनायां पराक्रमकरणमेव। स चान्योन्यालंकारस्य विषयः। अत्र संबन्धिनः स्वारस्यं तु संबन्धिमात्र एव। अतोऽस्माकं नामार्थो धुरंधराभिप्रेतः। एवं चायमपि सर्वसंग्राहकं प्रत्यनीकन्यायं न ज्ञातवान्। अतः प्रतिपक्षस्य पक्ष एव नियमं चकार। मूर्खतानिमित्तमपि न सार्वत्रिकम्। सर्वस्वकारः काव्यप्रकाशानुसारी। सर्वस्वकारः केवलं "बलवतः शत्रोः स्तुत्यै" इत्येतावदंशं तत्याज। सर्वस्वस्येदं लक्षणम्—

"प्रतिपक्षतिरस्काराशक्तौ तदीयस्य
तिरस्कारः प्रत्यनीकम्॥" इति॥

चन्द्रालोकादयः सर्वस्वानुसारिणः। अलंकाररत्नाकरकारः प्रत्यनीकत्रयं वदन्सामान्यलक्षणमिदमाह—

"प्रतिपक्षादिसंबन्धिस्वीकारः प्रत्यनीकम्॥" इति॥

प्रतिपक्षादयः शत्रुप्रभृतयस्तेषां ये संबन्धिनस्तेषां स्वीकारः प्रत्यनीकमित्यर्थः॥ प्रथमप्रत्यनीकस्य तु काव्यप्रकाशानुसारेण लक्षणमुक्त्वेदमुदाहरति॥

न यस्य स्वर्गजयिनः कर्तुं किंचित्क्षमो वृषा।
भिदुरेण पुरस्त्रीणामुदरं तु जिगीषति॥

स्वर्गजयिनो हयग्रीवनृपस्यापकारं कर्तुमशक्त इन्द्रो विद्युत्पातेन हयग्रीवनगराङ्गनानां गर्भस्रावं करोति। द्वितीयस्येदं लक्षणम्—

"प्रतिपक्षसंबन्धिनश्च प्रतिपक्षस्य
तद्बाधकतया स्वीकारः॥" इति॥

प्रतिपक्षस्य यः प्रतिपक्षसंबन्धी तस्य प्रतिपक्षस्य बाधार्थं, स्वीकारः प्रत्यनीकमित्यर्थः॥

यथा—

इदं मदं चन्द्रमसः समन्ता-
दस्मत्सपत्नस्य हरिष्यतीति॥
अस्मिन्पुरंध्रीवदनस्य लक्ष्मीं
निजां ददुः प्राभृतमम्बुजानि॥

अत्र स्वप्रतिपक्षं चन्द्रं तिरस्कर्तुमशक्तैरम्बुजैस्तद्बाधनार्थं तत्प्रतिपक्षभूतस्य वदनस्य प्राभृतमुखेन स्वीकारः कृतः॥ प्रथमप्रत्यनीके तु शत्रोर्मित्रस्य स्वीकारः। द्वितीये शत्रोर्वैरिणः स्वीकारः। सामान्यलक्षण आदिशब्दो वर्तते, तत्संगृहीतस्य तृतीयप्रत्यनीकस्येदं लक्षणमाह—

प्रतिपक्षादन्यस्य सदृशादिरूपस्य संबन्धिनोऽभिलषणीयत्वेन परिहरणीयत्वेन वा स्वीकारस्तृतीयम्॥" इति॥

प्रतिपक्षादन्यस्यार्थाच्छत्रुभावसंबन्धिन इतरस्य, सदृशादिरूपसंबन्धिवस्तुनोऽभिलषणीयत्वेन परिहरणीयत्वेन वा स्वीकारस्तृतीयं प्रत्यनीकमित्यर्थः॥

क्रमेण यथा—

पुष्पाणामेव निन्दामचकमत गुणान्पल्लवानामगृह्ला-
त्स्तुत्यासक्ता पिकानामभवदगणयद्राजहंसेषु दोषान्॥
भक्तिं व्यानञ्ज सान्द्रे मृगमदतिलके चन्दने नाङ्गरागे
ध्वान्तं तुष्टाव तुष्टा न तु मिहिरमहः कृष्णरागेण राधा॥

अत्र कार्ष्ण्येन कृष्णसदृशानां पल्लवादीनामभिलषणीयत्वेन स्वीकारः॥

नीरागा मृगलाञ्छने मुखमपि स्वं दर्पणे नेक्षते

त्रस्ता कोकिलकूजितादपि गिरो नोन्मुद्रयत्यात्मनः ॥
चित्रं दुःसहदुःखदायिनि धृतद्वेषापि पुष्पायुधे
मुग्धाक्षी सुभग! त्वयि प्रतिपदं प्रेमादिकं पुष्यति ॥

अत्रेन्द्वादिसदृशस्य मुखादेरपि परिहारः। मम तु मतं, प्रत्यनीकस्य नैतावन्त एव प्रकाराः, किं त्वनेके। तद्दिग्दर्शनं त्वस्माभिः कृतमेव। धुरंधरस्य नामरूपलक्षण उपलक्षणेनैव सर्वेषां संग्रहे चेदं गौरवकरणं रत्नाकरकारस्य प्रमादः। अपि च रत्नाकरकारो वदति। शत्रुपक्षे पराक्रमकर्तृणां निन्दा प्रतीयते। साक्षाच्छत्रोश्च स्तुतिः प्रतीयते। परं तु व्याजस्तुतौ त्वेकस्यैव निन्दास्तुतिभ्यां स्तुतिनिन्दे भवतः। अत्र त्वन्यस्य निन्दया बलवतः स्तुतिरस्ति। मम तु मतं, अत्र चमत्कारपर्यवसानं तु पक्षमूलकम्। स्तुतिनिन्दयोर्विवक्षा नास्ति। अतो व्याजस्तुतेर्व्यावृत्तये प्रयासस्तु प्रमादः। अपि च निन्दया स्तुतिः, स्तुत्या च निन्देतीदं व्याजनिन्दाऽलंकारस्य स्वरूपमपि नास्ति। तत्तस्य प्रकरणे स्फुटीकरिष्यते। रसगङ्गाधरकारो वदति। "प्रतिपक्षगतबलवत्त्वात्मगतदुर्बलत्वयोः प्रतीतेर्हेतूत्प्रेक्षान्तरादस्य वैलक्षण्यम्। नैतावता हेतूत्प्रेक्षाया बहिर्भवितुमिदमीष्टे। तदविनाभावित्वात्। किं तु तदवान्तरविशेषीभवितुम्। न हि पृथिव्यवान्तरभेदाद्घटात्पटो विलक्षण इति पृथिव्या बहिर्भवतीत्यपि वदन्ति" इति। मम तु मतं, नायं सिद्धान्तो विचारपूर्वकः। उत्प्रेक्षा प्रत्यनीके गौणतया वर्तते। परंतु प्रत्यनीके पक्षमूलकचमत्कारः प्रधानतया पृथगलंकारतासाधकः। किंचोत्प्रेक्षासंकीर्णतां विनापि "छाया हि कान्तविषये" इत्यादीनि प्रत्यनीकोदाहरणान्युपलभ्यन्ते। अलंकारोदाहरणकारस्येदं लक्षणम् ॥

"अनिष्टस्य तदीयस्य वा प्रातिकूल्यं प्रत्यनीकम् ॥" इति ॥

अनेनापि साक्षात् "अनिष्टस्य" इति यद्वर्णितं तत्कुवलयानन्दस्य खण्डनेन, "प्रातिकूल्यम्" इति च नियमितं तत्काव्यप्रकाशगतकारिकायाः खण्डनेन च खण्डितम् ॥

इति प्रत्यनीकप्रकरणम् ॥ ४१ ॥

## ॥ प्रहर्षणम् ॥

अत्र प्रेत्युपसर्गार्थः प्रकृष्ट इति । प्रकृष्टो हर्षः प्रहर्षः । लोकोत्तरतार्थं प्रकृष्टत्वस्य ग्रहणम् । प्रहर्षः प्रहर्षणं चैकमेव ॥

प्रहर्षः कथ्यते राजन्प्रहर्षणमलंकृतिः ॥

यथा—

"योऽनृणीभवितुं वाञ्छन्याचते मरुभूपतिम् ।
अन्यानप्यनृणीकर्तुं स क्षमो जायते ध्रुवम् ॥

स्थलत्रये प्रहर्षणालंकारं मन्वानश्चन्द्रालोककार इमानि लक्षणान्याह—

" उत्कण्ठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणम् ।
वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम् ॥
यत्नादुपायसिद्ध्यर्थात्साक्षाल्लाभः फलस्य च ॥" इति॥

क्रमेण यथा—

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै-
र्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः ॥

अत्र दम्पत्योरुत्कण्ठितार्थस्य यत्नं विना सिद्धिः ॥

चातकस्त्रिचतुरान्पयःकणा-
न्याचते जलधरं पिपासया ।
सोऽपि पूरयति विश्वमम्भसा
हन्त हन्त महतामुदारता ॥

अत्र वाञ्छितादधिकार्थस्य संसिद्धिः ॥

निध्यञ्जनौषधीमूलं खनता साधितो निधिः ॥

अत्र फलोपायसिद्ध्यर्थाद्यत्नात्फलस्य साक्षाल्लाभः। कुवलयानन्दकाराद यश्चन्द्रालोकानुसारिणः। मम तु मतं, उक्तस्थलत्रय एव प्रहर्षणालंकारस्य नियमो न समीचीनः। यत एतत्स्थलत्रयातिरिक्तेपि स्थले प्रहर्षणालंकारः प्रदर्श्यते ॥

भोजश्च खानसिंहश्च युद्धान्नष्टौ परस्परम्।
मोहकमसिंहकृते तत्र वृष्टिरासीत्सुधामयी ॥

मारवाड़देशे गुड़ानामको राष्ट्रवराणां ग्रामो वर्तते। तत्स्व राणापदवी विद्यते। तेषु मोहकमसिंहो बभूव। तद्ग्रामलुण्टनाय बाघेल त्रियः खानसिंह उषसि समायातः॥ मोहकमसिंहो राजकीयकरं त्ततस्तं दण्डयितुं ससैन्यो राज्याधिकारी भोजराजोपि तदानीमेव तत्र प्राप्तः। काकतालीयन्यायेनोभयोरपि पुरद्वारे मेलनमासीत्तदा परस् युद्धं च समजनि। तेन तौ द्वौ निर्बलतया ततो निवृत्तौ। तस्मि मोहकमसिंहो हर्म्ये सुष्वाप। प्रबुद्धश्च तद्वृत्तान्तश्रवणात्परमं हर्षम अतोऽत्रापि प्रहर्षणालंकारः। न तावत्तस्यात्र विषय उत्कण्ठाऽऽसीत्। च कश्चिद्यत्नः कृतः॥

यथावा—

कृच्छ्रान्नेत्रनिमीलने तु जनिते स्वप्ने वियुक्तास्त्रिया
दृष्टः प्राणपतिस्तदैव सुहृदा संश्रावितोऽस्यागमः।
प्रत्यक्षोऽभवदन्तरेऽत्र परमानन्दश्च तस्माद्भू-
त्तार्तीयेन तु रञ्जनेन हि यथा वस्त्रं सुरक्तं भवेत् ॥

अत्र निरन्तरतया स्वप्नश्रवणप्रत्यक्षदर्शनैर्नायिकाया अ त्परमानन्दो जात इति प्रहर्षणालंकारः। प्राचीनानां च्चयेमे प्रहर्षणे विलक्षणे। एवमन्यदपि किमपि प्रहर्षणं च कारि चेत्प्रहर्षणालंकारो भवेत्। सर्वसंग्राहकनामरूपलक्षणे क्षणकरणेऽव्याप्तिदोषं विना को लाभः। उदाहरणान्तरं

* युद्धं कृत्वेति ल्यब्लोपे पञ्चमी.

मन्तरापि दर्शयितुं शक्यते। उदाहरणमुदाहरणं प्रति भिन्नभिन्नलक्षणकरणं तु प्रमादः ॥

इति प्रहर्षणप्रकरणम् ॥ ४२ ॥

# भाविकम् ॥

भूधात्वर्थः सत्ता। "भूसत्तायाम्" इति शास्त्रात्। ततो भावे घञि कृते भावशब्दनिष्पत्तिः। भावशब्दार्थः स्थितिः। भावशब्दात् "रक्षति। ४।४।३३" इति सूत्रेण विहितस्य ठक इके कृते भाविकशब्दो निष्पन्नः। अस्यार्थस्तु भावस्य रक्षकमिति। व्युत्पत्तिस्तु "भावं रक्षति" इति। वर्तमानस्थितिरक्षणं स्वतः सिद्धम्। अतो न तत्र चमत्कारः। भूतस्थितिर्बुद्धेर्निर्गच्छति। भविष्यत्स्थितिश्च बुद्धौ नायाति। एतादृशस्थिते रक्षणमर्थाद्वर्तमानवद्बुद्धावानयनं चमत्कारकारितयालंकारः। अतोत्र भूतभविष्यत्स्थितिरक्षणे भाविकशब्दस्य रूढिः ॥

प्रत्यक्षीकरणं राजन्! भावानां भूतभाविनाम्।
भाविकालंकृतिः प्रोक्ता दर्शयामि यथाक्रमम् ॥

यथा—

क्षिप्रातटेऽवन्तिकायां याति राष्ट्रवरेषु यः।
तत्स्वान्ते दृश्यतेऽद्यापि यशवन्तस्य संगरः ॥

काव्यप्रकाश इदं लक्षणम् ॥

"प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः।
तद्भाविकम् ॥" इति ॥

चन्द्रालोक इदं लक्षणम्—

"भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनम् ॥" इति ॥

क्रमेण यथा—

अहं विलोकयेऽद्यापि युध्यन्तेऽत्र सुरासुराः ॥

अत्र भूतस्थितिर्वर्तमानवत्प्रत्यक्षीभवति ।

यथावा—

अद्यापि तिष्ठति दृशोरिदमुत्तरीयं,
धर्तुं पुरः स्तनतटात्पतितं प्रवृत्ते ।
वाचं निशम्य नयनं नयनं ममेति,
किंचित्तदा यदकरोत्स्मितमायताक्षी ॥

अत्र भूतवस्तुस्थितेर्वर्तमानवत्प्रत्यक्षविषयत्वम् । अत्र न स्मृतिः, किं तु प्रत्यक्षीकरणम् । अस्यालंकारस्य स्वरूपं तु भूतभाविस्थित्योर्मनसा वर्तमानवत्प्रत्यक्षीकरणम् । परं तु भूतभविष्यत्स्थिती वर्तमानवत्कविर्वर्णयति चेत्तयोरप्युपलक्षणतया संग्रहो भवति ॥

देशे यत्र पठाणजातियवनाँश्चिच्छेद मानो नृप-
स्तत्राद्यापि वहन्ति रक्तसरितः क्रोशन्ति भूतादयः ॥
आर्द्रं चर्म हरो दधात्यरुणिमा कालीकरालानने
नाशं नैति तथा कबन्धनिचयो नृत्यं विधत्तेतराम् ॥

सरदारकुमारस्य यशवन्तमहीपतेः ॥
अद्यैव दृश्यते भावि राज्यरक्षणकौशलम् ॥

अत्र महाराजकुमारसरदारसिंहस्य भविष्यत्स्थितेर्वर्तमानवत्प्रत्यक्षीकरणम् ॥ भावशब्दार्थमाशयमिति प्रकटयन्दण्डयाचार्यो भाविकालंकारस्येदं लक्षणमाह—

"तद्भाविकमिति प्राहुः प्रबन्धविषयं गुणम् ॥
भावः कवेरभिप्रायः काव्येष्वासिद्धिसंस्थितः ॥" इति ॥

काव्यसमाप्तिपर्यन्तं यः कवेरभिप्रायो वर्तते सोऽत्र भावः । "भावमर्हतीति भाविकम्" इति व्युत्पत्त्या तद्योग्यकाव्यनाटकादिप्रबन्धविषयो गुणो भाविकपदार्थ इत्यर्थः । तान्गुणानाह—

परस्परोपकारित्वं सर्वेषां वस्तुपर्वणाम् ॥
विशेषणानां व्यर्थानामक्रिया स्थानवर्णना ॥

व्यक्तिरुक्तिक्रमबलाद्गम्भीरस्यापि वस्तुनः ॥
भावायत्तमिदं सर्वमिति तद्भाविकं विदुः ॥" इति ॥

वस्तु प्रधानवृत्तान्तः । पर्व प्रासङ्गिकवृत्तान्तः । अनयोः परस्परोपकारित्वमङ्गाङ्गिभावः । व्यर्थानां विशेषणानामक्रिया, अनुपन्यासः । स्थानवर्णना, यत्र स्थले यद्वर्णनं युक्तं तत्र तस्य वर्णनम् । व्यक्तिरुक्तिचातुर्याद्गम्भीरस्यापि वृत्तान्तस्य स्पष्टीकरणम् । इदं सर्वं भावाधीनमिति सर्वेषां भाविकत्वम् । मम तु मतं, प्रधानप्रासङ्गिकवृत्तान्तयोः परस्परमुपकार्योपकारकाभावः, व्यर्थविशेषणोपन्यासः, अस्थानवर्णना, वृत्तान्तस्यास्फुटता, इतीमे सर्वे दोषाः । तेषामभावस्तु दोषाभावमात्रम्, न तु भूषणम् । उक्तदोषराहित्येन काव्यशरीरे निष्पन्ने सति तत्र चमत्कारहेतुरलंकारः । अन्यथा काव्यमेव न भवति । अलंकारस्तु काव्यसंज्ञानन्तरं भवति । अतो मन्मते दण्ड्याचार्यस्य कथनं न समीचीनम् ॥

॥ इति भाविकप्रकरणम् ॥ ४३ ॥

---

## ॥ भ्रान्तिः ॥

---

भ्रान्तिरतस्मिंस्तज्ज्ञानम् । आह चिन्तामणिकोषकारः । "भ्रान्तिरतस्मिंस्तज्ज्ञाने" इति ॥

भ्रान्तिर्भ्रान्तिरलंकारः प्रोच्यते मरुभूपते ! ॥

यथा—

कस्त्वां कामं न जानाति दृष्ट्वा ते सुन्दरं वपुः ॥

यथावा—

शासने मरुभूपस्य बहुयज्ञा भवन्त्यहो ॥
धूमबुद्ध्या त्यजन्त्यत्र पयोदानपि चातकाः ॥

यथावा—

बल्लालक्षोणिपाल! त्वदहितनगरे संचरन्ती किराती
कीर्णान्यादाय रत्नान्युरुतरखदिराङ्गारशङ्कां करोति ॥
दत्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती
श्वासामोदानुयातैर्मधुकरनिकरैर्धूमशङ्कां करोति ॥

सादृश्यमूलकैव भ्रान्तिः शोभाकरत्वादलंकारः। एवं मन्यमानैः प्राचीनैर्लक्षणे सादृश्यविशेषणमुक्तम्। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने ॥" इति ॥

सर्वस्वकारः काव्यप्रकाशानुसारी। सर्वस्वकारो भ्रान्तिमानित्यस्येममर्थं कृतवान्। भ्रान्तिश्चित्तधर्मो विद्यते यस्मिन्स भ्रान्तिमानिति ॥ मम तु मतं, चमत्कारस्य भ्रान्तिमूलकत्वादलंकारनामापि भ्रान्तिरित्येतावदेव समीचीनम्। चन्द्रालोककारादयोऽस्य नाम भ्रान्तिरित्येतावदेवोक्तवन्तः। काव्यप्रकाशगतकारिकाकारादयः प्राचीना भ्रान्तिमानिति नामाहुः, तत्त्वनावश्यकम्। कुत इत्युक्तावल्पसंख्याकैरेवाक्षरैरलंकारस्य स्वरूपे स्पष्टे सति बहुवर्णघटितनामकरणं गौरवदोषः। चित्रमीमांसाकारस्यायं सिद्धान्तः, स्मृतिभ्रान्तिसंदेहाः सादृश्यातिरिक्तमूलका अलंकारा न भवन्तीति। काव्यप्रकाशगतकारिकाकारस्य लक्षणकारिकाभिरिदं सिद्ध्यति, स्मृतिभ्रान्ती तु सादृश्यमूलकावेवालंकारौ, संदेहे सादृश्यमूलकत्वनियमाभाव इति। अलंकाररत्नाकरकारस्यायं सिद्धान्तः, सादृश्यमूलकत्व इतरमूलकत्वे वा भ्रान्तेश्चमत्कारकारित्वे भ्रान्त्यलंकार एवेति। मम तु मतं, स्मृतिभ्रान्तिसंदेहाः सादृश्यातिरिक्तमूलका अप्यलंकारा भवन्ति। तेषु च स्मृतिसंदेहयोरुदाहरणानि त्वन्यप्राचीनैः प्रदर्शितानि। तच्च तत्तत्प्रकरणे लेखिष्यते। रत्नाकरकारेण सादृश्यातिरिक्तमूलकभ्रान्तेरिमान्युदाहरणानि प्रदत्तानि ॥

यथा—

दातुं वाञ्छति दक्षिणेऽपि नयने वामः करः कज्जलं

इत्थं स्वं स्वमशिक्षितं भगवतोरर्धं वपुः पश्यतोः
स्वाचारस्मितलाञ्छितं दिशतु वो वक्त्रं मनोवाञ्छितम् ॥

अत्र न भ्रान्त्यलंकारः । किं तु संस्कारालंकारः । तच्च तत्प्रकरणे स्फुटीकरिष्यते ॥

दुर्जनदूषितमनसां पुंसां सुजनेऽपि नास्ति विश्वासः ।
बालः पायसदग्धो दध्यपि फूत्कृत्य भक्षयति ॥

अत्र चमत्कारस्तु दृष्टान्ते, न तु भ्रान्तौ ॥

प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा
पर्यङ्के सा दिशि दिशि च सा तद्वियोगातुरस्य ।
हं हो चेत! प्रकृतिरपरा नास्ति ते कापि सा सा
सा सा सा सा जगति सकले कोयमद्वैतवादः ॥

अत्रात्यन्तानुरागान्नायकस्य विश्वं नायिकामयं प्रतीयते, तत्तु वियोगशृङ्गारस्याङ्गभूत उन्मादः संचारी । न तु भ्रान्तेश्चमत्कारः । सादृश्यातिरिक्तमूलकभ्रान्तेरुदाहरणं मया प्रदर्श्यते ।

"सखीपादाघातरवे प्रियपादाहतेर्धिया ।
उत्थायोत्थाय पश्यन्त्यास्तस्याः प्रातरजायत ॥"

अत्र सखीपादाघातरवे नायकपादाघातरवे च न सादृश्यम् । पादाघातरवस्तु शरीरप्रकृत्यनुसारेण भिन्नभिन्नप्रकारक एव भवति ॥

सिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चञ्चरीकै-
स्तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकैः ।
तत्रासोल्लासलीलाकिसलयमनसा पाणयः कीरदष्टा-
इत्थं चौलेन्द्रसिंह! त्वदरिमृगदृशां नाप्यरण्यं शरण्यम् ॥

अत्र भ्रमराणां कुचाग्रे मञ्जरीभ्रान्तिर्नेत्रहेतुका । करे कमलभ्रान्तिर्नासिकाहेतुका । काकानां पिकभ्रान्तिः श्रोत्रहेतुका ॥

पलाशकुसुमभ्रान्त्या शुकतुण्डे पतत्यलिः ॥
सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्तुमिच्छति ॥

*हसिअं सहत्थतालं सुक्खवडमुपगएहि पहिएहि ।
पत्तप्फलसारिच्छे उड्डीने पूसवदम्मि ॥

अत्र शुकैर्व्याप्तं शुष्कवटमालोक्य पल्लवितः फलितोयं वट इति भ्रमात्पथिकैस्तस्य तले वासः कृतः । पश्चाच्छुकवृन्द उड्डीय गते सति फलदलभ्रान्तिर्निवृत्ता । इयं भ्रान्तिः पूर्वमुत्पन्ना पुनर्निवृत्तेति बाधिता भ्रान्तिः । अत्र भ्रान्तिनिवृत्तेरनुभावः सहस्ततालं हसितम् । उक्तोदाहरणे भ्रान्तेः कारणं शुष्कवटोपरि शुकनिवासः । तस्य नाशाद्भ्रान्तेरपि नाशः ॥

कनककलशस्वच्छे राधापयोधरमण्डले
नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् ॥
असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुराक्षिप-
ञ्जयति जनितव्रीडाहासः प्रियाहसितो हरिः ॥

अत्रासितसिचयभ्रान्तिकारणस्य कुचयोर्निजप्रतिबिम्बस्य विद्यमानत्वेपि राधाया हास्यरूपकारणेन भ्रान्तेर्बाधः ॥

"शासने मरुभूपस्य–॥" इति ॥

अत्र भ्रान्तेश्चातकानां मेघत्यागहेतुकत्वम् ॥

कपाले मार्जारी पय इति कराल्लेढि शशिन
स्तरुच्छिद्रे प्रोतान्बिसमिति करी संकलयति ॥
रतान्ते तल्पस्थान्हरति दयिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति ॥

अत्र भ्रान्तिर्ग्रहणहेतुः ॥

चिक्रंसया कृत्रिमपत्रिपङ्क्तेः
कपोतपालीषु निकेतनानाम् ॥

---

* हसितं सहस्ततालं शुष्कवटमपगतैः पथिकैः

मार्जारमप्यायतनिश्चलाङ्गं
यस्यां जनः कृत्रिममेव मेने ॥

अत्र साक्षान्मार्जारे कृत्रिममार्जारभ्रान्तिः । परं त्वत्र भ्रान्तिर्ग्रहणे त्यागे वा न हेतुः । अत इयमुदासीनभ्रान्तिः ॥

दिश्याद्धूर्जटिजूटकोटिसरिति ज्योत्स्नालवोद्भासिनी
शाशाङ्की कलिका जलभ्रमिवशाद्द्राग्दृष्टनष्टा मुदम् ॥
यां चञ्चच्छफरीभ्रमेण मुकुलीकुर्वन्फणालीं मुहुः
कुर्वल्लक्ष्यमहिर्जिघृक्षतितमामाकुञ्चनप्राञ्चनैः ॥

अत्रैक एव भ्रमः क्षणे क्षण अनेकवारं जात इति भ्रान्तेरतिशयः ॥

नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याऽधरे
पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः ।
लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति तरुणि! स्थानानि रक्षिष्यसि ॥

अत्र मालाकारेण जायमाना भ्रान्तिः, अतो भ्रान्तिमाला । मम तु मतं, इमानि सर्वाणि प्राचीनोक्तप्रकारान्तराण्युदाहरणान्तराण्येव । न तु प्रकारान्तराणि । भगवान्वेदव्यासो भ्रान्तेरुपमाप्रकारत्वमङ्गीकृत्येदं लक्षणमाह—

प्रतियोगिनमारोप्य तदभेदेन कीर्तनम् ॥
उपमेयस्य सा मोहोपमासौ भ्रान्तिमद्वचः ॥" इति ॥

प्रतियोगिनमर्थादुपमानमारोप्य, अर्थादुपमानाभेदेनोपमेयकथनं सा मोहोपमा, असौ भ्रान्तिमद्वचः, अर्थाद्भ्रान्तिमानित्युच्यते । दण्डयाचार्येणापि वेदव्यासानुसारेण संदेहभ्रान्तिमतोरुपमाप्रकारत्वमङ्गीचक्रे । प्रमादविलसितम् । कुत इत्युक्तावनयोरुपमा न विवक्षिता । किं तु थ च वेदव्यासात्प्राक्-

तना अप्यस्मिन् विषये भ्रान्तिमानिति पृथगलंकारमङ्गीचक्रुः। तच्च वेदव्यासस्य लक्षणे "असौ भ्रान्तिमद्वचः" इति कथनेन सिद्धम् ॥

॥ इति भ्रान्तिप्रकरणम् ॥ ४४ ॥

## ॥ मिथ्याध्यवसितिः ॥

मिथ्याशब्दार्थोऽसदिति। अध्यवसितिशब्दार्थो निश्चयः। मिथ्याध्यवसितिरितिशब्दसमुदायार्थस्तु मिथ्यात्वस्य निश्चयः। मिथ्यात्वनिश्चयश्चानेकैः प्रकारैर्भवति। अत्रान्यत्रातिव्याप्तिवारणाय मिथ्यासंबन्धेन मिथ्यात्वनिश्चये मिथ्याध्यवसितिशब्दस्य रूढिः ॥

मिथ्यासंबन्धतो यस्तु मिथ्यात्वस्य विनिश्चयः ॥
मिथ्याध्यवसितिः सात्र कथ्यते मरुवल्लभ !॥

यथा—

अस्य श्रीयशवन्तसिंहनृपतेर्लोकेऽधुना दुर्यशो
वन्ध्यायास्तनयोऽलिखन्मृगतृषामस्यान्तरिक्षे दले ॥
लेखन्या शशशृङ्गतो रचितया मूकः पठत्यादरा-
दन्धः पश्यति तच्छृणोति बधिरः कूर्मीपयोऽब्धेस्तटे ॥

अत्र वन्ध्यातनयादिमिथ्यावस्तुसंबन्धाद्राजराजेश्वरस्यापयशो-मिथ्यात्वनिश्चयः कृतः। वन्ध्यापुत्रादिवस्तूनि जगति मिथ्याभूतानि, तेषां संबन्धप्रतिपादनादिदं निश्चीयते। राजराजेश्वरस्यापयशोऽपि मिथ्याभूतमिति। न विद्यत इति भावः ॥

यथावा—

वशमानीतवान्वेश्यामाकाशकुसुमं वहन् ॥

अत्राकाशकुसुमरूपमिथ्यावस्तु

किंचिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनम् ॥
मिथ्याध्यवसितिः ॥ " इति ॥

रसगङ्गाधरकारो वदति— एकस्य मिथ्यात्वसिद्धये मिथ्याभूतवस्त्वन्तरस्य कथने मिथ्याध्यवसितिनामकः पृथगलंकारो नाङ्गीकर्तव्यः। कुतः इत्युक्तावयमलंकारः प्रौढोक्तावेवान्तर्भूतः ॥

" कचाः कलिन्दजातीरतमालस्तोममेचकाः " ॥

इति प्राचीनप्रौढोक्त्युदाहरणे तमाले श्यामतातिशयसिद्ध्यर्थं श्यामयमुनासंबन्धः प्रतिपाद्यते । तथैव "अस्यश्री" इत्युदाहरणे राजराजेश्वरस्याकीर्तेर्मिथ्यात्वसिद्धयेऽन्यमिथ्यावस्तुसंबन्ध उक्तः। मम तु मतं, रसगङ्गाधरकारस्यायं परमप्रमाद इति । कुत इत्युक्तौ वक्ष्यमाणान्तर्भावाकृतौ प्रौढोक्तेरत्र मिथ्याध्यवसितेश्च नामार्थरूपं साक्षात्स्वरूपं यन्मया प्रकाशितं तदत्यन्तविलक्षणम्। नामार्थविचारं विना तटस्थलक्षणैर्भ्रमित्वा रसगङ्गाधरकार इमं सिद्धान्तं स्थापितवान् । अथ च रसगङ्गाधरकारो वदति " मिथ्याध्यवसित्यलंकारान्तराङ्गीकारे सत्याध्यवसितिरित्यपि पृथगलंकारो मन्तव्यः ॥

यथा—

हरिश्चन्द्रेण संज्ञप्ताः प्रगीता धर्मसूनुना ।
खेलन्ति निगमोत्सङ्गे मातर्गङ्गे गुणास्तव ॥

यथावा—

मध्ये सुधासमुद्रस्य सितामयगृहोदरे ।
पूर्णेन्दुविष्टरे देव स्थातुं योग्यास्तवोक्तयः ॥

मिथ्याध्यवसित्यलंकारमङ्गीकुर्वद्भिरत्र कोलंकारो मन्तव्यः " इति ॥ एतन्मतेनात्र सत्याध्यवसितेः संगतिस्त्वेवम् । पूर्वोदाहरणे सत्यवादिहरिश्चन्द्रादिसंबन्धेन गङ्गागुणानां सत्यत्वनिश्चयः कृतः । द्वितीयोदाहरणे सुधासमुद्रादिसंबन्धेन राज्ञो वाङ्माधुर्यस्य निश्चयः कृतः । मम तु मतं, मिथ्याध्यवसितेरलौकिकत्वाच्चमत्कारकारित्वमनुभवसिद्धम् । अपि च "हरिश्चन्द्रेण " इत्यत्र सत्यसंबन्धस्य लौकिकत्वात्सत्याध्यवसिते-

श्चमत्कारो नानुभवसिद्धः। किं त्वत्र हेत्वलंकार एव। अथ च " मध्ये सुधा- " इत्यत्र समालंकारः॥ मया तूच्यते मिथ्याध्यवसितौ लोकसीमातिवर्तनादतिशयोक्त्यलंकारस्य शङ्का न कार्या। कुत इत्युक्तौ द्वयोर्मिथ्यावर्णने मिथ्याध्यवसितौ तु मिथ्यावर्णनं मिथ्यारूपतयैव भवति। अतोत्र न लोकसीमातिवर्तनं। अपि चातिशयोक्तौ मिथ्यावर्णनं सत्यरूपतया भवति। अतस्तत्र लोकसीमातिवर्तनरूपचमत्कारो विद्यते। अतिशयोक्तिर्यथा—

या भूमिर्लिखिता न कैरपि नृपैः कल्पेऽपि मग्ना न या
यां लेभे न सिकन्दराख्ययवनः शेषो न धत्ते च याम्॥
या नो वामनसूर्ययोर्गतिपदं जह्रे हिरण्यो न यां
तां तां मानमहीपतिर्बलभरोऽजैषीन्नृपेष्वग्रणीः॥

उक्तोदाहरणे या पृथ्वी कथिता सा मिथ्या। परंतु जयनगराधीशमहाराजमानसिंहोऽकबरनाम्नो दिल्लीशस्य सेनापतिर्भूत्वाऽऽसमुद्रं धरामजयत्। तस्य महाराजस्य वर्णन उक्तपृथिव्या जयो मिथ्यारूपत्वेन न वाञ्छितः; किं तु सत्यरूपतया विवक्षितः। इदमनुभवसिद्धम्। एतादृशभूमिभागस्यासत्त्वादिदं लोकसीमातिवर्तनम्॥

॥ इति मिथ्याध्यवसितिप्रकरणम्॥ ४५॥

---

# ॥ मिलितम्॥

---

मिलितशब्दस्यार्थो मिश्रणम्। उक्तं चिन्तामणिकोषकारेण "मिलितं मिश्रणे" इति। अत्र नीरक्षीरन्यायेन मिश्रणं विवक्षितम्॥

नीरक्षीरसमं वस्तुमिश्रणं वर्ण्यते यदि।
मिलितालंकृतिस्तत्र संमता मरुपार्थिव!॥

यथा—

त्वदीययशसा लोके व्याप्ते मरुपुरंदर ।
गवेषयति कैलासं शंकरस्तं च पार्वती ॥

यथावा—

सवर्णसमगन्धेषु मृद्वङ्गेषु तव प्रिये! ।
दलानि स्थलपद्मस्य न लक्ष्यन्ते कथंचन ॥

अत्रैवं नाशङ्कनीयं, त्वया नीरक्षीरन्यायेन मिश्रणेऽयमलंकारः स्वीकृतः। अस्मिन्नुदाहरणे च न तथा मिश्रणमस्ति। वस्तुनोः पृथक्पृथक्तया स्थितत्वादिति ? कुत इति चेदत्र मिश्रणेनेदं विवक्षितं, नीरक्षीरवत्पृथक्तयाऽदर्शनमिति ॥ सर्वे प्राचीना अस्य नाम मीलितमाहुः । स तु प्रमादः। कुत इति चेन्मीलितशब्दस्तु संकुचितार्थे विद्यते। आह चिन्तामणिकोषकारः । " मीलितमप्रफुल्ले, संकुचिते, निद्राणे, मुद्रिते " इति। अपि च धुरंधरो वक्ष्यमाणं संकोचालंकारं पृथगुक्तवान् । एषां च प्राचां मीलितालंकारलक्षणेषु संकोचतात्पर्यं नास्ति, किं तु मिश्रणतात्पर्यम् । अपि चोक्तोदाहरणेष्वपि संकोचो नास्ति, किं तु मिश्रणमेव ॥ काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

" समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते ।
निजेनागन्तुना वापि तन्मीलितमिति स्मृतम् ॥"इति।

स्वाभाविकेनाथवाऽऽगन्तुकेन समेन लक्षणेन द्वारभूतेन यद्वस्तु वस्तुना निगूह्यते तन्मीलितालंकार इत्यर्थः । काव्यप्रकाशे क्रमेणेमान्युदाहरणानि प्रदत्तानि—

अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया
तदत्र न मदोदयः कृतपदोपि संलक्ष्यते ॥

अत्रापाङ्गतरलत्वादीनि यौवने स्वाभाविकानि । एतैः समानचिन्हैर्यौवनवस्तुना मदवस्तुनो निगूहनं भवति ॥

ये कन्दरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातकाङ्क्षितधियो विवशा द्विषस्ते ।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं
तेषामहो बत भियां न बुधोप्यभिज्ञः ॥

अत्र हिमेन भयेन च जनितः कम्प आगन्तुकः । अनेन कम्परूपेण समानचिन्हेन हिमवस्तुना भयवस्तुनो गोपनम् । अत्र मदो यौवनावस्थायां मिलितः, भयजनितः कम्पश्च हिमजनितकम्पे मिलितः ॥ रुद्रटादिलक्षणान्यपि काव्यप्रकाशगतकारिकाकारानुसारिण्येव। मम तु मतं,अत्र समानचिन्हमिति हेतुकथनं व्यर्थम्। कुत इति चेदिदं त्वर्थसिद्धम्। साधर्म्यान्मेलन एव चमत्कारो न तु वैधर्म्येण। अपि चात्र गोपनार्थकनिगूहनशब्दोपि न समीचीनः । कुत इत्युक्तावत्र गोपनं नास्ति । किं तु मेलनम् । अत्रापि गोपनाङ्गीकारेऽपन्हुतिरेव भवेत् । सर्वस्वकारस्येदं लक्षणम्—

"वस्तुना वस्त्वन्तरनिगूहनं मीलितम् ॥" इति ॥

अयं "समानचिन्हेन" इति हेतुं नोक्तवान् । परं त्वयमपि निगूहनमुक्तवान् । तत्तु पूर्वोक्तरीत्या प्रमाद एव । रत्नाकरकारस्येदं लक्षणम्—

"धर्मसाम्याद्भेदाप्रतीतिर्मीलितम् ॥" इति ॥

अनेन धर्मसाम्यमित्युक्तं, तच्च पूर्ववद्व्यर्थम्। भेदाप्रतीतिरितिकथनमपि प्रमादः। कुत इत्युक्तावभेदप्रतीतौ त्वभेदालंकारो भवति । अत्राभेदस्य न स्वारस्यम्। किं तु मिश्रणस्य । चन्द्रालोकादयो रत्नाकरानुसारिणः । नीरक्षीरन्यायमन्तरा वस्तुमेलने न मिलितालंकारः ॥
यथा—

युक्तौ विहारं कुरुतोऽतिरत्या
जायापती मृत्युमितो वियुक्तौ ।
नूनं विधाता शिशिरोऽद्य जातः
कृतं जगद्येन जुराफतुल्यम् ॥

जुराफेतिपक्षिविशेषः । यदा तयोर्मिथुनमङ्गीयते तदा

पक्षाभ्यां ग्रन्थिं रचयति। एवं चात्र तादृशजुराफामिथुनस्योपमया चमत्कारो भवति। न तु संयोगरूपमेलनेन॥

इति मिलितप्रकरणम्॥ ४६॥

## ॥ मिषम्॥

अत्र मिषशब्दस्यार्थो व्याजम्। अर्थाच्छलम्। आह चिन्तामणिकोषकारः "मिषं व्याजे" इति॥

अलंकारो मिषं तत्र यत्रास्ति मिषवर्णनम्।
ऋजुचित्ततया नैनं जानासि मरुवल्लभ॥

यथा—

आच्छिद्य वित्तं धरणीं च देशा-
न्निःसारिता ये भवताऽरयस्ते।
ते स्वामिधर्मस्य मिषेण सेवां
कुर्वन्त्यशक्ता यशवन्तसिंह॥

अत्राशक्ताः शत्रवः स्वामिधर्मस्य मिषेण राजराजेश्वरस्य चरणसेवां कुर्वन्ति। अस्मिन्वास्तवमिषेपि चमत्कारोऽनुभवसिद्धः। कविप्रतिभोत्थापितो यथा—

रविं कुमारः सरदारसिंहो
जेता युवा संस्तु तपोबलेन।
भूषामणीनां सुरुचिच्छलेन
पदेऽस्य भानोः किरणाः स्पृशन्ति॥

अत्र महाराजकुमारसरदारसिंहस्य भूषणमणिकान्तयश्चरणयुग्मोपरि पतन्ति, तत्र कविरुत्प्रेक्षते। परं त्वत्र प्रधानं मिषम्। लोके

कापुरुषाणामियं रीतिर्वर्तते, यदा त एवं जानीयुरस्मत्स्वामिनममुको जेष्यतीति, तदा ते पूर्वमेव केनचिन्मिषेण तं प्रसादयन्तीति । ईदृशदशायामन्यं मिषेणैतदर्थं प्रसादयन्ति, स्वस्वामी तन्न जानीयादिति ॥

यथावा—

सरति च सरस्तीरोद्देशाद्भ्रमद्भ्रमरावली
सुमुखि विमुखी पद्मे मन्ये तवास्यपिपासया ।
इति निगदिते किंचिद्भीत्या विवर्तितकंधरा
वदनकमले बाला भर्त्रा चिरं परिचुम्बिता ॥

अत्र नायकेन भ्रमरदंशनकथनमिषान्मुग्धानायिकाया मुखं स्वाभिमुखं कारयित्वा चिरं चुम्बितम् । भोजमहाराजो मिषं पर्यायनाम्ना प्रोवाच ॥

"मिषं यदुक्तिभङ्गिर्याऽवसरो यः स सूरिभिः ।
निराकाङ्क्षोऽथ साकाङ्क्षः पर्याय इति गीयते ॥" इति ॥

इति मिषप्रकरणम् ॥ ४७ ॥



## मुद्रा ॥



मुद्रा निजनामाङ्कितमुद्रिका । लोकभाषायां "मोहर" इति नाम्ना प्रसिद्धा । यया स्वपत्रे चिन्हं क्रियते । आह चिन्तामणिकोषकारः "मुद्रा प्रत्ययकारिण्याम् । "छाप" इति भाषाप्रसिद्धायाम् । " इति । मुद्रायां स्वं नाम चिन्हं वा भवति । येन पत्रोपरि लग्नमुद्रादर्शने तस्य पत्रस्य पठनात्प्रागेव परिज्ञानं भवति, इदं पत्रममुकस्येति । अनेन लोकमुद्रान्यायेन धुरंधरेणायमलंकारः स्वीकृतः ॥

मुद्राऽलंकरणं राजन्मुद्रान्यायो भवेद्यदि ।
यथा त्वन्मुद्रया लोकैराज्ञापत्रं प्रबुध्यते ॥

यथा—

अस्य श्रीयशवन्तसिंहनृपतेः शौर्योदधेः कानने
मातङ्गैर्मदवर्षिभिर्गिरिवरक्षेपक्षमैः सैरिभैः ।
घोणोद्यत्पवनप्रधूतवसुधैर्मत्तैर्महासूकरै-
र्वातातिक्रमकैर्मृगैर्विजयते शार्दूलविक्रीडितम् ॥

शार्दूलविक्रीडितच्छन्दसश्चरणे मगणसगणजगणसगणतगणतगणा गुरुश्च भवन्ति । यतिश्च द्वादशभिः सप्तभिश्चाक्षरैर्भवति । तदुक्तम्—

"सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ॥" इति ॥

एवं चरणस्य सर्वगणगणने शार्दूलविक्रीडितच्छन्दो ज्ञायेत । परं त्वस्मिन्पद्ये "शार्दूलविक्रीडितम्" इति शब्दस्य श्लेषसामर्थ्याच्छन्दःश्रवणसमकालमेवैतत्परिज्ञायते, इदं शार्दूलविक्रीडितं छंद इति । यथा पत्रोपरि लग्नमुद्रादर्शनमात्रेण पत्रपठनात्प्रागेवेदं ज्ञायते, इदं पत्रममुकस्येति ।

यथावा—

यान्ति न्यायप्रवृत्तानां तिर्यञ्चोपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोपि विमुञ्चति ॥

रामचरित्रस्य नाटककर्ता सूत्रधारो रङ्गभुवं प्रविश्य प्रथमं तावदिदं नीतिवचनं श्रावयति । तस्य श्रवणमात्रेण नाटकदर्शनात्प्रागेव सामाजिकानामिदं ज्ञानमासीत् । रामचन्द्रो वानरसैन्यं विरचय्य लङ्कामगात् । रावणभ्रातृविभीषणमेलनेन च जयं प्राप । ईदशरामचन्द्रस्य नाटको भविष्यतीति । चन्द्रालोकस्येदं लक्षणम्—

" सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः ॥" इति ॥

मम तु मतं, " अस्य श्रीयशवन्तसिंह—" इत्येतादृशप्रकृतार्थपरपदवदुदाहरणलाभात्प्राचीनैः प्रकृतार्थपरपदस्येति प्रमादान्नियमः कृतः । एवं च " यान्ति न्याय—" इत्येतादृशोदाहरणेष्विदं लक्षणमव्याप्तं भवति । कुत इति चेदत्र "शार्दूलविक्रीडितम्" इत्यादिवत्पदं मुद्रारूपं

नास्ति; किं त्वर्थो मुद्रारूपः। अपि च सूच्यार्थसूचनमित्यस्य सूक्ष्मेऽतिव्याप्तिरपि भवति। मुद्रायां सूक्ष्मत्वस्य विवक्षाभावात् ॥

इति मुद्राप्रकरणम्॥ ४८ ॥



# रत्नावली ॥



रत्नावलीशब्दार्थो रत्नपङ्क्तिः। अहमस्यालंकारस्य स्वरूपं स्पष्टीकरोमि। अनेकेषां पदार्थानां समवाये तिस्रो रीतयो भवन्ति। एका धान्यराशिवत्समुदायरूपा समुच्चयरूपा वा। द्वितीया त्वेकसूत्रे प्रोतानां पदार्थानां, तदाकारेणाप्रोतानां पदार्थानां वा मालावत्समुदितत्वे मालारूपा तृतीया रेखावत्समुदितत्वे पङ्क्तिरूपा। तत्र समुदायन्यायेन तु समुच्चयालंकारः स्वीकृतः। उक्तमालान्यायेन मालोपमा-कारणमाला-भ्रान्तिमालाद्यलंकारप्रभेदाः स्वीकृताः। माला स्वयमलंकारतया भवितुं न समर्था, कुत इत्युक्तौ यस्य यस्यालंकारस्य माला भवति, तत्र तत्र तत्तदलंकाराणामेव चमत्कारस्य प्राधान्यम् ; न तु मालायाः। एकस्मिन्वस्तुन्युपमाभ्रान्त्यादिवस्तूनां मालावत्प्रोतत्व उपमामालाभ्रान्तिमालेत्याद्युच्यते। सजातीयानां पङ्क्तिन्यायविशिष्टं किमप्युदाहरणमलंकारतया भवितुं योग्यं न मिलति। अतो रत्नपङ्क्तिरङ्गीकृता। रत्नत्वेन वज्रमाणिक्यादिकं सजातीयमेव, परं तु वज्रत्वादिना परस्परं विजातीयम्। एवं रत्नावलीन्यायस्य वाच्यतायामलंकारयोग्यश्चमत्कारो नास्ति, किं तु रत्नावलीन्यायस्य स्फुरण एव। यथोक्तक्रमालंकारे। अतो रत्नावलीन्यायस्य स्फूर्तौ रत्नावलीनाम्नो रूढिः। यद्युच्यते, मालोपमापि विजातीयधर्मैर्भवति, तत्रापि रत्नमालान्यायः स्वीकर्तव्य इति। मम मते न तत्र काचिद्धानिः। तादृशमालोपमा रत्नमालोपमेति काममुच्यताम् ॥

रत्नावलीव वस्तूनामावलेः स्फुरणं यदि।
तत्र रत्नावली राजन्नलंकारतया मता ॥

यथा—

चतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञस्त्वं नराधिप ।
को भवेत्त्वादृशो लोकेऽमुष्मिन्काले कलाविह ॥

चतुरास्यश्चतुरवाणीविशिष्टः, लक्ष्मीपतिर्विपुलविभववान्, सर्वज्ञः सर्ववृत्तान्तज्ञाता । एवं च राजराजेश्वरस्येदृग्गुणवर्णने चतुरास्यो ब्रह्मा, लक्ष्मीपतिर्विष्णुः, सर्वज्ञो महेश्वरः, एतेषां देवानामावल्याः स्फुरणं रत्नावलीव चमत्कारकारित्वाद्रत्नावल्यलंकारः । अत्र ब्रह्मादयो देवत्वेन सजातीयाः, परं तु ब्रह्मत्वादिना तु विजातीया एव । यद्यप्यत्र शब्दाः श्लिष्टास्तथाप्येकवृन्तगतफलद्वयन्यायेनार्थद्वये पर्वसानं नास्ति । किं तु प्रकरणवशाच्चतुराननादिशब्दानां चतुरवाणीविशिष्टाद्यर्थेषु वाचकत्वस्य नियमने ब्रह्माद्यन्यार्थप्रतीतिर्व्यञ्जनया भवति । व्यञ्जनायाः स्वरूपं द्वितीयाकृतौ व्यञ्जनाप्रकरण उक्तम् । रत्नावल्यामपि यथास्थितस्वरूपः क्रमो विद्यते, परं तु तत्रापि रोचकत्वं रत्नावल्यामनुभवसिद्धम् । न तु क्रमे । तथास्मिन्नलंकारेऽपि क्रमो विद्यते । "चतुरास्यः" इत्यत्र ब्रह्मविष्णुमहेशेतिकथनस्य क्रमः। अस्मिन्क्रमकथने हेतुश्च विश्वस्योत्पत्तिस्थितिलयकर्तृत्वम् । परमत्र न क्रमे पर्यवसानम् । "रत्याप्तप्रियलाञ्छने" इति वक्ष्यमाणोदाहरणेऽवताराणां क्रमो विद्यते, परमत्र चमत्कारस्य पर्यवसानं रत्नावल्याम्, न तु क्रमे । किं च क्रमालंकारोदाहरणेषु चमत्कारस्य पर्यवसानं क्रमे । न च तत्रावलीरूपत्वम्, किं तु सोपानरूपत्वम् ॥

यथावा—

रत्याप्तप्रियलाञ्छने कठिनतावासे रसालिङ्गिते
प्रल्हादैकरसे क्रमादुपचिते भूभृद्गुरुत्वापहे ॥
कोकस्पर्धिनि भोगभाजि जनितानङ्गे खलीनोन्मुखे
भाति श्रीरमणावतारदशकं बाले भवत्याः स्तने ॥

अत्र कुचपक्षे—रतिकालप्राप्तप्रियकृतनखचिन्हवत् । काठिन्यवत् । शृङ्गाररसयुक्तम् । शृङ्गाररसस्य वर्णः श्यामः । कुचाग्रं च श्यामम् । अतः कुचाग्रे शृङ्गाररसं समारोप्य "रसालिङ्गिते" इत्युक्तम् । प्रकृष्टानन्द-

जनकम्। क्रमशो वृद्धिमत्। औन्नत्यविषये पर्वतगौरवहरम्। चक्रवाकाकारम्। संभोगयुक्तम्। मन्मथोद्बोधकम्। आकाशोन्मुखमिति॥ दशावतारपक्षे—रत्याप्तप्रियस्य मदनस्य लाञ्छनं मत्स्यः, तद्रूपो मत्स्यावतारः। कठिनतावासः कमठमूर्तिः। रसया पृथिव्याऽऽलिङ्गितो वराहमूर्तिः। प्रल्हादैकरसः प्रल्हादैकप्रीतिमान् नृसिंहमूर्तिः। क्रमशो वृद्धिमान् वामनमूर्तिः। भूभृतां राज्ञां गौरवहर्ता भार्गवः। कोकवद्विरहदुःखी दाशरथिः। भोगस्य स्रक्चन्दनादेरनुभोक्ता बलदेवः। जनितानङ्गः प्रद्युम्नजनको वासुदेवः, प्रद्युम्नस्य मदनावतारत्वात्। खमश्वमुखविलं तस्मिल्लीनः खलीनो वल्गा, तस्मिन्नुन्मुख उद्युक्तः। उक्तं चिन्तामणिकोषकारेण "उन्मुख उद्युक्ते" इति। खलीनोन्मुख इतिशब्दसमुदायार्थस्तु वल्गोद्युक्तः कल्क्यवतारः। कल्किः कलेरन्ते हयमारुह्यासाधुदमनं करिष्यतीति शास्त्रे प्रसिद्धम्। अत्रेश्वरावतारत्वेन मत्स्यादयः सजातीयाः, परं तु मत्स्यादिरूपेण विजातीयाः। अत्र कुचवर्णने दशावताराणां पङ्क्तेः स्फुरणाद्रत्नावल्यलंकारः। क्वचित्सजातीयानामावलेरपि रमणीयोदाहरणोपलाभेऽलंकारत्वे न काचित्क्षतिः॥ चन्द्रालोकस्येदं लक्षणम्—

"क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः"॥ इति॥

मम तु मतं, रत्नावल्यलंकारे क्रमप्रवेशो न समीचीनः। कुत इत्युक्तौ क्रममूलकश्चमत्कारः पृथगेव वर्तते। स तु क्रमालंकारविषयः। अपिचावलीचमत्कारः पृथगेव। रत्नावल्यां प्रसिद्धक्रमवतां व्युत्क्रमेण ग्रथनेपि रत्नावल्यलंकारो भवत्येव॥ परं तु क्रमस्यौचित्यम्॥

इति रत्नावलीप्रकरणम्॥ ४९॥

## ॥ रूपकम्॥

रूपशब्दस्यार्थो मनोहराकृतिः स्वभावश्च। आह चिन्तामणिकोषकारः "रूपं स्वभावे मनोहराकृतौ" इति। "इवे प्रतिकृतौ।

५ । ३ । ९६।" इति सूत्रेण रूपशब्दात्प्रतिकृत्यर्थे कनि कृते रूपकशब्दो निष्पन्नः। इवार्थः सादृश्यम् । तृणकाष्ठादिनिर्मितां प्रतिमां प्रतिकृतिमाहुः। उक्तं चिन्तामणिकोषकारेण " प्रतिकृतिस्तृणचर्मकाष्ठादिनिर्मिते प्रतिमापर्याये वस्तुनि " इति । सदृशप्रतिकृतिः कन्प्रत्ययार्थः। रूपमिव प्रतिकृती रूपकमिति व्युत्पत्त्या रूपसदृशप्रतिकृती रूपकशब्दार्थः । यथा काष्ठादिनिर्मिताऽश्वादिप्रतिकृतिरश्वक इत्युच्यते । निष्कृष्टार्थस्त्वाकृतेः स्वभावस्य वा सदृशी रचिता मूर्तिः। न च वाच्यम्, अत्र स्वभावकथनेन वर्णशीले विवक्षिते। तथाचाकृतेर्मूर्तिर्भवति। परंतु वर्णशीलयोर्मूर्तिः कथमिति ? कुत इति चेत्सामान्यतया मनुष्यपशुपक्षिणां मूर्तिस्त्वाकृतिमादाय निर्मीयते । परंतु लक्ष्मीनारायणयोर्मूर्तिः केनापि चक्षुषा न दृष्टा, तथापि तयोर्गौरकृष्णवर्णयोः शास्त्रप्रसिद्धत्वाल्लक्ष्मीमूर्तिर्गौरवर्णा नारायणमूर्तिश्च कृष्णवर्णा निर्मीयते। तथैवोत्सवकाले मनुष्याः प्रसन्नाः,युद्धकाले च क्रुद्धा भवन्ति। तत उत्सवकालिकी मूर्तिः प्रसन्ना, युद्धकालिकी च क्रुद्धा निर्मीयते। इदं च लोके प्रत्यक्षसिद्धम् । कविसृष्टिश्च लोकातीता। अत्र नाटकन्यायेन धुरंधरो रूपकालंकारमङ्गीचकार। यथा दीपकन्यायेन दीपकालंकारः । नाटके रूपकशब्दस्य प्रयोगश्चास्ति । उक्तं चिन्तामणिकोषकारेण "रूपकं नाटके" इति नाटके नटो रामादिरूपं धत्ते तद्रामादिरूपकमित्युच्यते। नाटके वर्णाकृतिशीलानि सर्वाण्यादाय रूपकं भवति । भाषाप्रसिद्धशतरञ्जक्रीडायां काष्ठखण्डविशेषेष्वश्वप्रभृतीनां गतिमात्रशीलमादाय रूपकम् ॥

नवनीरद कृष्ण त्वं वस मे हृदये सदा ॥

अत्र वर्णमात्रस्य रूपकम्। यत्किंचित्सादृश्येनोपमासिद्धिरिति सूचितमुपमालंकारे भरतादिभिः। तदनुवर्तनं च साधर्म्यमूलकेषु सर्वालंकारेषु बोध्यम्। नाटके रूपकं कायिकं, काव्ये तु वाचिकम् । प्रतिमालंकारे तु मुख्यस्य स्थानेऽन्यस्य स्थापनम् । तत्र रूपकविवक्षा नास्ति। चतुर्भुजाद्याकारस्य विष्णोः स्थाने गोलाकारः शालिग्रामोऽपि स्थाप्यते ॥

अन्यरूपेण सदृशं रूपं यत्क्रियते नृप ।
नाटकन्यायमालम्ब्य रूपकं तन्निगद्यते ॥

यथा—

चक्षुः सुधाब्धिर्यशवन्तवर्म-
ज्ञाता भ्रमिस्तत्र कनीनिका ते ।
मनांसि नौकाः परिपश्यतां वै
भवन्ति मग्नास्त्वरितं ह्यनन्ताः ॥

अत्र राजराजेश्वरनेत्रयोः सुधासमुद्रस्य रूपकं कृतम् । तत्र च समुद्रस्याकृतिर्नेत्रयोरस्त्येव । किंचात्र प्रतीयमाननेत्रच्छदयोः सीम्नः, पद्मसु च वृक्षावले रूपकमप्याकृतिमादाय वर्तते । नेत्रयोः श्वेततायां सुधाश्वेतत्वस्य रूपकं वर्णमादाय, नेत्रयोस्तरलत्वे च सुधासमुद्रस्य तरलत्वं शीलमादाय रूपकम् । अपि च कनीनिकायां जलभ्रमे रूपकं कृतं, तत्र गोलाकार आकृतिः । जले यदा भ्रमिर्भवति तदा वेगवशान्नैल्यं भाति । कनीनिकायां कालिमास्त्येव । अयं च वर्णः । आकर्षणं च शीलम् । अतोत्र वर्णाकृतिशीलानां त्रिकमप्यस्ति । अपि च पश्यतां मनसि नौकाया रूपकमस्ति । अत्र केवलं मज्जनरूपं शीलमेव । एवमन्यत्राप्यूह्यम् ॥

यथावा—

यशवन्तयशोवल्ल्या मूलं शेषफणावलिः ।
तन्तवो दिक्करिरदाः पुष्पं ताराः फलं शशी ॥

अत्र राजराजेश्वरस्य यशसि लताया रूपकं कृतम् ॥

यथावा—

" सुधांशुर्हुतभुग्भस्म गरलं राजतेऽद्भुतम् ।
सखि पश्य समायाति हरवेषधरो हरिः ॥ "

अत्र हरौ हरस्य रूपकम् । नखक्षतयावकचन्दनकस्तूरिका गम्याः । अत्रैवं नाशङ्कनीयम्, रूपशब्दार्थस्तु मनोहराकृतिः, पावकगरलयोश्च मनोहराकृतित्वाभावात्कथं रूपकमिति ? अत्रोपलक्षणेनामनोहराकृतेरपि संग्रहात् । अस्यालंकारस्य स्वारस्यं तु तादृशरूपकरणे ॥

यथावा—

श्रीव्यासो भरतश्च भोजनृपतिः कर्णधकैवर्तकाः ।
राण! त्वं फतसिंह! संप्रति गुणैरीशोसि तेऽनुग्रहा-
त्सुब्रह्मण्यमरुत्समागमदतः पारं दरीदृश्यते ॥

कर्णधशब्दार्थः कर्णस्य धर्ता, कर्णस्त्वरित्रापरपर्यायो नौ ग्नः कर्णाकारः काष्ठविशेषः । चिन्तामणिकोषकारः केनिपातशब्दा वन् " केनिपातोऽरित्रे कर्णे नौकापृष्ठस्थचालनकाष्ठे " इत्याह । कशब्दार्थो जलजन्तूनां हन्तेति, परं त्वस्य रूढिर्नौकाचालनकर्तरि

यथावा—

कर्णौ द्वौ सूत्रधारावलकलगुडिनौ नेत्रयुग्मं प्रदीपं
भ्रूयुग्मं कज्जलं ते श्वसनगतिरवः सन्मृदङ्गस्य नादः
आस्यप्रावारवस्त्रं भवति जवनिका केशबन्धोऽन्धकारो
बिम्बोष्ठो रङ्गभूमिर्धुरि मदनविभोर्नृत्यति घ्राणमुक्ता ॥

अत्र मध्याया नायिकाया विपरीतरतौ नासामौक्तिकं नटं नाटकस्य रूपकं कृतम् । विपरीतरते मुखावगुण्ठनान्नायिका मध्या रूपकस्वरूपस्य स्पष्टतया परिज्ञानाय सावयवपरं हरणानि प्रथमं प्रदर्शितानि ॥

अवयवं परंपरां च विना यथा—

दाता दयालुः सरलस्वभावो
दिगन्तसंक्रान्तयशःसमूहः ।
महेश्वरोऽयं यशवन्तसिंह
आकल्पमाशास्तु महीं यथेच्छम् ॥

अत्र राजराजेश्वरे धूर्जटे रूपकं कृतम् ॥

यथावा—

राधा भूत्वा हरिरितो हरिर्भूत्वा च राधिका ।
अयत्नसुलभां प्राप्तौ विपरीतरतिं रसात् ॥

पूर्वोदाहरणेषु कविरन्यदीयरूपसदृशं रूपमन्यस्मिन्नकरोत् । अत्र

राधाकृष्णौ स्वयमकुर्वाताम्। कविना तु तद्वर्णनमात्रं कृतम्। तच्च रोचकत्वादलंकारः। भगवतो भरतस्येदं लक्षणम्—

"स्वविकल्पैर्विरचितं तुल्यावयवलक्षणम्।
किंचित्सादृश्यसंपन्नं यद्रूपं रूपकं तु तत्॥" इति॥

मम तु मतं, एतल्लक्षणगतानि समस्तान्यपि विशेषणानि व्यर्थानि। "स्वविकल्पैर्विरचितम्" इति विशेषणं कविप्रतिभोत्थापितपरायणत्वाद्रम्यत्वबोधनार्थकम्। परं तु रम्यत्वबोधस्तु सर्वेष्वप्यलंकारेष्विष्टतमः। रूपक एवेदं विशेषणं कथम्। यद्युच्यते, रम्यतयालंकारत्वसिद्धिरिति सूचनायेदं विशेषणमिति चेदेतद्विवक्षायां त्विदं विशेषणमेतेनादावुपमायामेव प्रदेयम्। वास्तवरूपके नालंकारत्वमिति विवक्षितं चेत् "राधा भूत्वा—" इत्यत्राव्याप्तिः। तुल्यतां विना रूपकसिद्धेरभाव इति सर्वानुभवगोचरत्वाद्द्वितीयविशेषणमपि व्यर्थम्। किं च "तुल्यावयवलक्षणम्" इत्युक्तम्। तत्र चावयवास्त्वाकृतिमत एव भवन्ति, रूपकं केवलमाकृतिमादायैव न भवति, शीलादिकमप्यादाय भवति, तत्राव्याप्तिर्भवेत्। अपि च निरवयवरूपकेऽप्यव्याप्तिर्भवति। "किंचित्सादृश्यसंपन्नम्" इति तृतीयविशेषणस्य सादृश्यबाहुल्ये रूपकं न भवतीति तात्पर्यं तु नैव संभवति। किं त्वस्येदं तात्पर्यं, यत्किंचित्सादृश्यमादायापि रूपकं भवतीति। तच्चैतेनैव पूर्वमुपमाप्रकरणे प्रतिपादितम्। साधर्म्यमूलकसमस्तालंकारेषु तस्यानुवर्तनात्पुनरुक्तता। किं च "यद्रूपं रूपकं तु तत्" इति कथनाद्धुरंधरस्थापितरूपकनामार्थोऽपि भरतस्याबोधविषय इति स्पष्टतरम्। एतेन रूपकनाम्नि स्वार्थे कन्प्रत्ययो ज्ञातः। स च प्रमादः। भगवतो भरतस्येदमुदाहरणम्—

पद्माननास्ताः कुसुमप्रकाशा
विकासिनीलोत्पलचारुनेत्राः।
वापीस्त्रियो हंसकुलैर्नदद्भि—

श्रीव्यासो भरतश्च भोजनृपतिः कर्णधकैवर्तकाः ।
राणा! त्वं फतसिंह! संप्रति गुणैरीशोसि तेऽनुग्रहा-
त्सुब्रह्मण्यमरुत्समागमदतः पारं दरीदृश्यते ॥

कर्णधशब्दार्थः कर्णस्य धर्ता, कर्णस्त्वरित्रापरपर्यायो नौकापृष्ठलग्नः कर्णाकारः काष्ठविशेषः । चिन्तामणिकोषकारः केनिपातशब्दार्थं कुर्वन् "केनिपातोऽरित्रे कर्णे नौकापृष्ठस्थचालनकाष्ठे" इत्याह । कैवर्तकशब्दार्थो जलजन्तूनां हन्तेति, परं त्वस्य रूढिर्नौकाचालनकर्तरि ॥

यथावा—

कर्णौ द्वौ सूत्रधारावलकलगुडिनौ नेत्रयुग्मं प्रदीपं
भ्रूयुग्मं कज्जलं ते श्वसनगतिरवः सन्मृदङ्गस्य नादः ।
आस्यप्रावारवस्त्रं भवति जवनिका केशबन्धोऽन्धकारो
बिम्बोष्ठो रङ्गभूमिर्धुरि मदनविभोर्नृत्यति घ्राणमुक्ता ॥

अत्र मध्याया नायिकाया विपरीतरतौ नासामौक्तिकं नटं कृत्वा नाटकस्य रूपकं कृतम् । विपरीतरते मुखावगुण्ठनान्नायिका मध्या प्रतीयते । रूपकस्वरूपस्य स्पष्टतया परिज्ञानाय सावयवपरंपरितरूपकयोरुदाहरणानि प्रथमं प्रदर्शितानि ॥

अवयवं परंपरां च विना यथा—

दाता दयालुः सरलस्वभावो
दिगन्तसंक्रान्तयशःसमूहः ।
महेश्वरोऽयं यशवन्तसिंह
आकल्पमाशास्तु महीं यथेच्छम् ॥

अत्र राजराजेश्वरे धूर्जटे रूपकं कृतम् ॥

यथावा—

राधा भूत्वा हरिरितो हरिर्भूत्वा च राधिका ।
अयत्नसुलभां प्राप्तौ विपरीतरतिं रसात् ॥

पूर्वोदाहरणेषु कविरन्यदीयरूपसदृशं रूपमन्यस्मिन्नकरोत् । अत्र तु

ष्णौ स्वयमकुर्वाताम्। कविना तु तद्वर्णनमात्रं कृतम्। तच्च रोचक-
ंकारः। भगवतो भरतस्येदं लक्षणम्—

"स्वविकल्पैर्विरचितं तुल्यावयवलक्षणम्।
किंचित्सादृश्यसंपन्नं यद्रूपं रूपकं तु तत्॥" इति॥

मम तु मतं, एतल्लक्षणगतानि समस्तान्यपि विशेषणानि व्य-
"स्वविकल्पैर्विराचितम्" इति विशेषणं कविप्रतिभोत्थापितपरा-
द्रम्यत्वबोधनार्थकम्। परं तु रम्यत्वबोधस्तु सर्वेष्वप्यलंकारे-
नः। रूपक एवेदं विशेषणं कथम्। यद्युच्यते, रम्यतयालंकारत्व-
ेति सूचनायेदं विशेषणमिति चेदेतद्विवक्षायां त्विदं विशेषणमेते-
ामायामेव प्रदेयम्। वास्तवरूपके नालंकारत्वमिति विवक्षितं चेत्
भूत्वा-" इत्यत्राव्याप्तिः। तुल्यतां विना रूपकसिद्धेरभाव इति
वगोचरत्वाद्द्वितीयविशेषणमपि व्यर्थम्। किं च "तुल्यावयव-
" इत्युक्तम्। तत्र चावयवास्त्वाकृतिमत एव भवन्ति, रूप-
माकृतिमादायैव न भवति, शीलादिकमप्यादाय भवति, तत्रा-
वित्। अपि च निरवयवरूपकेऽप्यव्याप्तिर्भवति। "किंचित्सा-
न्नम्" इति तृतीयविशेषणस्य सादृश्यबाहुल्ये रूपकं न भव-
ात्पर्यं तु नैव संभवति। किं त्वस्येदं तात्पर्यं, यत्किंचित्सादृश्यमा-
रूपकं भवतीति। तच्चैतेनैव पूर्वमुपमाप्रकरणे प्रतिपादितम्।
मूलकसमस्तालंकारेषु तस्यानुवर्तनात्पुनरुक्तता। किं च "यद्रू-
तु तत्" इति कथनाद्धुरंधरस्थापितरूपकनामार्थोऽपि भरत-
विषय इति स्पष्टतरम्। एतेन रूपकनाम्नि स्वार्थे कन्प्रत्ययो
स च प्रमादः। भगवतो भरतस्येदमुदाहरणम्—

पद्माननास्ताः कुसुमप्रकाशा
विकासिनीलोत्पलचारुनेत्राः।
वापीस्त्रियो हंसकुलैर्नदद्भि-

किं तु कविप्रतिभोत्थापिताः । किं च वाप्यः पद्मनीलोत्पलहंसरवैः स्त्रीणां मुखनेत्ररवसदृशचिन्होपेताः । न च ताः स्त्रीभिः सह संपूर्णसादृश्योपेताः । किं तु किंचित्सादृश्ययुक्ताः । अस्मिन्नुदाहरणेऽस्य लक्षणस्यैवं संगतावपि पूर्वोक्तदोषास्तु यथास्थिता एव । मम तु मतं, अस्य लक्षणेन रूपकस्वरूपं स्पष्टं न भवति । काव्ये कविकल्पना प्रायिका । "राधाभूत्वा हरिरितः" ईदृशवास्तवरूपकेऽव्याप्तिरपि । भगवतो वेदव्यासस्येदं लक्षणम्—

"उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते ।
गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः ॥" इति ॥

उपमानेन सह गुणानां समतां दृष्ट्वा तत्त्वमर्थादुपमानस्य धर्म उपमेये यन्निरूप्यते तद्रूपकालंकारमाहुः। मम तु मतं, इदं लक्षणं न साक्षाद्रूपकस्वरूपप्रकाशकम् । आकृत्यादिधर्मानादाय रूपकं भवति । परंतु रूपके न केवलधर्मस्य रूपकम्, किं तु धर्मपुरस्कारेण धर्मिणो रूपकं भवति । रूपकनामार्थो रूपसदृशनिर्मितप्रतिमा । केवलधर्मस्य रूपकं तूपमायां भवति । किं च समतामन्तरा रूपकस्यासंभवात् "गुणानां समतां दृष्ट्वा" इति विशेषणस्य वैयर्थ्यम् । उपमामन्तरा च प्रकृताप्रकृतयोरुपमेयोपमानत्वप्रतिपादनमपि प्रमादः । यत्समीपे कृत्वा विशेषज्ञानं क्रियते तस्योपमेयसंज्ञायाः, यस्य समीपे कृत्वा विशेषज्ञानं क्रियते तस्योपमानसंज्ञायाः प्राप्तेः । रूपकस्य साक्षात्स्वरूपमजानता भगवता वेदव्यासेनैव त्रिमर्शश्रान्तेनैतल्लक्षणानन्तरं द्वितीयलक्षण उपमैव रूपकमिति स्पष्टतया भणितम् । द्वितीयलक्षणं चेदम्—

"उपमैव तिरोभूतभेदा रूपकमेव वा" इति ॥

अत्र वाशब्दादियं विवक्षा प्रतीयते, पूर्वोक्तं रूपकलक्षणम्, इदं वेति । अस्यायं सिद्धान्तो रूपकेऽपि साधर्म्यमिति । वैलक्षण्यं तूपमायामुपमेयोपमानयोर्भेदः, रूपके तूपमेयोपमानयोरभेद इति । मम तु मतं, उपमारूपकयोः साधर्म्यमूलकत्वेऽपि नामार्थानुसारेणानयोः स्वरूपमत्यन्तं विलक्षणम् । साधर्म्यमूलकास्त्वनेकेऽलंकाराः, परं तु नामार्थानुसारेण सर्वेषामप्यत्यन्तं वैलक्षण्यम् । उपमारूपकयोर्भेदाभेद-

मात्रवैलक्षण्याङ्गीकारे तु प्रकारान्तरत्वं भवेन्न त्वलंकारान्तरत्वम्। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"तद्रूपकमभेदो य उपमानोपमेययोः ॥" इति ॥

उपमानोपमेययोर्योऽभेदस्तद्रूपकमित्यर्थः । मम तु मतं, रूपकेऽभेदो न विवक्षितः, किं तु रूपकस्य विवक्षा । यथा रामरूपधारिणि नटे रामाभेदे न तात्पर्यं किं तु रूपके तात्पर्यम् । अभेदाविवक्षायामभेदालंकारः । स तु पूर्वं प्रदर्शितः । रत्नाकरस्येदं लक्षणम्—

"आरोपो रूपकम् ॥" इति ॥

मम तु मतं, रूपकस्वरूपमारोपो न भवति, किं तु रूपसदृशप्रतिकृतिः । रूपकोदाहरणेषु श्रवणमात्र आरोपो भासते, परं तु विचारदशायामारोपबुद्धिर्निवर्तते । सर्वस्वकारस्येदं लक्षणम्—

"अभेदप्राधान्य आरोप आरोपविषयानपन्हवे रूपकम् ॥" इति ॥

आरोपेऽभेदस्य प्रधानतायामारोपविषयस्य चानपन्हवे सति रूपकं भवतीत्यर्थः । उपमायां भेदाभेदयोरुभयोः प्राधान्यम् । व्यतिरेकालंकारे भेदप्राधान्यम् । उपमाव्यतिरेकयोर्व्यावृत्त्यर्थं "अभेदप्राधान्ये" इत्युक्तम् । अपन्हुत्यलंकारव्यावृत्तये "आरोपविषयानपन्हवे" इत्युक्तम् । एवं चोपमारूपकापन्हुतिव्यतिरेकाणां स्वरूपाणि नामार्थानुसारेण भिन्नभिन्नानि वर्तन्ते । एवमनेकवारमहं सविस्तरमवदम् । अतः सर्वस्वकारस्य विशेषणदानं प्रमादः । चक्रवर्तिन इदं लक्षणम्—

विषय्याकारमारोप्य विषयस्थगनं यदा ॥
रूपकं तु भवेत्तत्र रञ्जनेन समन्वयात् ॥

विषयिण आकारमारोप्य यदा विषयस्य स्थगनमाच्छादनं तदा रञ्जनेन सह समन्वयात्सादृश्याद्रूपकमित्यर्थः। मम तु मतं, रूपकशब्देन वर्णशीलाकृतीनां सर्वेषां संग्रहे सत्यस्याकारमात्रनियमकरणं प्रमादः। एवं नियमने शीलादिभी रूपकेऽव्याप्तिः स्यात् । अथ च रूपके विषयाच्छादनस्य विवक्षा नास्ति । अपि चायं रञ्जनन्यायेन रूपवत्करण-

माह। अयमपि प्रमादः। कुत इत्युक्तौ रूपके न रञ्जनन्यायस्य स्वारस्यं, किं तु नाटकन्यायस्य स्वारस्यमनुभवसिद्धम् । ततो रञ्जनन्याये तु तद्गुणबुद्धेर्जायमानत्वात्तद्गुणालंकारो भवेत् । भगवतो वेदव्यासस्य द्वितीयलक्षणानुसारिणो दण्ड्याचार्यस्येदं लक्षणम्—

"उपमैव तिरोभूतभेदा रूपकमुच्यते ॥" इति ॥

अनेन लक्षणेन रूपकस्वरूपमेव न सिद्ध्यति । एकदेशविकृतमनन्यवदितिन्यायादुपमाप्रकारत्वं सिद्ध्यति । भोजमहाराजस्येदं लक्षणम्—

"यदोपमानशब्दानां गौणवृत्तिव्यपाश्रयात् ॥
उपमेये भवेद्वृत्तिस्तदा तद्रूपकं विदुः॥" इति ॥

मम तु मतं, रूपकोदाहरणेषु लक्षणा वर्तते, परं तु गौणी लक्षणा नास्ति । गौणी लक्षणा कृता चेत्सादृश्ये पर्यवसानादुपमा भवेत् । अत्र लक्षणा तु बिम्बप्रतिबिम्बभावसंबन्धेन सदृशप्रतिकृतौ वर्तते ॥

अयं हि धूर्जटिः साक्षाद्यशवन्तनरेश्वरः ॥

अत्र धूर्जटिशब्दस्य धूर्जटिसदृशप्रतिकृतौ लक्षणा वर्तते । चन्द्रालोकस्येदं लक्षणम्—

"विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् ॥
रूपकम् ॥" इति ॥

मम तु मतं, रूपकेऽभेदो रञ्जनं च न स्तः । इदं प्रथममभिहितम् । अनेन ताद्रूप्यविषय इदमुदाहृतम् ॥

"साध्वीयमपरा लक्ष्मीरसुधासागरोदिता ॥"

मम तु मतं, ईदृशविषय उक्तरूपकं न सिद्ध्यति । किं तु सजातीयता सिद्ध्यति । सजातीयता च सादृश्य एव पर्यवस्यति । अत ईदृशविषये तूपमैव भवेत् । प्राचीनानां केनचिदपि लक्षणेन रूपकस्य साक्षात्स्वरूपं न सिद्ध्यति । ग्रन्थविस्तरभयात्सर्वेषां लक्षणानि नेह प्रदर्शितानि । अलंकाररत्नाकरकार आह-सादृश्यसंबन्धं विना कार्यकारणभावसंबन्धमूलकारोपस्थलेपि रूपकालंकाराङ्गीकारो युक्तः । कुत इत्युक्तौ सारोपा

लक्षणा द्विप्रकारा। प्रयोजनरहिता रूढा, तद्युक्ता कार्या। तत्र रूढायां प्रयोजनरूपं व्यङ्ग्यं नास्ति। अतो विचित्रचारुताया विरहाद्रसपोषकत्वाभावात्सहृदयहृदयाल्हादकारित्वाभावादलंकारता नास्ति। कार्या पुनस्तद्वैलक्षण्येन काव्यजीवितायमाना सर्वथा सर्वैः कविभिरादरणीयेति। न च तस्याः सादृश्यसंबन्धे संबन्धान्तरे वा कश्चिद्विशेषः। येनैकत्रालंकारता परत्र तदभाव इति स्यात्। कार्यकारणभावसंबन्धमूलकं रूपकं यथा—

केचित्कोटिं परे लक्षं संगृह्णन्तु धनं जनाः।
विपद्विदारकः साक्षात्संपन्मे यदुनायकः॥

अत्र यदुनायकः संपदः कारणं, संपत्कार्यम्। एवं च कार्यस्य कारण आरोपाद्रूपकम्। अन्ये केचित्प्राचीना अत्र विषये हेत्वलंकारमेव मन्यन्ते। तदुक्तं परमतेन चन्द्रालोककारेण—

"हेतुहेतुमतोरैक्यं हेतुं केचित्प्रचक्षते॥" इति॥

रसगङ्गाधरकारोपि "प्रामाणिकैः सादृश्यसंबन्ध एव रूपकमङ्गीकृतम्" इत्याह। मम तु मतं, रूपकस्य साक्षात्स्वरूपमजानद्भिरारोपे रूपकमिति बुबुधे। तदा तैः कार्यकारणयोरेकतावर्णनेपि रूपकालंकारोऽङ्गीकृतः। परं त्वेतादृशस्थले न तावद्रूपकं, न वा हेत्वलंकारः, किं त्वभेदालंकारः। कुत इत्युक्तावत्र रूपवत्ताकरणमपि नास्ति। हेतोर्हेतुतया कथनमपि नास्ति। रूपकं त्रिप्रकारं। निरवयवं, सावयवं, परंपरितं चेति। यत्रावयविमात्रस्य रूपकं भवति,अवयवानां रूपकं न भवति तन्निरवयवम्॥

यथा—

यशवन्तमहाराज! कल्पवृक्षो भवानिह।
अखिलार्थिमनोवाञ्छां सदा पूरयतेतराम्॥

अत्र कल्पवृक्षोऽवयवी। तस्यावयवाः शाखाः। राजराजेश्वरोऽवयवी। हस्तादयस्तस्यावयवाः। अत्र केवलं कल्पवृक्षस्यावयविनो रूपकम्। तस्यावयवानां रूपकाभावादिदं निरवयवम्। अवयवैः सहितं यद्रूपकं भवति तत्सावयवम्॥

यथा—

ज्योत्स्नांशुकं वसानेयं तारामौक्तिकहारिणी ॥
पूर्णेन्दुवदना भाति राकाप्रौढमनोरमा ॥

अत्रावयविनायिकायामवयविराकायाः, अथ च नायिकाया अवयवेषु धवलांशुकादिषु राकावयवानां ज्योत्स्नादीनां रूपककरणात्सावयवम्। परंपरया सहितं परंपरितम् । एकस्मिन् रूपके कृते तस्य द्वितीयरूपकं विना सिद्ध्यभावे तत्सिद्ध्यै द्वितीयरूपकापेक्षायां द्वितीयरूपकं क्रियते, तच्च प्रथमरूपकस्य परंपराभूतमतस्तत्सहितत्वात्प्रथमं रूपकं परंपरितम् ॥

यथा—

नाभीह्रदात्स्मरो दन्ती ग्रहीतुं कुचकुड्मलौ ॥
रोमराजिकरं रम्यं प्रसारयति दृश्यताम् ॥

अत्र कवेर्वर्णनीया रोमावलिः। सा नीलिमयुतोत्तरोत्तरं सूक्ष्मा च सती दीर्घा, अतस्तस्यां हस्तिहस्तस्य रूपकं कृतवान्। हस्तिनं विना शुण्डादण्डस्यानुपपत्त्या कामं हस्तिनमकरोत् । अथ च हस्तिहस्तप्रसारणार्थे कुचौ कुड्मलौ कृतवान्। कुड्मलस्थित्यर्थं गजक्रीडार्थं च नाभीं ह्रदं कृतवान् । सावयवेऽङ्गाङ्गिभावः । परंपरितेऽङ्गाङ्गिभावो नास्ति। रूपकस्य माला मालारूपकमुच्यते ॥

यथा—

शाखे वाञ्छितपूरणे सुरतरोर्वीर्यस्य तूणीरकौ
धर्मस्यार्यनिकेतनस्य नितरां रक्षाविधावर्गले ॥
शुण्डादण्डयुगं यशोविजययोर्मातङ्गयोर्मत्तयो
राजेते यशवन्तसिंह सुतरां तेऽमू प्रचण्डौ भुजौ ॥

यथावा—

पर्यङ्को राजलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गः
सङ्ग्रामत्रासताम्यन्मुरलपतियशोहंसनीलाम्बुवाहः ॥
भग्नप्रत्यर्थिवंशोल्बणविजयकरिस्त्यानदानाम्बुपट्टः
खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य ॥

स्मितपुष्पोज्ज्वलं लोलनेत्रं भृङ्गमिदं मुखम् ।
इति पुष्पाद्विरेफाणां संगत्या युक्तरूपकम् ॥ १ ॥
इदमार्द्रस्मितज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम् ।
इति ज्योत्स्नोत्पलायोगादयुक्तं नाम रूपकम् ॥ २ ॥
न मीलयति पद्मानि न नभोप्यवगाहते ।
त्वन्मुखेन्दुर्ममासूनां हरणायैव कल्पते ॥ ३ ॥
अक्रिया चन्द्रकार्याणामन्यकार्यस्य च क्रिया ।
अत्र संदृश्यते यस्माद्विरुद्धं नाम रूपकम् ॥ ४ ॥

"पर्यङ्को राजलक्ष्म्याः" इत्यत्रान्यानि सर्वाण्यनुकूलरूपकाणि । "सङ्ग्रामत्रासताम्यन्मुरलपतियशोहंसनीलाम्बुवाहः-" इति प्रतिकूलरूपकम् । हंसानामम्बुवाहानां परस्परं प्रतिकूलत्वात् ॥

अवयविन एव रूपकं, अवयवस्यैव रूपकं, सहजावयवरूपकमर्थांत्स्वाभाविकावयवविशिष्टरूपकं, आहार्यावयवरूपकं, शाब्दरूपकं, आर्थरूपकं, विशिष्टरूपकमर्थाद्विशेषणसहितरूपकं, सापन्हवरूपकमित्यादयः प्राचीनै रूपकस्यानेके प्रकारा उक्तास्ते मन्मत उदाहरणान्तराण्येव ॥

नेदं नभोमण्डलमम्बुराशि-
र्नैमाश्च तारा नवफेनखण्डाः ॥
नायं शशी कुण्डलितः फणीन्द्रो
नायं कलङ्कः शयितो मुरारिः ॥

धुरंधरस्यास्मिन्नपन्हुतेरुदाहरणे कतिपयप्राचीना दृढारोपरूपकमाहुः । कतिचन चापन्हुतिस्वारस्यापरिचयादत्रापन्हुतिं मन्वाना अपन्हुतेरीदृशं लक्षणमाहुः—

"अपन्हुतिरपन्हुत्य किंचिदन्यार्थदर्शनम् ॥" इति ॥

इदमपन्हुतेः स्वरूपं न भवति । एकं निषिध्यान्यस्य दर्शने दृढारोपरूपकादन्यचमत्कारस्तु भ्रान्तिनिवारणादज्ञातज्ञापनाद्वा भिन्नो न भवति । भ्रान्तिवारणं च भ्रान्त्यलंकार एव । यथोन्मीलिते मीलितालंकारस्यैवाङ्गीकारः ॥

यथा—

जटा नेयं वेणीकृतकचकलापो न गरलं
गले कस्तूरीयं शिरसि शशिरेखा न कुसुमम्॥
इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा
पुरारातिभ्रान्त्या कुसुमशर! किं मां व्यथयसि ॥

अज्ञातज्ञापनं च विध्यलंकारः ॥

नभः सरो जलं ज्योत्स्ना कुमुदान्यत्र तारकाः ।
शशाङ्कः कलहंसोयं राजते शरदागमे ॥

जलं कुमुदानि च सरसः सहजावयवाः। कुत इत्युक्तौ सरस्येतानि भवन्त्येव । हंसः सरस आहार्यावयवः । तस्य गतागतशीलत्वात्। चन्द्रस्ताराश्चाकाशस्यावयवा न भवन्ति; किं त्वारोपिताः। कुत इत्युक्तावाकाशो निरवयवः । चन्द्रालोककार अधिक्यन्यूनत्वसमत्वै रूपकस्य त्रैविध्यमाह । तत्राधिकस्येदमुदाहरणम्—

शंभुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टिताम् ।

अत्र शंभुना राजानं रूपयित्वा कविस्ततः समदृष्टितारूपमाधिक्यं राजन्यभिहितवान् । शंभोस्त्रिलोचनत्वाद्विषमदृष्टित्वम् । विषमदृष्टित्वं दोषः, समदृष्टित्वं च गुणः । अतोऽधिकरूपकम् ॥

न्यूनरूपकं यथा—

अयमास्ते विना शंभुस्तार्तीयीकं विलोचनम् ॥

अत्र शंभुना राज्ञो रूपणं कृत्वा तृतीयलोचनन्यूनत्वरूपं न्यूनत्वमभिहितम्। अतो न्यूनरूपकम् । समरूपकस्य तु पूर्वोक्तानि समस्तान्युदाहरणानि । मम तु मतं, अयमस्य प्रमादः । कुत इतिचेन्नटस्य रामादिरूपकरणे न्यूनाधिकभावे रूपकं भ्रश्यति । अत्र "एकदेशविकृतमनन्यवत्" इत्ययं न्यायो न प्रवर्तते । अस्य न्यायस्य प्रवृत्तिस्त्वेकदेशविकृतौ वस्तुस्वभावस्य भ्रंशाभावे भवति । समानवस्तुनोः केनचित्प्रकारेण वैलक्षण्यप्रतिपादने तयोः पृथक्करणं सिद्ध्यति । तत्तु व्यतिरेकालंकारस्य विषयः । व्यतिरेक उपमाभित्तिको वा भवतु, रूपकभित्तिको वा भवतु, न तावता किंचिद्वैलक्षण्यम्। अपि चानेनापि व्यतिरेकालंकारः पृथगभिहितः । कतिपयप्राचीनाश्च—

यशवन्तमहाराज! त्वदीयरिपुयोषिताम् ।
अरण्यौषधयो दीपाः कज्जलप्रसवं विना ॥

एतादृशस्थल एकगुणहानेः शेषगुणदाढर्यार्थमुक्तत्वादयं दृढारोपरूपक इति रूपकस्य प्रकार इत्याहुः । मम तु मतं, शेषगुणदाढ्यार्थमप्येकगुणहानेः कथने रूपकस्वरूपं तु अश्येदेव । एवं विवक्षायां तु व्यतिरेको भवेत् । ईदृशस्थले सूत्रकारवामनो विशेषोक्त्यलंकारमङ्गीचकार । तच्च समीचीनम् । इदं चाग्रे प्रदर्शयिष्यते ॥ कस्मिंश्चिदुदाहरण उपमारूपकयोः संदेहश्चेत्तत्र साधकबाधकाभ्यां निर्णयो विधेयः ॥

यथा—

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥

अत्रान्तर्धानव्यसनरसिकत्वं चेतनधर्मः । तस्य च मुख्यतया कापालिक्यां संभवः । अचेतनरात्रावसंभवः । ततो रात्रौ कापालिक्युपमाया असंभवः । उपमायास्तूपमेये धर्मस्य मुख्यतायां स्वीकारात् । अत उक्तधर्मस्योपमाबाधकत्वाद्रूपकस्य साधकत्वम् ।
अत्रोत्र रूपकालंकारः ॥

इति रूपकप्रकरणम् ॥ ५० ॥



# लेशः ॥



अत्र लेशशब्दार्थो भागः । उक्तं चिन्तामणिकोषकारेण " लेशः कणे । कणो धान्यांशे । भागोंऽशे, एकदेशे " इति ॥ भागेऽर्थेंऽशशब्दः प्रचलितः । यथा तृतीयांशचतुर्थांशादिशब्देषु । लेशालंकारः केनाचित्प्राचीनेन लव इत्युक्तः । तदनुसारेणाचार्यदण्डिनापि प्रथममलंकारना-

मगणनायां लेशालंकारो लवाख्यया प्रोक्तः । " हेतुः सूक्ष्मो लवः क्रमः" इति ॥ लवशब्दोपि भागेऽर्थे प्रचलितः । उक्तं हि भजगोविन्दाष्टके "गङ्गाजललवकणिका पीता" इति ॥ लवस्य कणो भागस्य भाग इत्यर्थः । परमाणुरिति यावत् । एवं च कस्यचिदपि वस्तुनो लेशस्य वर्णनं रुचिकरं चेत्तत्र लेशालंकारः ॥

लेशस्य वर्णने राजँल्लेशालंकृतिरिष्यते ॥

यथा—

त्वदीयगुणसङ्घे तु दोषलेशो न विद्यते ॥

अस्मिन्पद्येऽलेशालंकारो वर्तते । अलंकाराणां विपरीतभावे बहुधाऽन्येऽलंकारा भवन्तीति प्राचीनानां दिग्दर्शनशैली प्राक्प्रदर्शिता ॥

यथा—

खनिरत्नाश्वनराणां श्रेष्ठानां यो निरामयश्च मरुः ॥
तत्रापामल्पत्वं यशवन्तेश! त्वया हृतं कृपया ॥

मरुदेशस्योक्तगुणसमुदाये भूतकालिकजलाल्पत्वरूप एको दोषो लेशरूपः । वस्तुनो गुणसमुदाय एको गुणः, दोषसमुदाये चैको दोषो लेशरूपः । तथैव गुणसमुदाय एको दोषः, दोषसमुदाये चैको गुणो लेशरूपः । यथा पञ्चभूतात्मकशरीरे पृथिव्यप्तेजोवाय्वाकाशा विजातीया अपि प्रत्येकं भागरूपाः । अत्र मरुदेशस्योक्तगुणसमुदाये जलाल्पत्वरूपो लेशरूप एको दोषस्तस्य वर्णने सकलगुणकथनेऽप्युक्तदोषवर्णने विवक्षा । समुदायकथनमन्तरा लेशरूपतायाः स्फुटत्वाभावाद्गुणसमुदाय उक्तः । नायिकाशरीरे मुखादीनां लेशरूपत्वेऽपि केवलमुखादिवर्णने न लेशरूपत्वम् । कविवैभवस्य विवक्षाधीनत्वात् । लेशोदाहरणेषु समस्तांशस्य वर्णनीयत्वस्वीकारे समुच्चयालंकारः ॥

यथावा—

चराचरानन्दकरः सुधाब्धि-
रमन्दकान्तिर्जगतः प्रकाशः ।
तथापि लोके परिनिन्द्यतेऽसा-
वेकेन राजेन्द्र कलङ्ककेन ॥

अत्र चन्द्रस्यानन्दकरत्वादिगुणसमुदाय एकः कलङ्करूपो दोषो लेशालंकारः । अत्राप्रस्तुतप्रशंसासंकीर्णत्वम् ॥

यथावा—

अद्रीन्क्षालयसि स्म मेघ! पयसा सर्वां महीं चासिच-
श्छन्नाः पुष्पफलैर्दलैः क्षितिरुहः संनर्तिता बर्हिणः ।
अन्यूनं परिपूरिता जलधयो नद्यस्त्वया नो हृता
तृष्णा चातककस्य येन गमिता मासास्त्वदाशावशात् ॥

अत्र मेघस्याद्रिक्षालनादिपरोपकाररूपगुणसमुदाये चातकं प्रत्येकः कृतघ्नतादोषो लेशरूपो भूत्वा चमत्कारकारित्वाल्लेशालंकारः । अत्राप्यप्रस्तुतप्रशंसासंकीर्णत्वम् । धुरंधरस्येमान्युदाहरणानि—

युवैष गुणवान्राजा योग्यस्ते पतिरूर्जितः ।
रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि ॥

राजकन्यां प्रति स्वयंवरसमये राज्ञां स्वरूपप्रकाशकवन्दिजनस्येयमुक्तिः । अत्र वर्णनीये राज्ञि कन्यानुकूला नृपता तरुणता बलवत्ता प्रवीणता चेत्येते गुणाः । तेषु सुरतोत्सवादपि रणोत्सवेऽधिकप्रीतिरिति कन्यार्थमयमेको दोषो लेशरूपत्वाल्लेशालंकारः । अत्र कन्याऽनवहिता मा भूदिति वन्दिन एतद्राजविषयकोक्तलेशरूपदोषस्यैव मुख्यतया वर्णनीयत्वाल्लेशालंकारः । न तु समुच्चयः ॥

निर्दयो निस्त्रपोऽसत्यश्छलधामाथ चञ्चलः ॥
हरिरस्तु तथाप्येष चतुरो मानमोचने ॥

अत्र नायिकायाः प्रतिकूले नायकस्य निर्दयतानिस्त्रपतादिदोषसमुदाये मानमोचनोपायचतुरतारूप एको गुणो लेशरूपत्वाल्लेशालंकारः । अत्र सर्वथा त्याज्यनायकाङ्गीकारे नायकस्योक्तलेशरूपगुणस्यैव नायिकाया मुख्यतया वर्णनीयत्वाल्लेशालंकारो न तु समुच्चयः । एतेषु धुरंधरोदाहरणेष्वल्पतया कृते निन्दास्तुती ज्ञात्वा दण्ड्याचार्यो लेशशब्दार्थमल्पत्वं बुद्धवान् । लेशशब्दार्थोऽल्पत्वमपि । उक्तं चिन्तामणिकोषका-

रेण "लेशोऽल्पे" इति॥ ईदृशबोधादेव दण्ड्याचार्यः परमतेनेदंलक्षणमाह—

"लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृताम्॥" इति॥

लेशतः कृतां निन्दां स्तुतिं वा केचन लेशं जानन्तीत्यर्थः। "युवैष गुणवान्राजा"—इत्यस्मिन्नुदाहरणे सुरतोत्सवादपि रणोत्सवेतिलीनमनसोस्य शीलं निन्दापरं योजयन्दण्ड्याचार्य इमां कारिकां लिखति॥

"वीर्योत्कर्षस्तुतिर्निन्दैवास्मिन्भावानिवृत्तये॥
कन्यायाः कल्पते भोगान्निर्विविक्षोर्निरन्तरम्॥" इति॥

भोगान्सुरतोत्सवान्निरन्तरं निर्विविक्षोरुपभोक्तुमिच्छोः कन्याया भावो वरणाभिप्रायस्तस्य निवृत्तये राज्ञो वीर्योत्कर्षस्तुतिर्निन्दैव कल्पते परिणमतीत्यर्थः। अल्पालंकारमजानानो दण्ड्याचार्योऽस्यालंकारस्य साक्षात्स्वरूपमज्ञात्वा धुरंधराभिमतांशविषयकलेशालंकारमल्पताविषयकमबोधि। स च प्रमादः। अल्पतांशतयोः पृथक्त्वात्। अंशे नाल्पत्वविवक्षा। एवमङ्गीकारे तु महाचमत्कारकारिविलक्षणस्यांशरूपलेशालंकारस्योच्छेदो भवेत्। किं च मत्प्रदर्शिताल्पालंकारप्रकारेषु दण्ड्याचार्यलक्षणस्याव्याप्तिरपि। धुरंधरस्येदमप्युदाहरणम्—

राजकन्यानुरक्तं मां रोमोद्भेदेन रक्षकाः॥
अवगच्छेयुरा ज्ञातमहो शीतानिलं वनम्॥

अत्र ऋष्याश्रमं प्राप्तस्य दुष्यन्तनृपस्य मुनिकन्यामवलोक्यानुरागो जातः। स्तम्भाद्यनेकसात्त्विकभावानां रोधेऽपि सात्त्विकसमुदायेष्वेकस्य रोमाञ्चसात्त्विकभावस्य प्राकट्यं लेशः। तस्यापि गोपनार्थमियमुक्तिः। अत्रापन्हुतेः संकीर्णत्वम्। अस्मिन्धुरंधरोदाहरणे दण्ड्याचार्येण रोमाञ्चप्राकट्यस्याल्पत्वं बुद्धम्। अत्र च रोमाञ्चस्याल्पता गोपनात्साध्यते। रोमाञ्चोद्गमस्याल्पत्वं न चेदुक्तरीत्या तस्य गोपनं न भवेत्। स एवैतदुदाहरणार्थं द्वितीयमिदं लक्षणमाह—

"लेशो लेशेन निर्भिन्नवस्तुरूपनिगूहनम्॥" इति॥

प्रथमतस्तु दण्ड्याचार्यस्य स्वमतानुसारेणाल्पतायाः प्रत्युदाहरणं लक्षणनिर्मितिः प्रमादः। अपि चास्मिन्नुदाहरणेऽपन्हुतेः संकीर्णत्वम-

स्यालंकारस्यावयवं मत्वा लक्षणनिर्माणं च ततोऽपि महाप्रमादः । कुत इति चेदल्पापन्हुती संयोज्यैकालंकारस्वरूपनिर्माणे न कोपि विलक्षण-चमत्कारः । यथा शुद्धोपमाविपरीतोपमयोर्मेलने परस्परोपमारूपतृतीय-चमत्कारनिष्पत्तिः । "युवैष गुणवान्राजा"- इति धुरंधरोदाहरणानुसारेण भोजमहाराज इदं लक्षणमाह—

"दोषस्य यो गुणीभावो दोषीभावो गुणस्य यः ॥
स लेशः स्यात्ततो नान्या व्याजस्तुतिरपीष्यते ॥" इति ॥

महाराजेनेत्थं ज्ञातं, सुरतोत्सवादपि रणोत्सवेऽधिकप्रीती राज्ञां गुणः, परं त्वत्र राजकन्याया अरुचिकरत्वाद्दोषो जात इति । मम तु मतं, गुणस्य दोषीभावो दोषस्य गुणीभावो वा लेशशब्दार्थोऽपि न भवति । लेशालंकारस्य स्वरूपमपि चेदं न भवति । महाराजः कुत्रचिदक्षरार्थतो भिन्नमप्यलंकारस्वरूपमङ्गीकरोति । तत एव चालंकारनामानि रूढा-न्यपि मन्यते । दोषस्य गुणीभावो गुणस्य च दोषीभावस्तु परिणामालं-कारस्य विषयः । अपि च महाराजोऽस्मिन्नुदाहरण इदमपि प्रबुद्धवान् । राजकन्याया अरुचिसिद्धये वन्दिनाऽस्य राज्ञः "रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि" इति स्तुतिव्याजान्निन्दा कृता । अस्मिन्विषये तु मिषालंकारो भवेत् । लेशनाम्नः संगतिर्न भवति । प्रकाशकृता लेशा-लंकारो नोक्तः । रुद्रटगङ्गाधरकारप्रभृतयो भोजानुयायिनः । एतावदेव वैलक्षण्यम् । एतैर्व्याजस्तुतेर्लेशेऽन्तर्भावो नाङ्गीकृतः । धुरंधरस्येदमप्युदा-हरणम्—

अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु ।
शुक! पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥

अत्र लेशनामार्थघटना त्वेवं रीत्या भवति । शुकस्य मधुरभाष-णत्वाज्जनास्तमादरपूर्वकं रक्षन्ति । उत्तमपदार्थांश्च भोजयन्ति । सर्वे तमाभाषयन्ति । इत्यादिगम्यगुणसमुदाये बन्धनरूप एको दोषो लेशरू-पोऽस्ति । अत्र शुकस्य मधुरभाषणरूपे गुणे पञ्जरबन्धनहेतुतया दोषत्व-स्य कल्पनमिति जानानश्चन्द्रालोककार इदं लक्षणमाह—

"लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् ॥" इति ॥

मम तु मतं, चन्द्रालोककारस्यापि प्रमादः। गुणस्य दोषीभाव-विवक्षायां तु परिणामः। मधुरभाषित्वस्य बन्धनहेतुत्वविवक्षायां वि-चित्रामिति॥

इति लेशप्रकरणम्॥ ५१॥

---

## लोकोक्तिः॥

---

लोकप्रवादो लोकोक्तिरित्युच्यते।

**लोकोक्तिः काव्यनिष्ठा चेदलंकारो भवेन्नृप॥**

अलंकारस्वरूपं तु काव्यशोभाकरत्वम्॥

यथा--

केचिदश्वान्गजान्केचिद्ग्रामान्विदन्ति केचन।
मरुपात्सरसः सर्वे जलं पात्रानुसारतः॥

प्रारब्धानुसारेण फलप्राप्तिविषयेऽयं लोकप्रवादः। "स्वस्वपात्रानु-सारेण जलादानं भवतीति" अस्या लोकोक्तेरत्र काव्यशोभाकरत्वादलं-कारत्वम्। यद्यप्यत्र दृष्टान्तच्छायाऽपि वर्तते, तथापि लोकोक्तेश्चमत्कार-स्योद्धरकंधरतयात्र लोकोक्त्यलंकारः॥

यथावा--

परप्रियः स्वस्य भवेत्कदाचि-
न्नैवेति चित्ते परिबुध्यमाना।
कुलप्रतिष्ठामजहां च मानं
दिनेऽपि दुग्धे खलु मक्षिकाऽत्ता॥

जानत एव स्खलनविषये "दुग्धस्य मक्षिका" इति लोकोक्ति-रस्ति। चन्द्रालोकस्येदं लक्षणम्--

"लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते॥" इति॥

अनुकृतिरनुकरणम् । अनुकरणं सदृशीकरणम् । उक्तं चिन्तामणिकोषकारेण "अनुकरणं सदृशीकरणे" इति ॥ मम तु मतं, काव्ये प्रसङ्गप्राप्तया लोकोक्तेः साक्षात्कथने चमत्कारः । न तु लोकोक्तिसदृशस्यान्यस्य शब्दार्थस्य कथने ॥ अतोऽलंकारस्वरूपाद्धुरंधरनामार्थाच्च विरुद्धलक्षणनिर्मितिः प्रमादः ॥

इति लोकोक्तिप्रकरणम् ॥ ५२ ॥

## ॥ वक्रोक्तिः ॥

वक्रशब्दस्यार्थः कुटिल इत्यादिः । वक्रोक्तिशब्दस्य व्युत्पत्तिस्तु वक्रीकृतोक्तिर्वक्रोक्तिरिति । उक्तेर्वक्रीकरणं परोक्तावेव भवति । परोक्तेर्वक्रीकरणं च वक्तुर्विवक्षितार्थादन्यार्थस्य करणम् । क्वापि वक्रोक्तिस्थले श्लेषो भवति । स तु गौणः । प्रधाना तु वक्रोक्तिरेव । निरुक्त्यलंकारेप्यन्यार्थकरणमस्ति, परं तु तत्रेच्छानुसारेण प्रकृतार्थयोजनामात्रम् । अत्र तु परस्योक्तेर्वक्रीकरणम् । अतो महती विलक्षणता ॥

उक्तिर्वक्रीकृताऽन्यस्य वक्रोक्तिरिह कथ्यते ।
स्वरश्लेषप्रभेदेन द्विविधेयं प्रजायते ॥

क्रमेण यथा—

कश्चिदस्त्यापदो हीनो द्रोहकृन्मरुभूपतेः ।
कश्चिद्वा संपदो हीनो हितं कृत्वाऽस्य भूपतेः ॥

राजद्रोहिण इयमुक्तिः । राजराजेश्वरस्य द्रोहं कृत्वा कश्चिद्विपद्विहीनोप्यस्ति, हितं कृत्वा च कश्चित्संपद्विहीनोपि विद्यते, इत्यस्या उक्तेः श्रोता स्वरविकारेणैनामेवं प्रकारेण वक्रां करोति, राजराजेश्वरस्य द्रोहं कृत्वा न कोपि विपद्धीनः, हितं कृत्वा च न कोपि संपदा हीन इति ॥

तूष्णीं चिन्तयसेऽद्य कस्य चरितं राज्ञः किमिन्दोर्नहि
भूभृच्छ्रेष्ठतमस्य किं सुरगिरेर्नो राष्ट्रवर्यस्य भोः।
किं देशस्य वरस्य नो मरुपते राजद्गुणानां निधे-
र्दातुः श्रीयशवन्तसिंहनृपतेः कीर्तिं मुदा वर्णये ॥

अत्र वक्तुरुक्तौ राजशब्देन नृपः, भूभृच्छ्रेष्ठतमशब्देन भूपालश्रेष्ठः, राष्ट्रवर्यशब्देन राष्ट्रवर्यजातीयो विवक्षितः। इमामुक्तिं परिहासकर्ता श्रोता श्लेषाद्राजशब्दार्थं चन्द्रं, भूभृच्छ्रेष्ठतमशब्दार्थं सुरगिरिं, राष्ट्रवर्यशब्दार्थं सुदेशं कृत्वा वक्रीकृतवान् ॥

यथावा—

अङ्गुल्या कः कपाटं प्रहरति कुटिलो माधवः किं वसन्तो
नो चक्री किं कुलालो न हि धरणिधरः किं द्विजिव्हः फणीन्द्रः ॥
नाहं घोराहिमर्दी किमु खगपतिर्नो हरिः किं कपीश
इत्थं राधाविवादप्रतिहतवचनः पातु वश्चक्रपाणिः ॥

उक्तोदाहरणयोरभङ्गपदश्लेषः।

सभङ्गपदश्लेषेणयथा—

नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो
वामानां प्रियमादधाति हितकृन्नैवाबलानां भवान् ॥
युक्तं किं हितकर्तनं ननु बलाभावप्रसिद्धात्मनः
सामर्थ्यं भवतः पुरंदरमतच्छेदं विधातुं कुतः ॥

अत्र वक्तुः स्त्रीपरतन्त्रपुरुषं प्रत्युपालम्भः। वक्ता त्वं नारीणामर्थात्स्त्रीणामनुकूलमाचरसीत्युक्ते श्रोता "नारीणां" इत्यत्र न- अरीणामिति पदभङ्गं कृत्वा "नारीणाम्" इत्यस्यान्यार्थं विधाय वामानामर्थाच्छत्रूणां प्रियं कः करोतीत्याह। वक्ता "वामानाम्" इत्यस्य स्त्रीणामित्यन्यमर्थं विधाय किं भवानबलानां हितकृन्नेत्युक्ते श्रोता "अबलानाम्" इत्यस्य दुर्बलानामित्यन्यमर्थं विधाय किं बलाभावप्रसिद्धात्मनः हितकर्तनं युक्तमित्याह। वक्ता बलाभावप्रसिद्धात्मन इत्यस्य बलनामकासु-

रनाशकर्तुरिन्द्रस्येत्यन्यार्थं कृत्वा पुरंदरमतच्छेदं विधातुं भवतः सामर्थ्यं कुत इत्याह ॥

समानविशेषणेन यथा—

भिक्षार्थी स क्व यातः सुतनु बलिमखे ताण्डवं क्वाद्य भद्रे
मन्ये वृन्दावनान्ते क्व नु स मृगशिशुर्नैव जाने वराहम् ॥
बाले कच्चिन्न दृष्टो जरठवृषपतिर्गोप एवास्य वेत्ता
लीलासंलाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां नः ॥ १ ॥

अत्र वक्रया लक्ष्म्या उक्तिरपि नो ऋजुः । शिव इत्यादीनि नामान्यप्यृजुतया नोक्तानि । परिहासार्थं भिक्षार्थीत्यादिनामान्यन्यथैवोक्तानि । अतोऽस्यामुक्तौ पर्यायोक्त्यलंकारः । श्रोत्री पार्वती वक्रया लक्ष्म्याः शिवपरामुक्तिं विष्णुपरतया योजितवतीति वक्रोक्त्यलंकारः । समानविशेषणेषु श्लेषो नास्तीति श्लेषप्रकरणे स्पष्टीकरिष्यते । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते ।
श्लेषेण काका वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥" इति ॥

मम तु मतं, श्लेषकाकुस्थलयोर्नियमकरणं प्रमादः । समानविशेषणस्थलेऽव्याप्तेः । यद्यनेन समानविशेषणस्थलेऽर्थश्लेषोऽङ्गीक्रियते चेत्तदपि न युक्तम् । कुत इत्युक्तौ समानविशेषणस्थले श्लेषस्य गन्धोपि नास्ति । अपि चास्मिँल्लक्षणे निरुक्तावतिव्याप्तेराभासोऽपि । लक्षणवचनेषु च वक्रोक्तेर्बोधोऽपि नास्ति । सर्वस्वकारादयोऽस्यानुसारिणः । रत्नाकरकृता वृत्तौ "श्लेषेण काका धर्मसाम्येन वा" इत्युक्तम् । तन्न समीचीनम् । प्रकाशकारादयो वक्रोक्तेः शब्दालंकारे परिगणनं चक्रुः । सर्वस्वकारादयोऽर्थालंकारमध्ये गणनं चक्रुः । मम तु मतं, अत्र चमत्कारस्यार्थज्ञानमूलकत्वादर्थालंकार एवेति ॥

इति वक्रोक्तिप्रकरणम् ॥ ५३ ॥



# ॥ विकल्पः ॥

अत्र " वि " इत्युपसर्गार्थो नाना । कल्पशब्दार्थो विधिः । उक्तं चिन्तामणिकारेण " वि नानार्थे । कल्पो विधौ " इति । विकल्प इति शब्दसमुदायार्थस्तु नाना विधिः। विधिर्विधानम् । परंतु—

मोक्षमिच्छसि चेत्तात! विषयान्विषवत्त्यज ।
क्षमार्जवदयातोषान्सत्यं पीयूषवद्भज ॥

इत्यत्र मोक्षार्थकक्षमादिनानार्थानां समुच्चयतया विधाने विकल्पव्यवहारो नास्ति । किं त्वेकपक्षावलम्बनतात्पर्येण नानाविधाने विकल्पशब्दस्य समस्तशास्त्रेषु रूढिः । यथा वेदे "व्रीहिभिर्यजेत यवैर्वा यजेत" इति यज्ञे विकल्पः । अत्र नानाविधानस्यैकपक्षावलम्बने निमित्तं तु यथारुचि यथालाभं वा । एतादृशविकल्पस्य रम्यत्वाभावान्नालंकारत्वम् । नाना विधाने विरोधे सत्येकपक्षावलम्बनस्य चमत्कारकारित्वादलंकारो भवति। अतोऽत्र नानाविधाने विरोधादेकपक्षावलम्बने विकल्पशब्दो रूढः॥

नानाविधाने यत्र स्याद्विरोधान्मरुवल्लभ ।
एकपक्षग्रहस्तत्र विकल्पालंकृतिर्भवेत् ॥

यथा—

द्विषन्नृपाला नमयन्तु शीघ्रं
शिरांसि वा चापवरान्कुरुध्वम् ॥
आज्ञारवैः कर्णमथ प्रपूर्ण
मौर्वीरवैर्वा मरुसैन्यमागात् ॥

अत्र विकल्पस्य रम्यत्वात्सर्वस्वकारेण विकल्पालंकारः स्थापितः । शत्रुभिः सह संधिः कर्तव्यो विग्रहः कर्तव्य इति नीतिशास्त्रे नानाविधानमस्ति । परं तु संधिविग्रहयोः परस्परं विरोधः। संधिश्चेद्विग्रहो न भवति विग्रहश्चेत्संधिर्न भवति। अतोऽत्रैकपक्षावलम्बनं क्रियते । अस्मिन्नेकपक्षावलम्बने निमित्तान्तरं रुचिरपि । परं तु तस्या गौणत्वं, प्रधाननिमित्तं तु

विरोधः। विरोधालंकारस्वरूपं तु विरोधिनां संसर्गः। अत्र तु विरोधिनां संसर्गो नास्ति। अस्य विकल्पालंकारस्य धुरंधरः सर्वस्वकारः। अनेनैवास्यालंकारत्वमङ्गीकृतम्। तेन स्वकीयग्रन्थे लिखितं च पूर्वैर्न विवेचितोयं मया प्रदर्शित इति। सर्वस्वटीकायां विमर्शिन्यामपि लिखितं, विकल्पालंकारः सर्वस्वकारेणैव प्रथमं ज्ञात इति। सर्वस्वकारो विकल्पालंकारस्येदं लक्षणमाह—

"तुल्यबलविरोधिविकल्पे विकल्पः॥" इति॥

तुल्यबलवतोर्विरोधिनोर्विकल्पे विकल्पालंकार इत्यर्थः। वृत्तौ लिखितम् "विरुद्धयोस्तुल्यप्रमाणशिष्टत्वात्तुल्यबलयोरेकत्र युगपत्प्राप्तौ विरुद्धत्वादेव युगपत्प्रवृत्त्यसंभवे विकल्पः" इति। मम तु मतं, सर्वस्वकृता विकल्पस्यालंकारत्वं स्थापितं, तत्तु समीचीनमेव। अत्रालंकारबीजं तु विरुद्धत्वादेकपक्षावलम्बनम्। ततो विरुद्धत्वादेकपक्षावलम्बने तयोर्विरोधिनोस्तुल्यबलत्वमर्थसिद्धम्। तस्माल्लक्षणे तुल्यबलेतिविशेषणकथनमनावश्यकम्॥

यथावा—

पतत्यविरतं वारि नृत्यन्ति च कलापिनः॥
अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति॥

वियोगदुःखशमने कान्तः कृतान्तश्चेति नाना कारणे। तत्र दैवादेकपक्षावलम्बनं भवति। परं त्वत्रैकपक्षावलम्बने कान्तकृतान्तयोर्विरोधः प्रबलं निमित्तम्। कान्तस्तु जीवयित्वा दुःखं निवर्तयेत्। कृतान्तो मारयित्वा दुःखं निवर्तयेत्। एवं च जीवनं चेन्मरणं न भवेत्, मरणं चेज्जीवनं न भवेत्। पूर्वोदाहरणे प्रेरणारूपं विधानं, तत्र कर्तव्यतया विधानात्। अत्र तु करिष्यतीति प्रेरणं विना विधानम्॥

यथावा—

त्वरां मा कुरु गृध्र! त्वं धीरो भव मनागिह।
निवेशये रिपोर्देहेऽथवा देहे ममाधुना॥

मांसभक्षकस्य गृध्रपक्षिणो युद्धे शत्रुदेह उपवेशनं स्वदेह उपवे-

शनमिति नानाविधानमस्ति। तत्र दैवादेकपक्षावलम्बनं भवेत्, परं त्वेकस्मिन्समये द्वयोर्देहयोर्गृध्रोपवेशनस्य विरोध एवं रीत्या वर्तते । अयं वीरः शत्रुं मारयेत्तदा विजयी सन् रणाङ्गणान्निवर्तेत। गृध्रश्च शत्रुदेह उपविशेत्। अयं मारितश्चेच्छत्रुर्जयं प्राप्य रणाङ्गणाद्गच्छेत्तदास्य देहे गृध्रस्तिष्ठेत् । एवं च शत्रुदेहे स्थितिकालेऽस्य देहे न तिष्ठेत् । अस्य देहे स्थितिकाले शत्रुदेहे न तिष्ठेत् । कदाचिच्छत्रुप्रतिशत्रू उभावपि म्रियेतां, परंतु बहुधैक एव युद्धकाले गतासुर्भवति, तस्मात्तस्मिन्नेव विवक्षा। अत्र "निवेशये" इति विधानमस्ति । सर्वस्वकारो वदति—"अत्रौपम्यगर्भता चारुताहेतुः । शिरसि धनुषि च नमनरूपं सादृश्यमस्ति । आज्ञारवे ज्यारवे च श्रुतिपूरणरूपं सादृश्यमस्ति" इति । अपि च सर्वस्वकार आह "औपम्यगर्भत्वात्क्वचिच्छ्लेषावलम्बनेनापि दृश्यते" इति ॥

यथा—

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतांद्भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥

हरेर्नेत्रपक्षे भक्त्या प्रह्वानां विलोकने स्नेहवती, नीलोत्पलसदृशाकारे । हरेस्तनुपक्षे भक्तिप्रह्वपुरुषकर्तृको विलोकनाय प्रणयो विद्यते यस्यां सा, श्यामवर्णेन नीलोत्पलसदृशीति । एवं रीत्यात्र हरिनेत्रतनूनां शब्दैकतारूपं साधर्म्यम् । विमर्शनीकारोऽप्याह । "लोकविकल्पापेक्षयौपम्यगर्भत्वस्य वैलक्षण्यस्य सत्त्वादयमलंकारः" इति । अपिचाह "द्विषन्नृपाला नमयन्तु" इत्यत्र नमनरूपसमानधर्मोऽनुगामीति ॥

वस्तुप्रतिवस्तुभावेन यथा—

स्रष्टुर्विधातुमुचितं मुखमेव चञ्च-
द्भ्रूकं नतभ्रु! तव कान्तविलोकनेषु ॥
एणाङ्कबिम्बमथवा विवलत्कलङ्क-
मेकेन चेद्विहित एव जगत्प्रकाशः ॥

अत्र चञ्चद्विवलदिति भिन्नशब्दाभ्यां वक्रत्वरूप एको धर्मोऽभिहित इतिवस्तुप्रतिवस्तुभावः। भ्रूकलङ्कयोर्बिम्बप्रतिबिम्बभावः। मम तु मतं, विकल्पेऽलंकारताबीजमौपम्यगर्भत्वमित्यङ्गीकारस्त्वनयोः प्रमाद एव। औपम्यचारुतायामुपमैवालंकारो भवेत्। अत्र चारुता तु नानाविधाने विरोधादेकपक्षावलम्बन एवानुभवसिद्धा। अपि चैतावाहतुः। "नमयन्तु" इत्यत्र शिरसां कार्मुकाणां च नमनरूपं सादृश्यमस्तीति। परं त्वत्रैवं विवक्षा नास्ति। शिरोनमनवत्कार्मुकनमनं कर्तव्यम्। कार्मुकनमनवच्छिरोनमनं वा कर्तव्यमिति। किं त्वनयोर्मध्यादेकस्यैव नमनं भवेत्। द्वयोर्न भवेदिति विवक्षा। तत्रैव च पर्यवसानम्। अत्र यद्येवं विवक्षा क्रियते। शिरोनमनं कर्तव्यमथवा कार्मुकनमनं कर्तव्यम्। नमनं तु भवेदेव, तदा तु—

"हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता"॥

इति लक्षणानुसारेणात्र तुल्ययोगितालंकारो भवेत्। "भक्तिप्रह्वविलोकनप्रणयिनी" इत्यत्र चमत्कारः श्लेषमूलक एव। "स्त्रष्टुर्विधातुमुचितम्" इत्यत्र चमत्कारस्तु

"प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते"

इति प्राचीनानामार्थप्रतीपस्य। प्रतीपश्चान्तर्भावाकृतौ प्रदर्शयिष्यते। अनयोर्द्वयोः पद्ययोर्विकल्पांशस्य विरोधमूलकत्वाभावान्न रमणीयत्वम्। तस्मादीदृशविकल्पोलंकारपदवीं नार्हति। अत्र विकल्पे निमित्तं न विरोधः। अतः सर्वस्वकारस्य निजलक्षणमपि न घटते। लोकविकल्पे विकल्पालंकारस्य विवेकवतः सर्वस्वकारस्य पुनरयमविवेको यदत्रौपम्यगर्भत्वस्य चारुत्वमाह। "भक्तिप्रह्वविलोकनप्रणयिनी" इत्युदाहरणे विकल्पालंकाराङ्गीकारस्तु सर्वस्वकारस्य गजस्नानमेव। अपि चात्र विमर्शनीकारस्याप्यतीवप्रमादः। सोप्यस्यालंकारस्य स्वरूपं नाजानात्॥

इति विकल्पप्रकरणम्॥ ५४॥

# विकासः॥

विकासशब्दार्थः प्रसरणम्। आह चिन्तामणिकोषकारः "विकासो विसृत्वरे। विसृत्वरः प्रसारिणि" इति॥

विकासवर्णने राजन्विकासालंकृतिर्मता ॥
कवेर्विकसति स्वान्त आल्हादस्त्वन्मुखेक्षणात् ॥

यथा—

सरित्सरोभिर्गिरिभिरनिरुद्धा च सागरैः ।
प्रसरत्यनिशं कीर्तिर्यशवन्तमहीपतेः ॥

यथावा—

अस्या हंसगतिर्विमोहयति भो यूनस्त्रिलोकीभवा-
न्वक्षोजौ न हि कञ्चुके परिमितावद्यैव काऽग्रे दशा ॥
अक्ष्णोश्चञ्चलवीक्षणानि गगनं वाञ्छन्ति गन्तुं द्रुत-
मित्थं चेत्प्रसरेद्द्युतिः क्वनु पुनः संमास्यतीयं सखि! ॥

चन्द्रालोकपथगामी कुवलयानन्दकारोऽत्र विषये विकासपर्यायनामकं पर्यायप्रभेदमङ्गीकृत्येदमुदाजहार—

बिम्बोष्ठ एव रागस्ते तन्वि! पूर्वमदृश्यत ।
अधुना हृदयेप्येष मृगशावाक्षि! दृश्यते ॥

पुनरप्याह, रागस्य पूर्वाधारपरित्यागमन्तराऽऽधारान्तरसंक्रमाद्विकासपर्याय इति । मम तु मतं, पूर्वाधारं परित्यज्याऽऽधारान्तरसंक्रमणं पर्यायस्य स्वरूपम् । तदेव च पर्यायस्य संभवः । पर्यायशब्दार्थं स्पष्टयँश्चिन्तामणिकोशकारः "वारीति भाषायाम्" इत्याह । पुष्पविकासन्यायेन पूर्वाधारपरित्यागं विनैवान्यत्रापि प्रसरणं विकासालंकारः। अतो विकासः पृथगलंकारो भवितुं योग्यः । क्रमे क्रमः, अधिकेऽधिकम्, पर्याये पर्यायः, विकासे विकास इत्येतेषां सर्वेषां स्वरूपं भिन्नभिन्नमनुभवसिद्धम् ॥

॥ इति विकासप्रकरणम् ॥ ५५ ॥

## विचित्रम् ॥

चित्रशब्दार्थोऽद्भुतयुक्तः । आह चिन्तामणिकोषकारः । "चित्रमद्भुतयुक्ते" इति । अद्भुतयुक्ते चित्रशब्दस्य प्रयोगोस्ति । अद्भुतं स्वा-

श्चर्यम् । "विस्मयोऽद्भुतमाश्चर्यम्" इत्यमरः ॥ अत्र वीत्युपसर्गश्चित्र-शब्दार्थमनुवर्तते ॥

## वैचित्र्यवर्णने राजन्विचित्रालंकृतिर्भवेत् ॥

यथा—

यानान्यनिशमारोढुं सामन्ता मरुभूपते! ।
तूर्णं तेभ्योऽवरोहन्ति दूरादेव त्वदीक्षणे ॥

लोक एवं रीतिर्वर्तते । राज्ञि दृष्टिगोचरे सामन्तादयो राज्ञः प्रणामार्थं यानेभ्यस्तूर्णमवरोहन्तीति । इदमवरोहणं तु सर्वदाऽऽरोहणार्थम् । राजानि विनयाकरणे तेषां वैभवमाच्छिद्यते । आरोढुमिच्छन्तस्तु नावतरन्ति । एवं चारोहणार्थमवतरणमद्भुतयुक्तत्वाद्विचित्रालंकारः ॥

यथावा—

बन्धोन्मुक्त्यै खलु मखमुखान्कुर्वते कर्मपाशा-
नन्तःशान्त्यै मुनिशतमतानल्पचिन्तां वहन्ति ॥
तीर्थे मज्जन्त्यशुभजलधेः पारमारोढुकामाः
सर्वं प्रामादिकमिह भवभ्रान्तिभाजां नराणाम् ॥

बन्धमोचनार्थं पाशच्छेदः कर्तव्यः । प्रकृते पाशकरणमद्भुतमेव । एवमन्यदप्यूह्यम् ॥

यथावा—

अहिर्भूषा दिशो वासो वृषभो वाहनं तथा ॥
कपालधारणं हस्ते का चेष्टेयं महेशितुः ॥

महत ईश्वरस्य सतोऽहिभूषादिकरणमद्भुतयुक्तम् ॥

जीर्णो यौवनराज्यवैभवमदो यद्वद्विषं शंभुना,
भुञ्जन्भोगचयं विवेकरहितो नाभूर्मुरारिर्यथा ॥
भूत्वा चापि च राजराजमघवा दोषैरलिप्तोऽब्जव-
च्छ्रीमन्माधवसिंह! सूर्यमहसा शीतांशुशैत्यं कथम् ॥

अत्र चतुर्थचरणेऽद्भुतत्वम् । प्रथमचरणत्रये तु दृष्टान्तः । चतुर्थ-

चरणवर्णनदृष्टान्तस्याऽऽर्थनिषेधतयाऽद्भुतत्वादत्राक्षेपविचित्रयोरङ्गाङ्गिभावसंकरः । मम तु मतं, विचित्रस्येदृशोदाहरणेषु विषमशङ्का न कार्या । विषमस्थले विषमस्यैव विवक्षया तत्रैव पर्यवसानम् । अत्राद्भुतस्यैव विवक्षितत्वात्तत्रैव चमत्कारपर्यवसानम् । विचित्रशङ्कां विनापि विषमस्योदाहरणं विद्यते ॥

यथा—

क्केयं शिरीषमृद्वङ्गी क्क तावन्मदनज्वरः ॥

विषमशङ्कां विना विचित्रोदाहरणमपि विद्यते ॥

यथा—

एतस्मात्किमिवेन्द्रजालमपरं यद्गर्भवासस्थितं
रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानाङ्कुरम् ।
पर्यायेण शिशुत्वयौवनजरारोगैर्वृतं सर्वतः
पश्यत्यत्ति शृणोति जिघ्रति तथा गच्छत्यथागच्छति ॥

यथावा—

अहन्यहनि भूतानि प्रविशन्ति यमालयम् ॥
शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्यमतः परम् ॥

अतिशयोक्तौ लोकसीमातिवर्तनबुद्धिर्भवति । अत्र त्वद्भुतबुद्धिर्भवति । विधिकृतलोकसीमातिलङ्घनं तु कविकृतलोके भवत्येव ॥

यथा—

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरंपरा केयम् ॥

प्राचीनैः कविवाणीस्तुतिविषय उक्तम् । "नियतिकृतनियमरहिताम्" इति ॥ कविसृष्टेर्विधिसृष्टितो विलक्षणताविषये भगवता वेदव्यासेनाप्युक्तम्—

"अपारे काव्यसंसारे कविरेवप्रजापतिः ॥
यथा वै रोचते विश्वं तथेदं परिवर्तते ॥" इति ॥

अतोऽतिशयोक्तौ कवीनां लोकसीमातिलङ्घनमिष्टम् ।

यथा—

राजन्सप्राप्यकूपारास्त्वत्प्रतापाग्निशोषिताः ।
पुनस्त्वद्वैरिवनिताबाष्पपूरेण पूरिताः ॥

अतिशयोक्त्युदाहरणवर्णनस्य सयुक्तिकत्वाभावात्कविकृतलोकतोपि बाह्यत्वम् । तस्य च रोचकत्वादलंकारत्वम् । अपिच लोकसीमातिवर्तनमन्तराप्याश्चर्यं भवति । वीर्यबिन्दुना जगत उत्पत्तिः ; सर्वे मनुष्या नित्यं म्रियन्ते, अन्ये च स्वेषां स्थिरत्वं वाञ्छन्ति; इदं लोकान्तर्गतमेव । अथचात्राश्चर्यं भवति । अत्रैवं शङ्का न कार्या; अद्भुतरसस्त्वलंकार्यः; अर्थादलंकारधारणकर्ता; स तु स्वयं कथमलंकार इति? कुत इत्युक्तावत्राद्भुतरसो नास्ति । रसस्तत्र भवति, यत्र विभावादिसामग्री समुदिता सती स्थायिभावस्य स्वादुत्वमापादयति । अत्रच न तथेति रसत्वाभावादलंकारता । "यानानि-" इत्युदाहरणानुसारेण सर्वस्वकारस्येदं लक्षणम्—

"स्वविपरीतफलनिष्पत्तये प्रयत्नो विचित्रम्" इति ॥

चन्द्रालोककारस्येदं लक्षणम्—

"विचित्रं तत्प्रयत्नश्चेद्विपरीतफलेच्छया ॥" इति ॥

रसगङ्गाधरकारस्येदं लक्षणम्—

"इष्टसिद्ध्यर्थमिष्टैषिणा क्रियमाणमिष्टविपरीताचरणं विचित्रम् ॥" इति ॥

रत्नाकरकारस्येदं लक्षणम्—

"कायिकस्य वाचिकस्य मानसस्य प्रवृत्तिरूपस्य निवृत्तिरूपस्य वा प्रयत्नस्य विफलत्वं विचित्रम् ॥" इति ॥

विफलत्वं त्रिप्रकारम् । यस्य प्रयत्नस्य यत्प्रसिद्धं कार्यं तद्विरुद्धकार्यत्वमेकम् । प्रयत्नस्य महत्त्वे फलस्य तुच्छत्वं, प्रयत्नस्य तुच्छत्वे फलस्य महत्त्वं वा द्वितीयम् । असाध्यत्वादसंभवादनुपयोगाद्वा फलाभावस्तृतीयम् ॥

क्रमेण यथा—

धत्ते नेत्रनिमीलनानि पुरतः प्राणेश्वरं वीक्षितुं
तद्वाणीश्रवणाय कर्णपुटयोः पाण्यर्पणं वाञ्छति ।

साकं तेन कथाप्रबन्धसमये मौनं समासेवते
हन्तैवं मदनेन सा शशिमुखी किं किं न यत्कार्यते ॥

अत्र नेत्रनिमीलनादेरदर्शनादिकं प्रसिद्धं फलम् । तद्विरुद्धकान्तदर्शनाद्यर्थं प्रयत्नः । नेत्रनिमीलने कायिकः । श्रोत्रपिधानवाञ्छायां मानसः । मौनधारणे वाचिकः। तत्र दर्शनार्थं नेत्रनिमीलनं, वाणीश्रवणाय कर्णापिधानं, वार्तालापाय मौनधारणमित्येतानि विचित्राणि । नेत्रनिमीलनेन दर्शनस्य मौनधारणेन च वार्तालापस्य निवृत्त्योभौ निवृत्तिरूपौ । श्रोत्रपिधानार्थं प्रवृत्त्या मानसः प्रवृत्तिरूपः ॥

केकानिभाद्घटयसे पटुचाटुकानि
चञ्चत्कलापमपि नृत्यसि रञ्जनाय ।
हे चातक! प्रयतसे जलदं प्रतीतं
बिन्दुं जलस्य लभसे च न लज्जसे च ॥

अत्र जलकणरूपतुच्छफलाय महान्यत्नः ॥ अत्राप्रस्तुतप्रशंसायाः संकीर्णत्वम् ॥

उद्धर्तुं सप्तगोत्राणां कुलमेकोत्तरं शतम् ।
गयाविष्णुपदे लोकः पिष्टपिण्डं ददात्यहो ॥

अत्र महाफलाय तुच्छः प्रयत्नः ॥

पाणिप्रस्थैर्बकुलसुमनःसौरभं यो मिमीते
दंपत्योर्यः सुरतचरिते सौख्यसंख्यां करोति ।
यश्च ज्योत्स्नां चुलुकपुटकैः काममाचामतीन्दोः
शक्तः स्तोतुं स खलु निखिलान्यस्य कीर्त्यद्भुतानि ॥

अत्रासाध्यतया फलाभाव उक्तः । पाणिप्रस्थैर्बकुलपुष्पसुगन्धमापनं, दंपत्योः सुरतसुखसंख्याकरणं, चुलुकेन चन्द्रकिरणपानं, राजराजेश्वरस्य कीर्तिस्तवनं च देवादिसाध्यम् । न तु मनुष्यप्रयत्नसाध्यम् । ततोऽस्य प्रयत्नस्य फलाभावः ॥

अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम् ।

श्वपुच्छमवनामितं बधिरकर्णजापः कृतो
धृतोऽन्धमुखदर्पणो यदबुधो जनः सेवितः ॥

अत्राबुधजनसेवादेः फलस्यासंभवाद्विफलत्वम् ॥

त्वत्पादनखरत्नानां यदलक्तकमार्जनम् ।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥

अत्र नखरत्नानामिन्दोश्च स्वाभाविकस्य रक्तत्वस्य पाण्डुरत्वस्य च परावधित्वादुक्तप्रयत्नस्यानुपयुक्तत्वात्फलाभावेन विफलत्वम्। मम तु मतं, एतेषु सर्वोदाहरणेषु विचित्रालंकारो वर्तते। परं तु "शुक्रं बिन्दुप्रमाणम्", इत्यादिषु पूर्वोदाहरणेषु, वक्ष्यमाणेषु भोजमहाराजस्य विचित्रहेतूदाहरणेषु च नामार्थरूपं लक्षणं कुर्वतो धुरंधरस्य मतानुसारेण रत्नाकरकारादीनां लक्षणानामव्याप्तिर्भवति । अतः सर्वसंग्राहकनामार्थरूपलक्षणं विहायैवंविधलक्षणकरणं प्राचीनानां प्रमादः । चित्रहेतुरितिहेत्वलंकारप्रकारं मन्वानो भोजमहाराज आह—

" विदूरकार्यः सहजः कार्यानन्तरजस्तथा ।
युक्तो न युक्त इत्येवमसंख्याश्चित्रहेतवः ॥ " इति ॥

विदूरकार्यः कालान्तरभाविनः कार्यस्याधुना भावः । सहजः कारणेन सहैव कार्यस्य भवनम् । कार्यानन्तरजः कार्यानन्तरं कारणस्य भावः । युक्तकार्यः, अयुक्तकार्य इत्येवं चित्रहेत्वलंकारा असंख्याः सन्ति ॥

क्रमेण यथा—

सर्वस्मिन्न नतं नु तीर्थनिचये दृष्टो न देशोऽखिलो
नाभ्यस्ताः सकलागमा न च पुनर्हस्तेऽपि मौर्वीव्रणः ।
श्लाघन्ते सरदारसिंहमखिला नास्तीदृशोऽन्यो भुवि
सोयं श्रीयशवन्तसिंहतनयो जीव्यात्समानां शतम् ॥

उक्तकीर्तिः समस्ततीर्थयात्रादिकरणाद्भवति। उक्तं हि नीतिशास्त्रे—

देशाटनं पण्डितमित्रता च
वाराङ्गना राजसभाप्रवेशः ।

अनेकशास्त्रार्थविलोकनं च
चातुर्यमूलानि भवन्ति पञ्च ॥

सा च सरदारसिंहमहाराजकुमारेणाधुनैव प्राप्ता, इत्ययं दूरेभाविनः कार्यस्याधुनाभावः ॥

यथावा—

न परागो न च मधु विकाससमयो न च ।
अले! त्वं कलिकासक्तः का दशाग्रे भविष्यति ॥

पुष्पस्य विकासदशायां भ्रमरस्य दृढाऽऽसक्तिर्भवति । कान्ताया यौवनदशायां नायकस्य दृढासक्तिर्भवति । अत्र च पुष्पस्य कलिकावस्थायां नायिकाया बाल्यावस्थायां चासक्तेर्भावो विदूरकार्यत्वम् ॥ अत्राप्रस्तुतप्रशंसायाः संकीर्णत्वम् ॥

स्पृशन्ति युगपद्राजञ्छरास्ते ज्यामरेः शिरः ॥

अत्र हेतुना सहैव कार्योत्पत्तेरयं सहजकार्यहेतुः ॥

प्रागेव हरिणाक्षीणामुदितो रागसागरः ।
पश्चात्पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ॥

यथावा—

प्रागेवासवपानात्ते घूर्णितं नयनद्वयम् ॥

अत्र कार्यानन्तरं हेतूत्पत्तेरयं कार्यानन्तरजहेतुः । भोजमहाराजेन युक्तचित्रहेतोरिदमुदाहरणं प्रदत्तम्—

गुणानुरागमिश्रेण यशसा तें प्रसर्पता ।
दिग्वधूनां मुखे जातमकस्मादर्धकुङ्कुमम्॥

कुङ्कुममिश्रितचन्दनेन स्त्रियो भालमलंकुर्वन्ति । तच्चार्धकुङ्कुममिति प्रसिद्धम् । राज्ञो गुणानुरागमिश्रितयशसा दिग्वधूभालेऽर्धकुङ्कुमरचनाऽकस्माज्जातेतीयं यशसो विचित्रहेतुता । अपि च नायिकाया भालेऽर्धकुङ्कुमरचना युक्तेतियुक्तचित्रहेतुः । अयुक्तचित्रहेतोस्त्वेतदुदाहरणं दत्तम्—

न मीलयति पद्मानि न नभोऽप्यवगाहते ।
त्वन्मुखेन्दुर्ममासूनां हरणायैव यस्यति ॥

पूर्वानुरागसमये नायकस्येयमुक्तिः । अत्र मुखं शशी भूत्वापि पद्ममीलनमाकाशावरोहणं च शशिनः कार्यं न करोति, तच्चित्रम् । अपि च शशिन उक्तकार्यद्वयस्य त्वकरणं, वियोगिनायकस्य च दुःखदानरूपैककार्यस्य च करणमितीदमपि चित्रम् । अपि च शशिनः सुधाकरत्वात्सर्वेषां पोषणं युक्तम् । मुखशशिन एतत्करणाभावोऽयुक्त इत्ययमयुक्तचित्रहेतुः । विदूरकार्यादीनामन्यप्राचीनैरतिशयोक्तिप्रकारत्वमुक्तम् । मम तु मतं, विदूरकार्यादिषु शीघ्रकार्यकारितायां तात्पर्यम् । "और्वोऽग्निः—" इत्यतिशयोक्त्युदाहरणे तु खड्गस्य करालतायां तात्पर्यम् । परं तु श्रवणमात्रेण विदूरकार्यादौ त्वाश्चर्यबुद्धिर्भवति । "और्वोऽग्निः" इत्यत्र लोकसीमातिवर्तनबुद्धिर्भवति । अत्र सहृदयहृदयमेव साक्षि ॥

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ॥
सा च सुकुमारसुभगेत्युत्पातपरंपरा केयम् ॥

अत्राश्चर्यबुद्धिश्चेद्विचित्रालंकारः । लोकसीमातिवर्तनबुद्धिश्चेदतिशयोक्त्यलंकारः । मिथ्याध्यवसितौ मिथ्यावर्णनं मिथ्यारूपतयैव विवक्षितं, न तु सत्यतयेति न तत्र विस्मयः । न वा लोकसीमातिवर्तनम् । महाराजेन विचित्रालंकारो पृथङ्नाङ्गीकृतः । अतस्तेनेदृशवैचित्र्यविषये हेतुप्रभेदत्वमुक्तम् । परं तु मम तु मतं, अत्र प्रधानचमत्कारो विचित्रतायामेवेत्यस्य विचित्रप्रकारता युक्ता । महाराजः "असंख्याश्चित्रहेतवः" इत्याज्ञापयत्तत्सत्यमेव । मम तु मतं, असंगतिः, विभावना, विशेषोक्तिरित्यादयः सर्वे चित्रहेतव एव । इदमन्तर्भावाकृतौ स्फुटीकरिष्यते ॥

इति विचित्रालंकारप्रकरणम् ॥ ५६ ॥



## विधिः ॥



अज्ञातज्ञापनं विधिरित्युच्यते । उक्तं चिन्तामणिकोषकारेण

"अज्ञातज्ञापको वेदभागो विधिरिति मीमांसकाः" इति ॥ धुरंधरो मीमांसाशास्त्रच्छायानुसारेण विधिनामकमलंकारमङ्गीचकार ॥

अज्ञातज्ञापनं राजन्विध्यलंकृतिरुच्यते ॥

यथा—

निर्याति मरुनाथस्य सेना भूमि! स्थिरा भव ।
सावधानतया त्वं च धारयैनामहीश्वर! ॥

अत्र राजराजेश्वरस्यासंख्यसेनाया एकतः प्रयाणकरणादहीश्वरशिरःस्थिताया भूमेरेकतो नमनं भूम्यहीश्वरयोरज्ञातम्। तस्य ज्ञापनम् ॥

यथावा—

मुग्धे! याहि गृहं द्रुतं शरचयैः कामस्य विद्धा भवेः
पूर्णो वेणुरवो विषैः पुनरसून्पूर्णान्विदध्याच्च तैः ।
तानात्त्वं विरम स्वनात्सुमधुरान्मोहं परं यास्यसि
कर्णावङ्गुलिभिः पिधेहि यदि ते काङ्क्षा कुलीनव्रते ॥

अत्र मुग्धाया नायिकायाः कृष्णस्य वेणोरेवं कृत्यमज्ञातमासीत्तस्य ज्ञापनं कृतम् । न च वाच्यम्, विधिशब्दार्थो विधानमात्रम् । स तु निषेधप्रतिद्वन्द्वी । धुरंधरेण निषेधस्याक्षेपालंकारत्वमङ्गीकृतम् । अज्ञातज्ञापनं च विधिविशेषः। तादृशविधिविशेषस्यैवालंकारत्वाङ्गीकारे तु समादिविपरीतभावे विषमादिवत्सामान्यविधिरलंकारत्वेन कुतो नाङ्गीक्रियत इति? कुत इति चेदनुभवसिद्धश्चमत्कार उक्तविधिविशेष एव। क्वापि सामान्यविधौ चमत्कारो दृश्यते चेत्तदा तस्याप्यत्रोपलक्षणेन संग्रहो भवेदेव ॥

इति विधिप्रकरणम्॥ ५७ ॥



## विनोक्तिः ॥



कस्याचिद्वस्तुनः केनचिद्विनोक्तौ विनोक्त्यलंकारः। अयं विनोक्त्यलंकारः सहोक्त्यलंकारस्य प्रतिभटभूतः ॥

विना केनचिदुक्तिः स्यात्कस्यचिन्मरुवल्लभ! ॥
विनोक्तिर्भूषणं तत्र कथ्यते कविकोविदैः ॥

यथा—

विना गर्वेण राजेन्द्र! लोभेन च विना भवान् ॥
कपटेन विना तद्वच्छ्लाघ्यसे सकलैर्जनैः ॥

अत्र राजराजेश्वरस्य गर्वादिकं विना वर्णनं रुचिकरत्वाद्विनोक्त्यलंकारः। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"विनोक्तिः सा विनाऽन्येन यत्रान्यः सन्न नेतरः॥" इति॥

यत्रान्येन विनाऽन्यः सन्न भवति शोभनरूपो न भवति, इतरश्च न भवति, असन्न भवति, अर्थादशोभनरूपो न भवति तत्र विनोक्तिरित्यर्थः। सर्वस्वकारस्येदं लक्षणम्—

"विना किंचिदन्यस्य सदसत्त्वाभावो विनोक्तिः॥" इति॥

सत् शोभनम्। सत्त्वस्य शोभनत्वस्याभावोऽशोभनत्वम्। एवमसत्त्वस्याशोभनत्वस्याभावः शोभनत्वम् ॥

क्रमेण यथा—

विना दानेन मातङ्गो विना मानेन पार्थिवः ॥
विना ज्ञानेन संन्यासी लभते नैव हृद्यताम्॥

अत्र मातङ्गादीनां दानादिकं विनाऽशोभनत्वम् ॥

विना खलैः सभा भाति पङ्केन च विना जलम् ॥

अत्र खलादिकं विना राजसभादीनां शोभनत्वम्। काव्यप्रकाशकारादयो बहवः प्राचीना अस्मिन्नलंकारे लभ्योदाहरणानुसारेण शोभनत्वाशोभनत्वयोर्नियममकुर्वंस्तत्तु मम मतेन प्रमादः। कुत इत्युक्तौ शोभनत्वाशोभनत्वाभ्यां विनापि विनोक्तौ विनोक्तिरलंकारो दृश्यते ॥

यथा—

न माता न पिता भ्राता न हया न गजास्त्वया ॥
साकं यास्यन्ति चैकाकी यास्यसि त्वं यमान्तिकम्॥

अत्र मात्रादिभिर्विना यास्यसीति "एकाकी यास्यसि" इत्यस्यार्थः। अत्र शोभनत्वाशोभनत्वयोरभावेऽपि रुचिकरत्वादलंकारत्वम् ॥

यथावा--

निरर्थकं जन्म गतं नलिन्या
यया न दृष्टं तुहिनांशुबिम्बम् ॥
उत्पत्तिरिन्दोरपि निष्फलैव
कृता विनिद्रा नलिनी न येन ॥

अत्र न शब्दो विनार्थकः। समासोक्तेः संकीर्णत्वं च। अलंकारभाष्यकारस्येदं लक्षणम्--

"नित्यसंबन्धानामसंबन्धवचनं विनोक्तिः ॥" इति ॥

यथा--

मृणालमन्दानिलचन्दनाना-
मुशीरशैवालकुशेशयानाम् ॥
वियोगदूरीकृतचेतनाया
विनैव शैत्यं भवति प्रतीतिः ॥

अत्र शैत्यस्य नित्यसंबन्धवतामसंबन्धवचनम् ॥

यथावा--

शैत्यं विना न चन्द्रश्रीर्न दीपः प्रभया विना ॥
न सौगन्ध्यं विना भाति मालतीकुसुमोत्करः ॥

अत्र विशेषनिबन्धनाऽप्रस्तुतप्रशंसायाः संकीर्णत्वम्। मम तु मतं, लभ्योदाहरणानुसारेण नित्यसंबन्धानामिति नियमकरणमपि प्राचीनानां प्रमादः। कुत इत्युक्तौ मदादीनां गजादिभिर्नित्यसंबन्धो नास्ति। तस्य कादाचित्कत्वात्। किं च "विना खलैः" इत्यत्र सुराज्यसभायाः खलैः सह कदाचित्फलसंबन्धोऽपि न। ईदृशोदाहरणेष्वव्याप्तिर्भवति। अयं विनोक्त्यलंकारः सहोक्तेः प्रतिभटभूतः। तस्मादस्य स्वरूपं सहभावराहितता-मात्रम्। आक्षेपे तु निषेधमात्रे पर्यवसानम्। अत्र तु कस्यचिन्निषेधविशिष्टे वस्तुनि पर्यवसानम्। अतोऽस्य निषेधरूपाक्षेपाद्भेदः ॥

इति विनोक्तिप्रकरणम् ॥ ५८ ॥



# विरोधः



वैरं विरोध इत्युच्यते। "वैरं विरोधो विद्वेषः" इत्यमरः। विरोधो द्विविधः। स्वाभाविकः सांसर्गिकश्च। अत्र सांसर्गिकविरोधे रूढिः॥

"विरोधो यत्र संसर्गे विरोधस्तत्र भूषणम्॥
यशवन्तमहाराज! राज्ये तत्तव दृश्यते॥१॥"

यथा—

"वृषो मृगेन्द्रः फणिमूषकौ च
यथा समीपे निवसन्ति शंभोः॥
विहाय वैरं क्षितिपास्तथाऽत्र
कुर्वन्ति सेवां मरुवल्लभस्य॥१॥"

अत्र वृषमृगेन्द्रयोरहिमूषकयोश्च स्वाभाविकविरोधे लोकोत्तरत्वाभावान्नालंकारत्वम्। अपि तु वृषमृगेन्द्रयोरहिमूषकयोश्च सांसर्गिकविरोधे लोकोत्तरत्वादलंकारत्वम्। तादृशसांसर्गिकविरोधे विरोधस्य फलाभावादाधारस्योत्कर्षः॥

यथा वा—

"कूजितं राजहंसानां वर्द्धते मदमञ्जुलम्॥
क्षीयते च मयूराणां रुतमुत्क्रान्तसौष्ठवम्॥१॥"
प्रावृषेण्यैर्जलधरैरम्बरं दुर्दिनायते॥
रागेण पुनराक्रान्तं जायते जगतां मनः॥२॥

"दण्ड्याचार्येणेदमुदाहृतम्। व्याख्याता प्रेमचन्द्रः "अत्रैकस्मिञ्छब्दरूपे कर्तरि विरुद्धयोरपि वृद्धिक्षयक्रिययोः संसर्गदर्शनम्, संबन्धभेदेन शब्दयोर्भिन्नत्वाद्विरोधप्रशमनम्। अनुरागस्य लौहित्येनाभेदाध्यवसायाच्छ्यामत्वलौहित्यगुणयोरेकजलधरनिष्पाद्यत्वरूपसंसर्गवर्णनेन विरोधः, तस्य च श्लेषवशात्प्रशमनम्। अनेन च वर्णनीये शरत्काले एकजातीययोरपि बलाबलकारितया विशेषः, प्रावृट्कालेऽपि च कश्चिद्विशेषः

प्रतीयते" इत्याह ॥ मम मतेऽप्यचेतनवस्तूनां वैरभावस्य तादृशत्वेऽप्यत्र वृद्धिक्षयक्रिययोः श्यामत्वलौहित्यगुणयोश्च स्वाभाविकविरोधे लोकोत्तरत्वाभावान्नालंकारत्वम् । अपि तु शरदृतुरूपे एकस्मिन्कर्तरि वृद्धिक्षयरूपक्रिययोः प्रावृडृतुरूपे एकस्मिन्कर्तरि च श्यामत्वलौहित्यगुणयोश्च सांसर्गिकविरोधस्य लोकोत्तरत्वादलंकारत्वम् ॥

यथा वा—

"धत्ते नारीस्मरद्वेषावापोऽग्नी च विषामृते ॥
औदार्यनिःस्वते चोभे ऋते को वा महेश्वरात् ॥१॥"

अत्राप्येकस्मिन्नाश्रये नारीस्मरद्वेषादीनां सांसर्गिकविरोधत्वादलंकारत्वम् ॥

यथा वा—

"दिग्वासा यदि तत्किमस्य धनुषा शस्त्रं च किं भस्मना
भस्माथास्य किमङ्गना यदि च सा कामं परिद्वेष्टि किम् ॥
इत्यन्योन्यविरुद्धचेष्टितमिदं पश्यन्निजस्वामिनो
भृङ्गी सान्द्रशिरावनद्धपरुषं धत्तेऽस्थिशेषं वपुः ॥ १ ॥"

अत्र हेतूत्प्रेक्षायाः संकीर्णत्वम् । भृङ्गिगणस्य कृशता स्वभावहेतुका । तत्र कविनोक्तहेतुरुत्प्रेक्षितः । भगवतो वेदव्यासस्येदं लक्षणम्—

"संगतीकरणं युक्त्या यदसंगच्छमानयोः ॥
विरोधपूर्वकत्वेन स विरोध इति स्मृतः ॥ १ ॥"इति॥

मम तु मतं, स्वाभाविकविरोधिसंसर्गे विरोध इव क्वचित्स्वभावसिद्धाविरोधिवस्तुसंसर्गेऽपि विरोधो भवतीत्यत्र विरोधपूर्वकेति विशेषणं न समीचीनम् ॥ "दिग्वासा यदि तत्किमस्य धनुषा—" इत्येतादृशोदाहरणेष्वव्याप्तेः । न चात्र दिग्वस्त्रधनुषोर्धनुर्भस्मादीनां च स्वाभाविको विरोधः । अपि तु संसर्गे विरोधः । अपि च युक्त्या संगतीकरणमिति नियमोऽप्युक्तोदाहरणेऽव्याप्तः । "वृषो मृगेन्द्रः—" इत्युदाहरणे विरोधिसंगतीकरणे शिवसामर्थ्यमिवोक्तोदाहरणे युक्त्यभावात् । उक्तवस्तुसंसर्गस्य शिवेतरसामान्ययोगिष्वपि विरुद्धत्वात् ॥ दण्डयाचार्यस्येदं लक्षणम्—

"विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम् ॥
विशेषदर्शनायैव स विरोधः स्मृतो यथा ॥" इति ॥

ईदृशवर्णनं च वर्णनीयस्य विशेषदर्शनायैव भवति ॥ दण्डयाचार्य-लक्षणमपि वेदव्यासलक्षणमिवाव्याप्तिदोषदूषितम् ॥ रुद्रटस्येदं लक्षणम्

"यस्मिन्द्रव्यादीनां परस्परं सर्वदा विरुद्धानाम् ॥
एकत्रावस्थानं समकालं भवति स विरोधः ॥" इति ॥

यथा—

"एकस्यामेव तनौ बिभर्ति युगपन्नरत्वसिंहत्वे ॥
मनुजत्ववराहत्वे तथैव यो विभुरसौ जयति ॥ १ ॥"

अस्य समकालमिति विशेषणप्रदानं प्रमादः ॥ तस्यात्रार्थसिद्धत्वात् ॥ रुद्रटो द्वितीयविरोधं मन्वान इदं लक्षणमाह—

"यत्रावश्यंभावी ययोः सजातीययोर्भवेदेकः ॥
एकत्र विरोधवतोस्तयोरभावोऽयमन्यस्तु ॥" इति ॥

यथा—

"अविवेकितया स्थानं जातं न जलं न च स्थलं तस्याः ॥
यद्विरहानलतप्तं न विलयमुपयाति न च दार्ढ्यम् ॥ १ ॥"

अत्र द्रव्ययोर्जलस्थलयोर्विरोधित्वादेकस्याभावेऽवश्यमेवेतरस्यावस्थानेन भाव्यम् । अत्र चोभयोरप्यभाव उक्तः ॥

यथा वा—

"नास्ते न याति हंसः पश्यन् गगनं घनश्यामम् ॥
चिरपरिचितां च बिसिनीं स्वयमुपभुक्तातिरिक्तरसाम् ॥"

यथा पूर्वत्र गुणयोरेवमत्र क्रिययोरासनगमनलक्षणयोर्विरुद्धयोर्मध्यादेकस्या अप्यभावः ॥ अत्र विमर्शनीकारः "अयमभावविरोधः प्रथमविरोधान्न पृथक् । उदाहरणान्तरमात्रम्" इत्याह ॥ मम मतेऽपि विमर्शनीकारस्येदं कथनं समीचीनम् ॥ रुद्रटस्य लक्षणद्वयकथनं प्रमादः ॥ भोजमहाराजस्त्वसंगत्याद्यलंकारानपि विरोधेऽन्तर्भावयन्निदं लक्षणमाह—

"विरोधस्तु पदार्थानां परस्परमसंगतिः ॥
असंगतिः प्रत्यनीकमधिकं विषमं च सः ॥ इति ॥"

विरोधालंकारस्वरूपं पदार्थानां परस्परमसंगतिं मन्यमानेन भोजराजेनासंगत्याद्यलंकाराणां विरोधेऽन्तर्भावस्तु "असंगतौ वस्तूनामसंगतिः। प्रत्यनीके शत्रोः पक्षे शत्रुत्वाचरणमसंगतिः। शत्रौ शत्रुत्वाचरणस्य संगतिरूपत्वात्। अधिके चाधारादाधेयस्य, आधेयादाधारस्य चाधिक्यमसंगतिः। संगतेः समत्वनिष्ठत्वात्। विषमे च वस्तूनां समसंबन्धाभावोऽसंगतिः" इत्याभिप्रेत्य विहितः ॥ मम तु मतं, महाराजस्यायं सिद्धान्तोऽसमीचीनः। कुत इति चेद्विरोधस्वरूपं तु वस्तूनां संसर्गे विरोधित्वम्। विषमस्वरूपं चायोग्यसंबन्धः ॥

विषमो यथा—

"क्व युवतिमार्दवं क्व च महाहवदारुणता
क्व च वलयी करः क्व करिदन्तजमुष्टिरसिः ॥
क्व च नवयौवनं क्व कुसुमायुधनिस्पृहता
तव ललनाविचेष्टितविरुद्धमहो ललितम् ॥ १ ॥"

अनयोरत्यन्तं वैलक्षण्यम्। विरोधोदाहरणेष्वयोग्यसंबन्धाभावः। यथा सिंहसिन्धुरवैरेऽयोग्यसंबन्धाभावः ॥

"मातङ्गमस्तकं भित्त्वा मांसपिण्डं सदाऽत्ति यः।
स कथं लज्जितो न स्याच्छशं घ्नन्मृगनायकः ॥ १ ॥"

सिंहशशयोर्न वैरम्। अपि त्वननुरूपत्वम् ॥ अतोऽत्र विषमालंकारः ॥ "कूजितं राजहंसानाम्"— इति विरोधोदाहरणे तु वृद्धिक्षयक्रिययोः श्यामत्वलौहित्यगुणयोश्चैकस्मिन्कर्तरि संबन्धो नायोग्यः। अपि तु विरुद्धः। अतोऽत्र विरोधालंकारः ॥ "क्व युवतिमार्दवम्"— इत्याद्युदाहरणेषु विषमबुद्धिर्भवति। न तु विरोधबुद्धिः। असंगतिस्वरूपं संगत्यभावः। प्रत्यनीकस्वरूपं पक्षे करणम्। अधिकस्वरूपमाधिक्यम्। एवं नामार्थानुसारेणैते मिथोऽत्यन्तविलक्षणाः ॥ विरोधोदाहरणे विस्मयांशे सत्यपि तस्याप्राधान्यम्। प्राधान्यं तु विरोधस्यैव। काव्यप्रकाशगतका-

रिकाकारः समाधानं विना विरोधः प्रत्यक्षदोष इति मन्वान इदं लक्ष-णमाह—

"विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ॥" इति ॥

प्रकाशकारो वृत्तौ लिखति "वस्तुवृत्तेनाविरोधेऽपि विरुद्धयोरिव यदभिधानं स विरोधः" इति ॥ मम तु मतं, अयमाभासालंकारस्य वि-षयः। प्रकाशकारेणेदमुदाहृतम्—

"अभिनवनलिनीकिसलय-
मृणालवलयादि दवदहनराशिः ॥
सुभग! कुरङ्गदृशोऽस्या
विधिवशतस्त्वद्वियोगपविपाते ॥ १ ॥"

अस्मिन्नुदाहरणे काव्यप्रकाशगतलक्षणसंगतिस्त्वित्थम्। "अत्रा-पाततो नलिनीत्वादिजातीनां दवदहनत्वजात्या सह विरोधः। स च नलिन्यादिषु विरहोद्दीपकतया दवदहनत्वोपचारेण परिहृत इत्याभास-रूपः" इति ॥ मम तु मतं, प्रकाशकारस्यायमुदाहरणोपन्यासः कारिका-काराभिप्रायापरिज्ञानहेतुकः। अस्मिन्नुदाहरणे न विरोधो न वा विरो-धाभासः। विरहदशायां नलिनीप्रभृतीनां तापक्रियया सह न विरोधः। तस्य च दवदहनेतिविरुद्धवचनेन कथनं तु "गङ्गायां घोषः" इतीव लाक्ष-णिकम् ॥ समाधानं विना विरोधोऽरोचक इति मन्वानः काव्यप्रकाशानु-सारी सर्वस्वकार इदं लक्षणमाह—

"विरोधाभासत्वं विरोधः ॥" इति ॥

वाग्भटवामनजयदेवादिप्राचीनानामयमेव सिद्धान्तः। मम तु म-तं, विरोधस्याभासेऽप्याभासचमत्कारस्य प्राधान्यादत्राभास एवालंकारो न तु विरोध इत्युक्तं विस्तरेणाभासप्रकरणे ॥ "विरोधाभासे तु विरोधि-पदार्थानामिवाविरोधिपदार्थानां भानम्। अत्र तु विरुद्धज्ञानमिति भेदः"।

इति वृत्तौ भणता दण्डयाचार्यानुगामिना भानुदत्तेन विरोधालंकारस्येद-मुदाहृतम्—

"चक्रवाककलानाथराजहंसपयोमुचाम् ॥
विरुद्धानां मिथो योगो वियोगो मे कथं पुनः ॥"

किंच

"विरुद्धानामेकत्र संसर्गो विरोधः ॥"

इति स्वलक्षणं योजयताऽनेन "पयोधराननयोर्मन्दगतिकेशपाश-योश्च मिथोऽविरुद्धानां चक्रवाककलानाथराजहंसपयोधररूपविरुद्धवच-नेन कथनं तु विरुद्धवस्तूनामेकत्र संसर्गे बुद्धिं पर्यवसाययति, न तु विरोधाभासे" इत्यभिहितम् ॥ मम तु मतं, अत्रास्य प्रमादः । स्थायि ज्ञानं ज्ञानं, क्षणमाभासमानं ज्ञानं भानमिति ज्ञानभानयोर्भेदात् ॥ अत्र च विरोधस्य श्रवणमात्रेण क्षणं भासमानत्वेऽपि विचारदशायां तन्निवृत्ति-रिति विरोधस्य ज्ञानाभावरूपत्वाद्भानमेव चमत्कारकारीत्याभासालंकारः॥

॥ इति विरोधप्रकरणम् ॥ ५९ ॥



## ॥ विशेषोक्तिः ॥



अत्र वीत्युपसर्गो गतार्थे । उक्तं चिन्तामणिकोषकारेण "वि गते" इति ॥ शेषोऽवशिष्टः । विशेषोक्तिरिति शब्दसमुदायार्थस्तु "वि गतेन शेषस्योक्तिर्विशेषोक्तिः" इति व्युत्पत्त्या गतोऽर्थोयः पदार्थो न विद्यते ते-नावशिष्टस्योक्तिरिति ॥

उक्तिर्गतेन शेषस्य विशेषोक्तिरिहेष्यते ॥

यथा—

विजानाति जगत्सर्वं वदन्ति विदुषां वराः ।
नकारमक्षरं नैव यशवन्तनृपोऽपठत् ॥

अत्र राजराजेश्वरस्यैकनकारस्य पठनाभावकथनेन शेषस्य सर्वस्य पठनं कथितं भवति । कथनीयसमस्तानां वचनेन कथनापेक्षया, यदेकं वस्तु नास्ति, तस्य निषेधमात्रेण तेषां सर्वेषां कथनं लाघवेन रम्यत्वादलंकारः ॥ किं चात्र नकारपठनस्य निषेधमात्रे पर्यवसानं चेदाक्षेपालंकारो भवेत् । परंत्वत्र प्रधानचमत्कारस्तु विशेषोक्तेरेव । विनोक्त्यलंकारे तु विनार्थे पर्यवसानम् । अत्र तु शेषार्थे पर्यवसानम् । एकस्य निषेधोऽन्यसमस्तवस्तुस्थितेः पर्यायो न भवति । अतोत्र पर्यायोक्तेर्भ्रमो न कार्यः ॥

यथावा—

यशवन्तमहाराजरिपुराजमृगीदृशाम् ॥
अरण्यौषधयो दीपा अतैलाः सन्ति कानने ॥

अत्रैकतैलाभावकथनेन शेषाः सर्वे दीपगुणा उक्ता भवन्ति । एवं धुरंधरस्य रूपकच्छायावदुदाहरणेन भ्रमित्वा सूत्रकारो वामन इदं लक्षणमाह—

"एकगुणहानौ गुणसाम्यदार्ढ्यं विशेषोक्तिः ॥" इति ॥

उक्तोदाहरणे स्वकीयलक्षणमेवं योजितवान् । "अत्र तैलरूपैकगुणहानावरण्यौषधिषु शेषाणां प्रकाशशोभाकरत्वादीनां सर्वेषां दीपगुणानां साम्यस्य दृढीकारः" इति । मम तु मतं, अस्यालंकारस्य साम्यविषये नियमकरणं प्रमादः । कुत इति चेत् "विजानाति जगत्सर्वम्" इत्याद्युदाहरणेष्वव्याप्तिर्भवति । शेषगुणदार्ढ्यनियमोप्यनावश्यकः, शेषदार्ढ्यस्यानुषङ्गिकत्वात् । एवं गुणहानिनियमोपि न समीचीनः । कुत इति चेत् "नकारमक्षरं नैव" इत्यत्र दोषहानेः शेषगुणानामुक्तावव्याप्तिः स्यात् । नकारस्तु दोषरूपः । अपि च सूत्रकारवामनस्य दीप आनुगुण्यात्तैलस्य दीपं प्रति गुणत्वमभिमतम् । परं तु तैलमपि कज्जलवदरम्य-

त्वाद्दीपविषये दोष एव । अत एव रत्नदीपस्य प्रशंसा क्रियते । गुणहानेस्त्वीदृशान्युदाहरणानि—

अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ॥
अभाललोचनः शंभुर्भगवान्बादरायणः ॥

अस्यालंकारस्य स्वरूपं सुतरामविदित्वाऽन्ये प्राचीना अत्र दृढारोपरूपकमिति रूपकप्रकारमाहुः । परं त्वस्मिन्नुदाहरणे प्रधानचमत्कारस्तूक्तविशेषोक्तेरेव । अत एव धुरंधरमतानुसारेणास्मत्स्पष्टीकृतविशेषोक्तेः स्वरूपं समीचीनम् । विलक्षणत्वात् । काव्यप्रकाशगतकारिकाकारः पूर्णकारणे सति कार्यस्यानुत्पत्तौ विशेषोक्त्यलंकारमङ्गीचकार । तद्विषये विशेषोक्तिशब्दस्यार्थं उक्तविशेषोक्तेरन्यः । तच्च तस्य प्रकरणेऽन्तर्भावाकृतौ स्फुटीभविष्यति ॥

॥ इति विशेषोक्तिप्रकरणम् ॥ ६० ॥

## विषमम् ॥

समशब्दस्यार्थः समानः । आह चिन्तामणिकोषकारः "समः समाने । तुल्यार्थे" इति । अत्र वीत्युपसर्गो गतार्थे । विषममित्यत्र "सुविनिर्दुर्भ्यः सुपिसूतिसमाः" इति शास्त्रेण दन्त्यसकारस्य स्थाने मूर्धन्यषकारः । विषममितिशब्दसमुदायार्थः समाभावः । यथायोग्यत्वाभाव इत्यर्थः । वक्ष्यमाणसमालंकारविपरीतभावेऽयं विषमालंकारः ॥

यथायोग्यस्य यत्र स्यादभावो महनायक! ॥
विषमालंकृतिस्तत्र विज्ञेया कविकोविदैः ॥

मम तु मतं, यथाऽयथायोग्यानां संबन्धे चारुत्वं, तथैव यथायोग्यानामसंबन्धेऽपि । यथायोग्यत्वाभावस्तूभयत्रापि विद्यते ॥

क्रमेण यथा—

रिपुस्त्रियस्ते यशवन्तभूप!
विलोक्य पान्था इति चिन्तयन्ति ॥

लावण्यसाराङ्कयुता इमाः क्व
क्व दारुणं दुःखमिदं वनोत्थम् ॥

अत्र लावण्यसाराङ्कताया दारुणदुःखस्य च संबन्धोऽयोग्यः । अत्र नायिकाधर्मिणि धर्मद्वयस्यायोग्यसंबन्धः ॥

यथावा—

क्षारो नीरनिधिर्विधौ मलिनता नीलः पिकानां गणो
नाले भूकमलस्य कण्टकचयः कोके वियोगो निशि ।
तृष्णार्तिर्नृप! चातकेषु सततं वन्हिश्चकोराशन-
मित्थं हंसपतिर्मतो मम दृशा वाहो पुरारेरसौ ॥

अत्राक्षयस्य नीरनिधेः क्षारत्वं, सर्वानन्दकरस्य चन्द्रस्य मलिनत्वं, मधुरगिरः पिकगणस्य श्यामवर्णत्वं, प्राणतर्पणाद्यनेककार्यकारिणः स्थलपद्मस्य कण्टकितनालत्वं, अत्यासक्तयोः कोकयोर्निशि वियोगः, मेघैकशरणस्य चातकस्य तृषार्तिः, चन्द्रकिरणपायिनश्चकोरस्य वन्ह्यशनमितीदं सर्वमननुरूपमिति धर्मधर्मिणोरयोग्यः संबन्धः ॥

यथावा—

अयि खलु विषमः पुराकृतानां
भवति हि जन्तुषु कर्मणां विपाकः ।
शिवशिरसि शिरांसि यानि रेजुः
शिव शिव तानि लुठन्ति गृध्रपादे ॥

यानि लङ्केश्वरस्य शिरांसि शिवशिरसि शेखरशोभामन्वभूवंस्तेषां गृध्रचरणसंघट्टनं धर्मिणोरयोग्यः संबन्धः । अत्र विस्मयो बुद्ध्यारूढश्चेद्विचित्रालंकारः । निःसंदेहज्ञापनबुद्धिश्चेदुदात्तालंकारः ॥

यशवन्तसिंहसविधे कनकगिरिश्चेत्कृतो भवेद्धात्रा ।
क्षण एकस्मिंस्तत्स्युरर्थिजनाः प्राप्तपूर्णार्थाः ॥

राज्यस्यायः प्रतिदिनं प्रतिमासं प्रतिवर्षं च भवति । अतो राजराजेश्वरोऽर्थिजनान् प्रतिक्षणं प्राप्तपूर्णार्थान्करोति। एकस्मिन् क्षणे तान्सकला-

स्तादृशान्कर्तुं न शक्तः। एतादृशातिशयितोदारसमीपे कनकाचलस्यासत्त्वं विषमत्वम्। अत्र धर्मिणोर्यथायोग्यत्वस्यासंबन्धः॥ रसगङ्गाधरकारो वदति—

क्व शुक्तयः क्व वा मुक्ताः क्व पङ्कः क्व च पङ्कजम्।
क्व मृगाः क्व च कस्तूरी धिग्विधातुर्विदग्धताम्॥

अत्र विधिरचितायोग्यसंबन्धस्य लोकप्रसिद्धत्वेन कविप्रतिभोत्थापितत्वाभावान्नालंकारता। मम तु मतं, रसगङ्गाधरकारस्यायं प्रमादः। कुत इति चेत्कविप्रतिभोत्थापितानामेवालंकारत्वं, नेतरेषामिति नियमो न भवितुमर्हति। किं तु मनोहरस्यैवालंकारत्वमिति नियमः। अन्यथा स्वभावोक्त्यलंकारस्योच्छेदः स्यात्। अथ च बहून्युदाहरणानि व्यर्थानि स्युः। अनेनैव महाशयेन "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" इति काव्यसामान्यलक्षणमुक्तं, न तु कविप्रतिभोत्थापितार्थप्रतिपादकः शब्दः काव्यमिति। "लौकिके वास्तवे च नालंकारः" इति प्राचीना अनेन तात्पर्येणाहुः। "अरम्यतायामलंकारो नास्ति" इति। अपि चालौकिके कविप्रतिभोत्थापिते चालंकारत्वमिति त्वनेन तात्पर्येण कथितं, "रम्यतायामलंकारत्वम्" इति। यथा मूर्खस्य ग्रामीण इति चतुरस्य च नागर इति कथने तात्पर्यम्। ग्रामे वर्तमानाः सर्वे मूर्खा न भवन्ति। वने वर्तमाना अपि मुनयः शास्त्रकर्तारो जाताः। तथैव नगरे वर्तमानाः सर्वे चतुरा न भवन्ति। तदुक्तम्—

गुणदोषौ न संसर्गात्स्वभावात्प्राणिनामिह।
वनेपि गानवेत्तारो मृगाः पूर्ष्वपि नो खराः॥

मम तु मतं, "क्व शुक्तयः" इत्यत्र "क्षारो नीरनिधिः" इत्यादौ च विधिरचितपदार्थानामप्ययोग्यसंबन्धस्य रोचकत्वे विषमालंकारोऽनुभवसिद्धः। एवमन्येष्वप्यलंकारेषु ज्ञातव्यम्। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात्।
कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत्॥

गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये।
क्रमेण च विरुद्धे यत्स एष विषमो मतः ॥" इति ॥

क्वचिदतिवैधर्म्याच्छ्लेषोऽर्थात्संबन्धघटनाऽभाव एकः। कर्तुः क्रियायाः फलस्याप्राप्तिरेव न, किं त्वनर्थस्यापि प्राप्तिर्द्वितीयः। कार्यस्य गुणक्रियाभ्यां सह कारणस्य गुणक्रियाविरोधस्तृतीयः ॥

क्रमेण यथा--

शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना।
अयं क्व च कुसूलाग्निकर्कशो मदनानलः ॥

अत्र ममापि विषमालंकार इष्टः ॥

सिंहिकासुतसंत्रस्तः शशः शीतांशुमाश्रितः।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥

अत्र सिंहिकायाः सिंहपत्न्याः सुताद्भीतः शशः शीतांशुं शरणं गतः। ततश्च शशकस्य शरणाप्राप्तिरेव न, प्रत्युत सिंहिकासुतेन राहुणा ग्रस्त इत्यनर्थप्राप्तिरपि। मम तु मतं, एतादृशस्थले वक्ष्यमाणविषादालंकार इति। अत्र यद्यपि यत्नात्फलस्य विषमता वर्तते, तथापि प्रधानचमत्कारो विषादस्यैव ॥

यशवन्तमहाराजकरस्पर्शात्कृपाणिका।
श्यामा प्रसूते धवलं त्रैलोक्याभरणं यशः ॥

अत्र कार्यकारणयोर्गुणयोर्विरोधो वर्तते, कुत इत्युक्तौ कारणं श्यामखड्गः। कार्यं श्वेतयशः। श्यामखड्गस्य कारणत्वाद्यशसापि श्यामेनैव भवितव्यम्। अत्रापि विषमता वर्तते। परं त्वीदृशस्थले मम मते तु कार्यकारणयोर्वैचित्र्याद्विचित्रालंकारः ॥

शीतांशुः सागरोत्पन्नः संतापयति भामिनीः ॥

सागरस्य कारणस्य क्रिया शैत्यकरणम्। सागरस्य कार्यं शशी। स च विरहिणां शैत्यं न करोति; किं तु संतापं करोति। अयं कार्यकारणक्रिययोर्विरोधः। अत्रापि यद्यपि विषमता वर्तते, तथापि कार्यकारणयोर्वैचित्र्यान्मम मते विचित्रालंकारः। रत्नाकरकारस्येदं लक्षणम्--

"अर्थानर्थपदे तदन्यस्योत्पत्तिर्विषमम्" इति।

अर्थानर्थयोः स्थाने ताभ्यामन्यस्योत्पत्तिरर्थादर्थादनर्थस्य, अनर्थाच्चार्थस्योत्पत्तिर्विषमालंकार इत्यर्थः ॥

क्रमेण यथा—

भक्ष्याशया हि मञ्जूषां दृष्ट्वाखुस्तेन भक्षितः ॥

अत्र मूषकस्यार्थस्य यत्नादनर्थोत्पत्तिः ॥

येन राहुरपि निग्रहेच्छुना
दुर्भरोदरभिदा सुखीकृतः।
चक्रिणस्तदतिविक्रमक्रमं
चक्रमक्रममपाकरोतु वः ॥

अत्र राहुशिरश्छेदरूपानर्थप्रवृत्तेन विष्णुचक्रेण राहोरुदरभरणदुःखनिवृत्तिरूपार्थस्योत्पत्तिः कृता। मम तु मतं, प्रथमविषमे वक्ष्यमाणत्रिषादालंकारः। द्वितीयविषमेऽपि विषमबुद्धिर्न भवति। किं तु क्वचित्प्रहर्षणालंकारस्य, क्वचिद्विषादस्य, क्वचिच्च विचित्रालंकारस्य बुद्धिर्भवतीति ॥ सर्वस्वकारादयः प्राचीना अप्येवमेव विषमालंकारप्रकारानाहुः। तत्पूर्वक्तखण्डनेन खण्डितम्। सर्वस्वकृता "एको विषमः, द्वितीयो विषमः" इत्युक्तम्। अस्याशयं स्पष्टीकुर्वन्विमर्शनीकारो वदति— "ग्रन्थकर्ता चैको विषमः, द्वितीयो विषम इत्येवमेतदर्थमाह, अस्य सामान्यलक्षणाभावात्प्रकारप्रकारीभावो न वर्तते। किं तु पृथक्पृथगलंकारः" इति। मम तु मतं, सर्वस्वकारस्य सिद्धान्तो न समीचीनः। कुत इत्युक्तावर्थेनार्थोत्पत्तिः, अनर्थेनानर्थोत्पत्तिरिति तु योग्यः संबन्धः। स तु समालंकारस्य विषयः। अर्थेनानर्थस्योत्पत्तिः, अनर्थेनार्थस्योत्पत्तिरित्यत्रोभयत्राप्ययोग्यः संबन्धः। तस्माद्विषमनामार्थरूपलक्षणस्योभयत्र संगतेरिमौ विषमालंकारस्य प्रकारौ। अत्र विषमशब्दार्थोऽयोग्यसंबन्धः। केचन—

"विषमं वर्ण्यते यत्र घटनाननुरूपयोः।"

इति तृतीयं विषममाहुः। अननुरूपघटना त्वयोग्यसंबन्ध एव।

अत्राप्युक्तरीत्या विषमनामरूपलक्षणस्य संगतिः। एवं च विपमस्य त्रयः प्रकाराः। तत्रैको विपमः, द्वितीयो विपमः, तृतीयो विषम इत्येवं कथनमयोग्यम्। रसगङ्गाधरकारो वदति, विशेषालंकारस्य विभिन्नस्वरूपत्वादनुगतमेकलक्षणं न भवति। अतः प्रकारप्रकारीभावो न भवितुमर्हति। किं तु प्रथमो विशेषः, द्वितीयो विशेषः तृतीयो विशेष इति कथनीयमिति। मम तु मतं, अस्यापीदं कथनं न समीचीनम्। कुत इत्युक्तावत्र विशेषशब्दार्थ आधिक्यम्। लोक एवं वदन्ति "अमुकापेक्षयाऽस्मिन्नाधिक्यं, अस्मिन्विशेषः" इति। तस्मादुक्तविशेपस्य त्रिष्वपि प्रकारेष्वस्य नामार्थलक्षणस्य संगतिर्वर्तते। एवमाधिक्यमन्यदपि भवितुमर्हति। परंतूक्तविशेषेष्वस्य नाम्नो रूढिः। विशेपनामार्थसंगतिर्मया विशेपप्रकरणे सम्यक्तया करिष्यते। काव्यप्रकाशगतकारिकाकारोपि "विशेषस्त्रिविधः स्मृतः" इत्याह। न तु त्रयो विशेषा इत्यूचे। सर्वस्वकृदाह "यत्र स्तुतिरभिधीयमानापि प्रमाणान्तराद्बाधितस्वरूपा निन्दायां पर्यवस्यति तत्रासत्यत्वाद्व्याजरूपा स्तुतिरित्यनुगमनेन तावदेका व्याजस्तुतिः। यत्रापि निन्दाशब्देन प्रतिपाद्यमाना पूर्ववद्बाधितरूपा स्तुतिः पर्यवसिता भवति सा द्वितीया व्याजस्तुतिः। व्याजेन निन्दामुखेन स्तुतिः" इति। सर्वस्वकारस्येममभिप्रायं स्पष्टीकुर्वन्विमर्शनीकारो वदति "प्रकारप्रकारीभावः सामान्यलक्षणसद्भावे भवति। यस्य सामान्यलक्षणं नास्ति तस्य विशेषो न भवति। अतो ग्रन्थकृता, एका व्याजस्तुतिः, द्वितीया व्याजस्तुतिरिति वदता व्याजस्तुतिनामकमलंकारद्वयमिति सूचितम्। द्वयोरलंकारयोर्नाममात्रमेकम्" इति। सर्वस्वकारस्य कथनं समीचीनम्। उक्तरीत्या व्याजस्तुतिनामकमलंकारद्वयं, नाममात्रं चैकम्। प्राचीनानां प्रथमलक्षणस्यायथायोग्यसंबन्धे व्याप्तौ सत्यामपि यथायोग्यस्यासंबन्धेऽव्याप्तिः। तदेतादृशलक्षणा निर्मितिः प्राचां प्रमादः। किं च कार्यस्य गुणक्रियाभ्यां सह कारणस्य गुणक्रियाविरोधे न विषमस्य चमत्कारः। किं तु विचित्रत्वस्य। एतादृशस्थले भोजमहाराजेन चित्रहेतुरलंकारोऽङ्गीकृतः। अत एतयोर्विषमालंकाराङ्गीकारः प्राचां प्रमादः॥

॥ इति विषमप्रकरणम्॥ ६१॥

# ॥ विषादः ॥

अत्र वीत्युपसर्गो विशेषार्थे। विशेषशब्दाऽर्थश्चातिशयः। उक्तं चिन्तामणिकोषकारेण "वि विशेषे। विशेषोऽतिशये" इति॥ षद्लृ धातोर्भावे घञि सादशब्दो निष्पन्नः। "षद्लृ विशरणगत्यवसादनेषु" इति शास्त्रम्। "सदिरप्रतेः" ८।३।६६। इति शास्त्रेण मूर्धन्यादेशः। सादशब्दार्थोऽवसादनम्। अवसादनशब्दार्थश्च विषादः। उक्तं चिन्तामणिकोषकारेण "अवसादो विषादे" इति। विषाद इति दुःखस्य प्रसिद्धं नाम। तथा चात्र विषाद इति शब्दसमुदायार्थो विशेषदुःखम्। प्रहर्षणालंकारे लोकोत्तरतार्थं हर्षशब्देन सह यथा प्रेत्युपसर्गो योजितः। प्रहर्षणप्रतिद्वन्द्विभावे चायं विषादालंकार इति तथैव लोकोत्तरतार्थमत्र सादशब्देन सह विशेषार्थवाचको वीत्युपसर्गो योजितः। धुरंधरो हर्षमात्रमलंकारं नोक्तवान्, किं तु प्रहर्षम्। अतोऽयमवयवार्थो धुरंधराभिमत इति सिद्ध्यति। अत्र विषाद इति शब्दसमुदायार्थो दुःखमिति मन्यते चेदसामञ्जस्यम्। साधारणहर्षस्यालंकारत्वाभावात्। प्रकृष्टहर्षस्यैवालंकारत्वाच्च। एवं स्वीकारे च तस्य प्रतिद्वन्द्विभावे दुःखमात्रस्यालंकारत्वं नोपयुज्यते। वाञ्छितादधिकार्थस्य सिद्ध्यादौ प्रहर्षणालंकारो भवति। तथैव वाञ्छिताद्विरुद्धार्थस्य प्राप्त्यादौ विषादालंकारो भवति। न च वाच्यं, दुःखं शोभाकरं भूत्वा कथमलंकार इति। यस्य विषादो भवति तस्य तु स शोभाप्रद आनन्ददायकश्च न भवति। परं तु तस्य वर्णनं काव्यस्य शोभाकरं भवति। यथा बीभत्सादिरसस्थले जुगुप्सादयः श्रोतॄणामानन्दप्रदाः॥

वाञ्छितार्थाद्विरुद्धार्थप्राप्त्यादिर्मरुवल्लभ!॥
विषादालंकृतिः प्रोक्ता विवादेन विना बुधैः॥

यथा—

हस्तं कान्तगले निधाय रमणी ह्यास्ते द्वितीयेन च
सीधुं पाययति प्रसन्नहृदया संचिन्तयन्तौ स्थितौ॥
कृत्यं केलिकलानुषङ्गि रसिकौ तौ दंपती तत्क्षणं
प्राप्ताः श्रीयशवन्तसिंहसुभटा बध्वानयंस्तं रिपुम्॥

यथावा—

रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हरिष्यति पङ्कजश्रीः ॥
इत्थं विचिन्तयति कोषगते द्विरेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥

चन्द्रालोकस्येदं लक्षणम्—
"इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनम् ॥" इति ॥

रसगङ्गाधरकारस्येदं लक्षणम्—
"अभीष्टार्थविरुद्धलाभो विषादनम् ॥" इति ॥

उक्तोदाहरणयोरिमे लक्षणे संगच्छेते। परं स्वकस्माद्विषादसंप्राप्ता-वनयोर्लक्षणयोरव्याप्तिः । अतो नामार्थं स्पष्टीकुर्वता मयाऽऽदिशब्द उपात्तः । नामरूपलक्षणे तु सर्वसंग्रहः ॥

यथा—

प्रावृड्विलासेक्षणकौतुका सती
राधा स्वहर्म्याग्रमुपारुरोह सा ।
दृष्ट्वा निकुञ्जं यमुनातटे पत—
द्बाष्पप्रवाहैर्यमुनामवर्धयत् ॥

अस्मिन्समये राधिकायाः संकेतसंबन्धिनी न कापि वाञ्छा, वर्षा-विलासदर्शनार्थं हर्म्यमारूढा । अकस्मात्पततः संकेतनिकुञ्जस्यावलोक-नाद्विषादो जातः। वाञ्छिताद्विरुद्धार्थस्य प्राप्तौ दुःखातिशयवदकस्माद्दुःख-प्राप्तावपि दुःखातिशयोऽनुभवसिद्धः। अत्र रससामग्र्यभावाच्छोकः संचारी न भवति ॥

इति विषादप्रकरणम्॥ ६२ ॥



## व्यतिरेकः ॥



अत्र वीत्युपसर्गार्थो विशेषः। अत्र विशेषशब्दार्थश्चेतरस्माद्व्यावर्तकोऽ-साधारणो धर्मः। उक्तं चिन्तामणिकोषकारेण "वि विशेषे। विशेषश्चेतरव्या-वर्तकोऽसाधारणो धर्मः"। इति। अतिरेकशब्दार्थः पृथग्भावः। उक्तं चिन्ता-

मणिकोषकारेण "अतिरेकः पृथग्भावे" इति। व्यतिरेक इति शब्दसमुदायार्थस्त्वितरस्माद्व्यावर्तकेनासाधारणधर्मेण पृथग्भाव इति ॥ एतत्कथनस्वारस्यादिदमर्थसिद्धं, समानवस्तूनां विशेषात्पृथग्भाव इति ॥

विशेषणातिरेको यो व्यतिरेको निगद्यते ।
बहवोऽस्य प्रकाराः स्युर्यशवन्तनराधिप! ॥

व्यतिरेकस्य चतस्रो रीतयो भवन्ति । उपमेयस्याधिक्य उपमेयाधिक्यम् । उपमानस्य न्यूनत्व उपमानन्यूनत्वम् । उपमेयाधिक्यस्योपमानन्यूनत्वस्य चोभयस्योक्तावुभयोक्तिः । उभाभ्यां विना व्यतिरेकेऽनुभयोक्तिरिति ॥

क्रमेण यथा--

विभवानन्दशोभाभिः सदृशो वज्रपाणिना ।
यशवन्तमहाराजो दातायं सर्वदा परम् ॥

अत्र केवलमुपमेयस्य राजराजेश्वरस्याधिक्यमभिहितम् ॥

वदनं शशिना तुल्यं पश्यामि तव भामिनि ।
सकलङ्कः क्षयी नित्यं दृश्यते रजनीकरः ॥

अत्र केवलं शशिन उपमानस्य न्यूनत्वं कथितम् । पूर्वोदाहरणे विभवादेः साधर्म्यं वाच्यम् । अत्राल्हादकत्वादिकं साधर्म्यं प्रसिद्ध्या प्रतीयते ॥

अपारसंपत्पदमत्युदारः
सुरेन्द्रतुल्यो यशवन्तसिंहः ।
आस्ते मरुत्वांस्त्रिदशाधिनाथो
राज्ञां सहस्रं परिसेवतेऽमुम् ॥

अत्र त्रिदशशब्दे श्लेषः । देवाः, त्रयस्त्रिंशच्च । सहस्रभूपपरिसेवितत्वं राजराजेश्वरस्योपमेयस्याधिक्यं, त्रयस्त्रिंशत एवाधिपत्यमिन्द्रस्योपमानस्य न्यूनत्वमित्युभयमुक्तमित्युभयोक्तिः ॥

यथावा—

समः करस्ते यशवन्तसिंह!
पद्मेन सौन्दर्यगुणादिकेन ।

परं च निर्याति करादृजालिः
पद्मादलीनां पटलीति भेदः ॥

अत्र राजराजेश्वरकरस्योपमेयस्याधिक्यं कमलस्योपमानस्य न्यूनत्वमित्युभयमुक्तमित्युभयोक्तिः ॥

फुल्लं सुरभि शोभाढ्यं पङ्कजाभं त्वदाननम् ॥
भ्रमद्भ्रमरमम्भोजं लोलनेत्रं मुखं तु ते ॥

अत्र भ्रमद्भ्रमरलोलनेत्ररूपवैलक्षण्येन पद्ममुखयोर्भेदो दर्शितः। अयं च भेद उपमेयाधिक्यस्योपमानन्यूनत्वस्य चानाधायकत्वादनुभयोक्तिरूपः ॥ यथावा—

दृढतरनिबद्धमुष्टेः कोषनिषण्णस्य सहजमलिनस्य।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥

अत्र कृपणकृपाणयोराकृतेर्भेदः। अनयोर्नाम्नोश्चैकमात्राकारेण द्विमात्राकारेण च स्वरेण भेदः। अत्राप्युपमेयस्याधिकताया उपमानस्य च न्यूनताया असत्त्वादनुभयोक्तिव्यतिरेकः। काव्यप्रकाशगतकारिकाकारादयो व्यतिरेकस्योक्तचतुःप्रकारानुक्त्वाऽत्रोपमानोपमेयभावस्य शब्दार्थाक्षिप्तत्वे द्वादश भेदा इति, पुनश्च श्लिष्टत्वाश्लिष्टत्वाभ्यां चतुर्विंशतिप्रकारा इत्युक्तवन्तः। मम तु मतं, इमानि सर्वाण्यप्युदाहरणान्तराणि, न तु प्रकारान्तराणि ॥ समानवस्तुनोः पृथग्भावे व्यतिरेकालंकारो भवति, न त्वसमानवस्तुनोः पृथग्भावे। अतः—

दिव्योत्तरीयभृति कौस्तुभरत्नभाजि
देवे परे दधतु लुब्धधियोऽनुबन्धम् ॥
रूपं दिगम्बरमखण्डनृमुण्डचूडं
भावत्कमेव तु बतेश मम स्पृहायै ॥

अत्र न व्यतिरेकालंकारः। भगवान्वेदव्यासो व्यतिरेकस्योपमाप्रकारत्वं स्वीकृत्येदं लक्षणमाज्ञापयति—

"बहोर्धर्मस्य साम्येऽपि वैलक्षण्यं विवक्षितम्।
यदुच्यतेऽतिरिक्तत्वं व्यतिरेकोपमा तु सा ॥" इति ॥

बहुभिर्धर्मैः साम्ये सत्यप्यतिरिक्तत्वं श्रेष्ठत्वरूपं वैलक्षण्यं यदुच्य-

ते सा व्यतिरेकोपमेत्यर्थः । अतिरेकशब्दार्थः श्रेष्ठत्वमपि । उक्तं हि चिन्तामणिकोषकारेण "अतिरिक्तः श्रेष्ठे" इति ॥ मम तु मतं, एतदलंकारचमत्कारस्य पर्यवसानमतिरेके । न तूपमायाम् । अतोऽस्योपमाभेदत्वकथनमसमीचीनम् । अपि च श्रेष्ठत्वनियमोऽप्यसमीचीनः । कुत इति चेदुपमानन्यूनत्वव्यतिरेके श्रेष्ठत्वरूपं वैलक्षण्यं नास्ति; किं त्वश्रेष्ठतारूपं वैलक्षण्यम् । तत्रोपमानस्य न्यूनत्व एव पर्यवसानम् । अतस्तत्रास्य लक्षणस्याव्याप्तिरपि भवति । दण्ड्याचार्यस्येदं लक्षणम्—

"शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः ।
तत्र यद्भेदकथनं व्यतिरेकः स कथ्यते ॥" इति ॥

भोजमहाराजस्येदं लक्षणम्—

"शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः ।
भेदाभिधानं भेदश्च व्यतिरेकश्च कथ्यते ॥" इति ॥

महाराजोऽस्य नाम परमतेन भेद इत्याह । सजातीयविजातीयप्रकारौ च प्रोवाच ॥

क्रमेण यथा—

अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः ।
दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥

स्वतःसिद्धान्धकारो, यौवनप्रभवाज्ञानरूपान्धकारश्च सजातीयौ ॥

पल्लवतः कल्पतरोरेष विशेषः करस्य ते वीर! ।
भूषयति कर्णमेकं परस्तु कर्णं तिरस्कुरुते ॥

अत्र राजा सुरतरुश्च विजातीयौ। अयं च श्लेषगर्भितः । कर्णः श्रवणं, कुन्तीपुत्रश्च । मम तु मतं, पूर्वोक्तानि सर्वाण्युदाहरणान्युपमाभित्तिकानि ॥

गजास्ते पर्वता राजन्परं त्वेते तु जङ्गमाः ॥

अयं रूपकभित्तिकः ॥

अनुच्छिष्टो देवैरपरिदलितो राहुदशनैः
कलङ्केनास्पृष्टो न खलु परिभूतो दिनकृता ।
कुहूभिर्नो लिप्तो न च युवतिवक्त्रेण विजितः

कलानाथः कोयं कनकलतिकायामुदयते ॥

अयमभेदभित्तिकः ॥

वने तवारिनारीणां यशवन्तधरापते!।
अरण्यौषधयो दीपाः कज्जलेन विनाऽभवन् ॥

अयं परिणामभित्तिकः । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"उपमानाद्यदन्यस्य व्यतिरेकः स एव सः॥" इति ।

उपमानादुपमेयस्य यो व्यतिरेकः स व्यतिरेकालंकार इत्यर्थः । सूत्रकारवामनस्येदं लक्षणम्—

"उपमेयस्य गुणातिरेकत्वं व्यतिरेकः॥" इति।

उपमेयस्योपमानापेक्षया गुणातिशयो व्यतिरेक इत्यर्थः । एते प्राचीना अतिरेकशब्दस्यार्थमतिशयं कुर्वन्ति । इदमुपमानादुपमेयस्यातिरेक इति तेषां कथनेन स्पष्टम् । अत्र धुरंधरस्य मतेऽतिरेकशब्दस्यार्थः पृथग्भावो विवक्षितः । न त्वतिशयः। कुत इति चेदुपमानस्य न्यूनतायामप्ययमलंकारो भवति । अतः प्राचीनानामयं प्रमादः ॥

क्षीणक्षीणोपि शशी भूयो भूयोऽभिवर्धते सत्यम् ।
विरम प्रसीद सुन्दरि! यौवनमानिवर्ति यातं तु ॥

इत्युदाहृत्य प्रकाशकार आह " इत्यादावुपमानस्योपमेयादाधिक्यमिति यत्केनचिदुक्तं तदयुक्तम् । अत्र यौवनगतमस्थैर्याधिक्यं हि विवक्षितम् " इति । सर्वस्वकारस्येदं लक्षणम्—

"भेदप्राधान्य उपमानादुपमेयस्याधिक्ये
विपर्यये वा व्यतिरेकः ॥" इति ॥

भेदप्रधानतायामुपमानादुपमेयस्याधिक्ये न्यूनतायां वा विवक्षितायां व्यतिरेकालंकार इत्यर्थः । सर्वस्वकार उपमेयन्यूनतायाः " क्षीणक्षीणोऽपि शशी " इतीदमेवोदाजहार । मम तु मतं, प्राचीनैरतिरेकशब्दस्यार्थोऽतिशय इत्यनेनाभिप्रायेण कृतः । वर्णनीयस्य न्यूनत्ववर्णनमनु-

चितमिति । तत्तु न समीचीनम् । कुत इति चेदुपमेयस्य न्यूनत्वमरुचिकरं चेदनुचितं भवति ॥

यथा—

सुधायाः सदृशं काव्यमानन्दैकनिकेतनम् ।
मृतमुज्जीवयत्याद्या न त्वन्त्यमिति भिन्नता ॥

परं तु क्वाप्युपमेयन्यूनताया अपि रम्यत्वेऽलंकारत्वं भवति ॥

यथा— "क्षीणक्षीणोपि शशी—"इत्यत्र। अत्र चन्द्रः शनैः शनैर्वर्धमानः पूर्णो भूत्वा पुनः शनैः शनैः क्षीणो भवति। तथा यौवनमपि शनैः शनैर्वर्धमानं पूर्णं भूत्वा पुनः शनैः शनैः क्षीणं भवति। परं तु चन्द्रस्तु वारं वारं पुनर्वर्धते। यौवनं क्षयं प्राप्य पुनर्न वर्धत इतीदमुपमेयस्य न्यूनत्वम्। अयं च मानमोचनोपाये नायिकां प्रति सख्युपदेशः। क्षीणं यौवनं चन्द्रवत्पुनर्नायाति, अत इदमलभ्यं वस्तु व्यर्थं मा गमयेति। अनया रीत्या यौवनस्य न्यूनता प्रकृतमानमोचने साधकत्वाद्रुचिकरा। प्रकाशकारादिपथगामी रसगङ्गाधरकारो वदति "अत्र मानमोचनोपाये चन्द्रस्तु पुनरागच्छतीति तस्य सुलभत्वम्। यौवनं तु पुनर्नागच्छतीति दुर्लभत्वादुत्कृष्टम्। अथ च यद्यत्र यौवनस्य न्यूनताङ्गीक्रियते, तदैतत्तुच्छयौवनार्थमहं मानं किमिति परित्यजेयमिति नायिकाया बुद्धेः संभवात्प्रकृतार्थस्य पोषणं न भवेत्" इति। मम तु मतं, प्रकाशकारादीनां मतं न समीचीनमिति। कुत इत्युक्तावस्योदाहरणस्य हठेनैवं योजनेप्युपमेयन्यूनतायाः प्राचीनानां निर्विवादोदाहरणान्यप्युपलभ्यन्ते। सर्वस्वकारानुगामी कुवलयानन्दकार उपमेयन्यूनताया इदमुदाहरणं ददौ—

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे! मामपि।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक! केवलमहं धात्रा सशोकः कृतः॥

अस्मिन्नुदाहरणे वर्णनीयनायकस्य सशोकत्वरूपन्यूनत्वं प्रकृतवियोगशृङ्गारपोषकत्वादुचितमेव। अत्र शोकः संचारी। तस्मादेताद्-

शोदाहरणेषूपमेयस्य न्यूनत्वं निर्विवादमेव । काव्यप्रकाशानुसारिरसगङ्गाधरकारो वदति "अस्मिन्नुदाहरणे व्यतिरेकालंकारो नास्ति। अस्मिन्काव्ये त्रिषु चरणेषूपमाया उक्तत्वात्तस्यां विश्रान्तावत्र विवक्षितविप्रलम्भशृङ्गारस्य प्रकर्षो न भवेत् । अतश्चतुर्थचरणगतोपमालंकारस्य दूरीकरणमुक्तदोषनिवारणमात्रम् । दोषनिवारणं चालंकारो न भवति।" इति । मम तु मतं, व्यतिरेकालंकारस्य साक्षात्स्वरूपपरिज्ञानाभावाद्रसगङ्गाधरकार एवमाह । व्यतिरेकस्य स्वरूपं त्वौपम्ये सति केनचिद्वैलक्षण्येन पृथग्भावः । अस्मिन्काव्ये तु कण्ठरवेणाप्यभिहितम् " सर्वं तुल्यम् " इति । एवं च व्यतिरेकालंकारे नोपमालंकारदूरीकरणविवक्षा । किं तु व्यतिरेकविवक्षा । उपमालंकारस्य दूरीकरणं तु "न तन्मुखस्य प्रतिमा चराचरे" इत्यसमालंकारे भवति । स त्वाक्षेपे मयान्तर्भावयिष्यते । व्यतिरेकालंकारे प्रथमं समतां प्रदर्श्य पुनः कस्मिंश्चिद्विषयेऽसमता प्रदर्श्यते । अत इयं शङ्का भवितुमर्हति, उपमामारभ्य पुनस्तस्यां विध्वंसो भग्नोपक्रमदोष इति कथमिदं भूषणमिति । उक्तं च—

"विषवृक्षोपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥ " इति ॥

अस्यां शङ्कायां च प्राचीना एवं समादधते । काव्यानन्द उद्वेगजनको दोषः । अत्र व्यतिरेकस्तु रोचकः । बहुष्वंशेषूपमां कृत्वैकस्मिन्नंश उपमादूरीकरणं शोभाविशेषं जनयति । यथा सुरतोपयोगितया वनितायाः कस्माच्चिदङ्गादाभरणदूरीकरणं शोभाविशेषं जनयति । सहृदयधुरंधरो ध्वनिकारः " सुकविस्तु रसानुकूलतया क्वचिदलंकारसंयोगं क्वचिदलंकारवियोगं च कुर्यात् " इति व्यवस्थाप्य " रक्तस्त्वं नवपल्लवैः " इत्यत्र श्लेषालंकारं दूरीकृत्य व्यतिरेकालंकारं स्थापितवान्। अस्यायमभिप्रायः। श्लेषस्यालंकारत्वे तस्य पृथक्प्रयत्नसाध्यतया रसाननुगुणत्वेन रसास्वादोत्कर्षो न भवेत् । व्यतिरेकस्य शोकरूपव्यभिचारिभावेन सहाभिन्नप्रयत्नसाध्यत्वादानुगुण्यम् । अतो न रसापकर्ष इति । मम मतेऽपि ध्वनिकारस्य मतं समीचीनम् । वनिता कविता चालंकारसंयोगेन शोभां प्राप्नुतः । तदुक्तं प्राचीनैः—

" वनिता कविता चैव सरसेऽप्यनलंकृते ॥
न शोभेतेतरां तस्माद्भूषितव्ये प्रयत्नतः ॥ " इति ॥

परंतु क्वाप्यतिरूपवत्या वनितायाः सर्वथा भूषणवर्जनमपि शोभाकरं भवति ॥

यथा—

काञ्चनाभरणानि त्वं मा धारय वराङ्गने! ।
दृश्यन्ते तानि ते देहे मालिन्यं दर्पणे यथा ॥

यथावा—

"भूषणैर्न हि ते शोभा शोभन्ते तानि तु त्वया॥"

एवं क्वापि कवितायामप्यलंकारवर्जनं शोभाकरं भवति ॥

यथा—

"न तन्मुखस्य प्रतिमा चराचरे ॥"

इत्यत्रोपमालंकारस्य वर्जनं शोभाविशेषमापादयति । उक्तरीत्योपमेयन्यूनतायाः संग्रहाभावात्काव्यप्रकाशगतकारिकाकारादिलक्षणान्यव्याप्तिदोषवन्ति । अथ च सर्वस्वकारो लक्षणे "विपर्यये वा" इति कथनेननास्य विषयस्य संग्रहं कृतवान् । धुरंधरस्य सर्वसंग्राहकं नामरूपलक्षणमेव समीचीनम् । प्राचीना वृथा गौरवं कृतवन्तः ॥

इति व्यतिरेकप्रकरणम् ॥ ६२ ॥

## व्याघातः ॥

व्याघात इत्यत्र घातशब्देन सह व्याङुपसर्गौ संयुक्तौ । आघातशब्द आस्फालनार्थे प्रसिद्धः । आस्फालनशब्दस्यापभ्रंशो लोकभाषायां "आफलना" इति । स एव च लोकभाषायां "टकराना" इति पदेनापि व्यवह्रियते । सामान्यतयाऽऽस्फालनं तु परस्परं युद्ध्यमानयोर्गजेन्द्रयोः कुम्भस्थलास्फालनवदास्फालनम् । परमेतादृशस्थलेऽलंकारत्वाई-

चमत्कारो न भवति। अलंकारत्वार्हचमत्कारस्त्वाघातविशेष एकत आस्फालने भवति। स च लोकभाषायां "धक्का" इत्युच्यते। अत एव धुरंधरेणाघातशब्देन सह विशेषवाचको वीत्युपसर्गो योजितः। व्याघात इति शब्दसमुदायार्थस्त्वाघातविशेषः। आघातशब्दार्थं कुर्वता चिन्तामणिकोषकारेण "आस्फालनं ताडने। ताडनमाघाते। आघात आघट्टनायाम्" इत्युक्तम्। आघट्टनाशब्दश्च माघकाव्यस्य प्रथमसर्गे दशमश्लोके लोकप्रसिद्धधक्काशब्दार्थे प्रयुक्तः॥

यथा—

रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः।
स्फुटीभवद्ग्रामविशेषमूर्छनामवेक्षमाणं महतीं मुहुर्मुहुः॥

अत्रेदमपि संभवति, आघातशब्दार्थ एव वीत्युपसर्गार्थं इति॥

व्याघातो मरुभूपाल! व्याघातालंकृतिर्भवेत्।
गजेषु दृश्यते ते सा दुर्गभङ्गविधायिषु॥

नेदं व्याघातालंकारस्योदाहरणं, किं तु लोकव्याघातस्य। एवमन्यत्रापि बोध्यम्। धुरंधरस्येदमुदाहरणम्—

प्रिया भीरव इत्युक्त्वा कथं नाथ! प्रमुञ्चसि।
तवारिवनिता एवं वदन्ति मरुवल्लभ!॥

अत्र वनप्रयाणसमये राजराजेश्वरस्य शत्रवो यूयं प्रियाः स्थ, भीरवः स्थ, अतो सहगमनयोग्या न स्थ, इति स्वयोषितः प्रति वने सहनयनाभावे निमित्तान्यभिहितवन्तः। योषितस्तु तान्येव वने सह नयने निमित्तानि प्रतिपाद्य पत्युक्तनिमित्ततायां व्याघातं कुर्वन्ति। पुनर्धुरंधरस्येदमुदाहरणम्—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः॥

हरो दृष्टिमात्रेण मनसिजं ददाह। अस्य हरसामर्थ्यस्य वामलोचना दृष्ट्यैव मनसिजं जीवयित्वा व्याघातं कुर्वन्ति। आभ्यामुदाहरणाभ्यां भ्रमित्वा येनोपायेन साधितं वस्त्वन्येन तेनैवोपायेनान्यथा क्रियते स व्याघात इति जानन्काव्यप्रकाशगतकारिकाकार इदं लक्षणमाह—

"यद्यथा साधितं केनाप्यपरेण तदन्यथा ॥
तथैव यद्विधीयेत स व्याघात इति स्मृतः ॥" इति॥

सर्वस्वकारो धुरंधरस्योक्तप्रथमोदाहरणे निमित्ते प्रकृतकार्यकरणापेक्षया विरुद्धकार्यकरणे सुकरता व्याघात इति जानन्निदं लक्षणमाह—

"सौकर्येण कार्यविरुद्धक्रिया च व्याघातः ॥" इति ॥

अस्याभिप्रायस्तु निमित्ते प्रकृतकार्यकरणापेक्षया विरुद्धकार्यकरणे सुकरता भवेदिति । अस्योदाहरणं च "प्रिया भीरवः" इत्येव प्रददौ । अत्र सर्वस्वलक्षणस्य संगतिस्त्वेवम् । शत्रवः स्त्रीणां गृहेऽवस्थाने यानि कारणविशेषाण्युक्तवन्तस्तेषु गृहावस्थानापेक्षया वने सहनयनरूपविरुद्धकार्यकारितायां सुकरतास्ति । स एव च धुरंधरस्य द्वितीयोदाहरणार्थं काव्यप्रकाशगतकारिकाकारानुसारीदं लक्षणमाह—

"यथासाधितस्य तथैवान्येनान्यथाकरणं व्याघातः ॥"इति॥

येन प्रकारेण यत्साधितं तस्य तेनैव प्रकारेणान्यथाकरणं व्याघात इत्यर्थः । सर्वस्वकारो वृत्तौ "प्रिया भीरवः" इत्युदाहरणार्थं संभाव्यमानकारणविशेष इत्युक्तवान् । तस्यायमभिप्रायः । संभाव्यमानकार्यस्यान्यथा करणमिति । "प्रिया भीरवः" इत्यत्र वने सहनयनं सिद्धं नास्ति, किं तु संभाव्यमानम् । "दृशा दग्धम्"इत्युदाहरणार्थं सिद्धस्य कार्यस्यान्यथा करणमित्युक्तम् । तस्याभिप्रायस्त्वत्र मनोजस्य दग्धदशा सिद्धेति । रत्नाकरकारः "दृशा दग्धम्" इति धुरंधरोदाहरण उत्पत्तिविनाशयोरेकोपायत्वं व्याघात इति जानन्निदं लक्षणमाह—

"उत्पत्तिविनाशयोरेकोपायत्वे व्याघातः ॥" इति ॥

पुनरपि धुरंधरस्येदमुदाहरणम्—

यैर्जगत्प्रीयते हन्ति तैरेव कुसुमायुधः ॥

अत्र नामार्थसंगतिरेवम् । मनोजः कुसुमशरैर्विश्वं हत्वा कुसुमानां प्रीणनत्वस्य व्याघातं कृतवानिति । चन्द्रालोककारोस्मिन्नुदाहरणेऽन्यथाकार्यकारि तादृशकार्यकारि क्रियते चेत्स व्याघात इति जानन्निदं लक्षणमाह—

"स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत्॥" इति॥

कुवलयानन्दकारोऽनेन लक्षणेन "दृशा दग्धम्" इत्युदाहरणस्यापि संग्रहं कर्तुमुक्तलक्षणस्येममप्यर्थं करोति। "यद्यत्साधनतया केनचिदुपात्तं, तदन्येन तत्प्रतिद्वन्द्विना तद्विरुद्धसाधनं क्रियेत चेत्सोपि व्याघातः" इति। "प्रिया भीरवः" इत्येतादृशधुरंधरोदाहरणार्थं चन्द्रालोककार इदं द्वितीयं लक्षणमकरोत्—

"सौकर्येण निबद्धापि क्रिया कार्यविरोधिनी॥" इति॥

कार्यविशेषनिष्पादकतया केनचित्संभाव्यमानादर्थादन्येन कार्यविरोधिक्रिया सौकर्येण समर्थ्यते चेत्सोपि व्याघात इत्यर्थः। कार्यविरुद्धक्रियायां सौकर्यं कारणस्य सुतरां तदानुगुण्यम्। धुरंधरस्य पुनरिदमुदाहरणम्—

यत्र सुरतप्रदीपा निष्कज्जलवर्तयो महामणयः॥
माल्यस्यापि न गम्या हृतवसनवधूविसृष्टस्य॥

अस्मिन्धुरंधरोदाहरणे व्याघातालंकारस्य संगतिस्त्वेवम्। मुग्धा नायिका सुरतसमये माल्यवसनादिभिर्दीपनिर्वापणं करोति स्म। नायको रत्नदीपेन नायिकाया उद्योगमस्य व्याघातमकरोत्। केनापि प्रकारेणाघट्टनं चमत्कारकारि चेत्तत्र व्याघातालंकारो भवति। अस्योदाहरणस्य स्वारस्यमजानन्रुद्रट एवमजानात्। अत्र सुरतसमये वसनविहीननायिकया प्रक्षिप्तेन माल्येनानिर्वापितोऽपि रत्नदीपः कारणं, कज्जलं कार्यं नोत्पादयतीति। तदेव च व्याघातनाम्नोऽयमर्थः कृतः। "विगत आघातो हननं यस्मिन्सः" इति। अत्र वीत्युपसर्गो गतार्थे, आघातशब्दश्च हननार्थे स्वीकृतः। आह चिन्तामणिकोषकारः। "वि गते। आघाते। हनने" इति। रुद्रटः स्वमतानुसारेणेदं लक्षणमाह—

अन्यैरप्रतिहतमपि कारणमुत्पादकं न कार्यस्य॥
यस्मिन्नभिधीयेत व्याघातः स इति विज्ञेयः॥" इति॥

मम तु मतं, प्राचीनानामखिलेष्वपि लक्षणेषु कार्यकारणसंबन्धिचमत्कारप्रतिपादनात्तेषामसंख्येये विचित्रहेतावन्तर्भावः। रुद्रटोक्तलक्षणलक्षितो व्याघातस्तु प्राचीनमते विशेषोक्त्यलंकारो भोजमते च चित्रहेतुः।

नामार्थरूपसर्वव्यापिलक्षणेनैवास्यालंकारस्य साक्षाज्ज्ञाने सति लभ्यो-दाहरणानुसारेण भिन्नभिन्नासमञ्जसलक्षणनिर्मितिस्तु प्राचीनानां प्रमादः। एषां न किमपि लक्षणं व्याघातस्य साक्षात्स्वरूपप्रकाशकम्। काव्यप्रकाशगतकारिकाकारलक्षणानुसारेण "प्रिया भीरवः" इत्येता-दृशोदाहरणेषु तु प्रकृतस्यान्यथाभवनरूपः परिणामः। पर्यायस्य प्रथ-मप्रकारो वा। तद्यथा, उक्तनिमित्तयोः प्रथमं वने सहनयनाभावेऽन्वित-त्वम्, पुनश्च वने सहनयनेऽन्वितत्वमिति। "दृशा दग्धम्" इत्युदा-हरणेऽपि च प्रकृतस्यान्यथाभवनरूपः परिणामः। किं च सर्वस्वस्य "सौकर्येण–" इत्यादिलक्षणानुसारेण "प्रिया भीरवः–" इत्युदाहरणे कारणे कार्यसमुच्चयात्समुच्चयालंकारः। कारणे प्रकृतकार्यकरणसामर्थ्या-पेक्षया तद्विरुद्धकार्यकरणसामर्थ्यस्याधिक्यादधिकालंकारो वा। "दृशा दग्धम्" इत्युदाहरणे रत्नाकरकारलक्षणानुसारेण विरोधालंकारोऽधिको वा-ऽलंकारः। दण्डयाचार्यो विरोधालंकारस्य "प्रावृषेण्यैर्जलधरैः–"इत्युदाज-हार। वक्ष्यमाणोदाहरणेषु धुरंधरनामार्थानुसारेण व्याघातालंकारस्य स्फु-टत्वं, प्राचीनाखिललक्षणानामव्याप्तिदोषग्रस्तत्वं च॥

यथा—

कुर्वे भृकुटिमाबध्य कृच्छ्रेण कठिनं मनः।
तथापि माधवे दृष्टे दृङ्मे भवति हासयुक्॥

अत्र माधवदर्शनानन्दो राधिकाया मानस्य व्याघातकरः॥

शष्पाच्छन्नधरा पथामविषयोऽगाधः प्रवाहः परं
वारीणां च घनान्धकारवशतोऽहोरात्रभेदोऽपि न॥
गेहाद्गेहगमोऽपि दुर्लभतरो दूरप्रवासी कथं
चैताहक्समये समागमपरो भूयाच्च दोषोऽपि कः॥

अत्र प्रोषितपतिकया नायिकया वर्षर्तौरवधावनागमनं नायका-पराधत्वेनोपन्यस्तं, तत्र सख्या वर्षर्तावागमने दुर्घटतां प्रतिपाद्योक्तना-यकापराधस्य व्याघातः कृतः॥

सायंकालप्रभृति सकलो रञ्जितो लोकवृन्दः
प्रातर्यावन्नटसुविदुषा हावभावादिकैस्तु।

आलोकात्ते सुमुखि! वदनेन्दोर्यथा कौतुकं त-
ज्जातं यस्मात्सकलपरिषत्ते मुखासक्तचेताः ॥

अत्र नायिकासौन्दर्येण नटसंबन्धिनाटकानन्दस्य व्याघातः कृतः ॥

॥ इति व्याघातप्रकरणम् ॥ ६४ ॥

## शृङ्खला

परस्परं संबद्धलोहादिवलयपरंपरायां शृङ्खलेति लोकव्यवहारः। तन्न्यायेन केनापि संबन्धेन पदार्थानां परंपरयार्थसंकलने धुरंधरेण शृङ्खला-ऽलंकारः स्वीकृतः ॥

" शृङ्खला तु पदार्थानां शृङ्खलाऽलंकृतिर्भवेत् ॥
तवेभबन्धनन्यायाल्लोकैर्ज्ञाता नराधिप! ॥"

यथा—

नयने श्रुतिपर्यन्तं श्रुती च बाह्वोस्तटे सुविश्रान्ते।
बाहू च जानुलम्बौ श्रीमद्यशवन्तभूपस्य ॥

अत्र राजराजेश्वरस्य नेत्राद्यवयवानां स्थितिरुत्तरोत्तरं शृङ्खलान्यायेन निबद्धेति शृङ्खलाऽलंकारः। रत्नाकरकारस्त्वेनं शृङ्खलालंकारमाह। काव्यप्रकाशगतकारिकाकारादयोऽस्य नामैकावलीत्याहुः। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

" स्थाप्यतेऽपोह्यते वापि यथापूर्वं परं परम्।
विशेषणतया यत्र वस्तु सैकावली द्विधा " इति।

पूर्वं पूर्वं प्रति यथोत्तरस्य वस्तुनो वीप्सया विशेषणभावेन यत्स्थापनं निषेधो वा संभवति सा द्विधा बुधैरेकावली भण्यत इत्यर्थः ॥

क्रमेण यथा—

पुराणि यस्यां सवराङ्गनानि
वराङ्गना रूपपुरस्कृताङ्ग्यः।

रूपं समुन्मीलितसद्विलास-
मस्त्रं विलासाः कुसुमायुधस्य ॥

यथावा-

वाताहारितया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।
तेपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥

उक्तोदाहरणेषु विधानम् ॥

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोसौ कलगुञ्जितो न यो
न गुञ्जितं तन्न जहार यन्मनः ॥

अत्र निषेधः ॥ मम तु मतं, स्थापनापोहने उदाहरणान्तरे एव । न तु प्रकारान्तरे । लक्षणे स्थापनापोहनकथनं गौरवावहम् । अथ चास्यालंकारस्य नामैकावलीत्याह । तदपि न समीचीनम् । कुत इति चेदावलीति नाम पङ्क्तेः । अस्यालंकारस्य स्वरूपं शृङ्खलान्यायेन परंपरया पदार्थानां संकलनं, न तु पदार्थानां पङ्क्तिमात्रम् । लोकशृङ्खलायां वलयानां पङ्क्तिरपि वर्तते । परंतु तत्र मुख्यता गुम्फने । तथैव "नयने श्रुतिपर्यन्तम्-" इत्यादिस्थले पदार्थानां पङ्क्तिर्वर्तते, तथाप्यत्र चमत्कारस्त्वेतेषां पदार्थानां गुम्फने । मालादीपकस्य कारणमालायाश्च पृथक्पृथगलंकारत्वमङ्गीकुर्वन्तः काव्यप्रकाशगतकारिकाकारादयः--

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ॥
कोदण्डेन शराः शरैरिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥

अस्य मालादीपकस्य--

जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते ॥
गुणप्रकर्षेण जनोऽनुरज्यते
जनानुरागप्रभवा हि संपदः ॥

अस्याः कारणमालायाश्च व्यावृत्तय एकावलीलक्षणे विशेषणतयेति विशेषणमददुः। मम तु मतं, अयमपि प्रमादः। कुत इति चेदेकक्रियादीनामनेकत्र योजनं दीपकस्य स्वरूपम्। उत्पादकत्वं कारणस्य स्वरूपम्। आसु मालास्वंशत्रयमस्ति। पदार्थानां समुदाय एकः। पदार्थानां परंपरया गुम्फनं द्वितीयः। एकस्याः क्रियाया अनेकत्र लगनं तृतीयः। तत्र "सङ्ग्रामाङ्गणम्" इत्यस्मिन्नुदाहरणे कोदण्डादिपदार्थानां समुच्चये चमत्काराभावान्न समुच्चयालंकारः। अत्र चमत्कारस्तूत्तरोत्तरं गुम्फनस्य। यद्यपि "सङ्ग्रामाङ्गणम्" इत्यत्र कोदण्डादीनामनेकपदार्थानां स्पर्शनक्रियाया एकत्वाद्दीपकांशो वर्तते, परंतु स गुम्फनचमत्काराद्गौणः। ईदृशं दीपकं शृङ्खलायाः सर्वेषूदाहरणेषु भवति। "जितेन्द्रियत्वं विनयस्य कारणम्" इत्यत्रापि जितेन्द्रियत्वादीन्येकैकस्य कारणानि। एतेषां सर्वेषां कारणत्वेऽपि कारणानां माला तु यत्रैकस्य कार्यस्यानेकानि कारणानि तत्र भवति। अत्रापि मुख्यचमत्कारस्तूत्तरोत्तरं गुम्फनस्यैव वर्तते। अतो मालादीपककारणमालयोर्वारणाय काव्यप्रकाशगतकारिकाकारादीनां लक्षणे विशेषणतयेति विशेषणमपि व्यर्थमेव। रत्नाकरकारस्तु मालादीपककारणमालयोरप्युदाहरणयोः शृङ्खलाऽलंकारमङ्गीचकार। तत्समीचीनम्। भोजमहाराज एकावल्याः परिकरेऽन्तर्भावं कृतवान्। अथ चैकावलीं पङ्क्तिरूपामङ्गीकृत्य शब्दैकावली, अर्थैकावली, उभयैकावलीत्येवं प्रकारत्रयमाह। तत्र शब्दैकावल्या इदमुदाहरणम्—

पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतं गहनम्।
हरिमिव हरिमिव हरिमिव वहति पश्यत पयोष्णी ॥

पर्वतभेदन इन्द्रमिव। पवित्रतायां सूर्यमिव। नरकस्य जये विष्णुमिव। मम तु मतं, इन्द्र इव, सूर्य इव, विष्णुरिव पयोष्णीपय इत्येवं कथने पङ्क्तिरूपचमत्कारो न भवति। अत्र चमत्कारस्तु हरिशब्दस्यानेक-

वारं कथने । अयं चमत्कारस्त्वनुप्रासालंकारस्य । रत्नाकरकारस्येदं लक्षणम्--

"उत्तरोत्तरस्य पूर्वपूर्वानुबन्धित्वं विपर्ययो वा शृङ्खला॥" इति॥

उत्तरोत्तरस्य पूर्वं पूर्वं प्रति साकाङ्क्षत्वं, पूर्वपूर्वस्योत्तरोत्तरं प्रति साकाङ्क्षत्वं वा शृङ्खलेत्यर्थः ॥

क्रमेण यथा--

मन्मथः प्रविशति स्म सुरायां
सा कुरङ्गकदृशां वदनेषु ।
तानि चेतसि महीतिलकस्य
क्ष्मापचित्तमथ रागपयोधौ ॥

राज्ञश्चेतो रागपयोधौ कुतः प्रविशति स्म । राज्ञश्चेतसि स्त्रीणां वदनानि प्रविष्टानीति । स्त्रीणां वदनानि राज्ञश्चेतसि कुतः प्रविष्टानि, स्त्रीणां वदनेषु सुरा प्रविष्टेति । सुरा स्त्रीणां वदनेषु किमिति प्रविष्टा,सुरायां मन्मथः प्रविशति स्मेति । एवं रीत्योत्तरोत्तरस्य पूर्वं पूर्वं प्रति साकाङ्क्षत्वम् । "जितेन्द्रियत्वं विनयस्य कारणम्" इत्यत्र जितेन्द्रियत्वं किमर्थं, विनयार्थम् । विनयः किमर्थं, गुणप्रकर्षार्थम् । गुणप्रकर्षः किमर्थं, जनानुरागार्थम् । जनानुरागः किमर्थं, संपदर्थमिति पूर्वपूर्वस्योत्तरोत्तरं प्रति साकाङ्क्षत्वम् । मम तु मतं, उत्तरोत्तरस्य पूर्वपूर्वापेक्षा, पूर्वपूर्वस्य चोत्तरोत्तरापेक्षेत्युदाहरणान्तरमात्रम् । न तु प्रकारान्तरम् । अतो लक्षणेऽनयोः कथनं गौरवम् । अलंकारतिलके शब्दपरिवर्तनासहनादेकावली शब्दालंकार इत्युक्तम् । मम तु मतं, अस्यायं प्रमादः । अस्यालंकारस्य स्वरूपं तु पदार्थानां परंपरया गुम्फनम् । न तु शब्दगुम्फनम् ॥

नेत्रे कर्णान्तविश्रान्ते श्रोत्रे दोःस्तम्भदोलिनौ ॥
भुजौ च जानुपर्यन्तप्रलम्बनमनोहरौ ॥

इति शब्दपरिवर्तनेऽपि शृङ्खलालंकारो भवत्येव । यथा "इन्दुश्चन्द्र इव" इत्युक्तावप्यनन्वयो भवति। परं तु "इन्दुरिन्दुरिव" इत्युक्तौ पदलालित्येन शीघ्रबोधहेतुतयौचित्यमात्रम् । एवं शृङ्खलायामपि तस्य शब्दस्य

पुनः कथन औचित्यमात्रम् । मम तु मतं, लोकशृङ्खलान्यायेन शृङ्खलाऽलंकारः स्वीकृतः । तत्र वस्तूनां केनापि संबन्धेन परंपरया गुम्फने शृङ्खलालंकारो भवेत् । शब्दमात्रस्य गुम्फने शृङ्खलालंकारो न भवति । "नयने श्रुतिपर्यन्तं" इत्यत्रावयवानां सामीप्यसंबन्धेन परंपरया गुम्फनम् । "पुराणि यस्याम्" इत्यत्र पदार्थानामाकाङ्क्षासंबन्धेन परंपरया गुम्फनमिति । एवमन्यत्राप्यूह्यम् ॥

॥ इति शृङ्खलाप्रकरणम् ॥ ६५ ॥

---

## ॥ श्लेषः ॥

---

श्लिष्धातोर्भावे घञि श्लेषशब्दो निष्पन्नः । श्लिष्धातोरालिङ्गनमर्थः । "श्लिष आलिङ्गने" इति शास्त्रात् । आलिङ्गनमनेकेषां भवति । अत्रान्यत्रातिव्याप्तिवारणाय शब्दार्थयोरालिङ्गने रूढिः ॥

शब्दस्य यदिवाऽर्थस्य श्लेषो यत्र तु वर्ण्यते ॥
श्लेषालंकरणं तत्र जानीहि मरुनायक! ॥

सर्वस्वकारस्यायं सिद्धान्तः । सभङ्गपदे जतुकाष्ठन्यायेन शब्दद्वयमिलनाच्छब्दश्लेषः । अभङ्गपदे त्वेकवृन्तगतफलद्वयन्यायेनार्थद्वयस्यैकशब्दगतत्वादर्थश्लेषः ॥

क्रमेण यथा—

हरसे रम्याम्भोजश्रियं ददासि श्रियं कुवलयाय ॥
कस्माद्व्यतिक्रमस्ते रविकुलयशवन्तराजेश! ॥

"रम्याम्भोजश्रियम्" इत्यत्रार्थद्वयं विवक्षितम् । एकस्तु कमलानां रम्या शोभेति । एतदर्थकरणाय "रम्याम्भोजश्रियम्" इत्यभङ्गशब्दो बुध्यते । "रम्य–अम्भोजश्रियं" इत्यनयोः शब्दयोः संधिकरणात् "रम्याम्भोजश्रियं" इत्येकः शब्दो जातः । द्वितीयस्तु "रम्यां भोजनृपतिश्रियम्" इत्येतदर्थकरणाय "रम्यां, भोजश्रियम्" इति शब्दद्वयं बुध्यते । तदा चात्र द्वितीयाविभक्तेरन्तःपातित्वेन "रम्यां भोजश्रियम्" इति । समु-

दायस्य " रम्यां, भोजश्रियम् " इति भङ्गो बुध्यते। एवं चात्राभङ्गसभङ्गशब्दयोर्जतुश्लिष्टकाष्ठद्वयपट्टिकावच्छ्लिष्टत्वप्रतीतिः। अत्र शब्दद्वयबुध्याऽर्थद्वयं विहितम्। अतोऽत्र नार्थश्लेषः। किं तु शब्दश्लेषः। अपि च " कुवलये " इत्यत्राप्यर्थद्वयाविवक्षा। एकस्तु रात्रिविकासिकमलमिति। अयं तु कुवलयशब्दस्य समुदायशक्तिबोध्योऽर्थः। द्वितीयस्तु भूमण्डलमिति। अत्र " कु " इत्यवयवस्यार्थो भूमिः। " वलय " इत्यवयवस्यार्थो मण्डलम्। अयं च कुवलयशब्दस्यावयवशक्तिबोध्योऽर्थः। एवं चात्र कुवलयशब्दोऽर्थद्वयेऽप्येक एव बुध्यते। अतोऽत्रैकस्मिञ्छब्दे एकवृन्तगतफलद्वयन्यायेनार्थद्वयं वर्तते॥

यथावा—

असावुदयमारूढः कान्तिमान् रक्तमण्डलः।
राजा हरति लोकस्य हृदयं मृदुलैः करैः॥

अत्रोदयारूढ उदयाचलं प्राप्तः, वृद्धिं प्राप्त इति च। कान्तिमान् प्रकाशवान्, शोभावांश्च। रक्तमण्डलोऽनुरक्तदेशः, रक्तबिम्बश्च। राजा नृपतिः, चन्द्रश्च। कराः किरणाः, राजग्राह्यभागाश्च। इत्युदयारूढादिशब्दानां पदभङ्गमन्तरेणार्थद्वयप्रतिपादनादेकवृन्तगतफलद्वयन्यायादर्थश्लेषः। एकवृन्तगतफलद्वयन्यायस्त्वयम्, एकशब्दगतयोर्द्वयोरर्थयोर्युगपद्दर्शनम्। उद्भटस्यायं सिद्धान्तः " अर्थमुखप्रेक्षणं विनैव यत्र शब्दश्रवणमात्रेण चमत्कारस्तत्र शब्दालंकारः। यथाऽनुप्रासः। " रम्याम्भोजश्रियम् " इत्यत्र सभङ्गपदस्थलेपि शब्दश्रवणमात्रेण न कश्चिच्चमत्कारः। चमत्कारस्त्वर्थद्वयविचारादेव भवति। अतः सभङ्गपदाभङ्गपदस्थलयोरर्थालंकार एव " इति॥ प्रकाशकारादीनां सिद्धान्तस्तु सभङ्गाभङ्गपदस्थलद्वयेपि शब्दालंकार एव। कुत इति चेत्सकृदुच्चारितः शब्दः सकृदेवार्थं गमयति। उदयारूढादिशब्दानामर्थद्वयार्थं द्विरावृत्तिर्भवति। चन्द्राभिप्रायेणैकवारमावृत्तिः। राजाभिप्रायेण द्वितीयवारमावृत्तिः। तदा च शब्दद्वयभावाच्छब्दश्लेष एव। अथ च शब्दे स्थित्वा मनोरञ्जकत्वहानिकरः शब्ददोषः। अर्थे स्थित्वा मनोरञ्जकताया हानिकरोऽर्थदोषः॥

शब्ददोषो यथा—

मृदुपवनविभिन्नो मत्प्रियाया विनाशा-
द्घनरुचिरकलापो निःसपत्नोऽद्य जातः।
रतिविलुलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्ही ॥

अत्र विनाशशब्दस्य मरणार्थप्रतीतिकरत्वादमङ्गलत्वम्। तत्स्थाने वियोगादिति पाठे दोषनिवृत्तिः। अत्र शब्दपरिवृत्तेरसहनादयं शब्ददोषः॥

अर्थदोषो यथा—

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम्।
कर्णालं संभ्रमेण व्रज कृप! समरं मुञ्च हार्दिक्य शङ्कां
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः॥

अत्र "अलं संभ्रमेण" इत्युक्त्वा पुनस्तदर्थकस्यैव "को भयस्यावकाशः" इति निष्प्रयोजनकथनस्य पुनरुक्तत्वम्। अत्रोभयोः स्थले पर्यायान्तरानिवेशेऽपि दोषनिवृत्तेरभावादर्थदोषत्वम्॥ एवमेव "असावुदयमारूढः" इत्यत्रोदयारूढादिशब्दस्थले पूर्वारूढादिशब्दसंनिवेशे श्लेषो निवर्तते। अतोऽत्र श्लेषजीवनं शब्द एव। अनेन न्यायेनाभङ्गपदमपि शब्दालंकारः। अर्थाधीनोऽर्थश्लेषस्तत्र शब्दपरिवृत्तावपि श्लेषहानिर्न भवति॥

यथा—

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥

अत्रोन्नतिशब्दस्थान उच्चैरिति, अधःशब्दस्य स्थाने नीचैरिति शब्दस्थापनेऽपि श्लेषहानिर्न भवति। पदपरिवर्तनस्य सहनादयमर्थश्लेषः। मम तु मतं, शब्दपरिवर्तनासहनसहनत्वाभ्यां शब्दार्थदोषालंकारविभागव्यवस्था स्थूलविचारमूला। यथेवादिवाचकशब्दप्रयोगेणोपमाद्यलंकारपरिज्ञानम्। सूक्ष्मविचारेण तु शब्दे स्थित्वा यो

मनोरञ्जको भवति स शब्दालंकारः । अर्थे स्थित्वा यो मनोरञ्जको भवति सोऽर्थालंकारः । यथा लोके श्रवणे स्थित्वा शोभां करोति स श्रवणालंकारः। कण्ठे स्थित्वा शोभां करोति स कण्ठालंकारः । तथैव शब्दे स्थित्वा मनोरञ्जकताहानिकरः शब्ददोषः । अर्थे स्थित्वा मनोरञ्जकताहानिकरोऽर्थदोषः । तथा च "रम्याम्भोजश्रियम्" इत्यत्रोक्तरीत्या शब्दश्लेषः । कुत इत्युक्तौ प्रथमं शब्दद्वयज्ञानं विनाऽर्थद्वयज्ञानं न भवतीति । अपि च "कुवलय" इत्यत्राप्यनुभवसिद्धः शब्दश्लेष एव । कुत इति चेदत्रापि शब्दद्वयं बुध्यते । एकस्तु "कुवलय" इति समुदायात्मकः । द्वितीयस्तु "कुवलय" इति चावयवद्वयात्मकः । अथ च "असावुदयमारूढः" इत्यत्रोदयादिशब्दैरुदयस्य वृद्धेश्चेत्याद्यनेकार्थावबोधः "उदयारूढः" इत्यादिशब्दानामेकवारं बोधाद्भवति । कुत इति चेत्कोशे चैतेषां शब्दानां नानाऽर्थता कथिता । एवं रीत्यात्रार्थश्लेष एव । एवं "स्तोकेनोन्नतिमायाति" इत्यत्रापि तुलाकोटेरुन्नत्यवनती चान्ये । खलपुरुषस्योन्नत्यवनती चान्ये । तथाप्यत्रानयोः शब्दयोरेकवारं बोधादुभयप्रकारकोन्नत्यवनत्योर्बोधो भवति । अतोऽत्राप्यर्थश्लेषः । अथ चैकेन धर्मेणानेकवस्तूनां प्रतिपादने न श्लेष इत्यत्र सर्वेषां संमतिः ॥

यथा—

मरालाश्च युवानश्च हृष्यन्ति शरदागमे ॥

अत्र हंसहर्षस्य यूनां हर्षस्य चैकेन हर्षत्वधर्मेण प्रतिपादनम् । परं त्वत्र न श्लेषः । उद्भटादीनामयं सिद्धान्तः । अलंकारान्तरं विना केवलश्लेषस्योदाहरणं न भवतीति । "रम्याम्भोजश्रियम्" इत्यत्र विरोधाभासः ॥

सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव ॥

अत्रोपमालंकारः ॥

किमयममरराणः शंकरो वाथ सिन्धु-
रशरणशरणोऽथानन्तसङ्गो निधानम् ॥
हुतभुजि कृतरागः स्तावकः केशवोऽस्य
निवसति निकटेऽस्य द्वेषिवर्गो मिलित्वा ॥

चित्रकूटाधिपतिमहाराणाऽमरसिंहपक्षे—अशरणनराणां शरणप्रदः, पङ्गुपालनं राज्ञां विरुदम्। अनन्तलोकाः सङ्गे यस्य सः,भूनिक्षिप्तधनरूपः, लोकानां विपदि जीवनरूप इत्यर्थः। उक्तं चिन्तामणिकोषकारेण "निधीयते निक्षिप्यते तत्कालं भोगायोग्यतया कालान्तरोपभोग्यं वस्त्वस्मिन्निति निधानम्" इति ॥ अग्निहोत्रानुष्ठाता, कविप्रियानामकभाषाग्रन्थकर्तृकेशवमिश्रकविना स्तुतः, यस्यान्तिकेऽनेके भूपतयो वैरं विहाय निवसन्तीति ॥ शंकरपक्षे— देवद्रोहितयाऽशरणानामसुराणां शरणप्रदः, बाणादयो बहवोऽसुराः शंभोः शरणमलभन्तेति पुराणेषु प्रसिद्धम्। अनन्तस्य शेषस्य सङ्गो यस्य सः, हारत्वेन शेषस्य धारणात्। कार्यसमाप्त्यनन्तरं प्रवेशस्थानं निधानमित्युच्यते। उक्तं चिन्तामणिकोषकारेण "निधानं कार्यावसाने प्रवेशस्थाने" इति। प्रलयसमये विश्वं शंकरे लीयत एव। तृतीयलोचनेऽग्निधरत्वं सुप्रसिद्धम्। केशवेन विष्णुना स्तुतः। विष्णुकृता शंकरस्तुतिः पुराणेषु प्रसिद्धतरा। स्वस्य वाहनं वृषभः, पार्वतीवाहनं च सिंहः, स्वस्य भूषणं सर्पः, कार्तिकेयगणेशवाहने च मयूरमूषकौ, एते परस्परविरोधिनः शंकरस्य समीपे सदाऽविरोधितया निवसन्तीति। सिन्धुपक्षे—शरणरहितस्य मैनाकगिरेः शरणप्रदः, अनन्तस्य शेषस्य सङ्गः संबन्धो यस्य सः, विष्णोः शय्यात्वेन शेषस्य समुद्रे स्थितिः प्रसिद्धा। निधानं शङ्खनिधिर्विद्यतेऽस्मिन्निति, उक्तं चिन्तामणिकोषकारेण "निधानं शङ्खपद्मादिनिधौ" इति। सिन्धुर्वडवानलं धारयत्येव, केशवेन विष्णोरवतारेण रामचन्द्रेण स्तुतः, सेतुबन्धनात्पूर्वं रामचन्द्रेण समुद्रस्य विनयः कृतः, तदवमानने चाग्नेयास्त्रसंधानमिति वाल्मीकीयरामायणे प्रसिद्धम्। विषामृतादयः परस्परविरोधिनो यत्राविरोधितया निवसन्तीति ॥

अत्र त्रयाणां श्लेषः। प्राचीनैरेकवृन्तगतफलद्वयन्यायेन श्लेषस्य स्वरूपं स्पष्टीकृतम्। तत्तु दिग्दर्शनमात्रम्। तथैव द्वाभ्यामधिकार्थसद्भावेऽपि श्लेषो ज्ञातव्यः। अत्र संदेहालंकारः। "निरवकाशो विधिरपवादः" इति न्यायेन श्लेषोऽन्यमलंकारं बाधित्वा स्वयं स्थायी भवति। उपमाद्यलंकाराणां श्लेषं विनाप्यवकाशात्। श्लेषस्य चालंकारान्तरं विनाऽनवकाशात्। श्लेषालंकारस्येतरालंकारस्य च द्वयोर्यत्र प्रवृत्तिस्तत्रेतरालंकारं

बाधित्वा श्लेषः स्थिरो भवति। उक्तोदाहरणेषूपमादिकं बाधित्वा श्लेषः स्थायिभावं भजन्नुपमादीनामाभासरूपत्वं करोति । चित्रमीमांसाकारो वदति- " निरवकाशो विधिरपवादः " इति न्यायस्यालंकारविषये प्रवृत्तिर्नास्ति । अन्यथाऽरन्ध्ररत्नजटितसुवर्णालंकारस्य सुवर्णालंकारताया बाधा स्यात् । कुत इत्युक्तौ सुवर्णस्य तु रत्नं विनाप्यलंकारताया अवकाशो वर्तते । अरन्ध्ररत्नस्य तु सुवर्णं विनाऽलंकारताया अवकाशो नास्ति । "अरन्ध्ररत्नस्य" इत्येतदर्थमुक्तं, सरन्ध्ररत्नस्य सुवर्णं विनापि सूत्रादिसंयोगेनालंकारताया अवकाशोऽस्तीति । अस्यायं सिद्धान्तः । रत्नजटितसुवर्णभूषणे रत्नांशसुवर्णांशावुभावपि शोभाकरौ भवतः । तथैव "सकलकलम् " इत्याद्युदाहरणेषु श्लेष उपमादयश्चोभयेप्यलंकाराः । रत्नाकरकारस्यायं सिद्धान्तः- श्लेषस्य पञ्च भूमिकाः। (१) क्वचिदलंकारान्तराभावाच्छ्लेषस्यैव सावकाशता । यथा-" सर्वदो माधवः पायात् " इत्यस्य द्वावर्थौ । सर्वं ददातीति सर्वदः, माधवः कृष्णः, इत्येकोर्थः । सर्वदा, उमाधवः पार्वतीपतिः, इत्यपरोर्थः । अत्रैकस्याप्यलंकारान्तरस्याभावाच्छ्लेषस्यैवालंकारतावकाशः । (२) क्वापि श्लेषोऽलंकारान्तरभानस्य हेतुः ॥

यथा—

सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव ॥

अत्र श्लेष उपमाया भानमात्रस्य हेतुः। अतोत्रापि श्लेष एवालंकारः। उपमा तु विद्युद्वदस्थिरत्वादाभासरूपा। (३) क्वापि श्लेषोऽलंकारान्तरस्याङ्गं भवति ॥

यथा—

अमृतेन्दुकलासहोदराऽऽस्या
सुतरोस्तीरतलेऽवतिष्ठते सा ।
उरसीव पयोधिराजकन्या
वनमालाभरणे रथाङ्गपाणेः ॥

लक्ष्मी चन्द्रकलासहोदरेतीन्दुकलासहोदरास्यत्वस्य शक्यार्थः । नायिका चन्द्रकलासदृशास्येतीन्दुकलासहोदरास्यत्वस्य लक्ष्यार्थः। उभयोरनयोरर्थयोरभेदाध्यवसायेनैक्ये सति साधर्म्येण लक्ष्म्या सह नायिकाया

उपमा सिद्ध्यति। "वनमालाभरणे" इत्यस्य तुलसीमालाभरण इत्येको-ऽर्थः। वनपङ्क्त्याभरण इत्यपरोऽर्थः। अतोऽत्र श्लेषः। स चोक्तोपमामेव पुष्णातीत्युपमायाः श्लेषोऽङ्गम्। (४) क्वचिच्छ्लेषः स्वयमाभासरूपो भवति॥

श्रीमन्नायतनेत्रोऽपि सूक्ष्मदृष्टिः कथं भवान्।
यशवन्तमहाराज! चरित्रं तेऽद्भुतं नृषु॥

अत्र सूक्ष्मदृष्टिरित्यस्य सूक्ष्मविचारनिपुण इत्येकोऽर्थः। लघुनयन इत्यपरोऽर्थः। अत्र च लघुनेत्रत्वस्याविवक्षणाच्छ्लेषस्याभासमात्रतया विरोधाभासोऽलंकारः। कुत इति चेदत्र न श्लेषस्याभासे चमत्कारः। किंतु विरोधस्याभासे। (५) क्वचिच्छ्लेषस्यालंकारान्तरानुप्राणकता। यथा समासोक्त्यलंकारे। अनुप्राणकत्वस्याङ्गत्वस्य चायं भेदः। साक्षात्कारणत्वमनुप्राणकत्वम्। यथा वृक्षस्य कारणं बीजम्॥ वस्तुसिद्ध्यनन्तरं पोषकत्वमङ्गम्। यथा वृक्षस्य धूपप्रदानगोमयप्रक्षेपादिदोहदविधिः। मम तु मतं, रत्नाकरकारस्य मतं समीचीनम्॥ काव्यप्रकाशकारादीनामयं सिद्धान्तः। "प्रकृतयोः श्लेषः, अथवाऽप्रकृतयोः श्लेषः, इमौ तु श्लिष्टविशेषणाश्लिष्टविशेष्यस्थलेऽपि भवतः। विशेषणविशेष्ययोः श्लिष्टतायामपि भवतः। कुत इत्युक्तौ द्वयोः प्रकृतत्वेऽप्रकृतत्वे वा श्लिष्टविशेष्यस्यैकस्मिन्नियमनं न भवति। प्रकृताप्रकृतयोः श्लेषे तु विशेष्ययोरपि श्लेषो भवति। तत्र च प्रकरणादिसामर्थ्येन विशेष्यरूपानेकार्थवाचिशब्दस्यैकस्मिन्नर्थे नियमने सत्यन्यार्थो ध्वनेर्विषयः। प्रकृतधर्मिणोऽप्रकृतधर्मिणश्च पृथङ्निर्देशे श्लेषो भवति। केवलप्रकृतधर्मिनिर्देशे समासोक्तिः। केवलाप्रकृतधर्मिनिर्देशे चाप्रस्तुतप्रशंसा भवति।" इति। कुवलयानन्दकारस्यायं सिद्धान्तः—प्रस्तुताप्रस्तुतयोः पूर्वपश्चात्स्फुरणमात्रेणैवाप्रस्तुतस्य व्यङ्ग्यत्वं न भवति। अभिधया प्रतिपाद्यमानेऽर्थे सर्वथा व्यञ्जनाया अनपेक्षणादप्रस्तुतार्थवर्णनस्थितौ, पश्चादप्रस्तुतार्थवर्णनस्फूर्तौ गूढश्लेषः कामं स्यान्नाम॥

यथा—

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य।

यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत् ॥

अस्मिन्काव्ये राजगजौ न पृथक्पृथगभिहितौ, न च श्लेषेणाभिहितौ, प्रकरणवशेनार्थसिद्धौ। राजपक्षे- भद्रात्मा कल्याणस्वरूपः, दुरधिरोहतनुः परैरनाक्रमणीयबलवच्छरीरः, विशालवंशोन्नतिर्विस्तृतश्रेष्ठवंशीयः, कृतशिलीमुखसंग्रहः कृतबाणसंग्रहः, अनुपप्लुतगतिरप्रतिहतप्रवृत्तिमान्, परवारणः शत्रुनिवर्तकः, दानाम्बुसेकसुभगो दानसंबन्धिजलस्य सेकेन सुन्दरः, करो हस्तः, इति। गजपक्षे--भद्रात्मा गजजातिविशेषः, दुरधिरोहतनुरारोढुमशक्यशरीरः, विशालवंशोन्नतिरतिदीर्घवंशसदृशदैर्घ्यवान्, यद्वा विशालवंशस्य पृष्ठदण्डस्योन्नतिर्यस्य सः, कृतशिलीमुखसंग्रहो मदगन्धेन कृतभ्रमरसंग्रहः, अनुपप्लुतगतिर्मन्दगतिः, परवारणः श्रेष्ठगजः, दानाम्बुसेकसुभगो मदजलसेकेन सुन्दरः, करः शुण्डादण्डः ॥ प्राचीनानां मते त्वत्र प्रकरणवशेन शक्तेः संकोचादर्थादभिधायाः प्रकृतार्थे प्रकरणवशेन नियमनात्केवलं वर्णनीयनृपस्य प्रतीतिर्भवति। अनन्तरं व्यञ्जनया गजस्य प्रतीतिर्भवति। अतोऽत्र श्लेषो नास्तीति। कुवलयानन्दकारस्य मतं त्वत्रान्यार्थगजवृत्तान्तप्रतीतिपर्यन्तमभिधैव निमित्तम्, अतः श्लेष एव। अप्रकृतार्थः प्रकृतार्थानुपकारी चेत्तदा व्यर्थो भूत्वा दूषणं भवति। अतोऽत्र प्रकृतेन सहाप्रकृतस्योपमा विवक्षिता। सा चोपमा व्यञ्जनया प्रतीयमानत्वाद्ध्वनिः। यद्यप्यत्र प्रकरणसामर्थ्येन प्रकृतार्थस्य त्वरितं बोधो भवति। अन्यार्थस्य बोधः पश्चाद्भवति, तथापि सोऽभिधावृत्त्यैव भवति, अतः स गूढश्लेषः। ध्वनिस्त्वभिधाया असंभवे भवेदिति। मम तु मतं, प्रकाशकारादीनां सिद्धान्तः समीचीनः। तादृशस्थले प्रकृतार्थ एवाभिधाबुद्धिरोधात्। अनन्तरं विचारेणान्यार्थप्रतीतिर्भवति। सा च व्यञ्जनामूलका। अथ च प्राचीनैः प्रकृतश्लेषः, अप्रकृतश्लेषः, प्रकृताप्रकृतश्लेषः, शब्दश्लेषार्थश्लेषावुभौ यत्र भवतस्तत्रोभयश्लेषः,

अर्थद्वयस्यार्थत्रयस्यार्थचतुष्टयस्य श्लेष इत्यादयः श्लेषस्य प्रकाराः प्रदर्शितास्ते तूदाहरणभेदा एव। ग्रन्थविस्तरभयान्मया न दर्शिताः॥

॥ इति श्लेषप्रकरणम् ॥ ६६ ॥

## संकोचः ॥

संकोचः प्रसिद्धः। विकासालंकारप्रतिभटभूतः संकोचालंकारः॥

संकोचो यस्तु राजेन्द्र! संकोचालंकृतिस्तु सा॥

यथा—

श्रीयशवन्तधराधिप! तेजःसूर्योदयेन संकोचम्॥
कुवलयवत्संयान्ति शनैः शनैस्ते द्विषां कुवलयानि॥

यथावा—

कान्ताश्लेषणसंपृक्ते कान्ते बाला ह्रियान्विता॥
इन्द्रगोप इव स्वाङ्गं निगूहतितरामसौ॥

अत्र विषये कुवलयानन्दकारः संकोचपर्यायनामकं पर्यायालंकारप्रभेदं स्वीकृत्येदमुदाजहार—

प्रायश्चरित्वा वसुधामशेषां
छायासु विश्रम्य ततस्तरूणाम्॥
प्रौढिं गते संप्रति तिग्मभानौ
शैत्यं शनैरन्तरपामयासीत्॥

आह च "अत्र शैत्यस्योत्तरोत्तरमाधारसंकोचात्संकोचपर्यायः" इति। विकासपर्यायस्य कुवलयानन्दकार इदमुदाहरणमदात्—

बिम्बोष्ठ एव रागस्ते तन्वि! पूर्वमदृश्यत॥
अधुना हृदयेप्येष मृगशावाक्षि! दृश्यते॥

पर्यायप्रकरणे रसगङ्गाधरकारो वदति "एकसंबन्धनाशानन्तरं द्वितीयसंबन्ध एव पर्यायपदस्य लोके प्रयोगोस्ति" इति ॥

"श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः ॥"

इति काव्यप्रकाशोदाहरणे-

नन्वाश्रयस्थितिरियं तव कालकूट!
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ॥
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥

इति सर्वस्वोदाहरणे च तथैव दृश्यते । "बिम्बोष्ठ एव रागस्ते"-इत्यत्र न पर्यायः, किं तु सारालंकार उचितः । मम मतेपि संकोचविकासयोः स्वरूपं पृथक् । लोकभाषायां वारीतिप्रसिद्धपदबोध्यस्य पर्यायस्य स्वरूपं पृथक् । अतः कुवलयानन्दकारस्य संकोचविकासनामकपर्यायप्रकारकथनं प्रमादः । रसगङ्गाधरकारस्य संकोचात्पृथक्प्राचीनानां पर्यायोदाहरणप्रदर्शनं समीचीनम् । परं तु रसगङ्गाधरकारस्य प्राचीनमतानुसारेण सारनामार्थं सरणमिति स्वीकृत्य "बिम्बोष्ठ एव" इत्यत्र सारालंकारकथनं प्रमादः। सारालंकारस्य स्वरूपं तु तस्य प्रकरणे स्पष्टीकरिष्यते । विकासपर्याययोर्भिन्नवस्तुत्वं वेविचतो रसगङ्गाधरकारस्य प्रसरणगमनयोर्भिन्नवस्तुत्वस्याविवेचनं त्वाश्चर्यावहम् । एवमङ्गीकारे च संकोचस्यापि सारनाम्ना संग्रहः स्यात् । विकासेऽग्रे गमनं, संकोचे च पश्चाद्गमनं, परं त्वीदृग्विषये विकाससंकोचयो रूपप्रदर्शने यद्रम्यत्वं तद्गमनस्य रूपदर्शने न विद्यते ॥

॥ इति संकोचप्रकरणम् ॥ ६७ ॥



## संदेहः ॥



इदं वा, इदं वेत्यनिर्णयबुद्धिः संदेह इत्युच्यते । इमं संशयमिति च वदन्ति ।

संदेहस्तु महाराज ! संदेहालंकृतिर्मता ॥
नामैव लक्षणं चास्य स्वीकृतं प्राक्तनैरपि ॥

यथा —

करे कृपाणं मरुनायकस्य
विलोक्य लोका विमृशन्ति चेत्थम् ।
विपक्षलक्ष्म्याः किमियं सुवेणी
किं वा प्रतापानलधूमराजिः ॥

अत्र वर्णाकृती संशयनिमित्ते ॥

यथावा—

गङ्गायाः किं प्रवाहो हिमगिरिरथवा क्षीरवारांनिधिर्वा
किं वा हंसावलीयं हरतनुरथवा शारदो वाऽभ्रपुञ्जः ।
किं वा कर्पूरवृष्टिः सितकमलवनं सज्जनानां मनो वा
वस्त्रं वा शारदाया मरुपतियशवन्त्सिंहभूभृद्यशो वा ॥

अत्र गङ्गाप्रवाहहिमगिर्याद्याकृतेर्भिन्नभिन्नत्वाच्छ्वेतवर्णमात्रनिमित्तेन संदेहः ।

यथावा—

मरुस्थलेन्द्राश्वगतागतानि
विलोक्य लोका विमृशन्ति चित्ते ।
अलातचक्रं तडितो विलासः
किं वा कटाक्षः कुलटाङ्गनानाम् ॥

अत्र गतागतशीघ्रतागुणमात्रनिमित्तेन संदेहः । उक्तोदाहरणेषु संदेहमालापि विद्यते । वास्तववस्तुसंदेहश्च ।

कल्पितवस्तुसंदेहो यथा—

नवमो लोकपालः किं दशमः किं प्रजापतिः ।
एकादशोऽवतारः किं यशवन्तमहीपतिः ॥

नवमलोकपालादीनामभावात्कल्पितत्वम् ॥ उक्तोदाहरणेषु वस्तुसंदेहः । सर्वस्वमतानुसारेण विमर्शनीकृता फलसंदेह उदाहृतः ॥

यथा—

नृत्तान्ते पारिजातं किमु विघटयितुं स्प्रष्टुमाकाशगङ्गां
किंस्विद्वा चन्द्रसूर्यौ किमु विदलयितुं श्वेतरक्ताब्जबुद्धया ।
लब्धुं नक्षत्रमालाभरणभरयुतं स्वर्गजं वाभियोद्धुं
दूरोदस्तः समस्तस्तव गणपतिना स्वस्तये सोऽस्तु हस्तः ॥

अनेनेदं सिद्धम्, सादृश्यं विनापि संदेहालंकारो भवतीति । तन्तु युक्तम् । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"स संदेहस्तु भेदोक्तौ तदनुक्तौ च संशय ॥" इति ॥

भेदस्योक्तौ, भेदस्यानुक्तौ यः संशयः स संदेहालंकार इत्यर्थः । प्राचीनाभिमतनिश्चयगर्भनिश्चयान्तेतिसंदेहप्रकारार्थमयं कारिकाकारो भेदोक्तावित्याह । तच्चाग्रे स्फुटीभविष्यति । काव्यप्रकाशटीकाकारो महेशचन्द्र आह" अत्र प्रकृतस्य समेनेति पूर्वस्मादनुवर्तते । तेनोपमेयस्योपमानरूपतायां संशयः स संदेहालंकार इति लक्षणम्" इति ।मम तु मतं, अयं सिद्धान्तो न समीचीनः । "नृत्तान्ते" इत्यादिषु सादृश्यरहितसंदेहेष्वव्याप्तेः ॥

यथावा—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ॥
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥

अयं कारणानां संदेहः । अत्राप्यव्याप्तिः स्यात् । सर्वस्वकारस्येदं लक्षणम्—

"विषयस्य संदिह्यमानत्वे संदेहः ॥" इति ॥

अयं त्रिविधः। शुद्धः, निश्चयगर्भः, निश्चयान्तश्चेति। पूर्वोदाहरणेषु भेदस्य कथनाभावाद्भेदानुक्तिर्वर्तते। इदं शुद्धम्। भेदोक्तौ द्वौ प्रकारौ, निश्चयगर्भो निश्चयान्तश्चेति॥

क्रमेण यथा—

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम्॥
कृतान्तः किं साक्षान्महिषवदनोसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः॥

अत्र पुरोवर्तिनि राज्ञि प्रथमं मार्तण्डादीनां संशयः। ततः सप्ततुरगत्वादितत्तद्वैधर्म्यदर्शनमिति भेदोक्तिः। अत एव तत्तद्भेदनिर्णयस्य मध्ये संभवान्निश्चयगर्भता॥

इन्द्रो यदि स्यात्क सहस्रनेत्रता
विष्णुर्यदि स्यात्क चतुर्भुजं वपुः॥
शंभुर्यदि स्यात्क नु भाललोचनं
श्येनध्वजोऽयं यशवन्तभूपतिः॥

अत्रापि भेदोक्तिः। अयं यशवन्तमहाराज इत्यन्ते संदेहनिवृत्तेर्निश्चयान्तः। कोटिरग्रभागः। सा च धनुषस्तुलादण्डस्य चोभयोः प्रान्तयोर्भवति। ईदृशविषये च धनुष्कोटिस्तुलाकोटिश्च प्रसिद्धा। संदेहे वस्तुद्वयं भवति। एकं तु यस्मिन्संदेहो भवति। द्वितीयं च यस्य संदेहो भवति। "आननं वा सुधांशुर्वा" इत्यत्राननचन्द्रमसोरुभयोः संदेहरूपत्वादयमुभयकोटिकसंदेहः। "अयं मार्तण्डः किम्—" इत्यस्मिन्नुदाहरणे राजराजेश्वरे न राजराजेश्वरत्वसंदेहः, किं तु रणाङ्गणे राजराजेश्वरं दृष्ट्वा, अयं मार्तण्डः किम्? इत्यादिसंदेहादयमेककोटिकसंदेह इति केचन मन्यन्ते। तत एव च नामार्थविचारमकुर्वाणा उत्प्रेक्षायाः साक्षात्स्वरूपमजानानाः प्राचीना उत्प्रेक्षास्वरूपमेककोटिकसंदेह इति ज्ञात्वोत्प्रेक्षास्वरूपं संभावनेति वदन्ति। एककोटिकसंदेहश्च संभावनारूपो भवति॥

यथा—

"मृगस्य पश्चाद्धावन्तं हयं मरुपतेरमुम् ॥
कस्तूरीसौरभे लुब्धं समीरं मन्महे वयम् ॥"

अत्र हये न हयत्वसंदेहः। किं तु हयं हयत्वेनाववुध्यमानः कविर्हये समीरसंदेहं करोति। हयं समीरं मन्महे वयमित्यादि। इदमुत्प्रेक्षाप्रकरणे खण्डितम्। कतिचन च "आननं वा सुधांशुर्वा" इत्यत्र तु समकोटिक-संदेहं मन्यन्ते। आनने चन्द्रसंदेहः समः पूर्ण इत्यर्थः। "अयं मार्तण्डः किम्" इत्यत्र च विषमकोटिकसंदेहं मन्यन्ते। अत्र राजराजेश्वरे सूर्यादीनां संदेहोऽपूर्णः किंचिदित्यर्थः। भेदोक्तिसंदेहेऽपि चमत्कारस्तु संदेहस्यैव, यथोन्मीलिते मिलितस्यैव। बाधितभ्रान्तौ च भ्रान्तेरेव। भगवान्वेद-व्यासः संदेहस्योपमाप्रकारत्वमाह--

"उभयोर्धर्मिणोस्तथ्यानिर्णयात्संशयोपमा" इति।

मम तु मतं, संदेहरूपचमत्कारस्य प्राधान्यात्संदेहः पृथगलंकारः। भगवान्भरतो लोकसंदेहस्येदं लक्षणमाह--

"अपरिज्ञाततत्त्वार्थं यत्र वाक्यं समाप्यते।
अनेकत्वाद्विचाराणां संशयः परिकीर्तितः॥" इति॥

तत्त्वार्थज्ञानमन्तरा वाक्यसमाप्तिर्न क्रियते, परं त्वत्र विचारा-णामनेकत्वाद्धेतोस्तत्त्वार्थज्ञानं विनैव वाक्यसमाप्तिः क्रियते। एत ल्लोकसंदेहमनुसृत्य धुरंधरेण संदेहालंकारः स्वीकृतः॥

॥ इति संदेहप्रकरणम् ॥ ६८ ॥

---

## ॥ संभावना ॥

---

अत्र संभावनाशब्दस्यार्थो योग्यता। उक्तं चिन्तामणिकोषकारेण "संभावना योग्यतायाम्" इति। लोकप्रसिद्धसंभवोऽयोग्यता चेत्यनर्था-न्तरम्॥

तत्र संभावना प्रोक्ता संभवो यत्र वर्ण्यते।

यथा--

यशवन्तधरानाथ! रविवंशमहामणे! ।
यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव ॥

शेषस्य वक्तृत्वं शेषकृतभाष्यादिग्रन्थैः प्रसिद्धम्। तस्य सहस्रमुखानि सन्ति । सर्पाणां च द्विजिह्वता, तेन तस्य जिह्वानां सहस्रद्वयं विद्यते। तस्माच्छेषो वक्ता भवति चेत्तदा राजराजेश्वरस्य सर्वगुणकथनयोग्यताऽर्थात्संभवो भवेत् । चन्द्रालोककृतापीदृशमेवोदाहरणं प्रदत्तम्। कुवलयानन्दकार इदमुदाहरणं ददौ—

कस्तूरिकामृगाणामण्डाद्गन्धगुणमखिलमादाय ।
यदि पुनरहं विधिः स्यां खलजिह्वायां निवेशयिष्यामि ॥

खलानां सम्यग्दोषज्ञाताऽयं वक्ता विधिर्भवेच्चेत्तदा संभवः खलु, कस्तूरिकां खलजिह्वायां निवेशयेदिति। येन खला मारिताः स्युः। भवेच्च यज्ञादिपुण्यविशेषैर्मनुष्यो ब्रह्मा ॥

यथावा—

विद्याभूमौ क्वचन न भवेदर्थबीजप्ररोहो
विद्वत्केकिष्वनुपमसुखं निर्धनत्वौर्ववन्हिः ।
शुष्कं कुर्यात्कविजलनिधिं मालवेन्द्रो नृपालो
नोऽवर्षिष्यद्बलवदभिधः शाश्वतं भूतले चेत् ॥

रत्नपुरेशो मालवेन्द्रराष्ट्रवरबलवन्तसिंहो यदि द्वादशापि मासान्धनं नावर्षिष्यत्तर्हि भूमावर्थबीजान्यङ्कुरितानि नाभविष्यन्नित्यादीनां संभवः ॥ चन्द्रालोककारोऽत्र संभावनाशब्दार्थमूहमर्थात्तर्कं ज्ञात्वा संभावनाऽलंकारस्येदं लक्षणमाह—

"संभावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये ॥" इति ॥

अनेनोत्प्रेक्षायाः स्वरूपमपि संभावनेत्युक्तम् । "संभावना स्यादुत्प्रेक्षा" इति । संभावनायाः पर्याय ऊहः। तदत्र "यदीत्थं स्यात्" इत्यूहस्य स्वरूपमुक्त्वोत्प्रेक्षातो व्यावृत्तये "अन्यासिद्धये" इति विशेषणं प्रदत्तम्। इदं च लक्षणमनेन प्रकारेण योजयामास । राजराजेश्वरस्य संपूर्णगुणकथनसिद्धये "यदि शेषो वक्ता भवेत्" इत्यूहः कृतः। एवमेव खलरसनायां मृगमदनिवेशसिद्धये "यदि ह्यहं ब्रह्मा स्याम्" इत्यूहः कृतः।

मम तु मतं, अनयोरुदाहरणयोरूहो न विवक्षितः । धुरंधरस्यानयोरुदाहरणयोस्तात्पर्यमजानन्तः प्राचीना अनयोरुदाहरणयोरूहं बुध्वात्र संभावनाशब्दार्थमूहं कृतवन्तः । स तु प्रमादः । कुत इति चेदूहरूपसंभावनास्वरूपं तूत्कट एकतरकोटिकसंशयः । अयं च संदेहस्यैव प्रकारः । कुत इति चेत्संदेहस्वरूपं त्वनिर्णयज्ञानम् । तच्च समकोटिकविषमकोटिकत्वाभ्यामलंकारद्वयात्मकं न भवति । अपि चोक्तसंभावनाऽन्यसिद्ध्ये सत्यसत्यप्यलंकारान्तरं भवितुं नार्हति । भोजमहाराज एनमलंकारं संभवनाम्नाह । परं त्वस्य चन्द्रालोककारस्य च मतमेकमेव । महाराजस्येदं लक्षणम्—

"प्रभूतकारणालोकात्स्यादेवमिति संभवः ॥" इति ॥

महाराजस्य लक्षणे " प्रभूतकारणालोकात् " इति चन्द्रालोकाद्वैलक्षण्यमपि व्यर्थम् ॥

यथा—

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात्प्रवाहम् ।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तामणिमिव भुवः स्थूलमध्येन्द्रनीलम् ॥

संदेहस्थले संदेहभावस्य योग्यता । उपमास्थले चोपमाभावस्य योग्यता । एवमन्यत्रापि । परं तु योग्यतायाः स्वरूपं भिन्नम् । संदेहादीनां च स्वरूपाणि भिन्नानि । तथा च यत्र योग्यतायाः प्राधान्यं, तत्र सैवालंकारः । अथ च यत्र संदेहादीनां प्राधान्यं, तत्र संदेहादयोऽलंकाराः । संभवप्रमाणे संभावनाया नान्तर्भावः । प्रमाणस्वरूपस्य निर्णयरूपत्वात् । अत्र च न निर्णयविवक्षा । किं तु योग्यतामात्रस्य विवक्षा । बहवः प्राचीनाः संभावनाशब्दार्थं संभवं ज्ञात्वोत्प्रेक्षायां संभावनाशब्दप्रयोगमकुर्वन्, स तु प्रमादः । कुत इति चेदयं संभवस्तूक्तरीत्याऽलंकारान्तरमेव । उत्प्रेक्षाया अस्य च स्वरूपस्यात्यन्तं वैलक्षण्यात् । तच्चैतेषामत्यन्तविलक्षणोदाहरणैः स्पष्टतरम् ॥

॥ इति संभावनाप्रकरणम् ॥ ६९ ॥



# ॥ संस्कारः ॥

संस्कारस्तु वासना। उक्तं चिन्तामणिकोषकारेण "संस्कारो वासनायाम्" इति। यथा कस्तूर्यादिपदार्थानां निष्कासनेपि तत्पात्रे तद्वासना तिष्ठति। अनेन न्यायेन धुरंधरेण संस्कारालंकारः स्वीकृतः॥

**संस्कारं कवयः प्राहुरलंकारं नराधिप!॥**

यथा—

दानाभावप्रसङ्गेपि यशवन्तमुखाद्रुतः॥
देहि देहीतिवचनं स्वयं निःसरति द्रुतम्॥

अत्र राजराजेश्वरस्य दानवचनस्यात्यन्तमभ्यासजनितवासनावशाद्दानाभावप्रसङ्गेपि देहि देहीति वचनं मुखात्स्वयं निःसरति॥

यथावा—

दातुं वाञ्छति दक्षिणेऽपि नयने वामः करः कज्जलं
भौजङ्गं च भुजेऽङ्गदं घटयितुं वामेपि वामेतरः॥
इत्थं स्वं स्वमशिक्षितं भगवतोरैशं वपुः पश्यतोः
साधारस्मितलाञ्छितं दिशतु वो वक्त्रं मनोवाञ्छितम्॥

अत्र पार्वतीकरस्य निजनेत्रयोरञ्जनदानस्यात्यन्तमभ्यासजनितवासनावशात्, महादेवकरस्य निजभुजयोर्भुजगाङ्गदधारणस्यात्यन्तमभ्यासजनितवासनावशाच्च, पार्वतीकरो महादेवनेत्रेऽञ्जनदानार्थं, महादेवहस्तश्च पार्वतीभुजे भुजगाङ्गदधारणार्थं, अर्धनारीश्वरदशायां प्रवृत्तौ भवतः॥

यथावा—

यद्यपि गेहे गहे निन्दा जाता तथापि नो गेहे॥
क्षणमपि तिष्ठति बुध्वाप्यथाप्यबुध्वा तदेव गृहमेति॥

अत्र नायकः स्वस्नेहवत्याः परकीयनायिकाया गृहगमनस्यात्यन्ता-

भ्यासजनितवासनावशादिच्छापूर्वकं गमनाभावेऽपि तस्या गृहं गच्छति। अलंकारोदाहरणकारः संस्कारालंकारस्येदं लक्षणमाह—

"अनुभूतवासनानुमेयः संस्कारः॥" इति॥

अनुभूतस्य वासना संस्कारालंकारः। अयमनुमानगम्यः। स्मृतिभिन्नं ज्ञानमनुभव इत्युच्यते। मम मतेऽस्य लक्षणेऽनुमेयेतिविशेषणमनावश्यकम्। अलंकारोदाहरणकारस्यैकमुदाहरणं तु "दातुं वाञ्छति" इति। द्वितीयं चेदम्—

मग्नानि द्विषतां कुलानि समिति त्वत्सङ्गधाराजले
नाथास्मिन्निति वन्दिवाचि बहुशो देव! श्रुतायां पुरा॥
मुक्ता गूर्जरभूमिपालमहिषी प्रत्याशया पाथसः
कान्तेनाऽऽचकिता विमुञ्चति मुहुः पत्युः कृपाणे दृशौ॥

जले मग्नो मनुष्यः किंचित्कालानन्तरं जीवन्पुनरुद्गच्छति, एवं बहुवारं दृष्टम्। तद्वासनया खड्गधाराजले मग्नस्य पत्युः पुनर्निर्गत्यागमनाशया गूर्जरराजमहिषी निरन्तरं खड्गं पश्यति। तृतीयमिदमुदाहरणम्—

पुरस्तन्व्या गोत्रस्खलनचकितोऽहं नतमुखः
प्रवृत्तो वैलक्ष्यात्किमपि लिखितुं दैवहतकः॥
स्फुटं रेखान्यासः कथमपि स तादृक्परिणतो
गता येन व्यक्तिं पुनरवयवैः सैव तरुणी॥

अत्र नायकः परकीयायाः पुनःपुनर्ध्यानजनितसंस्कारवशाद्गोत्रस्खलनेन लज्जानतमुखः सन्भूमावलिखत्। तत्रापि तस्याः परकीयायाश्चित्रमेव लिखितमासीत्। पश्चात्तापादिदुःखसमयेऽधोमुखतया भूमिलिखनक्रिया मनुष्याणां स्वाभाविकी। अलंकारोदाहरणकारः सादृश्यमूलकसंस्कारस्येदमुदाहरणं प्रददौ—

पश्येन्द्रनीलगृहपङ्क्तिभिरुन्नताभि-
रायासितो मुरजवाद्यविभूषिताभिः॥

कादम्बिनीष्वपि च गर्जितराजितासु
नो ताण्डवं वितनुते शिखिनां समाजः॥

अत्र मयूराणां मेघसादृश्यात्तादृशनीलमणिगृहेषु मेघभ्रमो जातः, ततश्चेमानि न मेघाः, संगीतसहितनीलमणिगृहाणीति बोधो जातः। तस्य च संस्कारस्य बद्धमूलत्वाद्गर्जनयुक्तसाक्षान्मेघेषु तादृशनीलमणिगृहभ्रान्तिर्जाता। मम तु मतं, अत्र प्रधानचमत्कारस्तु भ्रान्तेर्वर्तते, अतो भ्रान्तिरेवालंकारः। यद्यपि स्मृतिभ्रान्त्योः स्थले संस्कारो वर्तते; परं तु तत्र संस्कारचमत्कारस्याप्राधान्यात्संस्कारो नालंकारः। अलंकाररत्नाकरकारः सादृश्यातिरिक्तमूलकभ्रान्तेरिदमुदाहरणं ददौ। "दातुं वाञ्छति—" इति। मम तु मतं, अत्र पार्वतीपरमेश्वरयोरितराङ्गे न स्वाङ्गभ्रमः, किं तु द्वयोर्हस्तयोरत्यन्ताभ्यासजनितसंस्कारवशादुक्तरीत्या प्रवृत्तिरिति। हस्तस्य जडत्वात्तत्र स्मृतिभ्रान्त्योरसंभवः। अत्रैवं शङ्का न कार्या, पार्वतीपरमेश्वरयोर्निजनिजाङ्गभ्रमाद्धस्तयोः प्रवृत्तिरिति। कुत इति चेत्पार्वतीपरमेश्वरयोर्निजप्रेरणामन्तरापि हस्तप्रवृत्तिमालोक्य हसनाद्भ्रमाभावः सिद्धः। एवमुक्तेष्वन्येष्वपि संस्कारोदाहरणेषु स्मृतिभ्रान्त्योरंशराहित्यं बोध्यम्॥

इति संस्कारप्रकरणम्॥ ७०॥

## ॥ समः॥

समशब्दार्थस्तुल्यता। अत्र यथायोग्यत्वं विवक्षितम्। यथायोग्यत्वं च वस्तुद्वयनिष्ठम्। तथाच यत्र यत्र यथायोग्यत्वं, तत्र केनाचित्संबन्धेनावश्यं भाव्यम्। संबन्धाश्चानन्ताः॥

यथायोग्यस्तु संबन्धः समालंकृतिरिष्यते।
परेशः प्रददौ तुभ्यं सर्वतस्तं नराधिप!॥

यथा—

ज्योत्स्ना चन्द्रमसं यद्वद्धरं सुरतरङ्गिणी ।
अनुरूपं तथा कीर्तिः श्रिता त्वां मरुनायक ! ॥

अत्र ज्योत्स्नादयः श्लाघनीयाश्चन्द्रादीञ्श्लाघ्यानाश्रिताः । अतोऽत्र संयोगसंबन्धस्य यथायोग्यत्वात्समालंकारः । अयं स्तुतिपर्यवसायी ॥

निन्दापर्यवसायी यथा—

भ्राता हलधरस्य त्वं राधा तु वृषभानुजा ।
कथं न वर्धते स्नेहो वदन्त्येवं व्रजाङ्गनाः ॥

अत्र परिहासे हलधरवृषभशब्दयोः श्लेषेण दंपत्योः पशुत्वप्रतीतिं कारयित्वा यथायोग्यसंबन्धः प्रतिपादितः । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"समं योग्यतया योगो यदि संभावितः क्वचित् ॥" इति ॥

यदि क्वचिद्योगः संबन्धो योग्यतया संभावितो भवति तदा समालंकार इत्यर्थः । सर्वस्वकारो विषमालंकारानन्तरं समालंकारमाह, अतः

" तद्विपर्ययः समम् ॥"

इति लक्षणमभिधाय "यद्यपि विषमस्य भेदत्रयमुक्तं, तथाप्यननुरूपसंबन्धविपर्ययस्यानुरूपसंबन्धस्यैव च चारुत्वात्तत्रैव समालंकारः" इत्याह । अपि च रत्नाकरकारो वदति–विषमस्य सर्वेषां प्रकाराणां विपर्यये समालंकारो भवति । चन्द्रालोककारस्याप्ययमेव सिद्धान्तः । प्रथमसमस्येदं लक्षणमाह—

"समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः ॥" इति ॥

कार्यकारणयोरननुरूपतारूपविषमविपर्यये चेदं लक्षणमाह—

"सारूप्यमपि कार्यस्य कारणेन समं विदुः ॥" इति ॥

यथा—

अशोको रक्तपुष्पाणि प्रसूते तत्र कारणम् ।
तवारुणपदाघातं मन्ये वारणगामिनि ! ॥

अत्र कार्यकारणयोर्वर्णस्यानुरूपतया समालंकारः ॥

यथावा—

माता यस्य यशोधराऽथ जनको नन्दो व्रजो जन्मभूः
पानं यामुनवारिणः सुबलको मित्रं स एष प्रभुः ॥
त्यक्त्वा सुन्दरराधिकां तु चकमे कुब्जां विरूपां हठा-
द्धेतुः पीतमभूत्तु बाल्यसमये यत्पूतनायाः पयः ॥

अत्र कारणं कुरूपपूतनास्तन्यपानम् । कार्यं कुरूपकुब्जासक्तिः । कार्यकारणयोः शीलविषये यथायोग्यता । यद्यपीदृशोदाहरणेषु हेत्वलंकारस्यांशो वर्तते, तथाप्युद्धरकंधरतया समे चमत्कारस्य पर्यवसानात्समालंकारः । कर्तुः क्रियायाः फलप्राप्त्यभाव एव न, किं त्वनिष्टस्यापि प्राप्तिरिति विषमविपर्यय इदं लक्षणमाह—

"विनाऽनिष्टं च तत्सिद्धिर्यदर्थं कर्तुमुद्यमः ॥" इति ॥

यथा—

युक्तो वारणलाभोऽयं स्यान्न ते वारणार्थिनः ॥

कुवलयानन्दकारो वदति– "अत्र गजार्थितया राजानमुपसर्पन्तं तद्दौवारिकैर्वार्यमाणं प्रति नर्मवचनमुदाहरणम् । न चात्र निवारणमनिष्टमापन्नमित्युदाहरणाभावत्वं शङ्कनीयम् । राजद्वारि क्षणवारणं संभावितमिति तदङ्गीकृत्य प्रवृत्तस्य विषमालंकारेष्विवातर्कितोत्कटानिष्टापत्त्यभावादत्र विषमो नास्ति । किं तु सम एवेति । इदमस्य कथनं समीचीनम् । यद्यप्यस्मिन्नुदाहरण आभासांशोपि वर्तते तथाप्येतादृशशङ्काशून्यत्वमप्यस्य विषयस्योदाहरणमस्ति ॥

यथा—

अन्विष्य वसुधां सर्वां विद्वांसो हि महागुणाः ॥
प्रदातॄणां शिरोरत्नमाप्नुवन्मरुभूपतिम् ॥

अत्र महागुणवतां महावदान्यान्वेषणाय प्रवृत्तानां प्रयत्नानुरूपस्येदृशात्युदारस्य राजराजेश्वरस्य प्राप्तिर्यथायोग्या । मम तु मतं, नामरूपलक्षणेन सर्वसंग्रहे लक्षणत्रयकथनमनावश्यकम् । किं च समस्य

नेमे त्रय एव प्रकाराः । संबन्धानामनेकत्वादनेकप्रकारेण समता भवति ॥

यथावा--

आभीर्या हृदयं नवोद्धृतसमं दुग्धोपमं यौवनं
दध्ना तुल्यतमा रतिः प्रियतमे स्नेहस्रुती लोचने ॥
चन्द्रस्तक्रसमो मुखस्य पुरतः सर्वाङ्गहृद्यं वपुः
सैषा न स्वदते कथं नु रसिका गोपालसूनोर्हरेः ॥

हृदयादीनां मृदुतादिविषये किसलयाद्यौपम्ये सत्यप्याभीरीसंबन्धिनवनीतदुग्धदधिस्नेहतक्रैरौपम्यस्याभीरीविषये यथोचितत्वात्समालंकारः ॥

यथावा--

घनमातङ्गगम्भीरगर्जमाकर्ण्य केसरी ।
क्रुद्धो भवति जम्बूक! मा भैषीस्त्वं रवं कुरु ॥

अत्र सिंहगजयोर्वैरभावसंबन्धस्य यथायोग्यत्वात्समालंकारः ॥

यथावा—

अनाच्छादितखड्गेन यशवन्तमहीपतेः ॥
कालेऽवरङ्गभूपस्य छन्नाच्छिद्राः कृता नृपाः ॥

अनाच्छादनाच्छादनयोर्विपरीतभावः संबन्धः। तयोः सहकथनस्यानुभवसिद्धरोचकत्वात्तादृशसंबन्धप्रदर्शनस्य यथोचितत्वात्समालंकारः ॥

यथावा—

वक्रा धरा ऋजुः कालो वेष्टितश्च धराधिपैः ॥
राणाप्रतापसिंहाख्यो निःशङ्कं मोदते गिरौ ॥

ऋजुत्ववक्रत्वयोर्विपरीतभावः संबन्धः। अत्रापि पूर्वोक्तरीत्या समालंकारः ॥

यथावा—

नारयो लेभिरे पृष्ठं न वक्षः परयोषितः ॥
सर्वदा सर्वदोसीति मिथ्या संस्तूयसे कथम् ॥

अत्र पृष्ठवक्षसोरवयवयोः परस्परं विपरीतभावः संबन्धः । पूर्वोक्तोदाहरणवदत्रापि समालंकारः ॥

यथावा—

याचित्वा द्वाववर्धेतां हरिश्च हरनाथकः ।
ऊर्ध्वपादोऽभवत्पूर्व ऊर्ध्वहस्तः परोऽभवत् ॥

अत्र हस्तपादयोः सहकथनसंबन्धः । स च प्रसिद्धः । अतो हरनाथकवेर्निजदानशक्तिसूचकोर्ध्वहस्तकरणवर्णनप्रस्तावे भिक्षुकभूतस्य विष्णोरूर्ध्वपादकरणरूपं व्यतिरेकवर्णनं यथायोग्यत्वात्समालंकारः ॥

यथावा—

कवीश्वरान्करीन्द्राणामुपर्यस्थापयत्तथा ।
पादाधः स्थापयामास शत्रूञ्छ्रीयशवन्तराट् ॥

अत्राधऊर्ध्वयोर्विपरीतभावः संबन्धः । ततश्च पूर्वोक्तरीत्या समालंकारः । पुरा खलु हस्तिपादाधस्ताच्चूर्णयित्वा शत्रुमारणरीतिरभवत् ॥

यथावा—

अधाङ्गुलपरीणाहजिह्वाग्रायासभीरवः ।
सर्वाङ्गीणपरिक्लेशमबुधाः कर्म कुर्वते ॥

अत्र महदल्पयोर्विपरीतभावः संबन्धः ॥

यथावा—

बीकानेरचरित्रद्वयमपि जगतोऽस्ति मौलिभूतं यत् ।
नो शासनमादत्तं दत्तानि च कोटिदानानि ॥

दानादानयोर्विपरीतभावः संबन्धः । अनेकेषु विषयेषु समालंकारो भवतीति द्योतनाय मया समालंकारस्य बहून्युदाहरणानि प्रदर्शितानि ॥ मम तु मतं, अयथायोग्यानामसंबन्धस्यापि यथायोग्यत्वात्समालंकारो भवति ॥

यथा—

* ब्राह्मणचारणादिभ्यो दत्तभूमिः ॥

पतत्राणि प्रदद्याच्चेन्मार्जारेभ्यः प्रजापतिः ।
तदानीं नावशिष्येत चटकानां कुलं भुवि ॥

॥ इति समप्रकरणम् ॥ ७१ ॥

## समाधिः ॥

समाधिः समर्थनम् । उक्तं चिन्तामणौ "समाधिः समर्थने" इति । समर्थनं च शक्तिसंपन्नत्वम् । उक्तं हि समर्थशब्दार्थं कुर्वता चिन्तामणिकोषकारेण "समर्थः शक्तिसंपन्ने" इति । शक्तिश्च बलम् । आह चिन्तामणिकोषकारः "शक्तिर्बले" इति ॥

समाधिर्मरुभूपाल! समाधिर्भूषणं भवेत् ॥

यथा—

प्राणी यत्र विना जलं म्रियत इत्यूचे हि नाम्ना मरु-
र्योगी चा*पि शशाप दुर्गरचनाकाले परं कोपितः ॥
प्राचां निर्जलदोषमार्जनकृतिर्नाना वृथैवाभव-
द्दोषोऽसौ यशवन्तसिंह! भवता मृष्टो ह्रदानां कृतेः ॥

यथावा--

मतङ्गश्चाभवन्मत्तः समुद्रश्च तरङ्गितः ॥
मरुपो गजसिंहोऽभूद्दिल्लीट्प्रोत्साहनं पुनः ॥
मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्यैतदुदीर्णं घनगर्जितम् ॥

अस्मिन्धुरंधरोदाहरणे नामरूपलक्षणसंगतिरेवं रीत्या वर्तते ।

* रावयोधसिंहेन यस्मिन्गिरौ योधपुरे दुर्गं निरमायि, तत्र निर्झरे चिड़ियानाथनामको योगी तप आचरंस्तत्प्रदेशाद्गन्तुमादिष्ट शशाप, भवता दुर्गरचनाश्रयोऽयं निर्झरः शोपमाप्स्याति, द्वित्रिहायनैश्चात्र पुरे जलकष्टं भविष्यतीति । तथा च विक्रमार्कस्य पञ्चदशोत्तरपञ्चदशशतकादारभ्य पञ्चचत्वारिंशदधिकैकोनविंशतिशतकं यावत्त्रिंशदधिकचतु शतशरत्पर्यन्तं चरितार्थः शापोऽधुना यशवन्तसिंहमहाराजेन स्वप्रयत्नादपास्तः ॥

पादपतनरूपमानमोचनोपायं घनगर्जितं शक्तिमन्तं चकार। ततश्च महामानवती नायिकोक्तविनयातिक्रमं कर्तुमसमर्था प्रसन्ना बभूव। धुरंधराभिप्रायमजानन्काव्यप्रकाशगतकारिकाकारोऽत्र कारणान्तरयोगतः कार्यसौकर्यं ज्ञात्वेदं लक्षणमाह—

"समाधिः सुकरं कार्यं कारणान्तरयोगतः॥" इति॥

सर्वस्वकारादयः सर्वे काव्यप्रकाशगतकारिकाकारानुसारिणः॥ रत्नाकरकारस्येदं लक्षणम्—

"स्थितस्योपोद्बलनं समाधिः॥" इति॥

अत्रोपेत्युपसर्गः सामीप्ये। उदित्युपसर्गोऽत्यर्थे। बलनं बलदानम्। उपोद्बलनमिति शब्दसमुदायार्थस्तु समीपस्थतयातिबलदानम्। स्थितस्य समीपस्थतयाऽतिबलदानं समाधिरितिलक्षणार्थः। इदमपि लक्षणं काव्यप्रकाशगतकारिकाकारवत्कारणान्तरयोगतःकार्यसौकर्यपरायणम्। मम तु मतं, अत्र कारणान्तरयोगतः कार्यसुकरताया विवक्षा क्रियते चेत्—

"तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करं भवेत्॥"

इति काव्यप्रकाशगतकारिकाकारस्यैव लक्षणलक्षितकारणसमुच्चयस्य प्रकारः स्यात्। तत्सिद्धिहेतावेकस्मिन्सत्यन्यस्य तत्करत्वं, कारणान्तरयोगतःकार्यसुकरत्वं चेति किंचिद्वैलक्षण्यं नालंकारान्तरत्वसाधकम्। किं तु कारणसमुच्चयस्यैव प्रकारान्तरत्वसाधकम्। तच्च वक्ष्यमाणसमुच्चयालंकारप्रकरणे सविस्तरं प्रतिपादयिष्यते। किं चात्र केवलं सुकरताकारककारण एव पर्यवसाने तु हेत्वलंकारस्य प्रकारः स्यात्। समाधिस्थले कार्यकारणभावाङ्गीकारे तु पृथगलंकारो न भवेत्। समर्थने च न कारणत्वविवक्षा। कुत इति चेत्समर्थनं तु सिद्धस्य वस्तुनो भवति। लोके गृहाणि शक्तिमन्ति कर्तुं सुधया लिम्पन्ति, कपाटानि तैलाक्तानि कुर्वन्ति। तत्र सुधातैले गृहकपाटानां कारणे न भवतः। गृहकारणानि तु पाषाणशिल्प्यादीनि। कपाटकारणानि च काष्ठवर्धकिप्रभृतीनि। ईदृशलोकव्यवहारच्छायानुसारेण धुरंधरः समाध्यलंकारमाह। "प्राणी यत्र विना जलम्—" इत्यत्र मरुभूमेस्तादृशनिर्जलतायाः स्वयंसिद्धत्वेपि चिडियानाथयोगिनः शापेन सा शक्तिमती कृता। अत एव त्रिंशदुत्तरचतुःशतशर-

रपर्यन्तं न निवृत्ता । "मतङ्गश्चाभवन्मत्तः" इत्यत्र गजस्य स्वतो बलवत्त्वेप्यन्यगजेन युद्ध्यमानस्य रणे वा कातरतया बलहीनत्वे मत्ततया तद्बलं दृढीकृतम् । समुद्रभयंकरत्वस्य स्वयंसिद्धत्वेऽप्यभ्यासत्वतो भयंकरत्वाभावे तरङ्गैस्तद्भयंकरता शक्तिमती कृता । मरुधराधीशमहाराजगजसिंहस्यासिवीरत्वेऽपि कदाचिदप्रसादाद्दिल्लीशकार्यकरणनिषेधे दिल्लीशप्रोत्साहनेन तद्वीरता शक्तिमती कृता । शक्तिमत्करे शक्तिमत्करणहेतुत्वाङ्गीकारेऽप्यत्र मतिः कार्यकारणभावं नावगाहते । अतोऽत्र कार्यकारणभावस्यातिगौणत्वम् ॥ कारणान्तरस्य कार्यसुकरतायां संबन्धः प्रकृतकार्येण सह भवति । समाध्यलंकारे तु समर्थकं वस्तु समर्थनीयवस्तुनः समर्थनं कृत्वा तत्रैव पर्यवस्याति । प्राचीनोक्तलक्षणेभ्यः समाध्यलंकारस्वरूपमतीव व्यतिरिच्यते ॥

॥ इति समाधिप्रकरणम् ॥ ७२ ॥

## ॥ समासोक्तिः ॥

संक्षेपशब्दस्य पर्यायः समासः । तदुक्तं चिन्तामणिकोषकारेण "समासः संक्षेपे" इति । संक्षेपशब्दार्थश्चिन्तामणिकोषे "स्तोकेन भूयसोऽभिधाने" इत्यभिहितः । समासोक्तिरिति समुदायार्थस्तु स्तोकेन बह्वर्थाभिधायिकोक्तिरिति । समासः, संक्षेपः, संग्रह इति पर्यायशब्दाः । स्तोकेन भूयसोऽभिधानरीतिर्लोकप्रचलिता । यथा सप्तश्लोकीगीता, चतुःश्लोकीभागवतमित्यादयः । धुरंधरैस्तल्लोकव्यवहारच्छायानुसारेणायमलंकारः स्वीकृतः ॥

उक्तिः समासरूपेण यत्र स्याद्वर्णने नृप! ॥
समासोक्तिमलंकारं तत्राहुः कविवल्लभाः ॥

यथा—

खादिरस्तेऽरिनारीणां प्रकरोति कुचक्षतम् ॥
केशान्गृह्णाति वस्त्राणि हरते विपिने नृप! ॥

अत्र खदिरवृक्षे कामुकत्वं विवक्षितम्। कामुकपुरुषस्य कुचे नखक्षतकरणमन्यत्, वृक्षस्य कुचे कण्टकलगनमन्यत्। कामुकपुरुषस्य कामिनीकेशग्रहणमन्यत्, वृक्षे कामिन्याः केशनिरोधस्त्वन्यः। कामुकपुरुषस्य कामिन्या वसनदूरीकरणमन्यत्, वृक्षे कामिनीवसनस्याकर्षणमन्यत्। कामुके पुरुषत्वमन्यत्, खदिरवृक्षे पुरुषत्वमन्यत्। एवं बहवोऽर्थाः "प्रकरोति कुचक्षतं, केशान्गृह्णाति, वस्त्राणि हरते" इत्येतैः, खदिरशब्दस्य पुंल्लिङ्गत्वेन च संक्षेपेण कथिताः। यद्वा खदिरस्य वास्तववृत्तान्तप्रतिपादकशब्दैरेव तस्य कामुकवृत्तान्तकथनं स्तोकेन भूयसोऽभिधानम्। एवमन्यत्रापि बोध्यम्। न च रूपकादिष्वेवं स्तोकेन भूयसोऽभिधानम्। श्लेषे त्वेकस्मिञ्छब्द एकवृन्तगतफलद्वयन्यायेन द्वावर्थौ पृथक्पृथक्समकक्षतया वर्तेते, नत्वेवमेकरूपेण संक्षेपेण॥

यथा—

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥

अत्र तुलाकोटेः खलस्येति च विशेष्ययोः पृथक्पृथक्त्वेन कथनम्, अतः "उन्नतिम्" इत्यत्र "अधोगतिम्" इत्यत्र च द्व्यर्थतैव विवक्षिता। अतोऽत्र श्लेष एव। "खदिरस्तेऽरिनारीणाम्" इत्यत्र खदिरस्यैव कामुकतया विवक्षितत्वात्समासोक्तिः। उक्तिस्त्वभिधया प्रतिपादनम्। व्यङ्ग्यार्थश्च नाभिधाप्रतिपाद्यः। तत्रान्यार्थप्रतीतेर्व्यञ्जनाबोध्यत्वात्। एवमेवाप्रस्तुतप्रशंसास्थलेऽन्यार्थस्य न संक्षेपेण कथनम्। किं तु व्यञ्जनया पृथग्रूपेण प्रतीतिः। अत्र खदिरस्य कामुकत्वं स्पष्टम्, तत्कथनं च न सूक्ष्मतया, किं तु संक्षेपेण। अनया रीत्या सूक्ष्मालंकारस्य समासोक्त्यलंकारस्य च महान् भेदः। पर्यायोक्तौ तु धर्मिणो विशेषधर्मेष्वेकविशेषधर्मस्थानेऽन्यविशेषधर्मस्य कथनम्॥

यथा—

आदाय खड्गं यशवन्तसिंह-
सेनासमक्षं प्रतियान्ति ये वै।
सुराङ्गनोरःस्थललग्नगात्राः
स्वपन्ति ते देवपुरे सुखेन॥

अत्रारिरूपधर्मिणो मरणधर्मस्थाने "स्वपन्ति ते" इत्यादिरूपं धर्मान्तरमुक्तम्। अत्र वस्तुनो विशेषस्वरूपाणि परित्यज्य संक्षेपार्थं सामान्यरूपेणाभिधानम्। "खदिरस्तेऽरिनारीणाम्" इति समासोक्त्युदाहरणे खदिरक्रियाणां कामुकक्रियाणां च "प्रकरोति कुचक्षतम्" इत्यादिना सामान्यरूपेण कथनात्संक्षेपरूपत्वम्॥

गुणदोषौ बुधो गृह्णन्निदुक्ष्वेडाविवेश्वरः।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति॥

अस्मिन्बिम्बप्रतिबिम्बभावापन्नधर्मकथनेऽपि शिवेनेन्दोः शिरसा श्लाघनं तु मस्तके धारणं, तदन्यत्। विद्वद्भिर्गुणानां शिरसा श्लाघनं तु शिरःकम्पनं, तदन्यत्। अत्र स्तोकेन बह्वर्थाभिधायकानां शिरसा श्लाघनादिशब्दानां सत्त्वे कुतो न समासोक्तिरिति चेच्छृणु। उक्तार्थयोरेकसामान्यस्य विशेषत्वाभावात्। किं तु विजातीयत्वात्पार्थक्यम्। ततश्च श्लेष एव॥

यथावा—

उपोढरागेण विलोलतारकं
तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तया
पुरोऽपि रागाद्गलितं न लक्षितम्॥

शुक्लाभिसारिकां प्रतीयं सख्या उक्तिः। चन्द्रोदयो जातस्तदभिसर्यतामिति। तत्राभिसारिकाया उद्दीपनार्थं चन्द्रनिशयोर्दम्पतिव्यवहार प्रतिपादनं समासोक्तिः। अत्र रागमुखशब्दानां श्लेषेण चन्द्रनिशयोः पुल्लिङ्गस्त्रीलिङ्गत्वेन च चन्द्रनिशयोर्दम्पतिव्यवहारः संक्षेपेणोक्तः। अत्र रागादिशब्दानां श्लिष्टत्वेऽपि चन्द्रनायकयोर्द्वयोर्विशेष्ययोर्न पृथक्पृथग्विवक्षा। चन्द्रस्यैव नायकत्वेन वर्णनात्। तत्र चन्द्रनिशयो रागो भिन्नः। नायिकानायकयो रागो भिन्नः। निशायास्तारकासंबन्धोऽन्यः। नायिकायाः कनीनिकारूपतारकासंबन्धस्त्वन्यः। निशायाः प्रारम्भरूपं मुखमन्यत्। नायिकाया मुखमन्यत्। चन्द्रे पुरुषत्वमन्यत्। नायके पुरुषत्वमन्यत्। निशायां स्त्रीत्वमन्यत्। नायिकायां स्त्रीत्वं चान्यत्।

एवंभूता बहवोऽर्थाः श्लिष्टपदैः पुल्लिङ्गस्त्रीलिङ्गमात्रेण च कथिताः । तच्च स्तोकेन भूयसोऽभिधानम् । अत्र कवेर्निर्भरः समासोक्तावेव । ततोऽत्र श्लेषस्याङ्गत्वम् ॥

यथावा—

अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ॥

अत्र नायिकामभिसारयितुं सखी प्राह । पूर्वदिशि चन्द्रोदयो जात इति । तत्रोद्दीपनाधिक्यार्थं चन्द्रशब्दस्य पुल्लिङ्गत्वेन, दिक्छब्दस्य स्त्रीलिङ्गत्वेन, रक्तशब्दस्य श्लेषेण, एवं चुम्बनशब्देन च संबन्धस्य कथनाद्दिक्चन्द्रमसोर्दम्पतित्वेन समागमः संक्षेपेणोक्तः ॥

यथावा—

सालंकारा सुवर्णाढ्या सरसा सगुणा नवा ॥
सभावासौ कवेर्वाणी जगज्जयति भूपते! ॥

अस्य काव्यकर्तुर्विवक्षा तु कविवाण्याः स्त्रीरूपत्वेन वर्णने । अतो वाणीस्थपदार्थानां स्त्रीनिष्ठपदार्थानां चैकैकसामान्यवचनेन संग्रहः कृतः । हारादीनामुपमादीनां चैकेनालंकारशब्देन, कनकस्य सुष्ठुवचनस्य चैकेन सुवर्णशब्देन, नायिकाया लौकिकानुरागस्य रसदशापन्नानुरागस्य चैकेन रसशब्देन, कवितायां प्रसादादयो नायिकायां विनयादयश्च गुणास्तेषामेकेन गुणशब्देन, अपूर्वताया नववयसश्चैकेन नवशब्देन, आशयस्य हावभावादेश्चैकेन भावशब्देन, अन्यकविवाण्यपेक्षया सर्वोत्कृष्टतया वर्तनस्यान्यस्त्रीणां च तिरस्कारकरणस्यैकेन जगज्जयतीति वाक्येन संग्रहः कृतः । भारत्यां स्त्रीत्वमन्यत्, नार्यां स्त्रीत्वमन्यत्, तस्य वाणीशब्दनिष्ठेनैकेन स्त्रीलिङ्गेन संग्रहः कृतः । तच्च स्तोकेन भूयसोऽभिधानम् । अत्रालंकारादिशब्दानां पृथक्पृथक्स्वरूपेण नार्थद्वयम् । यथा राजशब्दस्य राजा चन्द्रश्चेति । अत एवात्र नार्थश्लेषः । किं तु संक्षेपः । यद्यप्यस्मिन्काव्येऽर्थद्वयवाचकत्वात् "सुवर्ण" इति श्लिष्टः शब्दः । परं त्वेवं संक्षेपसमुदायक्रमपङ्क्तावायातत्वादस्मिञ्छब्देपि न श्लेषस्य प्राधान्यम् । अ-

स्यालंकारस्य नामार्थस्वारस्यमजानन्तः प्राचीना धुरंधरस्योदाहरणमात्रेण भ्रमित्वाऽस्याः समासोक्तेः स्वरूपमिदमजानन् । "अप्रस्तुतेन प्रस्तुतस्य प्रतीतावप्रस्तुतप्रशंसालंकारः । प्रस्तुतेनाप्रस्तुतस्य प्रतीतौ समासोक्त्यलंकारः " इति । सर्वस्वकारोऽप्रस्तुतप्रशंसाप्रारम्भेऽवदत् । "प्रस्तुतादप्रस्तुतावगतौ समासोक्तिरुक्ता । अधुना तद्वैपरीत्येनाप्रस्तुतात्प्रस्तुतप्रतीतावप्रस्तुतप्रशंसोच्यते " इति । " प्रस्तुतस्य गम्यताऽप्रस्तुतप्रशंसाविषयः । अप्रस्तुतस्य गम्यता समासोक्तेर्विषयः " इति च । प्राचीनाः स्वसिद्धान्तानुसारेण प्रस्तुतेनाप्रस्तुतस्य गम्यतायां समासोक्तिनाम्नोऽनया रीत्या संगतिं चक्रुः । भगवतो वेदव्यासस्येदं लक्षणम्--

"यत्रोक्ताद्गम्यतेऽन्योर्थस्तत्समानविशेषणः ।
सा समासोक्तिरुदिता संक्षेपार्थतया बुधैः ॥" इति ॥

भोजमहाराजस्येदं लक्षणम्—

"यत्रोपमानादेवैतदुपमेयं प्रतीयते ।
अतिप्रसिद्धेस्तामाहुः समासोक्तिं मनीषिणः॥" इति ॥

अपि चाह—

"संक्षेपेणोच्यते यस्मात्समासोक्तिरियं ततः ॥" इति ॥

तात्पर्यमिदम्, उपमानेनोपमेयस्य कथनं संक्षेपेण कथनम् । अन्ये प्राचीना अप्रस्तुतेन प्रस्तुतप्रतीतावप्रस्तुतप्रशंसालंकारः, प्रस्तुतेनाप्रस्तुतस्य प्रतीतौ च समासोक्त्यलंकार इत्यङ्गीचक्रुः । महाराजेन प्रशंसाशब्दस्यार्थः स्तुतिरित्यङ्गीकृत्याप्रस्तुतप्रशंसाशब्दस्यायमर्थः कृतः । स्तुतिकरणायोग्यस्य स्तुतिरिति । महाराजस्याप्रस्तुतप्रशंसाया एवं पृथक्स्वरूपस्थापनादप्रस्तुतोपमानेन प्रस्तुतोपमेयस्य प्रतीतौ संक्षेपरूपोक्तिमङ्गीकृत्य समासोक्तिकथनम् । मम तु मतं, महाराजस्याप्रस्तुतप्रशंसाया उक्तस्वरूपव्यवस्थापनं तु प्रमादः । इदमप्रस्तुतप्रशंसाप्रकरण उक्तम् । अथ चाप्रस्तुतेन प्रस्तुतप्रतीतिः, प्रस्तुतेनाप्रस्तुतस्य च प्रतीतिरिति-

स्थलद्वयेऽप्यप्रस्तुतप्रशंसैव । इदमप्यप्रस्तुतप्रशंसाप्रकरणे लिखितम् । समासोक्तेः स्वरूपं तु स्तोकेन भूयसोऽभिधानम् । तत्त्वप्रस्तुतप्रशंसातो-ऽत्यन्तविलक्षणम् । अप्रस्तुतेन प्रस्तुतस्य प्रतीतिः, प्रस्तुतेनाप्रस्तुतस्य प्रतीतिर्वा समासोक्तिरित्यङ्गीकारे तु व्यङ्ग्यमात्रे समासोक्त्यलंकारो भवेत् । दण्ड्याचार्यस्येदं लक्षणम्—

"वस्तु किंचिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः ॥
उक्तिः संक्षेपरूपत्वात्सा समासोक्तिरिष्यते ॥" इति ॥

काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः ॥" इति ॥

श्लिष्टैरुभयार्थसंगतैः, भेदकैर्विशेषणैः, परस्याप्रस्तुतस्योक्तिः समासोक्तिरित्यर्थः । प्रकाशकारो वृत्तौ लिखति— "प्रकृतार्थप्रतिपादक-वाक्येन श्लिष्टविशेषणमाहात्म्यान्न तु विशेष्यस्य सामर्थ्यादपि यदप्रकृ-तार्थस्याभिधानं सा समासेन संक्षेपेणार्थद्वयकथनात्समासोक्तिः" इति । सर्वस्वस्येदं लक्षणम्—

विशेषणानां साम्यादप्रस्तुतस्य गम्यत्वे
समासोक्तिः ॥" इति ॥

चन्द्रालोकस्येदं लक्षणम्—

"समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ॥" इति ॥

गम्यता, प्रतीतिः, स्फुरणमिति पर्यायाः । मम तु मतं, अप्रस्तुतेन प्रस्तु-तस्य गम्यता, प्रस्तुतेनाप्रस्तुतस्य गम्यतेत्येतत्किंचिद्वैलक्षण्यं प्रका-रान्तरं साधयति । न त्वलंकारान्तरम् । अतोऽस्य विषयस्याप्रस्तु-तप्रशंसायामन्तर्भावः । ननु समादिविपरीतभावेऽसमाद्यलंकारान्तराणि त्वयापि स्वीकृतानि । अस्य विषयस्य पृथगलंकारत्वं कुतो नेति चेत्, प्रस्तु-ताप्रस्तुतविपरीतभावेऽन्येनान्यस्य कथनमेव चमत्कारहेतुः । तच्च न सर्वथा विलक्षणम् । समविषमतद्गुणातद्गुणादिविपरीतभावे तु चमत्का-रस्यात्यन्तं विलक्षणता । प्राचीनैस्तु समासोक्तिनाम्नः संगतिरेवं विहिता ॥

प्रकृतार्थप्रतिपादकवाक्येनाप्रकृतार्थस्य कथने संक्षेपादर्थद्वयकथनात्समासोक्तिरिति । अयमपि प्रमादः । एवं स्वीकारे श्लेषादौ व्यङ्ग्येपि च समासोक्त्यापात्तिः स्यात् । श्लेषे व्यङ्ग्ये च न स्तोकेन भूयसोऽभिधानम्। संक्षेपस्तु धुरंधराभिप्रायानुसारेण मया स्पष्टीकृत एव विलक्षणः। अत्र सहृदयहृदयमेव साक्षि। अत्र वृत्तान्तयोर्विवक्षाकरणे त्वप्रस्तुतप्रशंसैवेति मयाऽप्रस्तुतप्रशंसाप्रकरणे स्पष्टीकृतम् । अपि च सर्वस्वकारादयो वदन्ति "अप्रस्तुतप्रशंसायां तु न कस्यचित्कस्मिँश्चिदारोपः । समासोक्तौ त्वप्रस्तुतव्यवहारमात्रस्य प्रस्तुतधर्मिण्यारोपः । रूपके च प्रस्तुतधर्मिण्यप्रस्तुतधर्मिणोप्यारोपो भवति । "अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः" इत्यत्र चन्द्रे धर्मिणि न जारधर्मिण आरोपः । अपि तु चन्द्र उक्तजारकार्यं करोतीति जारव्यवहारमात्रस्यारोपः" इति ॥ अथ च रसगङ्गाधरकारो वदति— "अप्रस्तुतव्यवहारस्य न प्रस्तुते धर्मिण्यारोपः, किं तु प्रस्तुतव्यवहारेऽप्रस्तुतव्यवहारस्यारोपः" इति । मम तु मतं, आरोपभावाभावाभ्यां न समासोक्तेर्विलक्षणता । समासोक्तेर्विलक्षणता तु समासोक्तेरुक्तस्वरूपेणैवेति मया प्रथमं स्पष्टीकृतम् । दण्ड्याचार्यो भोजमहाराजश्चाहतुः "प्रशंसाशब्दार्थः स्तुतिः" इति । तथा चाप्रस्तुतस्तुत्या प्रस्तुतस्य निन्दाया गम्यतायामप्रस्तुतप्रशंसा । अन्यवस्तुनाऽन्यवस्तुनो गम्यतायां समासोक्तिरिति ॥ मम तु मतं, इयं किंचिद्विलक्षणताप्यलंकारान्तरसाधिका न भवति । न च स्तुत्या निन्दाया गम्यताऽप्रस्तुतप्रशंसायाः स्वरूपमिति मयाऽप्रस्तुतप्रशंसाप्रकरणे सविस्तरमुक्तम् । अथ चान्येनान्यस्य गम्यता न व्यङ्ग्यस्य विषयः । भगवतो वेदव्यासस्याप्रस्तुतप्रशंसावारणार्थं "समानविशेषणम्" इति कथनमीषद्वैलक्षण्यापादकत्वान्नालंकारान्तरत्वसाधनक्षमम् । भोजमहाराजेन स्वलक्षणानुसारेण समासोक्तेरिदमुदाहृतम्—

नालस्य प्रसरो जलेष्वपि कृतो वासस्य कोशे रुचि-
र्दण्डे कर्कशता मुखे च मृदुता मित्रे महान्प्रश्रयः ॥
आमूलं गुणसंग्रहव्यसनिता द्वेषश्च दोषाकरे
यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः ॥

दण्ड्याचार्यस्य स्वलक्षणानुसारेण समासोक्तेरिदमुदाहरणम्—

पिबन्मधु यथाकामं भ्रमरः फुल्लपङ्कजे ॥
अप्यसन्नद्धसौरभ्यं पश्य चुम्बति कुड्मलम् ॥

मम तु मतं, एतयोः काव्ययोरप्रस्तुतप्रशंसैवालंकारः । "नालस्य" इत्यत्र सुराजवृत्तान्तप्रसङ्गेऽप्रस्तुतकमलवृत्तान्तस्य कथनम् । "पिबन्मधु" इत्यत्र प्रौढया नायिकया कृतरतस्य नायकस्य नवोढारुचिप्रसङ्गेऽप्रस्तुत-भ्रमरवृत्तान्तोऽभिहितः ॥

निरीक्ष्य विद्युन्नयनैः पयोदो
मुखं निशायामभिसारिकायाः ॥
धारानिपातैः सह किं नु वान्त-
श्चन्द्रोयमित्यार्ततरं ररासे ॥

अत्र मेघे पुरुषस्य, विद्युति नयनस्य, गर्जन आर्तरवस्य रूपकम् । "विद्युन्नयनैः" इत्यत्र विद्युन्नयने उभे उक्ते । "पयोदः, आर्ततरं ररासे" इति चैकैकस्य कथनात्, पुरुषगर्जनस्यानुक्तत्वादत्रैकदेशविवर्तिरूपकम् । अत्र समासोक्तेर्भ्रमो न कार्यः । कुत इत्युक्तावत्र विद्युन्नयने इति रूप-कांशान्मेघादौ पुरुषादेराक्षेपः । न तु विद्युन्नयने इति रूपकपुरस्कारेण तेषां रूपकाणां कथनम् । यथा "खदिरस्तेऽरिनारीणाम्" इत्यत्रोक्तक्रियाकथन-रूपेण स्तोककथनेन खदिरस्य कामुकत्वकथनम् ॥ धुरंधरेण स्वल्पशब्दै-र्बह्वर्थकथनस्योदाहरणं प्रदर्शितम् । तत्र धुरंधरस्य साक्षादभिप्रायम-जानानाः समस्तग्रन्थकारास्तादृशान्येकप्रकारकाण्येवोदाहरणानि दर्शय-न्तस्तदुदाहरणानुसारेण भिन्नभिन्नलक्षणानि व्यदधुः । धुरंधरस्य नामरूप-लक्षणाभिप्रायस्तु सामान्यतया स्तोकेन भूयसोऽभिधानम् । तदेव स्वल्पा-र्थेन बह्वर्थकथनस्योदाहरणं मया प्रदर्श्यते—

किमहं वच्मि हे नाथ ! तस्या विरहवेदनाम् ।
तदर्थमाशीर्मरणं तद्गत्वा त्वं विलोकय ॥

अत्र नायिकाया विरहवेदनया बहव आधयो व्याधयश्च समुप-

स्थिताः । तच्च " किमहं वच्मि " इति कथनात्स्फुटतरम् । ते च सर्वे " तदर्थमाशीर्मरणम् " इत्येतावन्मात्रेण सख्या कथिताः । एतदुदाहरणप्राप्त्या प्राचां प्रमादापतितैतदलंकारबोधविषयकभ्रमान्धकारस्य नाशादिवा प्रत्यक्षपदार्था इवास्यालंकारस्य स्वरूपं स्फुटं लक्ष्यते । अस्मिन्नुदाहरणे प्राचां लक्षणानां हठादपि न किंचित्प्रवेशः ।

॥ इति समासोक्तिप्रकरणम् ॥ ७३ ॥

## ॥ समुच्चयः ॥

समुच्चयशब्दार्थो बहूनामेकत्र भवनम् । आह चिन्तामणिकोषकारः "समुच्चयो राशौ" इति ।

समुच्चयो महाराज ! समुच्चय इहेष्यते ।
यथा त्वयि गुणाः सन्ति संभूय सकला नृप ! ॥

यथा—

नृपोऽत्युदारो यशवन्तसिंहो
देशो मरुर्यत्र न रोगगन्धः ।
कुले जनिश्चोत्तमचारणाना-
मिदं तु दैवादभवन्मुरारेः ॥

अत्र भाग्यवशान्मुरारिदानकविराजस्योक्तोत्तमपदार्थानां समुदितानां प्राप्त्या समुच्चयालंकारः ।

यथावा—

दाता नृपालो यशवन्तसिंहो
धीमान्कुमारः सरदारसिंहः ॥
भ्राता च वीरः परतापसिंहः
श्लाघ्योयमास्ते समयोऽधुना नः ॥

अत्रैकस्मिन्समय एतेषामुत्तमपदार्थानां समुदितत्वात्समुच्चयालंकारः ।

यथावा—

नीती रीतिः क्षत्रियत्वं नैपुण्यं कीर्त्युपार्जनम् ॥
सन्त्येते यस्य शार्दूलसिंहोयं राजतेतराम् ॥

अत्र कृष्णनगराधीशमहाराजशार्दूलसिंहस्य नीत्यादिगुणानां समुच्चयः ॥

यथावा—

मणिः शाणोल्लीढः समरविजयी हेतिनिहतो
मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः ॥
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु जनाः ॥

पूर्वोदाहरणेष्वीश्वरकृतपदार्थसमुच्चयवर्णनम् । अत्र स्वाभाविकक्षीणतया शोभमानानां पदार्थानां कविना समुच्चयः कृतः । भोजमहाराजस्येदं लक्षणम्—

"निवेशनमनेकेषामेकतः स्यात्समुच्चयः ॥" इति ॥

वाग्भटस्येदं लक्षणम्—

"एकत्र यत्र वस्तूनामनेकेषां निबन्धनम् ॥
अत्युत्कृष्टापकृष्टानां तं वदन्ति समुच्चयम् ॥" इति ॥

यत्रात्युत्कृष्टपदार्थानामत्यपकृष्टपदार्थानां वैकत्र निबन्धनं तत्र समुच्चय इत्यर्थः । उत्कृष्टपदार्थोदाहरणं "मणिः शाणोल्लीढः" इति ।

अपकृष्टसमुच्चयो यथा—

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ॥
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥

अत्र मनसः शल्यरूपाणां वस्तूनां समुच्चयः। मम तु मतं, लक्षण उत्कृष्टापकृष्टग्रहणमनावश्यकम् । लोकविलक्षणतार्थमतीति विशेषणमप्यनावश्यकम् ॥ अस्मिन्नलंकार एतेषां नोपयोगित्वम् ।

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ॥
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥

एतादृशकारणसमुच्चयोदाहरणेन—

विदलितसकलारिकुलं
तव बलमिदमभवदाशु विमलं च ॥
प्रखलमुखानि नराधिप !
मलिनानि च तानि जातानि ॥

एतादृशगुणसमुच्चयोदाहरणेन—

त्रस्यन्ति च प्रकम्पन्ते पलायन्ते पतन्ति च ॥
उत्तिष्ठन्ति महाराज ! विद्विषो भवतो रणे ॥

एतादृशक्रियासमुच्चयोदाहरणेन च भ्रमित्वा काव्यप्रकाशगतकारिकाकारः समुच्चयस्येदं लक्षणमाह—

तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करं भवेत् ॥
समुच्चयोऽसौ स त्वन्यो युगपद्या गुणक्रियाः ॥" इति ॥

सर्वस्वरत्नाकरचन्द्रालोकादिकर्तारः काव्यप्रकाशानुसारिणः । चन्द्रालोकस्येदं लक्षणम्—

"बहूनां युगपद्भावभाजां गुम्फः समुच्चयः ॥
अहंप्राथमिकाभाजामेककार्यान्वयेपि सः ॥" इति ॥

युगपद्भावभाजां बहूनां गुम्फनं काव्ये वर्णनं समुच्चयालंकारः ।

अहं पूर्वमहं पूर्वमिति न्यायेन बहूनामेककार्यसंबन्धेऽपि समुच्चय इत्यर्थः। कुवलयानन्दकारो वृत्तौ लिखति—"कासांचित्क्रियाणां किंचित्कालभेदसंभवेऽपि शतपत्रपत्रशतभेदन्यायेन यौगपद्यं विवक्षितम्" इति। कुवलयानन्दकारः कारणसमुच्चयस्येदमुदाहृतवान्—

कुलं शीलं वयो विद्या धनं च मदयन्त्यमुम्॥

आह च "अत्र त्वहमहमिकया खलेकपोतन्यायेनानेककारणनिवेशः। समाध्यलंकारे त्वेकस्मिन्कारणे कार्यसिद्धये प्रवृत्ते सति कारणान्तरं काकतालीयन्यायेन प्रवर्तते" इति। मम तु मतं, धुरंधरस्य नामार्थानुसारेण भोजमहाराजस्य लक्षणं समीचीनम्। तत्र कारणसमुच्चयकार्यसमुच्चयवस्तुसमुच्चयादीनां संग्रहो भवति। मम मते, कारणसमुच्चयश्चतुर्विधः। अनेककारणानां संभूयैककार्यसंपादनं प्रथमः। तदुदाहरणं तु "कुलममलिनं भद्रा मूर्तिः" इति। कारणे कार्यसिद्धौ प्रवृत्ते सति कारणान्तरस्य तत्कार्यसुकरतापादनं द्वितीयः॥

यथा—

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः॥
उपकाराय दिष्ट्यैतदुदीर्णं घनगर्जितम्॥

कारणे कार्यसिद्धौ प्रवृत्ते सति कारणान्तरस्य तत्कार्याधिक्यकरणं तृतीयः॥

यथा—

रूपयौवनसंपत्त्या संजातो वनितामदः॥
पत्युर्वशंवदत्वेन जातोऽधिकतरः पुनः॥

अनेककारणेष्विदं कार्यं केन कृतमिति संदेहे चतुर्थः॥

यथा—

चन्द्रः किं किं कलरवः किं वा मलयमारुतः॥
सखि! ब्रूहि मम प्राणहरणं कः करिष्यति॥

अनेककारणानां समुच्चये समुच्चयत्वं सिद्धमेव। तत्र निखिलकारणानां

समानतया साधकत्वे तु समुच्चयालंकारः। कारणान्तरस्य कार्यसुकरतापादने कार्याधिक्यकरणे वा, अनेककारणेष्विदं कार्यं केन कृतमिति संदेहे च समुच्चयाभाव इति कथने को विवेकः। कुवलयानन्दकारस्य "अहमहमिकया खलेकपोतन्यायेनानेककारणनिवेशनं समुच्चयालंकारः। एककारणे कार्यसिद्धौ प्रवृत्ते सत्यन्यकारणस्य काकतालीयन्यायेन प्रवृत्तौ च समाध्यलंकारः" इति कथनं च प्रमादः। कुत इति चेत्सहभावस्तु सहोक्त्यलंकारस्य विषयः। अत्र तु पूर्वपश्चाद्भावेऽपि कारणानां कार्यकारितायां समुदितत्वमिति समुच्चयालंकारः।

यथा—

विध्यन्नासीन्मनो तस्या अतनुर्निशितैः शरैः।
अभ्रेणापि पुनश्चापो दध्रेऽस्या जीवनं कथम्॥

अत्र विरहिणी प्राणहारिधनुर्धराणां समुच्चयः। धनुर्धरमेघागमनस्य पश्चाद्भावेऽपि समुच्चयचमत्कारे न काचिद्धानिः। यथा विलम्बेनान्योन्यालंकारे न काचित्क्षतिः। तदुदाहरणं चान्योन्यालंकारे प्रदर्शितम्। कारणद्वयसमुच्चये समाधिः। द्वयोराधिककारणसमुच्चये तु समुच्चय इति कथनमपि प्रमादः। उभयत्रापि समुच्चयस्य सिद्धत्वात्। एकादधिकं चानेकशब्दवाच्यम्। उक्तमीषद्वैलक्षण्यमपि नालंकारान्तरत्वसाधकम्। मया च कार्यसुकरताधिक्ययोः कारणद्वयादधिककारणोदाहरणान्यपि प्रदर्शितानि। न च वाच्यं, समुच्चयस्तु समानवस्तुसमुच्चये भवतीति सौकर्यकरकारणस्य प्रारम्भककारणवन्न कार्यकारित्वमिति। कुत इति चेदीदृशकारणे न स्वभावेन सहकारित्वम्। यथा घटकार्ये नियमेन मृत्तिकोपादानकारणम्। कुलालचक्रचीवरादयश्च सहकारिकारणानि। अत्र तु प्रारम्भककारणसहकारिकारणयोः कार्यकारितायां समानत्वम्। तत्र तु प्रसङ्गप्राप्त एकः प्रवर्तकः, अन्यश्च सहकारी भवति। अत्र तु प्रसङ्गप्राप्तसहकारिकारणस्य प्रथमकार्यप्रवर्तकत्वे प्रथमकार्यप्रवर्तककारणं सहकारिकारणं भवितुमर्हति॥

यथा—

समुद्गतायां मेघालौ तडिता सह तत्क्षणम् ॥
प्रियः पादप्रणामेन मानमस्या निराकरोत् ॥

एवमपि न वाच्यं, समकक्षतयाऽनेककारणानामेककार्यकारितायां समुच्चयालंकारः । कारणान्तरस्य कार्याधिक्यकरणे चाधिकालंकारः । समकक्षतयाऽनेककारणानामेककार्यकरणे संदेहे तु संदेहालंकारः । अतः कारणान्तरेण कार्यसौकर्ये समाध्यलंकारान्तराङ्गीकार एव युक्ततरः । कुत इति चेदेषु चतुर्ष्वपि स्थलेषु प्रधानचमत्कारस्य कारणसमुच्चयनिष्ठत्वम् । न त्वनेककारणानामेककार्यकरणाद्यंशनिष्ठत्वम् । अतः सर्वाण्यपि कारणानि समुच्चयस्य प्रकारान्तराणि । न त्वलंकारान्तराहाणि । इदमपि च विमर्शनीयं, घटादिकार्याणां मृत्तिकाकुलालचक्रचीवराद्यनेककारणकत्वेऽपि न समुच्चयालंकारः । तत्रानेककारणानां नियमेन स्थितेः। मृत्तिकोपादानकारणम् । तच्च घटरूपकार्यावस्थापर्यन्तमवतिष्ठते । कुलालचक्रचीवरादीनि निमित्तकारणानि । एतत्कारणसामग्रीमन्तरा घटोत्पत्तेरभावात्कारणसमुच्चये नालौकिकत्वम् ॥

यथा—

काव्यं यशसेऽर्थकृते
व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये
कान्तासंमिततयोपदेशयुजे ॥

क्वचित्काव्यस्योक्तसमस्तकार्यकारित्वे कार्यसमुच्चयरूपः समुच्चयप्रकारो भवेदेव । अत्र प्राचां लक्षणानामव्याप्तिः। अपि च " दाता नृपालः- " इत्यादिषु कारणगुणक्रियातिरिक्तवस्तुसमुच्चये चाव्याप्तिः ॥

यथावा—

अहमहमिकया चित्तं चक्षुश्चातुर्यमेति संवृद्धिम् ॥

अत्र यौवनप्राप्तौ शीघ्रं वर्धिष्णुवस्तूनां समुच्चयः । अत्र चक्षुःकथनेन कटाक्षविवक्षा । चक्षुषोऽवयवस्य शीघ्रं वृद्धेरभावात् । अवयवविवक्षा चेत्कविः सुकुचौ चक्षुश्चातुर्यमिति वदेत् । अत्र चित्तमन्तःकरणम् । तच्च वस्तु। चातुर्यं च गुणः। कटाक्षः क्रिया । एतादृशविजातीयसमुच्चये प्राचां लक्षणानामव्याप्तिः । मालोपमादिषूपमादीनां समुच्चयेऽपि माला-

रूपचमत्कारस्य प्राधान्यम् । बहूपमा तु समुच्चयोपमायाः पर्यायान्तरम् ॥

इति समुच्चयप्रकरणम् ॥ ७४ ॥

## ॥ सहोक्तिः ॥

सहशब्दार्थः सहभावः । सहभावस्योक्तिः सहोक्तिः ।

सहभाववचो राजन्सहोक्तिरिति कथ्यते ॥

रोचकतामन्तराऽलंकारत्वाभाव इति सर्वत्र बोध्यम् ।

यथा--

समुद्रमगमद्वैरिवर्गस्ते यशसा सह ।
विद्विषां भूः श्रिया साकमागता च नराधिप ! ॥

यथावा---

उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्धं मुखैर्नामितं
भूपानां जनकस्य संशयधिया साकं समास्फालितम् ।
वैदेह्या मनसा समं तदधुनाऽऽकृष्टं ततो भार्गव-
प्रौढाहंकृतिकन्दलेन च समं भग्नं तदैशं धनुः ॥

भगवतो वेदव्यासस्येदं लक्षणम्--

"सहोक्तिः सहभावेन कथनं तुल्यधर्मिणाम् ॥" इति।

मम तु मतं, अत्र लभ्योदाहरणानुसारेण "तुल्यधर्मिणां" इति नियमकरणं प्रमादः। कुत इति चेत् "समुद्रमगमत्" इत्यत्र कीर्तिः शत्रवश्च न तुल्यधर्मिणः। यथा मुखं चन्द्रश्च। यद्युच्यते, अनयोः समुद्रगमनरूपं साधर्म्यमिति। एवं चैतादृशसमानधर्मिताऽस्यालंकारस्य चमत्कारे नोपयोगिनी । दण्ड्याचार्यस्येदं लक्षणम् —

"सहोक्तिः सहभावेन कथनं गुणकर्मणाम् ॥" इति ।

मम तु मतं, लभ्योदाहरणानुसारेण गुणकर्मणोः सहभावनियमकरणमपि प्रमादः । कुत इति चेत् "समुद्रमगमत्–" इत्यत्र कीर्तिस्तु कदाचिद्गुण इत्युच्यताम् । शत्रुस्तु गुणोपि न भवति, कर्मापि न भवति । एतादृशसहभावेऽव्याप्तिर्भवति । यद्युच्यते, अत्र कर्म तु क्रिया । एवं च कीर्तिशत्रुनिष्ठसमुद्रगमनरूपक्रिययोः सहभावो वर्तते- इति चेदत्रैतादृशक्रिययोः सहभावो न विवक्षितः । किं तु कीर्तिशत्रुरूपकर्त्रोः सहभावो विवक्षितः । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम् —

"सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ॥" इति ॥

प्रकाशकारो वृत्तौ लिखति "एकार्थाभिधायकमपि सहार्थबलाद्द्वयस्यावगमकं सा सहोक्तिः" इति । अस्येदं लक्षणं सहोक्त्युदाहरणेष्वेवं रीत्या घटते । "समुद्रमगमत्" इत्यत्र समुद्रमगमद्वैरिवर्ग इति वाक्यस्य सहार्थबलेन शत्रूणां समुद्रगमनस्याप्यभिधायकत्वादेकशब्दो द्विवाचकः । मम तु मतं, सहोक्त्यलंकारस्य स्वरूपं सहभावमात्रम् । "सहार्थबलेनैकं द्विवाचकम्" इतीदं तटस्थलक्षणं तु भ्रमोत्पादकम् । न स्पष्टबोधकारकम्, न च चमत्कारापादकम् । सहोक्त्यलंकारलक्षणेऽस्य प्रवेशकरणं तु प्रमादः । सर्वस्वस्येदं लक्षणम्—

"उपमानोपमेययोरेकस्य प्राधान्यनिर्देशे-
ऽपरस्य सहार्थसंबन्धे सहोक्तिः ॥" इति ।

वृत्तौ लिखति "उपमानोपमेयभावस्त्वत्र विवक्षाधीनः" इति । अस्य मतं, सहनयनकर्ता प्रधानो भवति, सहगन्ता गौणो भवति । "समुद्रमगमत्" इत्यत्र राजराजेश्वरस्य शत्रूणां प्रधानतया कथनम् । कीर्तेर्गौणतया कथनम् । कुत इत्युक्तौ शत्रुभिः सह कीर्तेर्गमनम् । राजराजेश्वरस्य शत्रवो नीलसमुद्रं प्रेषिताः । ताँस्तावत्पर्यन्तं जना जानन्ति, "एते मरुधराधीश्वरस्य शत्रवो निष्कासिताः" इति ।

एतादृशराजराजेश्वरकीर्तिः शत्रूणां समुद्रं प्रति गमनात्तावत्पर्यन्तं गतेति शत्रूणां समुद्रप्राप्तिः प्रधाना, तत्संबन्धेन कीर्तेर्गमनं गौणम् । किंच शत्रुवत्कीर्तिः समुद्रपर्यन्तं गतेत्युपमानोपमेयभावोत्र विवक्षाधीनः। "चन्द्र इव मुखम्" इत्यादिवन्न स्वतःसिद्धः । मम तु मतं, सर्वस्वकारस्यायं प्रमादः । कुत इत्युक्तौ सहोक्त्यलंकार उपमानोपमेयभावस्य गन्धोपि नास्ति । अथ चैकस्य प्राधान्यमन्यस्य च गौणत्वमित्यंशोपि चमत्कारहीनत्वान्नालंकारतायाः साधकः । सर्वस्वानुसारी रसगङ्गाधरकारोऽवदत् "प्रधानगौणभावं विना केवलसहार्थसंबन्धे सहोक्त्यलंकाराङ्गीकारे तु—

अनुकूलभावमथवा पराङ्मुखत्वं सहैव नरलोके ।
अन्योन्यविहितमन्त्रौ विधिदिल्लीवल्लभौ वहतः ॥

अत्रापि सहोक्त्यलंकारो भवेत्" इति । मम तु मतं, अत्रापि सहोक्त्यलंकारे न कश्चिद्बाधः । सहोक्त्यलंकारे सहभावमात्रस्य चमत्कारः । सहभावसंबन्धिनोः समकक्षत्वे गुणप्रधानभावापन्नत्वे वा न वैलक्षण्यम् । समकक्षताया निर्विवादमुदाहरणं मया प्रदर्श्यते—

यथा—

मेवाडदेशाधिपसज्जनाख्यो
मरुस्थलेशो यशवन्तसिंहः ।
एतावुभौ सार्धमुपागतौ मे
गृहे मुरारेर्निजकीर्तिहेतोः ॥

न च वाच्यं, त्वयैव, "सह शिष्येणागतो गुरुः" इत्यत्र सहोक्त्यलंकारो नाङ्गीक्रियते, तदोक्तोदाहरणयोः कथं सहोक्त्यलंकार इति? कुत इति चेत्प्रथमोदाहरणे राज्ञः प्रसादाद्धनादिप्राप्तौ सत्यामपि नैरुज्यादिप्राप्तेस्तु केवलं विधिप्रसादलभ्यत्वादस्य सहभावस्य दुष्प्राप्यप्राप्तिरूपचमत्कारकारित्वाद्रमणीयत्वेनालंकारत्वम् । द्वितीयोदाहरणे चोक्तमहाराजयोर्दुष्प्राप्यसहभावस्य मम कविराजस्योत्कर्षप्रदायकत्वाद्रमणीयत्वेनानुभवसिद्धमलंकारत्वम् । वाग्भटस्येदं लक्षणम्—

"सहोक्तिः सा भवेद्यत्र कार्यकारणयोः सह ।
समुत्पत्तिकथाहेतोर्वक्तुं तज्जन्मशक्तिताम् ॥" इति ॥

हेतोः कार्योत्पत्तिसामर्थ्यमभिधातुं कार्यकारणयोः सहोत्पत्तिकथा सहोक्तिरित्यर्थः । तेनेदमुदाहृतम्—

आदत्ते सह यशसा गमयति सार्धं मदेन सङ्ग्रामे ।
सह विद्विषां श्रियासौ कोदण्डं कर्षति श्रीमान् ॥

मम तु मतं, सहोक्त्यलंकारस्य स्वरूपं सहभावमात्रम् । कार्यकारणभावपर्यन्तानुधावनकरणे तु हेतोश्चित्रहेतुनामकहेतोर्वा प्रकारो भवेत् । अपि च कार्यकारणभावं विनापि सहोक्तिर्वर्तते । तत्राव्याप्तिः स्यात् । "समुद्रमगमत्" इत्यत्र कार्यकारणभावोऽस्य मत एवं रीत्या वर्तते । राज्ञः शत्रूणां समुद्रं प्रति गमनात्कीर्तिरपि समुद्रं गतेति । एतादृशविवक्षायां न किंचिच्चारुत्वम् ॥

॥ इति सहोक्तिप्रकरणम् ॥ ७५ ॥

## ॥ सारः ॥

सारशब्दार्थः श्रेष्ठः । "सारः श्रेष्ठे" इति चिन्तामणिः । वस्तुनः श्रेष्ठांशे सार इति कथनस्य लोकरूढिः ।

सारस्तु वस्तुनो राजन्सारालंकृतिरिष्यते ॥
तत्स्वरूपं महाराज ! सम्यक् संज्ञायते त्वया ॥

यथा—

मन्यन्ते नृपतासारमुपभोगं परे नृपाः ।
सुरक्षां नृपतासारं मनुते मरुभूपतिः ॥

यथावा—

संसारे सारभूतास्ति केवलं कविगीः शुभा ।
प्रशस्यते या नितरां यशवन्तमहीभुजा ॥

धुरंधरस्येदमुदाहरणम्—

राज्ये सारं वसुधा वसुधायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥

स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानीति सप्ताङ्गं मिलित्वा राज्यम्। तादृशराज्ये वसुधा सारं, कुत इति चेद्वसुधायाः सर्वं भवति । अत्र वसुधाशब्देन राष्ट्रस्य विवक्षा । वनपर्वतादिकं सर्वं मिलित्वा वसुधावस्तु, तत्र पुरं सारमित्यादि । मम तु मतं, अस्मिन्धुरंधरोदाहरणे "राज्ये सारं वसुधा" इत्यारभ्य "सौधे तल्पं" इत्यन्तं सारस्य लौकिकत्वादुक्तसारेषु नालंकारत्वम् । अलंकारत्वं तु तल्पेऽनङ्गसर्वस्वरूपाया वराङ्गनाया अलौकिकसारत्वात्तत्रैव । अत्र लौकिकसारस्य परंपरया तल्पेऽनङ्गसर्वस्वरूपा वराङ्गना सारमित्यंशे सारालंकारं बोधयन्त्या धुरंधरस्यानया काव्यरचनया भ्रमित्वा प्रश्नोत्तरयोः सकृद्ग्रहणे चारुत्वप्रतीतेरभावादसकृत्प्रश्नोत्तरस्योत्तरालंकारत्वं साभिप्रायानेकविशेषणत्वस्य च परिकरालंकारत्वमिति प्राचीनसिद्धान्तस्मरणाद्धुरंधरोक्तसारालंकारनाम्नोऽर्थं "सरणं सारः" इति ज्ञात्वा लक्षणे उत्तरोत्तरोत्कर्षकथनं प्राचीनानां प्रमादः । एषां मतेऽत्र सरणं तु राज्ये वसुधा सारं, वसुधायां पुरमित्यादिरीत्या ज्ञेयम् । सृधातोर्भावे घञि कृते गत्यर्थकसारशब्दो निष्पन्नः । "सृगतौ" इति शास्त्रम्, । मम तु मतं, एकस्मिन्नुत्तरे उत्तरालंकारः, एकस्मिन्नुपकरणे च परिकरालंकारो भवति, तथैकोपि सारोऽलंकारपदभाग्भवतीति । अत्र सहृदयहृदयमेव साक्षि । मदुक्तप्रथमोदाहरणयोरप्येकैकसारस्य सहृदयवेद्यत्वादलंकारत्वम् । " संसारे सारभूतास्ति कविगीः—" इत्यत्र " राज्ये सारं वसुधा " इत्यत्र च विध्यलंकारसंकीर्णत्वम् । " मन्यन्ते नृपतासारम्" इत्युदाहरणं विध्यलंकारेणासंकीर्णम् । धुरंधरोक्तोदाहरणे सारशब्दार्थमुत्कर्षं ज्ञात्वा कतिपयप्राचीनानां लक्षणे उत्तरोत्तरमुत्कर्षकथनमपि प्रमादः । एवं वक्तुं शक्यते खलु, तल्पे तादृशवराङ्गनोत्कर्षरूपेत्यादि । तथाप्येतादृशविषये सारशब्दस्य लोकप्रसिद्धश्रेष्ठांशरूपार्थकरणे

यत्स्वारस्यं तदुत्कर्षरूपेऽर्थे न प्रतिभातीत्यनुभवसिद्धम्। काव्यप्रकाश-गतकारिकाकारस्येदं लक्षणम्—

"उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः॥" इति॥

सर्वस्वकारादीनां सर्वेषां लक्षणान्येतस्य लक्षणानुसारीणि। भोजमहाराजो दण्ड्याचार्यश्चेममलंकारं नोक्तवन्तौ। काव्यप्रकाश-कारो वृत्तौ लिखति "परः पर्यन्तभागोऽवधिर्यस्य। धाराधिरोहितया तत्रैवोत्कर्षस्य विश्रान्तेः" इति॥ मम तु मतं, प्राचीनैर्लक्षणे "भवेत्सारः परावधिः" इत्युक्तम्। तथा च क्वचित्सहृदयवेद्यसारपरंपरायां तु परावधिसार एवालंकारो भवेत्। तत्र तस्यैव प्राधान्यात्तत्रैव पर्यवसानाच्च। एतेषां च धुरंधरोक्तोदाहरणेन भ्रमित्वा लक्षण एवं नियमकरणं प्रमादः। एकसारवदुदाहरणेऽव्याप्तेः। किं च "नयने श्रुतिपर्यन्तम्" इत्यस्मिञ्छृङ्खलालंकारे न पर्यन्तभागे पर्यवसानम्। अत्राद्यन्तपर्यन्तं सकलवस्तुगुम्फनस्य मिलित्वा शृङ्खलान्यायात्। चन्द्रालोकस्येदं लक्षणम्—

"उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते॥" इति॥

कुवलयानन्दकारः श्लाघ्यगुणोत्कर्षस्येदमुदाहरणमदात्—

अन्तर्विष्णोस्त्रिलोकी निवसति फणिनामीश्वरः सोपि शेते
सिन्धोः सोप्येकदेशे तमपि चुलकयां कुम्भयोनिश्चकार।
धत्ते खद्योतलीलामयमपि नभसि श्रीनृसिंह क्षितीन्द्र!
त्वत्कीर्तेः कर्णनीलोत्पलमिदमपि च प्रेक्षणीयं विभाति॥

मम तु मतं, अत्राधिकालंकारः। अत्र नृसिंहक्षितीन्द्रस्य परावधिरूपायाः कीर्तेराधिक्ये पर्यवसानात्तत्रैवाधिकालंकारः। विष्णुप्रभृतीनामाधिक्यस्य गौणत्वप्राप्त्या तत्रालंकारव्यवहाराभावात्। अत्र शृङ्खलाऽलंकारस्य संकीर्णत्वम्। एवमन्यत्रापि ज्ञेयम्॥ अश्लाघ्यगुणोत्कर्षस्येदमुदाहरणमदात्—

तृणादपि लघुस्तूलस्तस्मादपि च याचकः।
वायुना किं न नीतोसौ मामयं प्रार्थयेदिति॥

मम तु मतं, अस्मिन्काव्येऽल्पालंकारः । शृङ्खलाभासहेतूत्प्रेक्षयोः संकीर्णता । उभयरूपस्येदमुदाहरणमदात्—

गिरिर्महान्गिरेरब्धिर्महानब्धेर्नभो महत् ।
नभसोपि महद्ब्रह्म ततोप्याशा गरीयसी ॥

अत्र ब्रह्मपर्यन्तेषु महत्त्वं श्लाघ्यगुणः । प्रकृतार्थ आशायां महत्त्वं त्वश्लाघ्यगुणः । मम तु मतं, अत्रापि शृङ्खलाभाससंकीर्णोधिकालंकारः । कुवलयानन्दकारस्योदाहरणे महत्पदकथनाल्लक्षणोक्तस्योत्कर्षशब्दस्याधिकार्थ एव तात्पर्यं सिद्ध्यति ॥

इति सारप्रकरणम् ॥ ७८ ॥



## ॥ सूक्ष्मः ॥



सूक्ष्मशब्दार्थः प्रसिद्धः । सूक्ष्मता यत्र चमत्कारकारिणी भवति तत्र सूक्ष्मालंकारः ॥

सूक्ष्मतावर्णनं सूक्ष्मालंकारः कथ्यते बुधैः ।
इङ्गिताकारवेत्तारः सर्वे ते सेवका नृप ! ॥

यथा—

कम्पनतोऽसिलताया मरुराजोऽरीन्रणेषु बोधयति ।
स्पर्शेऽस्या मूर्धानो भवन्ति दूरे विचारयध्वं तत् ॥

अत्र रणाङ्गणेऽसिलताकम्पनरूपचेष्टामात्रेण शत्रून्प्रति राजराजेश्वरकृततादृशबोधनस्य सूक्ष्मतया सूक्ष्मालंकारः । दण्ड्याचार्यस्येदं लक्षणम्—

"इङ्गिताकारलक्ष्योर्थः सौक्ष्म्यात्सूक्ष्म इति स्मृतः" इति ।

सर्वस्वकारोपि "इङ्गिताकार" इति वृत्तावाह । तदुपरि कटाक्षं कुर्वन्रत्नाकरकारो वदति । सूक्ष्मालंकारो वाक्येनापि भवतीति ॥

यथा—

संकेतकालजिज्ञासुं ज्ञात्वेत्थं प्राह काचन ॥
सखि ! पानीयमानेतुं सायं मेऽवसरो भवेत् ॥

रत्नाकरकारस्य कथनं मम मतेऽपि समीचीनम्। प्राचीनानां लभ्योदाहरणानुसारेणेङ्गिताकारयोर्नियमकरणं प्रमादः ॥

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ॥
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥

अत्राऽऽननस्वेदबिन्दुना खण्डितकण्ठकुङ्कुमेन सखी नायिकाया विपरीतरतं ज्ञातवती। इदं सूक्ष्मतयाऽवगमनम्। अथ च सा सखी नायिकाया हस्ते पुरुषधारणयोग्यकृपाणचिन्हं लिखित्वा नायिकामेवं बोधितवती,त्वया विपरीतरतमाचरितामिति। इदं सूक्ष्मतया बोधनम्। अत्रावगमनं बोधनं चाऽऽकारेण वर्तते ॥

यथावा—

संकेतकालमनसं विटं ज्ञात्वा विदग्धया ।
ईषन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥

अत्र नायकस्य कयापि चेष्टया तस्य संकेतप्रश्नं ज्ञात्वा नायिकया स्वहस्तस्थक्रीडाकमलनिमीलनेन सायं मेलनसमयः सूक्ष्मतया बोधितः । अत्रावगमनं बोधनं च चेष्टया वर्तते। धुरंधरस्योक्तोदाहरणाभ्यां भ्रमित्वा लक्षितसूक्ष्मार्थस्यान्यं प्रति प्रकाशनमिति सूक्ष्मालंकारस्य स्वरूपं बुध्वा काव्यप्रकाशगतकारिकाकार इदं लक्षणमाह—

"कुतोपि लक्षितः सूक्ष्मोप्यर्थोऽन्यस्मै प्रकाश्यते ॥
धर्मेण केनचिद्यत्र तत्सूक्ष्मं परिचक्षते ॥" ॥इति॥

सर्वस्वकारादयोऽस्यानुसारिणः । सर्वस्वकारोपरि कटाक्षं कुर्वन् रत्नाकरकारो वदति, लक्षितसूक्ष्मार्थस्योक्तरीत्या प्रकाशनमिति नियमो

न समीचीनः । कुत इति चेदन्येनालक्षितार्थस्याप्युक्तरीत्या प्रकाशनं क्रियते ॥

यथा—

कान्तकण्ठे धारयित्वा मुक्ताहारं निजं प्रिया ॥
इति तं कथयामास तवायं शोभतेतराम् ॥

अत्र नायकेनालक्षितो विपरीतरतिरूपो निजाभिप्रायो नायिकया नायकं प्रति सूक्ष्मतया ज्ञापितः । इदं च रत्नाकरकारकथनं मन्मतेऽपि समीचीनम् । यद्यपि सूक्ष्मतया ज्ञापनमन्यतो गोपनार्थम्, तथापि सूक्ष्मतारूपचमत्कारस्योद्धरकंधरतया सूक्ष्मालंकार एव भवति ॥

॥ इति सूक्ष्मप्रकरणम् ॥ ७७ ॥



## ॥ स्मृतिः ॥



स्मृतिरिति स्मरणस्य नाम ॥

स्मरणं वर्ण्यते यत्र तत्र स्यात्स्मृत्यलंकृतिः ॥

यथा—

त्वां दृष्ट्वा भोजभूपालं स्मरन्ति कवयो नृप ! ॥

बहूनां प्राचीनानां मतं तु सादृश्यदर्शनाद्या स्मृतिः साऽलंकार इति । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ॥" इति ॥

अनुभूतपदार्थस्य सदृशवस्तुदर्शनाद्या स्मृतिः सा स्मृत्यलंकार इत्यर्थः । भोजमहाराजस्तु सादृश्यदर्शनातिरिक्तमूलकस्मरणस्यापि स्मृत्यलंकारत्वमङ्गीकुर्वन्निदं लक्षणमाह—

"सदृशादृष्टचिन्तादेरनुभूतार्थवेदनम् ॥
स्मरणं प्रत्यभिज्ञानस्वप्नावपि न तद्बहिः ॥" इति ॥

पूर्वानुभूतसदृशदर्शनेन, अदृष्टेन प्रारब्धेन, चिन्तादिना वा निमित्तेन यज्ज्ञानं तत्स्मरणं स्मरणालंकार इत्यर्थः। कालान्तरे दृष्टं पदार्थं पुनर्दृष्ट्वा सोयमित्याकारकं यज्ज्ञानं भवति, तत्प्रत्यभिज्ञानम्। प्रत्यभिज्ञानं स्वाप्निकं च ज्ञानं स्मरणान्न पृथक्॥

क्रमेण यथा—

रणे दलन्तं रिपुदन्तिनोऽसिना
पश्यन्नवन्त्यां यशवन्तभूपतिम्॥
सस्मार भानुर्मरुतामधीश्वर-
मद्रीन्दलन्तं निजवज्रपातनैः॥

पूर्वं वज्रेणाद्रिविदारणं कुर्वन्तमिन्द्रं सूर्यो ददर्श। अतः सूर्यस्योक्तेन्द्रविषयकोऽनुभव आसीत्। तत्सदृशमुज्जयिन्या युद्धे खड्गेन रिपुदन्तिनो दलन्तं यशवन्तसिंहमहाराजं दृष्ट्वा भानोस्तादृशेन्द्रस्मरणम्। अत्र नेत्रानुभूतेन्द्रसदृशं प्रथमयशवन्तसिंहमहाराजं दृष्ट्वा सूर्यस्येन्द्रस्मृतिर्जाता। "त्वां दृष्ट्वा भोजभूपालम्—" इत्यत्र श्रवणानुभूतभोजमहाराजसदृशस्य राजराजेश्वरयशवन्तसिंहस्य दर्शनात्सर्वेषां भोजराजस्मृतिर्भवति॥

मुनिसुताप्रणयस्मृतिरोधिना
मम वियुक्तमिदं तमसा मनः।
मनसिजेन सखे प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः॥

अत्र मुनिसुताप्रणयस्मृतिरोधिना तमसा मे मनो वियुक्तमित्यदृष्टकृतं स्मरणम्॥

उदारेषु नृपालेषु चिन्त्यमानेषु तत्क्षणम्।
स्मृतिमारूढवाँश्चित्ते यशवन्तमहीपतिः॥

अत्रोदारनृपालानां चिन्तने राजराजेश्वरयशवन्तसिंहस्य स्मृतिर्जाता॥

दिल्लीपुरसभामध्ये यो दृष्टो मरुवल्लभः॥

सोऽयं राठोडवंशीयो यशवन्तनरेश्वरः ॥

अत्र समयान्तरे दृष्टस्य राजराजेश्वरस्य पुनर्दर्शनादीदृशं ज्ञानं जातं, दिल्लीसभामध्ये यो दृष्टः सोऽयं राजराजेश्वर इति। इदं प्रत्यभिज्ञानरूपं स्मरणम् ॥

स्वप्नेऽहं प्रगता तटं रविसुताया यत्र कृष्णो नट-
स्तास्ते तत्र ममाञ्चलं स धृतवान्भावस्मिते दर्शयन् ॥
तावद्घोरव आगतः श्रुतिपथं मन्थस्य चापि क्षणा-
द्बोधे नैव वनं घनं न च हरिर्नो वा तटं यामुनम् ॥

अत्र पूर्वानुभूतस्य कृष्णस्य स्वप्नः स्मरणरूप एव। महाराजस्य लक्षणे चादिपदाद्वैधर्म्यदर्शनजनितस्मृतेरपि संग्रहः ॥

यथा—

ग्रामीणसङ्गाद्व्रजवासिनो जनान्
क्षारोदकूपैर्यमुनां महानदीम्।
अर्कादिवृक्षैश्च तमालपादपान्
पिकध्वनिं काकरवैः स्मराम्यहम् ॥

वृन्दावनवासभ्रष्टभक्तस्योक्तिरियम् ॥

दिव्यानामपि कृतविस्मयां पुरस्ता-
दम्भस्तः स्फुरदरविन्दचारुहस्ताम् ॥
उद्वीक्ष्य श्रियमिव कांचिदुत्तरन्ती-
मस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥

अत्र लक्ष्मीस्मृतिमूलका तत्संबन्धिसमुद्रमन्थनस्यापि स्मृतिः ॥

रामो नाम बभूव हुं तदबला सीतेति हुं तौ पितु-
र्वाचा पञ्चवटीवने निवसतस्तामाहरद्रावणः।
इत्याकर्ण्य पुरातनीं निजकथां मातुर्मुखादच्युतः
सौमित्रे! क्व धनुर्धनुर्धनुरिति व्यग्रो हरिः पातु वः ॥

अत्र कथाश्रवणात्स्मृतिः। स्मृतेः संचारिरूपत्वात्तस्याः स्मृत्य-

लंकारस्य च भेदः प्रदर्श्यते। यत्र स्मृती रसावयवभूता भवति, तत्र संचारिरूपा। संचारिणश्च रसस्यावयवाः। तदुक्तं भगवता भरतेन—

"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति॥

यथा—

हस्तपादाद्यवयवैः शरीरनिष्पत्तिस्तथैव विभावादिसंयोगाद्रसनिष्पत्तिः। अतः संचारिणो रसावयवरूपाः। न चावयवेष्वलंकारव्यवहारः। किं तु तदतिरिक्तहारकुण्डलादिन्यायेन शोभाकरेषु धर्मेषु। स्मृतिसंचारिण इदमुदाहरणम्—

सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति।
वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः
क्वासि प्रेयसि! हा कुरङ्गनयने! चन्द्रानने! जानकि!॥

अत्र जानक्यालम्बनविभावः। चन्द्र उद्दीपनविभावः। "हा कुरङ्गनयने चन्द्रानने जानकि" इति रामचन्द्रस्य वचनमनुभावः। लक्ष्मणवाक्यान्मृगलाञ्छनेन चन्द्रस्य बोधान्मृगनेत्रसदृशजानकीनेत्रयोश्चन्द्रसदृशस्य च जानकीमुखस्य स्मृतिः संचारिभावः। जानकीविषयिका रामचन्द्रस्य रतिः स्थायिभावः। एवं चोक्तविभावानुभावव्यभिचारिसंयोगाद्विप्रलम्भशृङ्गाररसनिष्पत्त्याऽत्र स्मृतिः संचारी॥

यथावा—

आदर्शमध्यप्रतिबिम्बिते हरि-
र्भालस्थमाणिक्यतले तु राधिकाम्।
आलोक्य सीतामनलान्तरस्थितां
स्मृत्वाऽश्रुभिः पूर्णविलोचनोऽभवत्॥

अत्र सीताया अग्निप्रवेशभानमालम्बनविभावः। रूपादिकमुद्दीपनम्। कृष्णस्याश्रुपातोऽनुभावः। आदर्शप्रतिबिम्बिते भालस्थमाणिक्ये राधिकायाः प्रतिबिम्बदर्शनजनिता सीतास्मृतिः संचारी। शोकः स्थायिभावः। तथाचोक्तविभावानुभावव्यभिचारिसंयोगात्करुणरसनिष्प-

त्तिः। अतोऽत्रापि स्मृतिः संचारी। "रणे दलन्तम्—" इत्यत्रेन्द्रस्मृतिः सूर्यनिष्ठा। सूर्ये च राजरतिभावविवक्षाया अभावः। तस्य कविनिष्ठत्वादस्याः स्मृतेर्न संचारित्वम्। किंतु महाराजस्य शोभां कुर्वन्ती स्मृतिः कवे राजरतिभावं पुष्णातीति तस्या अलंकारत्वम्॥ लोकेऽवयवा अपि शरीरशोभां कुर्वन्ति, कुण्डलादयोऽलंकाराश्च। परंतु कुण्डलादयोऽनवयवीभूता अवयवानां शोभां कुर्वन्तोऽवयविनामपि शोभाकराः॥ एवं "रामो नाम बभूव—" इत्यत्र स्मृतिः कृष्णे, विस्मयो यशोदायां, अतोऽस्याः स्मृतेरद्भुतरसावयवत्वाभावान्न संचारित्वम्। किं तु रामवासुदेवयोरभेदप्रतीतिद्वारा वासुदेवस्य शोभां कुर्वन्ती स्मृतिरलंकारः। एवमेव—

बल्लालक्षोणिपाल! त्वदहितनगरे संचरन्ती किराती,
रत्नान्यादाय कीर्णान्युरुतरखदिराङ्गारशङ्काकुलाङ्गी।
क्षिप्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती,
श्वासामोदप्रसक्तैर्मधुकरपटलैर्धूमशङ्कां करोति॥

अत्र शबराङ्गनासु भ्रान्तिः। तस्याश्च कस्यापि रसस्य सहचरत्वाभावान्न संचारित्वम्। किं तु भ्रान्त्यलंकारः। अपिच—

अकरुणहृदयप्रियतम!
मुञ्चामि त्वामितः परं नाहम्।
इत्यालप्य कराम्बुज-
मादायालीजनस्य विकला सा॥

अत्र नायक आलम्बनविभावः। सखीकरग्रहणरूपा नायिकाक्रिया "अकरुणहृदय" इत्यादिवचनं चानुभावः। सख्यां नायकबुद्धिरूप उन्मादो विप्रलम्भशृङ्गारस्यावयवत्वात्संचारी। उन्मादसंचारिभावस्येदं लक्षणम्—

"विप्रलम्भमहापत्तिपरमानन्दादिजन्माऽन्यस्मिन्नन्यावभास उन्मादः" इति॥

अत्र प्रकरणे भ्रान्तिरुन्मादपदवाच्या॥

नृत्यान्ते पारिजातं किमु विघटयितुं स्प्रष्टुमाकाशगङ्गां
किंस्विद्वा चन्द्रसूर्यौ किमु विदलयितुं श्वेतरक्ताब्जबुद्ध्या ।
लब्धुं नक्षत्रमालाभरभरणमुत स्वर्गजं वाऽभियोक्तुं
दूरोदस्तः समस्तस्तव गणपतिना स्वस्तये सोऽस्तु हस्तः ॥

अत्र वितर्कस्य कस्यापि रसस्यावयवत्वाभावान्न संचारित्वम् । किंतु संदेहालंकारः । अपिच—

पञ्चेषुः पिकगीर्मरुन्मलयजश्चन्द्रो मधुर्मल्लिका
चैषां को दयितावियातजमहापापस्य पात्रं भवेत् ।
इत्थं चिन्तयति प्रवासविधुरे दैवात्तदानीमहो
तूतीजन्तुरुवाच मूर्धनि तरोस्तूहीति तूहीति च ॥

अत्र वितर्को वियोगशृङ्गारे संचारी । स्मृतिभ्रान्तिसंदेहेषु यथाऽलंकारत्वं स्वीकृतम्, तथेतरेषां त्रिंशत्संचारिणामलंकाररूपतयोदाहरणानि नाद्यापि कस्यापि दृष्टिपथमागतानि । कस्यापि दृष्टिगोचरतायामुक्तदिशादर्शनेन तेषामप्यलंकारत्वाङ्गीकारे मम मते न कोपि बाधः ॥

इति स्मृतिप्रकरणम् ॥ ७८ ॥

## स्वभावोक्तिः ॥

स्वभावशब्दार्थो निजधर्मः । उक्तं चिन्तामणिकोषकारेण "स्वभावः सहजधर्मविशेषे" इति । उक्तिः कथनम् । स्वभावकथनस्यानेकप्रकारकत्वादत्र स्वभावस्य यथावत्कथने स्वभावोक्तिशब्दो रूढः ॥

स्वभावोक्तिरलंकारः स्वभावो वर्ण्यते यदि ।
यथार्थता हि चित्रस्य यथा राजन्मनोहरा ॥

यथा—

नेत्रोत्पलं स्नेहयुतं मुखं च

सदा प्रसन्नं विपुलं च वक्षः ॥
दीर्घौ भुजौ यस्य च तं विलोक्य
मरुस्थलेशं मनुजाः कृतार्थाः ॥

राजराजेश्वरस्याकृतेः स्वभावोक्तिरियम् ॥

मयूरपिच्छमुकुटो गोपालो मुरलीधरः ।
वनमाली कच्छवेषः सदास्तु हृदये मम ॥

हरेर्वेषस्य स्वभावोक्तिरियम् ।

न स्नाति नो गृहं याति नायकासक्तनायिका ।
विशन्तीव परावृत्ता चकिताऽऽपो न गाहते ॥

नायिकायाः क्रियायाः स्वभावोक्तिरियम् ॥

अगाधाः सरितः सन्ति विशालास्तरवस्तथा ।
कूजन्ति कोकिला मत्ता गौडदेशे महीपते! ॥

देशस्य स्वभावोक्तिरियम् ॥

जायन्ते खलु तारका हतरुचो मार्तण्डतेजोऽरुणं
स्वच्छः कञ्जविकास उच्चमुनिराड्वेदध्वनिर्निर्मला ।
निद्राभङ्गमुपैति विश्वमलयो दानानुरक्ताः शुचा
रिक्तः कोकगणस्तदा कविजनस्त्वां स्तौति राष्ट्राधिप! ॥

कालस्य स्वभावोक्तिरियम् ॥

उदारः सरलोऽगर्वो धृतिमान्प्रीतिमाञ्छुचिः ॥
दयावान्नीतिनिपुणो यशवन्तनरेश्वरः ॥

राजराजेश्वरस्य शीलस्य स्वभावोक्तिरियम् । दण्ड्याचार्यस्येदं लक्षणम्—

"नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती ॥
स्वभावोक्तिश्च जातिश्चेत्याद्या सालंकृतिर्यथा ॥" इति ॥

रूपशब्दार्थौ मनोहराकृतिः स्वभावश्च । मम तु मतं, अस्यालंकारस्य स्वरूपं तु वस्तुनो यथास्थितवर्णनमात्रम् । लभ्योदाहरणानुसारेण

नानाऽवस्थावतो रूपस्य नियमकरणं दण्डिनः प्रमादः । "न स्नाति नो गृहं याति—" इत्युदाहरणे नायिकायां कदाचित्कस्याश्चित्क्रियायाः कदाचिच्च कस्याश्चित्क्रियायाः सत्त्वान्नायिकाक्रियाया नानाऽवस्थावत्त्वेपि "नेत्रोत्पलं स्नेहयुतं—" इत्येतादृगाकृत्युदाहरणे "जायन्ते खलु तारकाः—" इति प्रभातकालिकोदाहरणादिषु चाऽव्याप्तेः । राजराजेश्वराकृतेः प्रभातसमयादीनां च नानाऽवस्थात्वाभावात् । भोजमहाराज इमां जातिनाम्ना प्राह । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥" इति ॥

प्रकाशकारो रूपशब्दार्थं वर्णाकृती प्राह । शिशुखगादिविषयकोदाहरणप्राप्त्योक्तकारिकाकारो लक्षणे "डिम्भादेः" इति नियमं चकार । तदनुसारेण काव्यप्रकाशकारोऽश्वस्यैवोदाहरणमदात् ॥

यथा—

पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाऽङ्गमुच्चै-
रासज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय ॥
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥

डिम्भपदोत्तरमादिपदकथनात्पशुपक्ष्यादितिरश्चामेव संग्रहो भवति। आदिपदोपात्तं वस्तु तत्सदृशं तस्माद्गौणमेव वा गृह्यते। न तु तस्मान्मुख्यमपीत्यनुभवसिद्धम् । अयं च कारिकाकारस्य प्रमादः । तरुणावस्थायां नायिकानायकयोर्देवादीनां चोदाहरणेष्वव्याप्तेः । वर्णक्रियाऽऽकृतीनां नियमोऽपि न समीचीनः । "उदारः सरलोऽगर्वः—" इत्यादिशीलविषयकोदाहरणेष्वव्याप्तेः ॥

सर्वस्वस्येदं लक्षणम्—

"सूक्ष्मवस्तुस्वभावयथावद्वर्णनं स्वभावोक्तिः ॥" इति ॥

वृत्तौ लिखति— "इह वस्तुस्वभाववर्णनमात्रं नालंकारः। तत्त्वे सति सर्वं काव्यमलंकारः स्यात् । न हि तत्काव्यमस्ति, यत्र न वस्तुस्वभाववर्णनम् । तदर्थं सूक्ष्मग्रहणम् । सूक्ष्मश्च कवित्वमात्रगम्यः । अत एव

तान्निर्मित एव यो वस्तुस्वभावस्तस्य यथावदन्यूनातिरिक्तत्वेन वर्णनं स्वभावोक्तिरलंकारः" इति ॥ रत्नाकरकारस्येदं लक्षणम्—

"सम्यक्स्वभाववर्णनं स्वभावोक्तिः" इति ॥

लक्षणगतसम्यक्शब्दस्वारस्येन वृत्तौ लिखति । "द्विविधो वस्तुनः स्वभावः । स्थूलः सूक्ष्मश्च । स्थूलस्तु समस्तकविगोचरः । तस्य वर्णने न कश्चिदलंकारः । अन्यथा सर्वेषु काव्येषु स्वभावोक्त्यलंकारप्रसङ्गो भवेत्" इति ॥ एते चेमान्युदाहरणान्यदुः ॥

अङ्के न्यस्योत्तमाङ्गं प्लवगबलपतेः पादमक्षस्य हन्तुः
कृत्वोत्सङ्गे सलीलं त्वचि कनकमृगस्याङ्गमाधाय शेषम् ।
बाणं रक्षःकुलघ्नं प्रगुणितमनुजेनादरात्तीक्ष्णमक्ष्णोः
कोणेनोद्वीक्षमाणस्तदनुजवचने दत्तकर्णोऽयमास्ते ॥

यथावा—

हेरम्बेऽपि हरीश्वरे नखमुखैः कण्डूयमाने गलं
कुर्वन्पृष्ठविवर्तनो विवरतो रोमन्थलीलायितम् ।
संमीलन्नयनो विसंस्थुलचलत्सास्नं नतोत्तासित-
ग्रीवं निश्चलकर्णमीश्वरबलीवर्दः सुखं मन्यते ॥

मम तु मतं, अस्यालंकारस्य स्वरूपं तु चित्रन्यायेन यथावद्वर्णनम्। अत्रास्यैव मनोरञ्जकत्वात् । अलंकारव्यवहारनिमित्तं च मनोरञ्जकत्वमेव। न चात्र सूक्ष्मस्वभावस्यावश्यकत्वम् । न चैतेषामुदाहरणेषु महाकविगोचरीभूता काचित्सूक्ष्मस्वभावतोपलभ्यते । अत्र नामार्थाद्भिन्नकल्पनाकरणे सर्वेषामपि प्राचीनानां प्रमादः ॥

इति स्वभावोक्तिप्रकरणम् ॥ ७६ ॥

## ॥ हेतुः ॥

हेतुः कारणम् । हेतुशब्दव्युत्पत्तिस्तु "हिनोति व्याप्नोति कार्यमिति हेतुः" इति । कार्यव्यापको हेतुरित्यर्थः । कार्योत्पादको हेतुरिति निष्कृ-

ष्टार्थः । स च द्विविधः । कारको ज्ञापकश्च । कारक उत्पादकः । ज्ञापको ज्ञापनकर्ता । धूमस्योत्पादकत्वादग्निस्तस्य कारकहेतुः । अग्नेर्ज्ञापकत्वाद्धूमस्तस्य ज्ञापकहेतुः ॥

हेतुर्हेतुरलंकारः प्रोच्यते कविकोविदैः ।
कारको ज्ञापकश्चेति स द्विधा भूप भण्यते ॥

क्रमेण यथा—

यशवन्तप्रभावेण सर्वेऽप्यारण्यपादपाः ।
अभूवन्नृतुषट्केऽपि संपन्नाः सुरशाखिवत् ॥

अत्राऽऽरण्यपादपानामृतुषट्केऽपि फलपुष्पादिभिः संपन्नकरणे राजराजेश्वरस्य प्रभावः कारकहेतुः ॥

युद्धाभिषक्तान्करिमल्लसङ्घान्
क्वचिच्च वाजीन् भ्रमिमादधानान् ॥
दृष्ट्वा नृपाभान्कविराजपूगान्
विज्ञायते श्रीयशवन्तराज्यम् ॥

अत्र बाष्पशकटाधिरूढपथिकानां राजराजेश्वरयशवन्तसिंहराज्यज्ञापने मल्लयुद्धादेर्हेतुतया ज्ञापकहेतुत्वम् ॥

यथावा—

कलकण्ठरवारम्भस्तथा किसलयोद्गमः ।
कलिकाङ्कुरसंपत्तिर्ऋतुराजमसूसुचन् ॥

अत्र वसन्तसमयज्ञापने कलकण्ठरवारम्भादीनां हेतुतया ज्ञापकहेतुत्वम् ॥

यथावा—

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं,
मेघैरन्तरितः प्रिये! तव मुखच्छायानुकारी शशी।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥

अत्र कमलनिमज्जनादिहेतूनां ब्रह्मणोऽसूयायां ज्ञापकत्वम् । असूयाया इदं लक्षणम्—

अक्षमत्वं परेष्टस्यासूया स्यान्मरुवल्लभ ! ।

यथावा—

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे ! न क्वापि क्वचिदपि भवन्तं प्रणतवान् ।
नमन्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिमा-
नितीश ! क्षन्तव्यं तदिदमपराधद्वयमपि ॥

अत्र वपुषः प्रादुर्भावः पूर्वजन्मनि पुरारेर्नमनाभावस्य ज्ञापकहेतुः। पूर्वजन्मनि पुरारिनमने मोक्षप्राप्तेर्वपुषः प्रादुर्भावाभावात् । वर्तमानवपुषि च पुरारिनमनं मोक्षस्य ज्ञापकहेतुः ॥

यथावा—

श्रीमत्सज्जनराण ! दानमखिलैस्ते वन्दनीयं परं
नादास्येऽहमयाचको मरुपतेर्नायं च दोषो मम ।
मन्तव्यो भवदीयपूर्वपुरुषा धर्मस्य कार्ये सदा
राणास्त्राणकरा बभूवुरिति ते प्रार्थी मुरारिः कविः ॥

अत्र मेदपाटेश्वरमहाराणासज्जनसिंहस्य "अस्माभिः कस्यापि व्रतभङ्गो न विधेयः" इति ज्ञापने "धर्मकार्यार्थं भवतः पूर्वजाः सदैवार्यगणानां तनुत्राणरूपा बभूवुः" इति विशेषणं ज्ञापकहेतुः । रत्नाकरकारो वदति– "परस्य ज्ञापने हेत्वलंकारः । स्वस्य ज्ञाने चानुमानालंकारः" इति । मम तु मतम्, इदमीषद्वैलक्षण्यं नालंकारान्तरत्वसाधकम् । अत्र तूभयत्रापि हेत्वलंकार एव । दण्ड्याचार्यो हेतोर्भावरूपतयाऽभावरूपतया च हेतोर्द्वैविध्यमाह । "यशवन्तप्रभावेण–" इत्यत्र हेतुर्भावरूपः । अभावरूपो यथा—

अनभ्यासेन विद्यानामसंसर्गेण धीमताम् ।
अनिग्रहेण चाक्षाणां जायते व्यसनं नृणाम् ॥

अत्र विद्याभ्यासाद्यभावरूपहेतुभ्यो व्यसनरूपकार्योत्पत्तिः । मम तु मतं, इदमुदाहरणान्तरम् । चित्रानाश्चर्यकारिहेतूँश्चित्रहेतुनामकहेतु-प्रकारान्मन्वानौ दण्ड्याचार्यभोजमहाराजावाहतुः—

"विदूरकार्यः सहजः कार्यानन्तरजस्तथा ॥
युक्तो न युक्त इत्येवमसंख्याश्चित्रहेतवः॥" इति ॥

विदूरकार्यत्वं कारणात्कार्यस्य दूरे भवनम् । स च देशकालभेदेन द्विविधः । कार्यकारणयोः स्थलभेदो देशविदूरत्वम् । कार्यकारणयोः स-मयभेदः कालविदूरत्वम् । सहजत्वं कार्यकारणयोः सह भवनम् । कार्या-नन्तरजत्वं कार्यकारणयोः पौर्वापर्याभावः । एषामुदाहरणानि विचित्रा-लंकारे प्रदर्शितानि । युक्तत्वं कारणयोग्यकार्यत्वम् । अयुक्तत्वं कारणा-योग्यकार्यत्वम् ।

अयुक्तकार्यो यथा—

राज्ञां हस्तारविन्दानि कुड्मलीकुरुते कुतः ।
देव ! त्वच्चरणद्वन्द्वरविबालातपः स्पृशन् ॥

अत्र बालातपरूपहेतोररविन्दकुड्मलीभावरूपकार्यमयुक्तम् । अ-स्माभिश्चित्रहेतूनां विचित्रालंकारेऽन्तर्भावः कृतः । युक्तायुक्तहेतू अपि हेतोरुदाहरणान्तरमेव । कतिपयप्राचीना हेत्वादीनलंकारतया न मन्य-न्ते । तदेवोक्तं भामटेन--

"हेतुश्च सूक्ष्मलेशौ च नालंकारतया मताः ।
समुदायाभिधेयस्य वक्रोक्त्यनभिधानतः ॥" इति ॥

"वक्रोक्त्यनभिधानतः" इत्यस्य तात्पर्यं तु वक्रोक्तेरर्थादतिशयो-क्तेरंशं विनाऽलौकिकचमत्कारो नास्तीति । हेत्वादीनलंकारतया मत्वा भामटोपरि कटाक्षं कुर्वता दण्ड्याचार्येण हेतुप्रकरणेऽभिहितम्—

"हेतुश्च सूक्ष्मलेशौ च वाचामुत्तमभूषणम् ।
कारकज्ञापकौ हेतू तौ चानेकविधौ यथा ॥" इति ॥

"वाचामुत्तमभूषणम्" इति कथनस्य तात्पर्यं तु लोकेऽपि स-हेतुककथनं सूक्ष्मतया लेशेन च कथनं चातीव मनोहरं भवतीति । मम तु

मतं, दण्ड्याचार्यसिद्धान्तः समीचीनः। अलंकारेष्वतिशयोक्तेः सर्वत्राभावात्। अन्यथा स्वभावोक्त्याद्यलंकाराणामुच्छेदप्रसङ्गः। कतिपयप्राचीना भामटमतानुसारेण केवलकार्यकारणभावेऽलंकारत्वमनिच्छन्तः कार्यकारणयोरभेदे हेत्वलंकारं मन्यन्ते। रुद्रटस्येदं लक्षणम्—

"हेतुमता सह हेतोरभिधानमभेदकृद्भवेद्यत्र ॥
सोऽलंकारो हेतुः स्यादन्येभ्यः पृथग्भूतः ॥" इति ॥

चन्द्रालोकस्य परमतेनेदं लक्षणम्—

"हेतुहेतुमतोरैक्यं हेतुं केचित्प्रचक्षते ॥" इति ॥

यथा—

लक्ष्मीविलासा विदुषां कटाक्षा वेङ्कटप्रभोः ॥

अत्र च कार्यावश्यंभावतच्छैघ्र्यादिप्रत्यायनार्थः कार्यकारणयोरभेदव्यपदेशः। अलंकाररत्नाकरकारोऽभेदालंकारं पृथगाह। मम मतेऽप्यभेदस्यालंकारान्तरतास्वीकारो युक्त एव। कार्यकारणयोरभेदोऽप्यभेदालंकारेऽन्तर्भूतः। तच्चास्माभिरभेदप्रकरणे प्रदर्शितम्। केवलहेतावलंकारत्वमनङ्गीकुर्वन् भगवान् वेदव्यास इदं लक्षणमाज्ञापयति—

"सिषाधयिषितार्थस्य हेतुर्भवति साधकः ॥
कारको ज्ञापकश्चेति द्विधा सोऽप्युपजायते॥" इति ॥

मम तु मतम्, अर्थस्य सिषाधयिषानियमकरणमनावश्यकम्। उक्तेच्छाया भावेऽभावे वा हेतुमात्रस्य रमणीयत्वेनालंकारत्वसिद्धेः। भामटमतानुसारिणः कतिपयप्राचीनाः कारकहेतावलंकारत्वमनङ्गीकृत्य केवलं ज्ञापकहेतावेवालंकारत्वमङ्गीकुर्वन्ति। शास्त्रीयज्ञापकहेतुस्तु व्याप्तिपक्षधर्मताविशिष्टो भवति। काव्ये तु व्याप्तिपक्षधर्मतां विनापि रमणीयत्वमात्रेण ज्ञापकहेतुरलंकारो भवति। लिङ्गं ज्ञापकहेतोः पर्यायान्तरम्। अत्र च कविकर्मणाऽर्थाद्रमणीयत्वमात्रेणालंकारो भवतीति द्योतनार्थं प्राचीनाः काव्यलिङ्गमित्यलंकारनाम चक्रुः। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"काव्यलिङ्गं हेतोर्वाक्यपदार्थता ॥" इति ॥

अत्र हेतुर्लिङ्गरूपो विवक्षितः । लिङ्गशब्दव्युत्पत्तिस्तु "लिङ्ग्यते गम्यते येन तल्लिङ्गम्" इति । मम तु मतम्, कारकज्ञापकहेतुद्वयमप्यलंकारः । वाक्यपदार्थता तूदाहरणान्तरमात्रमिति बहुशः कथितम् ॥

मासे भाद्रपदेऽन्धकारशबला रात्रिर्घनाली पुन-
र्व्याप्ता सौधशिरोऽधिरूढवृषभानोरात्मजायाः पराम् ।
शोभां याचति चात्र कृष्णनयने दूरीकरोत्यञ्चलं
वातो दर्शयते तदङ्गलतिकां कृत्वा कृपां ह्लादिनी ॥

अत्र नायिकाया रूपदर्शने कृष्णनयने मुख्यं कारणम् । पवनविद्युतौ तु सहकारिकारणे । अत्र चमत्कारपर्यवसानं तु न कृष्णनयनरूपमुख्यकारणे, किं तु पवनविद्युद्रूपसहकारिकारणयोः । इदं सहकारिहेत्वलंकारोदाहरणमस्माभिर्दृष्टम् ॥

॥ इति हेतुप्रकरणम् ॥ ८० ॥



लोकालंकारनामसु निमित्तं तु स्थानाकृतिस्वभावाः । तत्र रमणीनां कटिमेखलाद्यलंकारनामसु निमित्तं स्थानम् । कुण्डलाद्यलंकारनामस्वाकृतिः । हारादिनामसु च स्वभावः । हरणार्थकाद्धरतेर्भावे घञि हारशब्दो निष्पन्नः । अस्य व्युत्पत्तिस्तु "मनो ह्रियतेऽनेनेति हारः" इति ॥ रमणीनां करचरणाद्यवयवानीव वाण्या अरूपित्वान्न किंचित्स्थानम् । न चाप्याकृतिः । ततो वाण्या अलंकारनामानि स्वभावमात्रनिमित्तेन कल्पितानि ॥

उपमा[1]ऽतद्गुण[2]श्चातिशयोक्त्य[3]तुल्य[4]योगिते ।
अधिक[5]श्चानवसरा[6]ऽनुज्ञा[7]ऽन्योन्यानि[8] भूपते ॥ १ ॥
अपह्नुति[9]रथापूर्वरूपं[10] चाप्रत्यनीककम्[11] ॥
अप्रस्तुतप्रशंसा[12] स्यादभेद[13]श्चाल्पभूषणम्[14] ॥ २ ॥
अवज्ञा[15]ऽवसरा[16]ऽऽक्षेपा[17]ऽऽभासा[18]श्चाप्युत्तरं[19] ततः ॥
उत्प्रेक्षा[20] च नृपोदात्त[21]मुदाहरण[22]मेव च ॥ ३ ॥

उल्लेख[२३]काव्यार्थापत्ती[२४] क्रमश्चापि[२५] च तद्गुणः[२६] ॥
तुल्ययोगो[२७] दीपकं[२८] च दृष्टान्तश्च[२९] निदर्शना[३०] ॥ ४ ॥
नियमश्च[३१] निरुक्तिश्च[३२] तथा परिकरो[३३] मतः ॥
परिणामस्ततो[३४] राजन्परिसंख्या[३५] ततः परम् ॥ ५ ॥
पर्यायश्चैव[३६] पर्यायोक्तिर्भूषा[३७] पिहितं[३८] तथा ॥
पूर्वरूपानन्तरं[३९] च प्रतिमा[४०] प्रत्यनीककम्[४१] ॥ ६ ॥
प्रहर्षणं[४२] भाविकं[४३] चालंकारो मरुभूपते ॥
भ्रान्तिमिथ्याध्यवसिती[४४,४५] मीलितं[४६] मिषमुद्रिके[४७,४८] ॥ ७ ॥
रत्नावली[४९] रूपकं[५०] च लेशो[५१] लोकोक्तिरेव[५२] च ॥
वक्रोक्तिश्च[५३] विकल्पश्च[५४] विकासश्च[५५] विचित्रकम्[५६] ॥ ८ ॥
विधिश्चैव[५७] विनोक्तिश्च[५८] विरोधालंकृतिस्ततः[५९] ॥
विशेषोक्तिश्च[६०] विषमं[६१] विषादो[६२] व्यतिरेककः[६३] ॥ ९ ॥
व्याघातः[६४] शृङ्खला[६५] श्लेषः[६६] संकोचः[६७] संशयस्तथा[६८] ॥
संभावनं[६९] च संस्कारः[७०] समश्चैव[७१] समाधिकः[७२] ॥ १० ॥
समासोक्तिस्ततो[७३] राजन्समुच्चय[७४] उदाहृतः ॥
सहोक्तिसारसूक्ष्माख्याः[७५,७६,७७] स्मृतिश्चापि[७८] ततः परम् ॥ ११ ॥
स्वाभावोक्तिश्च[७९] हेतुश्चेत्यशीतिर्भूषणानि[८०] हि ॥
एष्वन्तर्भावमायान्ति चान्यानि मरुभूपते ॥ १२ ॥
नामैव लक्षणान्येषां विजानीहि नराधिप ॥
भूषास्वरूपं नाम्नैव यो जानाति स पण्डितः ॥ १३ ॥
यशवन्तयशोभूषणप्रबन्धसारस्तु भूप नामार्थः ॥
तादृशभूषणनाम्नां कण्ठे कण्ठीं करोति यो मनुजः ॥ १४ ॥
स स्याद्धरणीपृष्ठे भूषणभूतो बुधैश्च संमान्यः ॥
अधुना कोऽपि न कथयेत्सुगमो नामार्थ एष इत्येवम् ॥ १५ ॥
उक्तं किमिति न पूर्वं यदा भ्रमाक्रान्तमानसा आसन् ।
वेदादिपूतसाधनलाभे स्वप्नाभ एष संसारः ॥ १६ ॥

व्यर्थत्वं वेदादेर्भवेत्तदा किं विचारयध्वं तत् ॥
विस्मार्योत्तममनुजैरन्योपकृतिर्न कार्यसिद्धौ हि ॥१७॥
रमणीयौ तु शब्दार्थौ काव्यं मरुमहीपते ॥
शब्दस्त्रिधा वाचकश्च लक्षको व्यञ्जकस्तथा ॥१८॥
तदर्था नृपते वाच्यलक्ष्यव्यङ्ग्या इति क्रमात् ॥
अभिधा लक्षणा व्यञ्जनेतिवृत्तित्रयं नृप ॥ १९ ॥
केचिद्व्यङ्ग्यं ध्वनिरिति चाक्षेप इति चापरे ॥
केचिद्वृत्तिं शक्तिरिति व्यापार इति केचन ॥ २० ॥
मुख्यार्थबाधे भवति लक्षणा मरुनायक ॥
जहत्स्वार्थाऽजहत्स्वार्थेति द्विधा परिकीर्तिता ॥२१॥
तथा तात्पर्यबाधेऽपि लक्षणा रुचिरा भवेत् ॥
व्यङ्ग्यं चतुर्धा शब्दार्थशक्तिमूलत्वतो द्विधा ॥२२॥
असंलक्ष्यक्रमो राजन्संलक्ष्यक्रम एव च ॥
संयोगादिर्भवेत्तत्र कारणं सहकारि तु ॥ २३ ॥
व्यङ्ग्यं प्रधानमेव स्याद्गुणीभूतं कदापि न ॥
स्फुटं तन्नामतस्तद्वल्लक्षणायाः प्रयोजनम् ॥ २४ ॥
मनोवृत्तिं तदितरद्वस्तु वा कविकोविदाः ॥
वर्णयन्ति मनोवृत्तिर्भावोऽपरिमितश्च सः ॥ २५ ॥
तत्रैकचत्वारिंशत्स्यू राजन्काव्योपयोगिनः ॥
रसस्योत्पत्तिपर्यन्तं भावा रत्यादयो नव ॥ २६ ॥
स्थिरा भवन्ति तत्स्थायिसंज्ञैषां मरुभूपते ॥
रतिशङ्कादयो भावाः संचरन्तीतरैः सह ॥ २७ ॥
यदा पोषकरूपेण तदा संचारिसंज्ञकाः ॥
रत्यादेः स्वाददायित्वे रससंज्ञा भवेन्नृप ॥ २८ ॥
यस्मिंस्थले रसः स्थायी तदादाय रसाभिधा ॥
भावस्य कारणं राजन्विभाव इति स द्विधा ॥२९॥

आलम्बनाख्यो भूपाल ! तथैवोद्दीपनाह्वयः ॥
शृङ्गारालम्बनं रम्यनायिकानायकौ नृप ॥ ३० ॥
नायिकायाश्च मुग्धाद्या भेदास्ते स्युर्वयःकृताः ॥
स्वकीयाप्रमुखाश्चोत्तमाद्याश्च प्रकृतीकृताः ॥ ३१ ॥
गुप्तामुखाः प्रोषितपतिकाद्याश्च दशाकृताः ॥
एते भेदाः स्वकीयादावेवेति नियमो न हि ॥ ३२ ॥
तथावस्थाकृतादीनां बाधो नो नायके नृप ॥
शृङ्गारोद्दीपनानि स्युः शशिवर्षादयो नृप ॥ ३३ ॥
हासादीनामपि तथा विभावा ज्ञायतां स्वयम् ॥
अनुभावस्तु राजेन्द्र ! भावबोधकरी क्रिया ॥ ३४ ॥
हावाश्च सात्त्विकाश्चैव विशेषास्तस्य भूपते ॥
काव्यस्य च चमत्कारो भूषणं भण्यते बुधैः ॥ ३५ ॥
धुरंधरेणानन्तत्वेऽप्यशीतौ संग्रहः कृतः ॥
माधुर्यौजःप्रसादाख्याः काव्ये राजन् गुणास्त्रयः ॥ ३६ ॥
यथा पुंसि क्षमौदार्यप्रमुखाः स्युर्नराधिप ! ॥
दोषैश्च सदृशा दोषाः क्लिष्टाद्या अरुचेः कराः ॥ ३७ ॥
अपारः खलु विस्तारः साहित्यस्य महीपते ॥
नामार्थज्ञानमात्रे तु स्वल्पश्च सुगमः स हि ॥ ३८ ॥

शोभाकरी चातिविलक्षणा च
स्पष्टा च लभ्येत चमत्कृतिश्चेत् ।
तदेच्छया भूमिप ! भिन्नभूषणं
संमन्यतां प्राक्तनभूषणेभ्यः ॥ ३९ ॥

धुरंधराणां काव्यशोभाकरधर्मरूपालंकाराणां दिक्प्रदर्शनकरणादुक्तालंकारेभ्यः सर्वथा विलक्षणशोभादायकस्पष्टचमत्कृतेरलंकारान्तरत्वानङ्गीकारस्तु काव्यवैभवस्य न्यूनीकरणम् । यथाऽस्मत्स्पष्टीकृतव्याघातालंकारस्यालंकारान्तरत्वमनङ्गीकृत्य हेत्वलंकारेऽन्तर्भावः । “ कुर्वे भृकुटिमाबध्य ” इत्यत्र कृष्णदर्शनानन्दः कारणं मानशिथिलतारूपकार्यं करो-

---

१ इदं पद्यं व्याघातप्रकरणे ( ४३० ) पृष्ठे द्रष्टव्यम् ॥

ति । " शष्पाच्छन्नधरा " इत्यत्र च तादृशवर्षर्तुः कारणं पथिकाऽऽगमन-रोधरूपकार्यं करोति । अपिच चमत्कारस्येतरालंकारेभ्यः सर्वथा विलक्षणशोभाकरस्पष्टत्वाभावे चालंकारान्तरत्वाङ्गीकारस्तु विषयस्य वृथा गौरवम्। लोकालंकारन्यायेन चमत्कारस्य शोभाकरस्पष्टत्वाभावे नालंकारत्वयोग्यतेत्यालंकारिकसिद्धान्तः । अस्यैव चोपमाप्रकरणे चन्द्रालोककारेण दिग्दर्शिता ॥

"उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ॥" इति ॥

कुवलयानन्दकारेण "उल्लसति" इत्यस्य "व्यङ्ग्यमर्यादां विना स्पष्टं प्रकाशते " इत्याशयो लिखितः। स च प्रमादः । कुत इति चेत्प्राचीना व्यङ्ग्योपमामपि मन्यन्ते । शोभाकरत्वार्थं " लक्ष्मीः " इति । स्पष्टत्वार्थं च " उल्लसति " इत्युक्तम् । इतरालंकारेभ्यः सर्वथा विलक्षणशोभाकर-स्पष्टत्वाभावरूपसकलदोषेषु सत्सु,एष्वेकदोषे दोषद्वये वा चमत्कारस्य नालंकारत्वयोग्यता ॥

यथा—

अबलस्वकुलाशिनो झषान्<br>
निजनीडद्रुमपीडिनः खगान् ।<br>
अनवद्यतृणार्दिनो मृगान्<br>
मृगयाऽघाय न भूभृतां घ्नताम् ॥

अत्र हिंसारूपाधर्मस्य दुष्टदण्डरूपराजधर्मत्वेन दर्शनम् । अस्य च चमत्कारस्य काव्यशोभाकरत्वे स्पष्टत्वेऽपिचान्यथाभावरूपपरिणामा-लंकारतः सर्वथा वैलक्षण्याभावान्नालंकारान्तरत्वम् । अपि तु परिणाम एवान्तर्भावः ॥

यथावा—

दक्षोऽपि कान्तो ह्यनुकूलतां गतः<br>
सौन्दर्यगर्वी खलु दीनतामितः ।<br>
व्रजेन्दुरप्येष च ते चकोरकः<br>
कार्यं तवैतद्वृषभानुजेऽद्भुतम् ॥

१ इदं पद्यं व्याघातप्रकरणे ( ४३० ) पृष्ठे द्रष्टव्यम् ॥

अत्र विपरीताचरणस्य काव्यशोभाकरत्वेऽप्यन्यथाभावरूपपरिणामतः सर्वथा वैलक्षण्याभावान्नालंकारान्तरत्वम् । अपि तु परिणाम एवान्तर्भावः । अयं च विषयो वक्ष्यमाणान्तर्भावाकृतौ सविस्तरं प्रतिपादयिष्यते ॥ काव्यनिष्ठचमत्कारस्य काव्यशोभाकरत्वादलंकारत्वम् ॥

यथा—

पूर्वं वै शपथस्ततो भुजधृतिः क्षान्तापि कट्वी च वाक्
तत्पश्चात्करसंपुटं पदनतिर्वैस्वर्यदासेतिवाक् ॥
वैयर्थ्यं मम शिक्षणेन च गतं कन्तोपचारैः सह
सीधौ बिम्बितचन्द्रपानकरणान्मानान्धकारो गतः ॥

इदं सखीं प्रति सख्या वचनम् । अनेकोपचाराणां निष्फलत्वे मदिराप्रतिबिम्बितचन्द्रस्य मदिरया सह पानकरणे तेन मनोगतो मानान्धकारो दूरापास्तः । अत्र मानमोचनोपायेषूत्तरोत्तरं गुरुताक्रमस्य चमत्कारः । किं चोक्तोपचारसमुदायरूपाखण्डकारणसत्त्वे मानमोचनरूपकार्याजनेश्चमत्कारः । मानेन सह तमसो रूपकस्य च चमत्कारः । अपि चोक्तचन्द्रपानेनोक्तमानमोचनादुक्तचन्द्रमसि कारणतायाश्चमत्कारः । किंचोक्तचन्द्रस्य माने रूपकत्वापादनं, उक्तरूपकस्य च चन्द्रे हेतुत्वापादनमन्योन्यरक्षस्य चमत्कारः । किश्चात्र मानिनीमानहरणे मदिराया हेतुत्वम् । तत्र नायिका मदिरया सह चन्द्रप्रतिबिम्बं पपौ, चन्द्रश्च तमो विनाशयत्येवेति बलेनार्थाद्युक्त्या, मानस्यान्धकारत्वेन रूपणान्मदिरायां मानहरणहेतुताया नैर्बल्यविवक्षा स्फुटैवेति तन्मदिराहेतोर्नैर्बल्यमप्युक्तहेत्वन्तराङ्गीकारे बलं, तेन च सख्युक्तचन्द्रं प्रधानतया मानहरणहेतुं मेने, इत्ययं चमत्कारः । काव्यशोभाकरत्वादेतादृशचमत्काराणां धुरंधरणालंकारसंज्ञा विहिता ॥

इति श्रीमन्मरुमण्डलमुकुटमणि—राजराजेश्वर—महाराजाधिराज जी० सी० एस० आई० श्रीयशवन्तसिंहाज्ञानुसारेण कविराजमुरारिदानविरचिते यशवन्तयशोभूषणग्रन्थेऽर्थालंकारनिरूपणं नाम चतुर्थाकृतिः समाप्ता ॥ ४ ॥

# अथ रसवदाद्यलंकारनिरूपणम्

रसानन्दस्वरूपो यः सर्वदा राजते प्रभुः ।
प्रणम्य तं रसवदाद्यलंकारान्प्रचक्ष्महे ॥ १ ॥

## रसवत् ॥

व्यङ्ग्यं द्विधा । प्रधानं गौणं च । प्रधानं तु काव्यस्य जीवितमेव । तस्य काव्यशोभाकरत्वेऽपि जीवरूपत्वान्नालंकारत्वव्यवहारः, किं त्वलंकार्यत्वव्यवहार इति प्राक्सविस्तरं प्रतिपादितम् । गुणीभूतव्यङ्ग्यस्याप्रधानत्वेऽपि शोभाकरत्वात्तस्यालंकारत्वव्यवहारः। एतत्सिद्धान्तानुसारेण चन्द्रालोककारादयः सर्वे रसादीनामङ्गत्वे रसवदाद्यलंकारानाहुः । रसवद्रससदृशमित्यर्थः । अत्र रसस्यान्याङ्गत्वेन तस्याप्रधानतया न रसत्वम्, किंतु रससदृशत्वमिति द्योतनाय रसवदित्युक्तिः । इतरस्य पोषकत्वेऽङ्गत्वम् । पोषकत्वं च शोभाकरत्वम् । एवं काव्यशोभाकरत्वाद्रसस्यालंकारत्वव्यवहारः । तदेवोक्तं रसप्रकरणे काव्यप्रकाशगतकारिकाकारेण—

"रसभावतदाभासभावशान्त्यादिरक्रमः ।
भिन्नो रसाद्यलंकारादलंकार्यतया स्थितः ॥" इति ॥

अस्याभिप्रायस्तु रसादीनां प्रधानत्वेऽलंकार्यत्वम् । अप्रधानत्वे त्वन्यस्य शोभाकरत्वादलंकारत्वमिति । यत्र रसो रसस्य भावस्य वाङ्गीभूतः पोषणं करोति तत्र रसवदलंकारः । सिद्धरसस्य स्वयं प्रधानत्वान्नेतराङ्गत्वम् । ततोऽत्र रसशब्देन स्थायिभावो विवक्षितः । रसस्तु ब्रह्मानन्दसहोदरः । तस्य च काव्यश्रोतॄणामनुभवे तदात्मा तन्मयो भवति । अन्यभानं च निवर्तते । अङ्गाङ्गिभावव्यवस्था तु द्वयोर्भाने भवतीति रसदशाप्राप्तेः पूर्वमङ्गाङ्गिभावः। तदा चाङ्गिनोऽपि रसत्वाभावात्स्थायिभावस्याङ्गत्यपि स्थायिभाव एवेति ज्ञातव्यम् । किंच भावस्याङ्गं रस इति कथनादत्र रसदशानर्हराजरतिभावादयो भावा बोध्याः । एवं स्थायिभावस्य स्थायिभावाङ्गत्वे भावाङ्गत्वे वा रसवदलंकारः ।

क्रमेण यथा—

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

अत्र शोकवर्णनम् । भूरिश्रवसः स्त्रीणां शोकः स्थायिभावः । रणे छिन्नो भूरिश्रवसो बाहुरालम्बनविभावः । तस्य बाहोरितस्ततःपात उद्दीपनविभावः । तस्य स्त्रीणां विलापोऽनुभावः । विषाददीनतादयः संचारिभावाः । अत्र स्थायिभावस्य शोकस्य प्राधान्यादङ्गित्वम् । रतिस्थायिभावस्तस्याङ्गम् ॥

कैलासालयभाललोचनरुचा निर्वर्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् ।
स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥

अत्र त्रायतामितिप्रतीतस्य कविनिष्ठपार्वतीविषयरत्याख्यभावस्य महादेवनिष्ठः पार्वतीविषयो रतिस्थायिभावोऽङ्गम् ॥

॥ इति रसवत्प्रकरणम् ॥ १ ॥

## ॥ प्रेयः ॥

प्रियतरं प्रेयः । स्थायिभावस्य भावस्य वा भावोऽङ्गं चेत्प्रेयोऽलंकारः। संचारिभावा गुरुदेवराजादिविषया रतिश्च भाव इत्युच्यते ॥
क्रमेण यथा—

कदा वाराणस्याममरतटिनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ॥
अये गौरीनाथ! त्रिपुरहर! शंभो! त्रिनयन!
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥

अत्र शान्तरसस्य कदेतिपदसूचिताचिन्ताख्यो व्यभिचारिभावोऽङ्गम् ॥

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रतो किमपि न क्लान्तासि तुभ्यं नमः ॥
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥

अत्र प्रभुविषयरतिभावस्य वसुमतीविषयरतिभावोऽङ्गम् ॥ रसभावावयवरूपाणां संचारिभावानां रसभावयोः सर्वत्र विद्यमानत्वात्किं तत्रापि प्रेयोऽलंकारः? इति चेदत्र विचार्यते। अङ्गाङ्गिभावो द्विविधः। मुख्यगौणभावः पोष्यपोषकभावश्चेति। अस्मिंश्च शास्त्रे प्रधानस्य ग्रहणाद्गौणस्य गौणरूपतामात्रेणाग्राह्यत्वम्। तदत्र न मुख्यगौणभावे विवक्षा। अपितु पोष्यपोषकभावे। पोष्यपोषकभावोऽपि लोकन्यायतो द्विविधः। अवयवरूपोऽलंकाररूपश्च। अवयवस्य शरीरशोभाकरत्वेपि तत्रावयवतायाः प्राधान्यादलंकारसंज्ञा न भवति। अपि त्ववयवसंज्ञैव। अवयवसंपत्तिस्तु दोषनिवृत्तिमात्रम्। न तु सुन्दरतापोषकत्वम्। परं त्ववयवसुघटनाऽवयविसुन्दरतायाः पोषिका भवति। अत एवान्यभावपोषकभावस्यावयवरूपतां मन्यमाना भोजमहाराजादयो रसवदाद्यलंकारान्नाहुः। अन्यभावपोषितभावयुगलस्य भिन्नरूपतया स्थितावेकतरभावोऽन्यतरभावस्यालंकाररूपतया पोषकोऽर्थाच्छोभाकरो भवतीति विवक्षायां त्वेकतरभावोऽन्यतरभावस्यालंकाररूपो भवतीति मन्वानाश्चन्द्रालोकसर्वस्वकारादयो रसवदाद्यलंकारानाहुः। मम तु मतम्, चन्द्रालोककारादिसिद्धान्तः समीचीनः। रसवदाद्यलंकारार्थमिदं निर्विवादोदाहरणम्—

याम्येका गहनं वनं प्रियतमे कृष्णेऽपि तत्रागते
कृत्वा स्वाननशीतदीधितिकरैस्तापापनोदं मम ॥
यद्वन्मे हृदयं स्मितान्वितदृशाऽहार्षीत्तथा मामसौ
कुर्यात्स्वान्तगतां स्मितेन सहितं गोपीगणानन्ददः ॥

अत्र रत्यादिभावपोषितश्चिन्ताभावो नायिकायाम्। हर्षादिभावपोषितो हास्यभावश्च नायके। तदत्र नायिकागतचिन्ताभावस्य नायकगतहास्यभावस्य च भिन्नरूपतया स्थितौ नायकगतहास्यभावो नायिकागतचिन्ताभावस्य पोषकत्वादलंकारः। उक्तभावयुगलस्य भिन्नाधिकरणता चानयोस्ततोऽप्य-

धिकतरभिन्नतासाधिका । भिन्नाधिकरणता च, चिन्ताभावो नायिकायां हास्यभावश्च नायक इति स्फुटतरैव । भिन्नाधिकरणगतवस्तु भिन्नाधिकरणगतवस्तुनोऽवयवरूपतां कथमपि नाप्नुयादेव ॥

॥ इति प्रेयोऽलंकारप्रकरणम् ॥ २ ॥

## ॥ ऊर्जस्वी ॥

ऊर्जो बलम् । उक्तं चिन्तामणिकोषकारेण "ऊर्जो बले" इति । ऊर्जस्वी तु बली । अत्र बलवत्त्वं त्वनुचितरसभावयोर्दूषणार्हत्वेऽप्यलंकारार्हत्वम् । अनुचितो रसो रसाभासः । अनुचितो भावो भावाभासः । तथाच रसाभासभावाभासयोः स्थायिभावस्य भावस्य वाङ्गत्वे ऊर्जस्व्यलंकारः ॥

क्रमेण यथा—

त्वत्प्रत्यर्थिवसुंधरेशतरुणीः संत्रासतः सत्वरं
यान्तीर्वीर विलुण्ठितुं सरभसं याताः किराता वने ॥
तिष्ठन्ति स्तिमिताः प्ररूढपुलकास्ते विस्मृतोपक्रमा-
स्तासामुत्तरलैः स्तनैरतितरां लोलैरपाङ्गैरपि ॥

अत्र प्रभुविषयरतिभावस्य शृङ्गाररसाभासोऽङ्गम् ॥

त्वयि लोचनगोचरं गते सफलं जन्म नृसिंहभूपते ! ॥
अजनिष्ट ममेति सादरं युधि विज्ञापयाति द्विषद्गणः ॥

अत्र कवेः प्रभुविषयरतिभावस्य तद्द्विषद्गणरतिरूपो भावाभासोऽङ्गम् ॥

॥ इत्यूर्जस्विप्रकरणम् ॥ ३ ॥

# ॥ समाहितम् ॥

समाहितशब्दार्थः समाप्तिः । उक्तं चिन्तामणिकोषकारेण "समाहितः समाधाने । समापनं समाप्तौ । समाधाने ।" इति ॥ तथाच भावशान्त्यवस्थायाः स्थायिभावस्य भावस्य वाङ्गत्वे समाहितालंकारः । क्रमेण यथा—

पश्यामः किमियं प्रपद्यत इति स्थैर्यं मयाऽऽलम्बितं
किं मां नालपतीत्ययं खलु शठः कोपस्तयाऽऽप्याश्रितः ॥
इत्यन्योन्यविलक्ष्यदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो मुक्तस्तु बाष्पस्तया ॥

अत्र शृङ्गारस्य कोपशान्तिरङ्गम् ॥

अविरलकरवालकम्पनै-
र्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः
स गतः क्वापि तवेक्षणे क्षणात् ॥

अत्र शाम्यमानोऽरातिगर्वसंचारिभावः कवे राजरतिभावस्याङ्गम् । समाहितं भावशान्तिरित्यप्युच्यते ॥ अत्र भावस्य शाम्यमानावस्था विवक्षितेति प्राक्प्रतिपादितम् ॥

॥ इति समाहितप्रकरणम् ॥ ४ ॥

# ॥ भावोदयः ॥

भावोदयावस्थायाः स्थायिभावस्य भावस्य वाऽङ्गत्वे भावोदयालंकारः ॥

यथा—

सार्कं कुरङ्गकदृशा मधुपानलीलां
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याऽभिधायि तव नाम विभो गृहीतं
केनापि तत्र विषमामकरोदवस्थाम् ॥

अत्र शत्रोरुदयमानो भयस्थायिभावः कवे राजरतिभावस्याङ्गम् ॥

इति भावोदयप्रकरणम् ॥ ५ ॥

---

## भावसंधिः ॥

द्वयोर्मेलनं संधिः । अत्र तु भावशबलतातो वैलक्षण्यापादनार्थं विरुद्धभावयोर्मेलनं विवक्षितम् । तथाच भावसंधेः स्थायिभावस्य भावस्य वाऽङ्गत्वे भावसंध्यलंकारः ॥
यथा—

एकाऽभूत्कुसुमायुधेषुधिरिव प्रव्यक्तपुङ्खावली
जेतुर्मङ्गलपालिकेव पुलकैरन्या कपोलस्थली ।
लोलाक्षीं क्षणमात्रभावविरहक्लेशासहां पश्यतो
द्रागाकर्णयतश्च वीर भवतः प्रौढाहवाडम्बरम् ॥

अत्र रमणीप्रेमरणौत्सुक्ययोः संधिः कवे राजरतिभावस्याङ्गम् ॥

इति भावसंधिप्रकरणम् ॥ ६ ॥

---

## भावशबलता ॥

---

शबलता तु बहूनां मेलनम् । भावशबलता स्थायिभावस्य भावस्य वाङ्गं चेद्भावशबलतालंकारः ॥
यथा—

पश्येत्कश्चिच्चल चपल रे ! का त्वराहं कुमारी
हस्तालम्बं वितर हहहा ! व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कंचित्फलकिसलयान्याददानाभिधत्ते ॥

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता कवे राजरतिभावस्याङ्गम् ॥

## इति भावशबलताप्रकरणम् ॥ ७ ॥



इति श्रीमन्मरुमण्डलमुकुटमणि-राजराजेश्वर-महाराजाधिराज-जी० सी० ऐस० आई० यशवन्तसिंहाज्ञानुसारेण कविराजमुरारिदानविरचिते यशवन्तयशोभूषणे रसवदाद्यलंकारनिरूपणं नाम पञ्चमाकृतिः समाप्ता ॥ ५ ॥



॥ श्रीजगदम्बायै नमः ॥

# ॥ अन्तर्भावाकृतिः ॥

---

नत्वाऽऽत्मन्यस्य जगतो लयकर्तारमीश्वरम् ।
येऽन्तर्भवन्त्यलंकारा इतरेषु वदामि तान् ॥ १ ॥
तुच्छे विलक्षणत्वे स्यान्नालंकारान्तरं नृप ।
तादृशं ग्रन्थविस्तारं निन्दन्ति कविकोविदाः ॥ २ ॥

## अङ्गम् ॥

---

अङ्गशब्दार्थः प्रसिद्धः। प्राञ्चोऽङ्गनामकमलंकारान्तरं मन्वते । अलंकारोदाहरणकार इमे लक्षणोदाहरणे दर्शयति—

"अङ्गिनः फलवत्त्वेऽपरस्याफलत्वमङ्गम् ॥" इति ॥

अपरस्य अङ्गस्य ॥

यथा--

देवस्य कोपविधिसाधनतामियाय
पुष्पायुधः सुरभिणा सममेव सत्यम् ।
तस्यैव यत्तु फलवत्त्वमनङ्गभावा-
त्तद्युज्यतेऽङ्गमफलं यत आमनन्ति ॥

स्वसामन्तवसन्तेन सह मन्मथो महादेवस्य तपोभङ्गमकार्षीत् । तत्र महादेवस्य कोपाग्निनाऽङ्गी मन्मथो दग्धः, अङ्गं वसन्तस्तु न दग्धः । महादेवस्य कोपोत्पादने द्वयोरपि साधनत्वान्महादेवस्य कोपाग्निना द्वाभ्यामपि दग्धाभ्यां भवितव्यम् । मम तु मतं, अयं मत्प्रकाशिताऽतुल्ययोगितालंकारेऽन्तर्भूत इति ॥

॥ इत्यङ्गप्रकरणम् ॥ १ ॥



# ॥ अचिन्त्यम् ॥

---

चिन्तने यन्नायाति तदचिन्त्यम्। अचिन्त्यं प्राञ्चोऽलंकारान्तरं मन्वते। रत्नाकरकारोऽस्येमे लक्षणोदाहरणे दर्शयति—

"अविलक्षणाद्विलक्षणकार्योत्पत्ति-
विपर्ययश्चाचिन्त्यम्" इति ॥

विपर्ययश्च विलक्षणकारणादविलक्षणकार्योत्पत्तिः ॥

क्रमेण यथा—

अत्रान्तरे कश्चन वाग्मिभावं
वने वने कोकिलमालिकानाम् ॥
वाचंयमत्वं च वियोगिनीना-
मुल्लासयन्नाविरभूद्वसन्तः ॥ १ ॥

अत्राविलक्षणवसन्तकारणान्मौनवाचालतारूपविलक्षणकार्योत्पत्तिः। वसन्तकारणस्याविलक्षणता तु कोकिलानां वाचालताकरणे विरहिणीनां वाचंयमत्वकरणे च वसन्तस्वभावस्यानन्यथाभावः ॥

शनिरशनिश्च तमुच्चकै-
र्निहन्ति कुप्यसि नरेन्द्र! यस्मै त्वम् ॥
यस्मै प्रसीदसि पुनः
स विभात्युदारोऽनुदारश्च ॥ १ ॥

शनिस्तु शनैश्चरग्रहः। अशनिर्वज्रम्। अस्य रूढिर्विद्युति वर्तते। अत्र शनिरशनिश्चेत्युभावपि हेतू नाम्ना स्वरूपेण स्वभावेन च सर्वथा परस्परं विलक्षणौ। तौ च राजराजेश्वरस्य शत्रुमारणरूपमेकमेवाविलक्षणकार्यं कुरुतः। एतादृशविषये भोजमहाराजो विचित्रहेतुमङ्गीचकार। अचिन्त्यस्थले आश्चर्यमेव भवति। अतो मम तु मतं, अयमलंकारो विचित्रालंकारेऽन्तर्भूत इति ॥

इत्यचिन्त्यप्रकरणम् ॥ २ ॥

---

## ॥ अतिशयः ॥

---

अत्रातिशयशब्दार्थोऽत्यन्तम्। प्राचीना अतिशयनामकमलंकारान्तरं मन्वते। रत्नाकरकार इमे लक्षणोदाहरणे दर्शयति—

"संभावनयाऽन्यथा वाऽतिशयोऽतिशयः॥" इति॥

अत्र संभावना विधिः। असंभावना निषेधः। वृत्तौ लिखति "क्रमेणोत्तरोत्तरस्मिन्संभावनयाऽसंभावनया वाऽतिशयोऽतिशयालंकारः" इति॥ क्रमेण यथा—

यदि मे प्रभो! प्रसन्नो मा कुरु मज्जन्म मज्जमानस्य।
अथ जन्म प्रेमाणं चेत्प्रेमाणं न दुर्लभे हि जने॥

अत्र जन्मप्रभृतीनामभावसंभावनस्याशंसितत्वे यदि जन्माभावं न करोषि तत्प्रेमाभावं कुर्वित्यादिना प्रेमाभावादिसंभवस्यातिशय उपनिबद्धः॥

न भवति भवति च न चिरं
भवति चिरं चेत्फले विसंवदति॥
कोपः सत्पुरुषाणां
तुल्यः स्नेहेन नीचानाम्॥ १॥

अत्र सत्पुरुषाणां कोपस्योत्तरोत्तरमसंभावनया, अर्थान्निषेधेन सत्पुरुषाणां कोपाभावातिशयः कथितः। मम तु मतं, एतादृशातिशयस्याप्यधिकेऽन्तर्भावः॥

इत्यतिशयप्रकरणम्॥ ३॥

---

## ॥ अत्युक्तिः ॥

---

अत्रातिशब्दस्यार्थो लङ्घनम्। आह चिन्तामणिकोषकारः। "अति लङ्घने" इति। अत्युक्तिरिति समुदितशब्दार्थो लङ्घनस्योक्तिरिति।

अत्र लोकसीमातिलङ्घने रूढिः । कश्चिदतिशयोक्तिमत्युक्तिनाम्ना प्राह। शूरतोदारताविषयकलोकसीमातिवर्तनोदाहरणानि च ददौ। तेन भ्रमित्वा प्राचीना अत्युक्तिमलंकारान्तरं मन्वते। चन्द्रालोककार इमे लक्षणोदाहरणे दर्शयति—

"अत्युक्तिरद्भुताऽतथ्यशौर्यौदार्यादिवर्णनम्॥" इति॥

क्रमेण यथा—

राजन्सप्ताप्यकूपारास्त्वत्प्रतापाग्निशोषिताः।
पुनस्त्वद्वैरिवनितावाष्पपूरेण पूरिताः॥
त्वयि दातरि राजेन्द्र याचकाः कल्पशाखिनः॥

कुवलयानन्दकारः परमतेन लिखति "संपदत्युक्तावुदात्तालंकारः। शौर्यौदार्याद्यत्युक्तावत्युक्त्यलंकार इति भेदमाहुः" इति। मम तु मतं, उदात्तालंकारस्य साक्षात्स्वरूपमजानन्तः प्राचीना एवमाहुः। अत्र विषये उदात्तालंकारो नास्तीत्यहमुदात्ताऽलंकारप्रकरणे स्पष्टमकरवम्। अपिच कुवलयानन्दकार आह "सत् अर्थाद्विद्यमानम्" इति। तत्तात्पर्यं त्वीषत्संभववदुक्तावतिशयोक्त्यलंकार इति॥

यथा—

अनयोरनवद्याङ्गि! स्तनयोर्जृम्भमाणयोः॥
अवकाशो न पर्याप्तस्तव बाहुलतान्तरे॥१॥

"असत् अर्थात् अविद्यमानम्" इति। तत्तात्पर्यं चेषदपि संभवाभाववदुक्तावत्युक्त्यलंकार इति॥

यथा—

अल्पं निर्मितमाकाशमनालोच्यैव वेधसा॥
इदमेवंविधं भावि भवत्याः स्तनमण्डलम्॥१॥

अस्यायमभिप्रायः। "अनयोरनवद्याङ्गि—" इत्यत्र सुतरामसंभवाभावः। एवं कथनयोग्यस्य क्वापि वृहत्कुचयुगलस्योपलभ्यमानत्वात्। "अल्पं निर्मितमाकाशम्—" इत्यत्र सुतरामसंभवः। मम तु मतं, कुचयोर्बाहुलतान्तरेऽमितिः, आकाशेऽमितिश्चेत्युभयं लोकसीमातिवर्तनत्वादतिशयोक्तिरेव। परं तूभयोरुदाहरणयो रमणीयत्वाभावान्नालंकारता। अपि तु प्रसिद्धविरुद्धदूषणम्। अलंकारस्त्वत्र दृश्यताम्—

गत्यैव प्रियमोहनं प्रपठितं किं वा पठेद्गीस्तव
चक्षुर्गूढचलाचलत्वमपि ते चारोद्यते किं नभः ॥
वक्षोजोन्नतिरेति वृद्धिमनिशं कूर्पासकोल्लङ्घिनी
सेत्थं चेदुदियाद्द्युतिर्विधुमुखि! क्वैषा पुनर्मास्यति ॥

अत्र द्युतिः क्व मास्यति? लोके न मास्यतीत्यर्थः। नायिकाद्युतेर्लोकेऽमितिरूपवर्णनं चमत्कारकारित्वादलंकारः। संभवसहितातिशयस्तु समस्तालंकारजीवनमित्यालंकारिकसिद्धान्तः। ईदृशस्थलेऽतिशयोक्त्यलंकारो न भवति। किंतु प्रधानभूता अन्येऽन्येऽलंकारा भवन्ति। अस्मिन्काव्ये तु संभावनाऽलंकारः। चन्द्रालोककारिकायां "अद्भुत" इत्युक्तम्। अद्भुततायां पर्यवसाने च विचित्रालंकारेण भाव्यम्। चन्द्रालोकस्योदाहरणयोस्त्वतिशयोक्तिरेव। शूरतोदारतादीनां लोकसीमातिवर्त्तनेऽत्युक्तिः, इतरलोकसीमातिवर्तनेऽतिशयोक्तिरिति तु न युक्तम्। कुत इति चेदस्यां किंचिद्विलक्षणतायामनयोरलंकारान्तरतायाः किमपि निमित्तं नोपलभ्यते इतीयमतिशयोक्तिरेव ॥

॥ इत्यत्युक्तिप्रकरणम् ॥ ४ ॥

---

## ॥ अनङ्गम् ॥

---

प्राचीना अनङ्गनामकमलंकारान्तरं मन्वते। अलंकारोदाहरणकारः "अङ्गिनः फलवत्त्वेऽपरस्याफलत्वमङ्गम्" इत्यङ्गालंकारलक्षणमुक्त्वा, अनङ्गालंकारस्येदं लक्षणमाह—

"तद्विपर्ययोऽनङ्गम् ॥" इति ॥

अङ्गस्य फलवत्त्वेऽङ्गिनः फलवत्त्वाभावेऽनङ्गालंकार इत्यर्थः ॥

यथा—

अस्त्रीकृतस्तरुवरो हरिपुङ्गवेन
लङ्केन्द्रवक्षसि मृणालमृदुः पपात॥

तत्र स्थितैस्तु कुसुमैः कुसुमेषुरेनं
सीतावियोगविधुरं दृढमाजघान ॥

तरुवरोऽङ्गी। कुसुमानि तस्याङ्गानि। अत्राङ्गी वृक्षो रावणस्य क्लेशकरणे विफलो जातः। तस्याङ्गानि च कुसुमानि रावणस्य क्लेशकरणे विफलानि न जातानि। मम तु मतं, अस्यापि मत्प्रकाशिताऽतुल्ययोगितालंकारेऽन्तर्भावः॥

॥ इत्यनङ्गप्रकरणम् ॥ ५ ॥

## ॥ अनध्यवसायः ॥

अनध्यवसायशब्दार्थोऽनिश्चयः। प्राचीना अनध्यवसायमलंकारान्तरं मन्वते। भानुदत्त इमे लक्षणोदाहरणे दर्शयति—

"अनुल्लिखितकोटिकं ज्ञानमनध्यवसायः॥" इति॥

संशये भ्रमे च कोटेरुल्लेखः। अत्र तु तदभाव इतीयं विलक्षणता। यथा—

गण्डमण्डलविलोलकुण्डलः
श्यामतामरसदामदीधितिः॥
कोऽयमालि! वनमालया युतः
स्वेदशालि वपुरातनोति मे॥

अत्र "इन्दुर्वा मुखं वा" इति न संदिग्धकोटेरुल्लेखः, किं तु "अयं कः" इति सामान्यरूपेणानिश्चयज्ञानम्। मम तु मतं, अस्यापि संदेह एवान्तर्भावः॥

॥ इत्यनध्यवसायप्रकरणम् ॥ ६ ॥

## ॥ अनन्वयः ॥



"न अन्वयः, अनन्वयः" इति व्युत्पत्तेरनन्वयशब्दस्यार्थोऽन्वयस्याभावः। अन्वयस्तु पदार्थयोः परस्परं संबन्धः। बहवः प्राचीना अनन्वयनामकमलंकारान्तरं मन्वते। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ॥
अनन्वयः॥" इति॥

सर्वस्वकारस्येदं लक्षणम्—

"एकस्यैवोपमानोपमेयत्वेऽनन्वयः॥" इति॥

काव्यप्रकाशगतकारिकाकारेण परस्परोपमावारणार्थं लक्षणे एकवाक्यगत्वानियमः कृतः। सर्वस्वकारेण तु न कृतः। चन्द्रालोककारादयः सर्वे सर्वस्वानुगामिनः। त एवमुदाहरन्ति—

दाता दयालुरोजस्वी वैरिवर्गनिकन्दनः ॥
यशवन्तनराधीश ! त्वमिव त्वं विराजसे ॥१॥

अत्र तस्मिन्नेव राजराजेश्वरे तस्यैव राजराजेश्वरस्योपमाया अन्वयानुपपत्तेरनन्वयः। अन्वयानुपपत्तेश्च दूषणत्वादीदृशस्थले द्वितीयसदृशव्यवच्छेदविवक्षां कुर्वन्ति। तदेवाह भामहः—

"यत्र तेनैव तस्य स्यादुपमेयोपमानता ॥
असादृश्यविवक्षातो वदन्ति तमनन्वयम्॥" इति॥

प्राचीनमतानुसारेण रसगङ्गाधरकारो वदति "अनन्वयेऽसमता व्यङ्ग्या। तथाप्यनन्वयमूलकचमत्कारस्य प्रधानत्वादलंकारान्तरमनन्वयः। यथा रूपकदीपकादिषूपमायां सत्यामपि रूपकदीपकादयोऽलंकाराः" इति। मम तु मतं, प्राचीनानामयं प्रमादः। कुत इत्युक्तौ मनोरञ्जकं यद्भवति तद्भूषणं भवति। अस्मिंस्थले चांशत्रयम्। अनन्वयः, उपमाभासः, असादृश्यं चेति। तत्रानन्वयस्य दूषणरूपत्वान्न मनोरञ्जकत्वम्। मनोरञ्जकस्तूपमाभासः, असादृश्यं वा। अतोऽत्रोपमाया आभासे पर्यवसानकरणे आभासालंकारः।

असादृश्ये पर्यवसानकरणे त्वाक्षेपालंकारः। आक्षेपस्य च प्राधान्याद-नन्वयालंकारो न पृथग्भवितुमर्हति। अलंकाररत्नाकरकारोऽनन्वयस्य प्र-कारत्रयं मन्वान इमे लक्षणोदाहरणे दर्शयति—

"तेनैव तदेकदेशेनावसितभेदेन वा अनन्वयः" ॥ इति ॥

तेनैव तस्य, तदेकदेशेन तदेकदेशान्तरस्य, अवसितभेदेनार्थादा-रोपितभेदेन सह तस्यान्वयानुपपत्तिरनन्वयालंकार इत्यर्थः। आरोपित-भेदस्तु प्रतिबिम्बरूपः। आदिमस्येदृशमेवोदाहरणमाह—

"भवानिव भवान् भाति यशवन्तनरेश्वर! ॥"

द्वितीयो यथा—

इदहमित्ते भुअणे सुन्दरमहिलासहस्ससंकिण्णे।
अणुहरइ णवरि तस्सा वामद्धं दक्खिणद्धस्स ॥

तृतीयो यथा—

गन्धेन सिन्धुरधुरंधर वक्रमैत्री-
मैरावणप्रभृतयोऽपि न शिक्षितास्ते।
तत्त्वं क्वचित्त्रिनयनाऽचलरत्नभित्ति-
स्वीयप्रतिच्छविषु यूथपतित्वमेषि ॥ १ ॥

यूथपतित्वं तु सजातीयेषु भवति। तस्माद्गणेशस्य सदृशा हस्ति-नो गणेशप्रतिबिम्बरूपा एव ॥

यथावा—

दृश्यते दर्पणे चैव मुखेन सदृशं तव ॥

मम तु मतं, द्वितीयप्रकारेऽङ्गद्वयमपि पृथक् पृथग्वर्तते। अत उप-माया अन्वयो न त्वनन्वयः। उक्तानन्वयस्त्वेकस्यैवोपमानोपमेयत्वे भवति। तृतीयप्रकारेऽपि प्रतिबिम्बानां पृथक्त्वादुक्तरीत्याऽनन्वयाभावः। उक्त-स्थलद्वये उपमैव। प्राचीनैरपि देशकालभेदेन तस्मिन्नेव तस्योपमा स्वी-कृता। तदुक्तमुपमाप्रकरणे। "इदहमित्ते" इत्यत्र पुरुषस्य वामार्द्धापेक्षया दक्षिणार्द्धः प्रशस्तो भवति। स्त्रियाश्च दक्षिणार्द्धापेक्षया वामार्द्धः प्रशस्तो

---

१ एतावन्मात्रे भुवने सुन्दरमहिलासहस्रसंकीर्णे।
अनुहरति नूनं तस्या वामार्धं दक्षिणार्धस्य ॥ इति संस्कृतम् ॥

भवतीति सामुद्रिकशास्त्रे उक्तम् । तस्या एव नायिकाया दक्षिणार्द्धाङ्गस्य वामार्द्धाङ्गेन सहोपमा प्रदत्ता । अत्र स्थलद्वयेऽपि द्वितीयसदृशव्यवच्छेदविवक्षायामाक्षेपालंकारः । मम मते त्वनन्वयस्याक्षेपेऽन्तर्भावः ॥

॥ इत्यनन्वयप्रकरणम् ॥ ७ ॥

## ॥ अनादरः ॥

अनादरः प्रसिद्धः । प्राचीना अनादरनामकमलंकारान्तरमङ्गीकुर्वन्ति । रत्नाकरकार इमे लक्षणोदाहरणे दर्शयति—

अप्राप्तार्थं तत्तुल्याऽनादरोऽनादरः ॥ "इति ॥

यदा यद्रूपे वस्तुनि प्राप्ते तत्तुल्याऽप्राप्तवस्त्वन्तरावाप्त्यर्थं तस्यानादरस्तदानादराख्योऽलंकारः ॥

यथा—

श्रीकश्मीरनरेन्द्रचन्द्र ! भवतः प्रत्यर्थिनो हन्त ते
प्रज्ञाकौशलशालिनोऽपि नितरां जाड्यं समभ्यागताः ।
भूभर्त्तुः कटकाग्रतो विचलिता द्राक्सिंहनादाकुला
भूभर्तुः कटकाग्रमेव चलिता यत्सिंहनादाकुलम् ॥ १ ॥

सिंहनादो युद्धसमये योधानां गर्जनं सिंहानां शब्दश्च । कटकः सेना पर्वतमध्यभागश्च ॥

यथावा—

अमन्दरागाकुलमानसस्य
नेत्राञ्चलं सूचयतोऽन्यदेव ।
मन्थक्षणेऽब्धेः कमलां विलोक्य
जयत्यवस्थान्तरमच्युतस्य ॥ १ ॥

रत्नोद्धरणार्थं समुद्रमथनं कुर्वन् हरिरेकरत्ननिर्गमनेऽन्यरत्नोद्धरणाकाङ्क्षया तस्य दूरे स्थापनार्थं नेत्रेण सूचनं करोति। तथैव लक्ष्म्यर्थमप्यन्यनेत्राञ्चलेनार्थाल्लक्ष्म्यभिमुखे यन्नास्ति तन्नेत्राञ्चलेन लक्ष्म्या अपि दूरे स्थापनार्थं सूचयति स्म । अपरनेत्रेण सूचनं तु लक्ष्मी स्वानादरं न जानीयादिति। एषूदाहरणेषु रत्नाकरकारस्य लक्षणसंगतिस्त्वेवम् । पूर्वोदाहरणेऽप्राप्ततादृशपर्वतप्राप्त्यर्थं प्राप्ततादृशसेनाया अनादरः । उत्तरोदाहरणेऽप्राप्तान्यरत्नानां प्राप्त्यर्थं प्राप्तलक्ष्म्या अनादरः । अनादरे चमत्कृतिप्राप्त्यर्थमुक्तनिमित्ताङ्गीकारः । परं त्वस्य निमित्तस्य—

धन्या निर्धननारी या शयाना वन्दते विधुम् ।
धिग्धिग्वै वैभवं लग्नाः कपाटा यत्र कोटयः ॥

अत्राऽव्याप्तिर्भवति । अत्रोक्तनिमित्तेनादरार्हतादृशसेनाया लक्ष्म्याश्चानादरोऽवज्ञालंकारः । अनादरे चमत्कारेऽवज्ञाऽलंकारो भवेत् । अवज्ञाऽनादरश्चेति नामान्तरम् ॥

इत्यनादरप्रकरणम् ॥ ८ ॥

## ॥ अनुकूलम् ॥

कतिपयप्राचीना अनुकूलनामकमलंकारान्तरमङ्गीचक्रुः । साहित्यदर्पणकारस्येमे लक्षणोदाहरणे—

"अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत् ॥" इति ॥

यथा—

कुपितासि यदा तन्वि ! निधाय करजक्षतम् ।
बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा ॥ १ ॥

पाशेन कण्ठबन्धनं प्रतिकूलम्। अत्र नायिकाया भुजलतारूपपाशेन कण्ठबन्धनमनुकूलम् । मम तु मतं, अयं परिणामालंकारेऽन्तर्भूत इति ॥

इत्यनुकूलप्रकरणम् ॥ ९ ॥

## ॥ अनुकृतिः ॥

अनुकृतिरित्यतरत्वरकरणम् । आह चिन्तामणिकोशकारः । "अनुकृतिरनुकरणे" इति । प्राचीना अनुकृतिनामकमलंकारान्तरमङ्गीकुर्वन्ति । रत्नाकरकार इमे लक्षणोदाहरणे दर्शयति—

"हेत्वन्तरादन्यस्यापि तथात्वमनुकृतिः॥" इति ॥

कारणान्तरेणान्यस्यापि तथात्वमर्थात् तद्वद्भवनमनुकृतिरित्यर्थः॥

यथा—

शरश्रेणीपातैस्तव निचुलिते तत्र वपुषि
प्रवेशः शस्त्राणां कथमपि भटानामभजत ।
सुरस्त्रीनिर्मुक्तासमकुसुमधूलीहृतदृश—
स्तवाप्यासीत्तेषु प्रहरणविलम्बः क्षणमपि ॥ १ ॥

रत्नाकरकारो वदति "समालंकारे तु प्रथममेव समभूतानां वस्तूनां संयोगः । अत्र तु संयोगानन्तरं समता भवति" इति । मम तु मतं, नामार्थमात्रं तु रूपकविषयः । अनुकृतेरनुकरणरूपत्वात् । रत्नाकरकारस्य लक्षणोदाहरणानुसारेण तु मया स्पष्टीकृतस्तुल्ययोगिताऽलंकारः । अपि च रत्नाकरकारेण समालंकाराद्यद्वैलक्षण्यं प्रदर्शितं, तावन्मात्रेणालंकारान्तरं न भवति । समतायां पर्यवसाने तु समालंकारो भवेत् ॥

इत्यनुकृतिप्रकरणम् ॥ १० ॥

## ॥ अनुगुणः ॥

अत्राऽनुशब्दार्थो वृद्धिः । आह चिन्तामणिकोषकारः "अनु आयामे" इति । उक्तं च सिद्धान्तकौमुद्याम् "आयामो दैर्घ्यम्" इति । अनुगुण इति शब्दसमुदायार्थो गुणस्य वृद्धिरिति । प्राचीना अनुगुणमलंकारान्तरं मन्वते । चन्द्रालोककार इमे लक्षणोदाहरणे दर्शयति—

"प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसन्निधेः ॥" इति ॥

यथा--

नीलोत्पलानि दधते कटाक्षैरतिनीलताम् ॥

मम तु मतं, अयमधिकालंकारस्य विषयः । उक्तरीत्या गुणाऽऽधिक्यमलंकारान्तरं भवितुं नार्हति ॥

इत्यनुगुणप्रकरणम् ॥ ११ ॥

---

## ॥ अप्रत्यनीकम् ॥

---

कतिपयप्राचीना अप्रत्यनीकमलंकारान्तरं मन्वते । अलंकारोदाहरणकारः प्रत्यनीकस्य "अनिष्टस्य तदीयस्य वा प्रातिकूल्यं प्रत्यनीकम्" इति लक्षणमुक्त्वा प्रत्यनीकस्य विपरीतभावेऽप्रत्यनीकालंकारं मन्वान इदं लक्षणमाह--

"अन्यथा त्वप्रत्यनीकम् ॥" इति ॥

प्रत्यनीकालंकारस्यान्यथाभावोऽप्रत्यनीकालंकार इत्यर्थः ॥ तन्मतानुसारेण प्रत्यनीकस्यान्यथाभावस्त्विष्टस्य तत्संबन्धिनो वानुकूलता ॥

यथा--

पुष्पाणामेव निन्दामचकमत गुणान्पल्लवानामगृह्णा-
स्तुत्यासक्ता पिकानामभवदगणयद्राजहंसेषु दोषान् ।
भक्तिं व्यानञ्ज सान्द्रे मृगमदतिलके चान्दने नाङ्गरागे
ध्वान्तं तुष्टा न तु मिहिरमहः कृष्णरागेण राधा ॥

मम तु मतं, साक्षात्प्रति प्रातिकूल्यानुकूल्यं त्वन्योन्यालंकारः । संबन्धिनं प्रति प्रातिकूल्यानुकूल्यं प्रत्यनीकस्य प्रकारः । तत्तु प्रत्यनीकप्रकरणे सविस्तरं प्रतिपादितविषयम् । अस्यापि प्रत्यनीकेऽन्तर्भावः ॥

इत्यप्रत्यनीकप्रकरणम् ॥ १२ ॥

# ॥ अभावः ॥

अभावशब्दार्थः प्रसिद्धः । कतिपयप्राचीना अभावमलंकारान्तरं मन्वते । भोजमहाराजोऽभावस्येदं लक्षणमाज्ञापयति—

"असत्ता या पदार्थानामभावः सोऽभिधीयते ।
प्रागभावादिभेदेन स षड्विध इहेष्यते ॥" इति ॥

तेषु प्रागभावो यथा—

संग्गं अपारिजाअं कोत्थुहलच्छीविरहिअं महुअमहस्स उरं ।
समरामि महणपुरओ अमुद्धअंदं च हरं अगपब्भारं ॥

अत्र समुद्रमथनात्प्राक् स्वर्गे पारिजातस्य, विष्णोर्वक्षसि कौस्तुभलक्ष्म्योः, हरजटायां मुग्धचन्द्रस्याभावः ॥

प्रध्वंसाभावो यथा—

धृतिरस्तमिता गतिश्च्युता
विरतं गेयमृतुर्निरुत्सवः ।
गतमाभरणप्रयोजनं
परिशून्यं शयनीयमद्य मे ॥

अत्र रमण्याः प्रथमं शय्यायां सत्ता । तस्याः प्रध्वंसान्नाशादभावः ॥

इतरेतराभावो यथा—

कर्णोत्पलं न चक्षुस्ते न चक्षुः श्रवणोत्पलम् ।
इति जानन्नपि जनो मन्यते नेत्रदीर्घताम् ॥

इतरेतराभावोऽन्योन्याभावस्य पर्यायान्तरम् । अत्र चक्षुषि नीलोत्पलस्य नीलोत्पले च चक्षुषोऽन्योन्याभावः ॥

अत्यन्ताभावो यथा—

---

१ स्वर्गमपारिजातं कौस्तुभलक्ष्मीविरहितं मधुमथनस्योरः ॥
स्मरामि मथनपुरतोऽमुग्धचन्द्रं हरजटाप्राग्भारम् ॥ इति संस्कृतम् ॥

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रञ्जयति ॥

अत्र ज्ञानलवदुर्विदग्धे रञ्जनताया अत्यन्ताभावः । न्यायशास्त्रोक्तसप्तमपदार्थाभावस्योक्तचत्वारो भेदाः प्रसिद्धाः। भोजमहाराजोऽन्यमतेनाभावस्यान्यदपि प्रकारद्वयमाह ॥

तत्रान्यथाऽत्यन्ताभावो यथा—

प्रसीद सद्यो मुञ्चेमं चण्डि मानं मनोगतम् ।
दृष्टमात्रेऽपि ते तत्र रोषः खकुसुमायते ॥

अत्र वर्णनीयनायिकायां खकुसुमवन्मानस्यात्यन्ताभावः । तथापि सखीशिक्षया प्रसभं मानदर्शनम् ॥

यथा—

कुर्वे भ्रुकुटिमाबध्य कृच्छ्रेण कठिनं मनः ॥
तथापि माधवे दृष्टे दृङ्मे भवति हासयुक् ॥

अतोऽत्रान्यप्रकारकोऽत्यन्ताभावः ॥

सामर्थ्याभावो यथा—

मानुषीषु कथं वा स्यादस्य रूपस्य संभवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातले ॥

अत्र मानुषीषु तादृशरूपसत्तायाः सामर्थ्याभावः । अभावस्याभावोऽप्यभाव एव । भोजमहाराजेनाभावस्यानेकविधान्युदाहरणानि प्रदर्शितानि । तानि तु ग्रन्थविस्तरभयान्न लिख्यन्ते । मम तु मतं, एषूदाहरणेष्वभावांशे न चमत्कारलेशोपि। क्वचिदभावांशे चमत्कारोपलम्भश्चेत्तस्याऽऽक्षेपालंकारेऽन्तर्भावो भवेत् ॥

इत्यभावप्रकरणम् ॥ १३ ॥



## ॥ अभीष्टम् ॥

अभीष्टशब्दार्थो वाञ्छितत्वम् । प्राचीना अभीष्टनामकमलंकारान्तरं मन्वते । अलंकारोदाहरणकार इदं लक्षणमाह—

"स्वयं विधेयस्यान्यतः सिद्धिरभीष्टम् ॥" इति ॥

यथा—

दोःशालिनामात्तयशोरवाणां
यल्लोहघातैः करणीयमासीत् ।
भारायमाणैर्निजवर्मलोहै-
स्तदन्वभूवन्बहवस्तुरुष्काः ॥

मम तु मतं, अयं प्राचीनाभिमतप्रहर्षणालंकारस्य प्रथमप्रकारेऽन्तर्भूतः । तस्येदं लक्षणम्—

"उत्कण्ठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणम् ॥" इति॥

॥ इत्यभीष्टप्रकरणम् ॥ १४ ॥

## ॥ अभ्यासः ॥

अभ्यासशब्दार्थः प्रसिद्धः । प्राचीना अभ्यासनामकमलंकारान्तरं मन्वते । अलंकारोदाहरणकार इमे लक्षणोदाहरणे दर्शयति—

"दुष्करसिद्धिकृदभ्यसनमभ्यासः ॥" इति ॥

लोकवैलक्षण्यार्थं दुष्करेति विशेषणम् ॥

यथा—

प्रविवेश विनिर्ययौ च य-
न्नयनाग्नेर्मदनः पिनाकिनः ॥
नृपतिं प्रबलप्रतापम-
प्युपसर्पन्नत एव नात्रसत् ॥

मम तु मतं, दुष्करसिद्धिकृदभ्यासस्यापि लौकिकत्वान्नालंकारत्व-योग्यतेति तस्य लोकेऽन्तर्भावः। अस्मिन्नुदाहरणे चमत्कारस्तु दृष्टान्तस्य ॥

॥ इत्यभ्यासप्रकरणम् ॥ १५ ॥

## ॥ अर्थान्तरन्यासः ॥

अस्य शब्दसमुदायस्यार्थोऽर्थान्तरस्य न्यसनम्। बहवः प्राचीना अर्थान्तरन्यासमलंकारान्तरं मन्वते। भगवतो वेदव्यासस्येदं लक्षणम्—

"भवेदर्थान्तरन्यासः सादृश्येनेतरेण वा॥" इति ॥

आचार्यदण्डिन इदं लक्षणम्—

"ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन ॥
तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः॥" इति।

चन्द्रालोककारादय एतदनुसारिणः। अर्थान्तरन्यासस्य प्राचीना एतादृशोदाहरणानि दर्शयन्ति—

गुणवद्वस्तुसंसर्गाद्याति स्वल्पोऽपि गौरवम् ॥
पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते ॥ १ ॥

अत्र विशेषेण सामान्यस्य समर्थनम् ॥

प्रियेण संग्रथ्य विपक्षसन्निधा-
वुपाहितां वक्षसि पीवरस्तने ॥
स्रजं न काचिद्विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥ १ ॥

अत्र सामान्येन विशेषस्य समर्थनम् ॥

यथावा—

देवानाममृतं रमां मुररिपोश्चान्द्रीं कलां धूर्जटे-

मर्यादामवनेरदाच्च जलधिः शक्रस्य कल्पद्रुमान् ।
पातुं तं कलशोद्भवे व्यवसिते साह्ये न कोऽप्युद्यतः
सर्वं निष्फलमेव साधनमहो यस्मै विधिः कुप्यति ॥ १ ॥

अत्रापि विशेषस्य सामान्येन समर्थनम् ॥

यथावा—

श्लाघते तिमिरं काचिच्छशाङ्कं बहु निन्दति ।
प्रियं वाञ्छति लोकोऽयं प्रतिकूलं विनिन्दति ॥ १ ॥

अत्रापि विशेषस्य सामान्येन समर्थनम् । भगवान् वेदव्यास आचार्यदण्डी च दृष्टान्तोदाहरणे नोचतुः । अत आभ्यामर्थान्तरन्यासोऽभिहितः । तत्तु समीचीनम् । भगवान्वेदव्यासः "सादृश्येन" इत्यनेन वचनेन दृष्टान्तस्य, "इतरेण" इति वचनेन चोदाहरणस्य संग्रहं चकार । इतरसंबन्धस्तु सामान्यविशेषभावसंबन्धः । परंतु काव्यप्रकाशगतकारिकाकारादयो दृष्टान्तोदाहरणालंकारावुक्त्वाऽर्थान्तरन्यासमप्याहुः । स तु प्रमादः । कुत इत्युक्तावर्थान्तरन्यास उक्तालंकाराभ्यां न पृथग्भवितुमर्हति । "गुणवद्वस्तुसंसर्गात्—" इति । "प्रियेण संग्रथ्य-" इति चोदाहरणयोर्दृष्टान्तालंकारः । "देवानाममृतम्—" इति । "श्लाघते—" इति चोदाहरणयोरुदाहरणालंकारः । दृष्टान्ते क्वापि दार्ष्टान्तिकः सामान्यरूपो दृष्टान्तश्च विशेषरूपः । क्वापि दार्ष्टान्तिको विशेषरूपो दृष्टान्तश्च सामान्यरूपः । क्वचिच्चोभावपि सामान्यरूपौ । क्वचिच्चोभावपि विशेषरूपौ भवतः । उदाहरणालंकारे तु सामान्यस्य विशेष एव भवति । दृष्टान्तस्य स्वरूपं तु साध्यार्थसिद्ध्यै सिद्धेऽर्थे निश्चयदर्शनम् । उदाहरणस्वरूपं च समुदायैकदेशदर्शनम् । यथा क्रेतृप्रतीतये धान्यराशेरुद्धृत्य मुष्टिमात्रकणप्रदर्शनम् । न च वाच्यं ज्ञापकहेतावप्यर्थान्तरन्यासो वर्तते । पुनश्च भगवान्वेदव्यासो दण्ड्याचार्यश्चार्थान्तरन्यासमुक्त्वा ज्ञापकहेतुं पृथक्किमर्थमाहतुरिति । कुत इतिचेज्ज्ञापकहेतौ हेतुसाध्यौ मिलित्वैकार्थतां भजतः । अत स्तत्र नार्थान्तरन्यासः । एवमेवोपमास्थलेष्वुपमानोपमेयादय. सर्वे मिलित्वैकार्थताभाजो भवन्ति । अत उपमायामप्यर्थान्तरन्यासस्य शङ्काया नावकाशः । सर्वस्वकारस्य सिद्धान्तस्तु "समर्थनसापेक्षस्य समर्थनेऽर्थान्तरन्यासः ।.समर्थना-

नपेक्षस्य समर्थने काव्यलिङ्गमर्थाज्ज्ञापकहेतुरिति । चन्द्रालोककारस्यायं सिद्धान्तः ॥

"समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् ॥
उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः" ॥ इति ॥

कुवलयानन्दकारस्यायं सिद्धान्तः । "समर्थ्यसमर्थकयोः सामान्यविशेषभावसंबन्धेऽर्थान्तरन्यासः । इतरसंबन्धे काव्यलिङ्गम्" इति । मम तु मतं, प्राचामयं प्रमादः । उक्तरीत्या ज्ञापकहेतौ नार्थान्तरन्यसनम् । अपितु कारणसंबन्धिकार्यस्य कारणेन सह प्रतिपादनम् । अतस्तत्रार्थान्तरन्यासनाम्नोऽतिव्याप्तिशङ्काया नावकाशः। सूत्रकारवामनस्यायं सिद्धान्तः । यत्र हेतोर्व्याप्तिः स्पष्टा न प्रतीयते तादृशार्थान्तरन्यासेऽर्थान्तरन्यासालंकार इति । मम तु मतं, इयं विलक्षणता नालंकारान्तरसाधिका । अन्यथा गम्योत्प्रेक्षादयोऽप्यलंकारान्तरतां भजयुः । न च वाच्यं, त्वत्सिद्धान्तस्तु लाघवे वर्तते । तथाचार्थान्तरन्यास दृष्टान्तोदाहरणयोरुभयोरप्यलंकारयोः संग्रहे सति दृष्टान्तोदाहरणयोरर्थान्तरन्यासस्यान्तर्भावं कृत्वाऽलंकारद्वयं कथं मन्यते ? इति । कुत इति चेत्साहित्यशास्त्रस्य प्रधानप्रयोजनं तु परमानन्दप्राप्तिः । सा च रमणीयताधीना । केवलमर्थान्तरन्यसनस्वरूपं तु चमत्कारस्य साधकं न भवति । चमत्कारसाधके त्वस्य विशेषौ दृष्टान्तोदाहरणयोः स्वरूपे एव । अतोऽलंकारद्वयाङ्गीकार एव युक्ततरः ॥

इत्यर्थान्तरन्यासप्रकरणम् ॥ १८ ॥

---

## ॥ अवरोहः ॥

---

अवरोहशब्दस्यार्थोऽधोगतिः । आह चिन्तामणिकोषकारः "अवरोहोऽधोगतौ" इति । प्राञ्चोऽवरोहनामकमलंकारान्तरमङ्गीचक्रुः । रत्नाकरकार इमे लक्षणोदाहरणे दर्शयति—

"तद्विपर्ययोऽवरोहः" ॥ इति ॥

तस्येति वर्द्धमानालंकारस्य विपरीतभावेऽवरोहालंकारः । अनेन पूर्वं वर्धमानालंकारमभिधाय पश्चादवरोहालंकारः कथित इति तद्विपर्यय इति लक्षणमुक्तम् । स च रूपधर्माभ्यां द्विविधः ॥

क्रमेण यथा—

आदावम्बुनिधिस्ततश्च सरसी तस्मात्सरः पल्वलं
पश्चात्पुष्करणी ततोऽतिविपुलं कुण्डं ततो वापिका ।
तस्मात्कूपमनन्तरं च चुलुकः संमीयमानः क्षणात्
दृष्टो येन स चार्णवः कथमसौ कुम्भोद्भवः कथ्यताम् ।

अत्र समुद्रस्वरूपस्य क्रमेणावरोहः ॥

आदौ कुसुम्भरागेण पतङ्गस्य ततः समा ।
खलानां जायते प्रीतिर्न विश्वस्या बुधैरसौ ॥

अत्र खलप्रीतेर्वर्णरूपधर्मस्य क्रमेणावरोहः । मम तु मतं, एतदुदाहरणाभ्यां स्पष्टीकृताऽवरोहस्याऽलेपेऽन्तर्भावः ॥

इत्यवरोहप्रकरणम् ॥ १७ ॥

---

## अशक्यम् ॥

---

अशक्यशब्दस्त्वसाध्यार्थकः । आह चिन्तामणिकोषकारः "अशक्योऽसाध्य" इति । अशक्यं प्राञ्चः पृथगलंकारमङ्गीचक्रुः । अलंकाररत्नाकरकार इमे लक्षणोदाहरणे दर्शयति—

" प्रतिबन्धकादेर्विधानासामर्थ्यमशक्यम् ॥ " इति ॥

वृत्तौ लिखति "कार्योत्पत्तौ प्रतिबन्धकसद्भावान्निमित्तान्तराद्वा कार्यकरणासामर्थ्यमशक्यालंकारः" इति ॥

यथा—

क्वचिज्झिल्लीनादः क्वचिदतुलकाकोलकलहः

क्वचित्कङ्कारावः क्वचिदपि कपीना कलकलः ।
क्वचिद्घोरः फेरुध्वनिरयमहो दैवघटना
कथंकारं तारं क्वणतु चकितः कोकिलयुवा ॥

अत्र काककलहादिप्रतिबन्धकेन कोकिलो ध्वनिकरणेऽसमर्थः ॥

यथावा—

स्त्री गौरी परमार्थतो भगवती बालश्च चूडाशशी
निष्कर्णः स च वासुकिर्नवनवोल्लाला तथा जान्हवी ॥
गोगौरेव किमुच्यतां स्वयमपि स्वामी महाभैरवः
कष्टं मद्विधमुग्धसेवकजनस्याराधने का गतिः ॥ १ ॥

अत्र स्वाम्यादीनां महाभैरवतादेः प्रतिबन्धकात्सेवकः सेवाकरणेऽसमर्थः। मम तु मतं. उदाहरणानुसारेणालंकाराः स्थापिताः। अत्र विधानासामर्थ्यांशे तु न कश्चिच्चमत्कारः। ततोऽशक्यस्य नालंकारार्हत्वम्। अपितु लोके एवान्तर्भावः । अत्र चमत्कारस्त्वशक्यतासंपादकहेतौ । अयं च प्रतिबन्धकरूपहेतुर्हेत्वलंकारविशेष एव। एतान्युदाहरणान्यप्रस्तुतप्रशंसासंकीर्णानि ॥

इत्यशक्यप्रकरणम् ॥ १८ ॥

---

## ॥ असंगतिः ॥

---

असंगतिशब्दस्यायोग्यसंगतिरित्येकोऽर्थः। स तु विषमालंकारस्य विषयः। संगतेरर्थान्नियतसंबन्धस्य त्याग इत्यपरोऽर्थः। अस्मिन्नन्तरार्थे प्राञ्चोऽसंगतिनामकमलंकारान्तरमङ्गीचक्रुः। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणोदाहरणम्—

भिन्नदेशतयाऽत्यन्तं कार्यकारणभूतयोः ॥
युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसंगतिः ॥ १ ॥

यत्र कार्यकारणभूतधर्मयोरेकस्मिन् समयेऽत्यन्तं भिन्नदेशतया

ख्यातिः प्रसिद्धिः साऽसंगतिः स्यादित्यर्थः । लक्षणेऽस्यन्तं भिन्नदेशत्व-कथनस्य प्रयोजनं प्राञ्च इदमाहुः । "पदे भुजङ्गोऽदशन्नेत्रयोर्घूर्णनम्" इत्यत्रासंगतिव्यवहारो नास्तीति । कुत इत्युक्तावत्राङ्गभेदाद्भिन्नदेशत्वेऽपि सिद्धान्ते शरीरस्यैकत्वादेकदेशतैव ॥

यथा—

जेस्सेअ वणो तस्सेअ वेयणा भणइ जणो तं अलीअं ॥
दन्तक्खअं कवोले बहूए वेअणा सवत्तीणं ॥

यस्मिन्देशे कारणं तस्मिन्देशे कार्यं लोके दृष्टम् । यथा— "यत्र धूमस्तत्राग्निः" । अतः कार्यकारणयोः संगतिः स्वाभाविकी । संगतित्यागेऽसंगतिरिति सर्वप्राचां सिद्धान्तः ॥

यथावा—

अङ्गैः सुकुमारैः सा कुसुमानां श्रियं हरति ॥
प्रहरति कुसुमबाणो जगतीतलवर्तिनो यूनः ॥

दण्ड्याचार्यो भोजमहाराजश्च कार्यकारणयोर्वैयधिकरण्ये हेत्वलंकार-प्रभेदं चित्रहेतुमङ्गीचक्रतुः । इदमुदाजह्रतुः—

सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ॥
साऽऽक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥ १ ॥

मम तु मतं, अस्यापि विचित्रेऽन्तर्भाव इति । चन्द्रालोककारोऽसंगतेः प्रकारत्रयं मन्वान इमानि लक्षणोदाहरणानि दर्शयति—

"विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः ॥" इति ॥

यथा—

विषं जलधरैः पीतं मूर्छिताः पथिकाङ्गनाः ॥ १ ॥

इदमपि काव्यप्रकाशगतकारिकाकारानुसारि ॥

अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा ॥

यथा—

---

१ यस्यैव व्रणस्तस्यैव वेदना भणति जनस्तदलीकम् । दन्तक्षतं कपोले बध्वा वेदना सपत्नीनाम् ॥ इति संस्कृतम् ॥

अपारिजातां वसुधां चिकीर्षन्द्यां तथाऽकृथाः ॥

अत्र कृष्णं प्रति भक्तस्य सोपालम्भवचने भुवि चिकीर्षिततया तत्र करणीयमपारिजातत्वं दिवि कृतम् । वसुधापक्षे, अपारिजाताम्, अपगतमरिजातं यस्यास्ताम् । द्युपक्षे, पारिजाततरुरहितामिति ॥

यथावा—

कुञ्जे मुदा जागरितौ निशायां
प्राप्तौ प्रगे स्वं भवनं त्वरातः ।
ममन्थ नीरं वृषभानुकन्या
तथा मुरारिर्वृषभं दुदोह ॥ १ ॥

चन्द्रालोकस्योदाहरणं श्लेषयुक्तम् । तत्रालंकारश्चाभासरूपः । अतो मया श्लेषं विनेदमुदाहृतम् । मम तु मतं, अस्यामसंगत्यामयथायोग्यबुद्धित्वाद्विषमालंकारः । अस्यां लक्षणकारिकायां कर्तुरन्यत्रकरणमुक्तम् । स्वतोऽप्यन्यत्रभाविनोऽन्यत्रभवनस्य मया दृष्टत्वादिदं लक्षणमव्याप्तमपि ।

यथा—

मरौ सिंहासनारूढे, यशवन्तनरेश्वरे ॥
प्रतीच्यामुदितो भानुरित्याहुः सकला जनाः ॥१॥

मरुदेशो भारतवर्षस्य पश्चिमदिग्भागे वर्तते ॥

"अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा ॥"

यथा—

मोहं जगत्रयभुवामपनेतुमेत-
दादाय रूपमखिलेश्वर! देहभाजाम् ।
निस्सीमकान्तिरसनीरधिनाऽमुनैव
मोहं प्रवर्द्धयसि मुग्धविलासिनीनाम् ॥ १॥

अत्र श्रीकृष्णं प्रति गोपीनां परिहासः । जगतां मोहनिवृत्तये भगवदवतारो भवति । तदुक्तं गीतायाम्—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ! ॥

अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥

मम तु मतं, अन्यत्कर्तुंप्रवृत्तेन तद्विरुद्धकृतेरयथायोग्यत्वाद्विषमालंकार एवेति । रसगङ्गाधरकारो वदति—"सिद्धान्ते त्वसंगत्युदाहरणे विशेषोक्तिविभावनयोः संकरः । तथापि यस्याः क्षतं तस्या न वेदनेत्यंशे विशेषोक्तिः । सपत्न्याः क्षतं विना वेदना जातेत्यंशे विभावना" इति । महापात्रजगन्नाथस्यानेन कथनेनेदं सिद्धं, असंगतिर्विशेषोक्तिविभावनाभ्यां न पृथगिति । अयं च प्रमादः । कुत इत्युक्तौ वस्तूनां मेलने वस्त्वन्तरं जायते । यथा पञ्चभिर्भूतैर्जगत् । अथ चानेकैरौषधैर्मदिरादिकम् । तथैवात्रापि वस्तूनां भिन्नदेशतारूपं भिन्नस्वरूपमाविर्भवति । तत्कापि विचित्रस्य विषयो भवति । क्वापि च विषमस्य विषयो भवति । अलंकाररत्नाकरकारस्येमे लक्षणोदाहरणे—

"तयोर्देशकालान्यथात्वमसंगतिः ॥" इति ॥

तयोरर्थात्कार्यकारणयोर्देशकालयोरन्यथात्वमसंगतिरित्यर्थः । एकदेशतया प्रसिद्धयोः कार्यकारणयोर्भिन्नदेशता १, भिन्नदेशतया प्रसिद्धयोः कार्यकारणयोरेकदेशता २, पश्चात्काले भाविनः कार्यस्य पूर्वकाले भवनम् ३, कार्यकारणयोर्युगपद्भवनम् ४, त्वरितं भाविनः कार्यस्य दूरे भावः ५, विलम्बेन भाविनः कार्यस्य शीघ्रं भावः ६, अस्मिन्लोके भाविनः कार्यस्य परलोके भावः ७, परलोके भाविनः कार्यस्यास्मिन्लोके भाव ८ इति ॥

क्रमेण यथा—

बबन्ध धम्मिल्लमधीरदृष्टेः
क्ष्मानायकश्चम्पकमालिकाभिः ।
चित्तेषु मन्युः स्थिरतां जगाम
विपक्षसारङ्गविलोचनानाम् ॥ १ ॥

अत्रान्यस्य बन्धनमन्यस्य स्थिरीभाव इति भिन्नदेशता ॥

[१]उअ जलहरमालाइं जत्थच्चिअ गज्जिउग्गमो जाओ ।

---

१ पश्य जलधरमालां यत्र खलु गर्जितोद्गमो जातः ।

तत्थच्चिअ उल्लसिअं विज्जुलिआमणिसआयोहिं ॥

मेघे गर्जनं भवति, तेन पर्वते रत्नमुत्पद्यते, इति प्रसिद्धिः। अत्र मेघे एव गर्जनविद्युद्रत्नयोर्भवनप्रतिपादनाद्भिन्नदेशतया प्रसिद्धयोरेकदेशता ॥

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन।
चरमं रमणीवल्लभ! लोचनविषयं त्वया भजता ॥ १ ॥

अत्र पश्चात्काले भाविनः कार्यस्य पूर्वं भावः ॥

दलिआरिवसासोणिअपिच्छिलधारावहंमि तुह खग्गे।
अच्छरिअसमच्छं विअ समागमो कित्तिलच्छीणं ॥

अत्र शत्रुलक्ष्म्यागमनकारणस्य कीर्तिगमनकार्यस्य चैकसमये प्रतिपादनम् ॥

एणीदृशः कुलिशदुर्विषयस्तदानी-
मीषद्विवेश हृदि यः स कटाक्षबाणः।
हन्तीव मर्मसु विदारयतीव चेत-
श्चित्रं भिनत्ति मम साम्प्रतमङ्गमङ्गम् ॥ १ ॥

अत्र त्वरितं भाविनः कार्यस्य विलम्बेन भावः ॥

सद्यः करस्पर्शमवाप्य चित्रं
रणे रणे यस्य कृपाणलेखा।
तमालनीला शरदिन्दुपाण्डु
यशस्त्रिलोक्याभरणं प्रसूते ॥ १ ॥

अत्र विलम्बेन भाविनः कार्यस्य शीघ्रं भावः ॥

उप्तानि शर्व! त्वयि तण्डुलाम्बु-
पुष्पाणि रत्नामृतपारिजातान्।
फलन्ति जन्मान्तरभाविनाके

---

१ तत्र खलूल्लसित विद्युन्मणिशलाकाभि ॥ इति संस्कृतम् ॥

२ दलितारिवसाशोणितपिच्छिलधारावहे तव खड्गे। अप्सरसा समक्षमेव समागमः कीर्तिलक्ष्म्योः ॥ इति संस्कृतम् ॥

केदारता हन्त विभो ! न पूर्वा ॥ १ ॥

अत्रेह लोके भाव्यस्य कार्यस्य परलोके भावः । ऐहिककृष्यादि-कारणस्य फलं त्वस्मिल्लोक एव भवति ॥

कृतोपभोगमन्दारमालाभिः सङ्गरेषु यः ॥
सुकृती भुक्तवान्स्वर्गममुष्मिन्नेव जन्मनि ॥ १ ॥

अत्र परलोके भवनार्हस्य कार्यस्यास्मिल्लोके भावः । रत्नाकरकारो वदति—" अत्र यद्यप्यतिशयोक्तेर्बीजभूतोऽध्यवसायो वर्तते; तथापि कार्य-कारणयोरुचितदेशकालयोः परित्यागादतिशयोक्त्यनुप्राणिताऽसंगतिरेव । अथ च भिन्नकालयोर्विषयेऽतिशयोक्त्यङ्गीकारे भिन्नदेशयोर्विषयेऽप्यतिश-योक्तेरुचिततयाऽसंगत्यलंकारस्योच्छेदो भवेत् " इति । मम तु मतं, एतेषु सर्वेषूदाहरणेषु भोजमहाराजमतानुसारेण चित्रहेत्वलंकारः । क्वाप्य-तिशयोक्तेरनुप्राणकत्वेऽपि न तस्याः प्राधान्यम् । अतिशयांशस्तु बहुष्व-लंकारेषु भवति ॥ उक्तकार्यकारणयोर्देशभेदे तु लोकातिवर्तनं नास्त्येव । कुत इति चेत्सपत्न्या रतिच्चतेन सपत्न्या वेदना भवत्येव, इत्यादि । उक्त-कार्यकारणयोः कालभेदे लोकातिवर्तनत्वेऽपि न तस्य प्राधान्यम् । एवं का-श्चनासंगतयो विचित्रहेतौ, काश्चन च विषमेऽन्तर्भूता भवन्ति ॥

॥ इत्यसंगतिप्रकरणम् ॥ १९ ॥

---

## ॥ असंभवः ॥

---

असंभवशब्दार्थः संभवस्याभावः । प्राचीना असंभवनामकमलं-कारान्तरमङ्गीकुर्वन्ति । चन्द्रालोककार इमे लक्षणोदाहरणे दर्शयति—

" असंभवोऽर्थनिष्पत्तेरसंभाव्यत्ववर्णनम् ॥ " इति ॥

यथा—

को वेद गोपशिशुकः शैलमुत्पाटयेदिति ॥

अत्र गिर्युद्धरणे निमित्तमीश्वरता । तथापि गिर्युद्धरणरूपार्थसिद्धे-रसंभवप्रतिपादनाय गिरेरुद्धर्तुर्हरेर्गोपशिशुत्वमुक्तम् । कुवलयानन्दस्येद-मुदाहरणम्--

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ॥
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेतत्ताम्यत्तिमिमकरमापास्यति मुनिः ॥

अत्र वारिधिपानरूपार्थसिद्धेरसंभवप्रतिपादनाय पानकर्तुर्मुनेर्घट-योनित्वमार्थमनुसंधेयम् ॥

यथावा--

समुद्रोल्लङ्घनं कश्चिदकरोत्प्लवगः क्षणात् ॥

अत्र समुद्रोल्लङ्घनरूपार्थसिद्धेरसंभवप्रतिपादनायोलङ्घनकर्तुर्हनूमतो वानरत्वेन वर्णनं कृतम् । अथचात्र

हनूमानब्धिमतरद्दुष्करं किं महात्मनाम् ॥

इति कथने त्वसंभवो न भवति । मम तु मतम्, साक्षादसंभवस्तु लोकसीमातिवर्तनरूपत्वादतिशयोक्तेर्विषयस्तथाप्यत्रासंभवस्याभासांशे प-र्यवसाने आभासालंकारः । आश्चर्ये पर्यवसाने तु विचित्रालंकारः ॥

इत्यसंभवप्रकरणम् ॥ २० ॥



## ॥ असमः ॥



अस्य शब्दस्यार्थः समस्याभावः । केचन प्राचीना असमनाम-कमलंकारान्तरमङ्गीकुर्वन्ति । रत्नाकरकार इमे लक्षणोदाहरणे दर्शयति--

"तद्विरहोऽसमः ॥" इति ॥

वृत्तौ लिखति " तस्योपमानस्यासंभवोऽसमालंकारः " इति ॥

टुंएटलन्तो मरिहिसि कएटककलिआइं केअइवणाइं ॥
मालइकुसुमसरिच्छं भमर भमन्तो न पाविहिसि ॥१॥

मम तु मतं. नामार्थानुसारेणास्यालंकास्य स्वरूपं तु सादृश्यानिषेधः । स तूपमाननिषेधे वा, उपमेयनिषेधे वा, उभयनिषेधे वा भवतीत्यसमनाम्नैवोपमेयादिसर्वसंग्रहः । रत्नाकरकारस्य "उपमानविरहे" इति नियमकरणं प्रमादः ॥

न तन्मुखस्य प्रतिमा चराऽचरे[2] ॥

इत्यत्राव्याप्तेः । रसगङ्गाधरकारो वदति "रत्नाकरकारस्यास्मिन्नुदाहरणे उपमानस्य सर्वथा निषधाभावादसमालंकारस्य विषयो नास्ति । " मालइकुसुमसरिच्छं भमर भमन्तो न पाविहिसि " । इति कथनेनेदं स्पष्टम् । भवतु नामास्य सदृशं भूतले, त्वं तु न प्राप्स्यसि " इति ॥ मम तु मतं, रसगङ्गाधरकारस्येदं कथनं प्रमादः । अत्र नायकस्य मानमोचनोपायादिप्रसङ्गे नायकं प्रति नायिकासख्या उक्तिरियम् । अतो नायिकायाः समतायाः सर्वथा निषेध एवात्यन्तानुकूलत्वाद्विवक्षितः । लोके वस्तूनामभावतात्पर्येण न प्राप्स्यसीति कथनस्य रीतिरपि वर्तते । रसगङ्गाधरकारस्येदं लक्षणम्—

"सर्वथैवोपमानिषेधोऽसमाख्योऽ लंकारः ॥" इति ।

इदं चोदाहरति—

भुवनत्रितयेऽपि मानवैः
परिपूर्णे विबुधैश्च दानवैः ।
न भविष्यति नास्ति नाभव-
न्नृप ! यस्ते भजते तुलापदम् ॥

मम तु मतं, तद्गुणादिविपरीतभावेऽतद्गुणाद्यलंकारन्यायेनो-

---

१ मार्गमाणो मरिष्यसि कण्टककलितानि केतकीवनानि । मालतीकुसुमसदृक्षं भ्रमर भ्राम्यन् न प्राप्स्यसि ॥ इति सस्कृतम् ॥

२ अचरं मूर्त्यादि ॥

पमाया विपरीतभावेऽप्यलंकारान्तरत्वमुचितम् । उपमा च समनाम्ना न कथितेत्यस्यासमनाम्ना कथनस्यायुक्तत्वादनुपमेत्येव कथनं युक्तम् । उपमानिषेधश्चात्त्रपालंकारो न त्वलंकारान्तरम् । अन्यथा निषेधस्यानन्तविषयत्वादनेकेऽलंकारा मन्तव्या भवेयुः ॥

इत्यसमप्रकरणम् ॥ २१ ॥

---

## ॥ अहेतुः ॥

---

अत्राहेतुशब्दार्थो यो हेतुर्न भवति सः । तात्पर्यमिदं, यत्कारणं कार्यं न करोति तत् । प्राचीना अहेतुमलंकारान्तरं मन्वते । भोजमहाराज इमे लक्षणोदाहरणे आज्ञापयति—

"वस्तुनो वा स्वभावेन शक्तेर्वा हानिहेतुना ।
अकृतात्मीयकार्यः स्यादहेतुर्व्याहतस्तु यः" ॥ इति॥

अहेतुर्द्विविधः । अकृतात्मीयकार्यो व्याहतश्चेति । तयोरपि वस्तुस्वभावेन शक्तेर्हानिहेतुना च द्वैविध्यम् ॥

तत्राकृतकार्यो वस्तुस्वभावेन यथा—

न विरचिता ललाटतटलास्यकरी भ्रुकुटि-
र्न परुषहुंकृतेन मधुरस्मितमन्तरितम् ।
न तव निशुम्भसंभ्रमवशादपि दारुणया
भगवति चेष्टया कलुषितं वदनाम्बुरुहम् ॥ १ ॥

अत्र निशुम्भसंभ्रमस्य हेतोरनुत्पादितभ्रुकुटयादिदारुणचेष्टाद्वारेण भगवतीमुखाम्बुरुहकालुष्यस्य करणे यदसामर्थ्यं तत्र तन्मुखाख्यस्य वस्तुनः स्वभावो निमित्तमिति स्वभावादनुत्पादितकार्योऽयमहेतुः ॥

स एव शक्तेर्हानिहेतुना यथा—

अनुरागवती संध्या दिवसस्तत्पुरस्सरः ।

अहो दैवगतिश्चित्रा तथापि न समागमः ॥ १ ॥

अत्रानुरागवत्त्वतत्पुरःसरत्वयोः समागमहेत्वोः सामर्थ्यविघाते दैवगतिः कारणमिति शक्तेर्हानिहेतुनाऽयमकृतस्वकार्यो नामाहेतुः ॥

वस्तुनः स्वभावेन व्याहतो यथा—

नीवीबन्धोच्छ्वसनशिथिलं यत्र यक्षाङ्गनानां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।
अर्चिस्तुङ्गानभिमुखगतान्प्राप्य रत्नप्रदीपान्-
ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥ १ ॥

अत्र रत्नप्रदीपनिर्वापणे चूर्णमुष्टेरपरित्यक्तस्वरूपस्यापि विघाते रत्नप्रदीपाख्यवस्तुस्वभावः कारणमित्ययं वस्तुस्वभावेन व्याहतो नामाहेतुभूतः ॥

स एव शक्तेर्हानिहेतुना यथा—

शंभोरुद्धतनृत्यकर्मणि करे कङ्कालमाद्यं हरेः
संघट्टस्फुटितेन्दुमण्डलगलत्पीयूषसंजीवितम् ।
तत्कालप्रणते मुरद्विषि नवे दृष्ट्वा विलासं श्रियः
कुर्वत्कोपकषायितेन मनसा मिथ्योत्प्लुतिः पातु वः ॥१॥

अत्र कोपकषायितमनसस्तस्योत्प्लुतिकरणसमर्थस्यापीश्वरकरग्रहणान्मिथ्यापदाधीयमानः प्रतीतो व्याघातः । ततोऽयं शक्तेर्हानिहेतुना व्याहतो नामाहेतुभेदः ॥ प्रयत्नोपि हेतोः प्रकार एव । फलं तु कार्यमेव । ततो भोजमहाराजो विफलप्रयत्नमहेतावन्तर्भावितवान् । मम तु मतं, अत्रापि चमत्कारः कार्यकारणसंबन्धिन्या विचित्रताया वर्तते, अतोऽस्यापि भोजमहाराजाङ्गीकृतचित्रहेतोःप्रकारत्वाद्विचित्रालंकारेऽन्तर्भावः। किं च कारणात्कार्यानुत्पत्तौ स्वभावादिहेतुप्रदर्शनमयुक्तम् । कुत इत्युक्तावनेन विचित्रतारूपचमत्कारे हानिर्भवति । अपिचेदृशहेतौ पर्यवसानकरणे तु हेत्वलंकारो भवेत् ॥

इत्यहेतुप्रकरणम् ॥ २२ ॥

---

# ॥ आदरः ॥

आदरः प्रसिद्धः । प्राचीना आदरमलंकारान्तरमङ्गीकुर्वन्ति । रत्नाकरकार इदं लक्षणमाह—

" त्यक्तस्वीकार आदरः ॥" इति ॥

लोकवैलक्षण्यार्थमुक्तादरविशेषस्याङ्गीकारः । वृत्तौ लिखति-" अधिकगुणप्राप्तौ तुच्छत्वेन त्यक्तस्य तदपगमे पुनः स्वीकारस्यागममात्रे वा पुनरुपादानमन्येन वा त्यक्तस्य ग्रहणमिति भेद आदरः" इति ॥

क्रमेण यथा—

संपत्तिका पर्णलाभे वल्लभत्यागमातनोत् ॥
पुनश्च तस्यापगमे स्वकान्तं स्वीचकार सा ॥

अत्र संपत्तिकाख्यस्त्रिया अधिकगुणपर्णपुरुषप्राप्तौ निजपतित्यागः । पर्णाख्यपुरुषापगमे च पुनर्निजपतेरङ्गीकारः ॥

अधिनोद्बकुलस्य चाधिकं यो
मधुगण्डूषसमर्पणेन भृङ्गीः ॥
स तदा गिरिजानुयायिभृङ्गी-
मधुगण्डूषरसं बताचकाङ्क्ष ॥

अत्र समर्पितस्य गण्डूषस्य भृङ्गीभ्य एव स्वीकारः ॥

श्रोणीबिम्बस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम् ।
धत्ते वक्षः कुचसचिवतामद्वितीयं तु वक्त्रं
त्वद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ १ ॥

अत्र श्रोणीबिम्बादिना त्यक्तस्य तनुत्वादेर्मध्यभागादिना स्वीकारः॥

यथावा—

यत्सशब्दमितिकामविमर्दे
नूपुरं परिहरन्ति रमण्यः ।

तद्धार कतरापि विदग्धा
गोपनाय निजकण्ठरुतानाम् ॥ १ ॥

अत्र नूपुरस्य कांचित्प्रति सुरतसूचकत्वेन दोषत्वेप्यन्यस्या विदग्धाया भणितगोपनेन गुणत्वमितिव्यत्यासानुप्राणितस्त्यक्तस्वीकारादरः। मम तु मतं, उक्तप्रथमप्रकारयोः पूर्वरूपालंकारे, तृतीयप्रकारस्य चानुज्ञाऽलंकारे संग्रहादयं विषयः पृथगलंकारो न भवितुमर्हति । अनङ्गीकारयोग्यस्याङ्गीकारस्त्वनुज्ञायाः स्वरूपमित्युक्तम् । "श्रोणीबिम्बस्त्यजति तनुताम्" इत्यत्र तनुतादेः श्रोणीबिम्बादिभिस्त्यागात्तनुतादेरङ्गीकारयोग्यता प्रतीयमाना । "यत्सशब्दम्" इत्यत्र नूपुरस्य सुरतसमयेऽनङ्गीकारयोग्यता वाच्या ॥

इत्यादरप्रकरणम् ॥ २३ ॥

---

## ॥ आपत्तिः ॥

---

आपत्तिशब्दार्थ आपतनम्। केचन प्राचीना आपत्तिमलंकारान्तरमङ्गीकुर्वन्ति। रत्नाकरकार इमे लक्षणोदाहरणे दर्शयति—

"अनिष्टापादनमापत्तिः ॥" इति ॥

यथा—

गृहमध्यनिखातन धनेन धनिनो यदि ।
भवामः किं न तेनैव धनेन धनिनो वयम् ॥ १ ॥

अत्राभुज्यमाने कृपणधने इतरेषामपि स्वत्वापादनं धनस्वामिनः कृपणस्यानिष्टम् । मम तु मतम्, अस्य काव्यार्थापत्तावन्तर्भाव इति । इष्टानिष्टविलक्षणतयाऽलंकारान्तरता न भवितुमर्हति । काव्यरीत्याऽर्थाद्रमणीयतयाऽर्थापत्तिरितिनाम्ना सर्वसंग्रहात् ॥

इत्यापत्तिप्रकरणम् ॥ २४ ॥

---

## ॥ आवृत्तिदीपकम् ॥

केचन प्राचीना दीपकालंकारस्यावृत्तिं पृथगलंकारं मन्वते। चन्द्रालोककार इदं लक्षणमाह—

"त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम् ॥" इति ॥

भोजमहाराजादयः पदावृत्तिः, अर्थावृत्तिः, उभयावृत्तिरिति दीपकस्यावृत्तेर्दीपकप्रकारत्वमङ्गीचक्रुः। तद्दीपकप्रकरणे प्रतिपादितम्। मम तु मतम्, आवृत्तिदीपकमलंकारान्तरं भवितुं नार्हति। किं तु दीपकप्रकार एव ॥

इत्यावृत्तिदीपकप्रकरणम् ॥ २५ ॥

## ॥ आशीः ॥

अप्राप्तवस्तुनः प्रार्थनाऽऽशीरित्युच्यते। आह चिन्तामणिकोशकारः। "आशीरप्राप्तप्रार्थने" इति। आशिषः कथनमाशीर्वादः। अप्राप्तप्रार्थनायाः कथनं स्वकृतमन्यकृतं वाऽऽशीर्वाद इत्युच्यते। आशिषं प्राञ्चोऽलंकारं मन्वते। दण्ड्याचार्यस्येदं लक्षणोदाहरणम्—

आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा ॥

यथा—

पातु वः परमं ज्योतिरवाङ्मनसगोचरम् ॥ १ ॥

यथावा—

सहारवक्षाः शिखिपिच्छचूडः<br>
कच्छोटिकाबद्धकटिप्रदेशः ॥<br>
गाश्चारयन्दण्डधरो वनान्ते<br>
गायन्हरिर्मे हृदये सदास्तु ॥ १ ॥

इदं तु स्वकृतमप्राप्तप्रार्थनकथनम् ॥

यथावा—

सुराः सुमेरुः सुरपादपश्च
सुरापगेन्दुस्तरणिश्च यावत् ॥
तावद्धरायां यशवन्तसिंहः
करोतु राज्यं युवराजयुक्तः ॥ १ ॥

इदं कविकृतमप्राप्तप्रार्थनकथनम्। मम तु मतं, उक्ताशीर्मात्रेऽलौकिकचमत्काराभावादाशीरलंकारतां नार्हति। अपितु देवताराजादिविषयकरत्यङ्गत्वादियमाशीः प्रेयोऽलंकारान्तर्भूता। ननु प्रेयोऽलंकारे तु भावस्य भावोऽङ्गम्। अत्र तु न देवरतिभावराजरतिभावयोरन्यभावोऽङ्गमिति प्रेयोऽलंकाराद्भिन्नोऽयमलंकार इति चेन्न। अखिलालंकारेषूपलक्षणतया तत्संबन्धिविषयोपादानात्। एवं च कस्यचिदर्थस्य कस्यचिद्भावस्य शोभाकरत्वे कस्यचिद्भावस्य कस्यचिदर्थस्य शोभाकरत्वेपि वा प्रेयोऽलंकारः। रमणीयशब्दार्थस्य काव्यत्वात्प्रियत्वम्। उक्तरमणीयशब्दार्थस्य रमणीयत्वापादकस्य चात्यन्तरमणीयत्वात्प्रियतरत्वमित्युक्तस्थलेष्वपि प्रेयोनाम्नः संगतेः। अत्राप्राप्तप्रार्थनरूपोऽर्थो देवरतिभावराजरतिभावयोरङ्गम्। नन्वेवं तु सर्वालंकाराणां प्रेयोऽलंकार एवान्तर्भाव इति चेन्न। विशेषतया चमत्कृतिजनकार्थस्यालंकारत्वानङ्गीकारस्तु काव्यवैभवन्हासीकरणमिति प्राक्प्रतिपादितम्। तथैव हठे स्वप्राप्तप्रार्थनं चिन्ताव्यभिचारिभावविशेष इति मन्यताम्। आशीर्वादपाठकानां शुभचिन्तकेति प्रसिद्धेः। आशीर्वादस्यालंकारत्वाङ्गीकारे त्वस्य प्रतिद्वन्द्विभावे शापस्याप्यलंकारता मन्तव्या। शापशब्दार्थस्त्वमुकस्यानिष्टं भूयादिति। आह चिन्तामणिकोशकारः "शाप इदमेषामनिष्टमस्त्वित्येवंरूपे" इति ॥

यथा—

एतेषां कलहंसानां भूयान्निर्वंशता तथा।
अंशुर्निवर्त्ततामस्य हिंसकस्य कलानिधेः ॥

शरदुद्दीपनदुःखिताया वियोगिन्या उक्तिरियम् ॥

॥ इत्याशीःप्रकरणम् ॥ २६ ॥

## ॥ उद्भेदः ॥

उद्भेदशब्दार्थः प्रकटीभावः । प्राचीना उद्भेदनामकमलंकारान्तरमङ्गीकुर्वन्ति । रत्नाकरकार इमे लक्षणोदाहरणे दर्शयति—

"निगूढस्य प्रतिभेद उद्भेदः ॥" इति ॥

वृत्तौ लिखति—"यत्र किंचित्प्रच्छादितत्वेन निगूढमपि कुतश्चित्प्रतिभिद्यते प्रकटीभवति स चेदुद्भेदः" इति ॥

यथा—

सूरच्छलेण पुत्तअ! कस्स तुमं अञ्जलिं पणामेसि ॥
हासकडक्खुम्मिस्सा ण होंति देवाणँ जोक्कारा ॥[1]

मम तु मतं, अत्र सूक्ष्ममथवा पिहितालंकारः । सूक्ष्मस्य पिहितस्य प्रकटनमलंकारान्तरं न भवति । अत्रापि चमत्कारस्तु सूक्ष्मस्याथवा पिहितस्यैव । यथोन्मीलितालंकारे मिलितस्यैव चमत्कारोऽङ्गीकृतः । अथ च केनापि निमित्तेन सूक्ष्मस्य पिहितस्य वा प्रकटने पर्यवसाने तु तन्निमित्तं ज्ञापकहेतुः ॥

॥ इत्युद्भेदप्रकरणम् ॥ २७ ॥

## ॥ उद्रेकः ॥

उद्रेकशब्दार्थो वृद्धिः । आह चिन्तामणिकोषकारः । "उद्रेको वृद्धौ" इति । उद्रेकं प्राञ्चः पृथगलंकारत्वेन स्वीचक्रुः । रत्नाकरकारो लिखति "उत्कटत्वादस्य नाम उद्रेकः" इति । वस्तुनोऽन्यगुणदोषापेक्षया कौचिद्गुणदोषावुत्कटत्वादन्यगुणदोषौ तुच्छीकुरुतः । रत्नाकरकारस्येदं लक्षणम्—

"सजातीयविजातीयाभ्यां तुच्छत्वमुद्रेकः ॥" इति ॥

---

१ "सूर्यच्छलेन पुत्रक! कस्मै त्वमञ्जलिं प्रणामयसि । हास्यकटाक्षोन्मिश्रा न भवन्ति देवानां जयकाराः ॥" इति संस्कृतम् ॥

वृत्तौ लिखति—“यत्र दोषगुणयोः सजातीयविजातीयाभ्यामर्थाद्दोषगुणाभ्यां तुच्छता स उद्रेकालंकारः। स चतुर्विधः। गुणेन गुणस्य तुच्छता, गुणेन दोषस्य तुच्छता, दोषेण दोषस्य तुच्छता, दोषेण च गुणस्य तुच्छता” इति॥

क्रमेण यथा—

चालुक्यभूपो विजितस्तथैव
प्रणामितो वङ्गपतेश्च मूर्धा।
अष्टौ गृहीताः सुलतानसंज्ञा
अपूर्वमेतज्जयचन्द्रकर्म॥ १॥

अत्र चालुक्यभूपसोलंखीभीमनृपजयकरणरूपगुणस्य, वङ्गपतेर्मस्तकनमनरूपगुणस्य चापेक्षया महाराजजयचन्द्रस्य युगपदष्टसुलतानसंज्ञकानां ग्रहणरूपगुणस्योद्रेकः॥

पततु वारिणि यातु दिगन्तरं
विशतु नाकमथो व्रजतु क्षितिम्।
रविरसावियतास्य गुणेषु का
सकललोकचमत्कृतिषु क्षतिः॥ १॥

अत्र वारिपतनादिदोषापेक्षया रवौ जगतः प्रकाशकतारूपगुणस्योद्रेकः। अत्राप्रस्तुतप्रशंसासंकीर्णत्वम्॥

सांमुख्यं प्रियभाषिताऽथ हसितं साकूतमालोकितं
स्निग्धं वा मयि जातु यन्न भवतो नैतत्तथाऽरुन्तुदम्।
एतत्किंतु यथा त्वदाप्तविभवोत्सेकान्धसर्वज्ञता-
मुद्राकामुकदुर्बुधोपहसितं दुःखाकरोत्युच्चकैः॥ १॥

अत्र पत्युः सांमुख्याभावादिदोषापेक्षया सपत्न्युपहासजनितदुःखदोषस्योद्रेकः॥

एतत्पातालकुक्षिंभरि चिरविलसद्दिक्करि प्रीणिताभ्रं
श्रीगर्भिश्वभ्रमभ्रंलिहलहरि हरिस्थानमस्त्येव किं च।
कल्पान्ते प्राप्य विश्वं स्थगितपरिसरिन्नाथ! पाथस्त्वदीयं

किं त्वेतत्कुम्भयोनेः करकुहरदरीपूरमाचामतोऽभूत् ॥ १ ॥

अत्र पातालकुक्षिंभरित्वादिगुणापेक्षया कुम्भयोनेः करमात्रपूरणाशक्तत्वरूपदोषस्योद्रेकः । मम तु मतं, रत्नाकरकारस्य नाम्नो विपरीतलक्षणनिर्मितिस्तु प्रमादः । उद्रेकशब्दार्थो वृद्धिः । लक्षणं च "सजातीयविजातीयाभ्यां तुच्छत्वमुद्रेकः" इति । गुणदोषयोरुद्रेके त्वधिकालंकारः । गुणदोषयोस्तुच्छत्वे चाल्पालंकारः । केनापि प्रकारेण नास्यालंकारान्तरत्वमुचितम् ॥

॥ इत्युद्रेकप्रकरणम् ॥ २८ ॥

## ॥ उन्मीलितम् ॥

प्राञ्चो मीलितस्य प्रतिद्वन्द्विभावे उन्मीलितनामकमलंकारान्तरमङ्गीकुर्वन्ति । चन्द्रालोककार उन्मीलितस्य, सामान्यालंकारप्रतिद्वन्द्विनो विशेषालंकारस्य च युगपल्लक्षणमाह—

"भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ ॥" इति॥

यथा—

हिमाद्रिं त्वद्यशोमग्नं सुराः शीतेन जानते ॥

यथावा—

लीनेयं स्वर्णमालत्यां न लक्ष्येत कथञ्चन ।
यदि स्वाभाविकस्त्वस्या गन्धो न प्रसरेदयम् ॥

अत्रैवं शङ्का न कार्या, शीतादिना हिमगिर्यादेर्विज्ञानेऽपि मीलितत्वस्य निवृत्तेः कथं पुनरुन्मीलितत्वमिति । कुत इति चेदत्रोन्मीलितत्वेनेदं विवक्षितं, मिलितयोः पृथग्विज्ञानमिति । तद्गुणरीत्या भेदाप्रतीतावप्युन्मीलितं दृश्यते ॥

यथा—

यशवन्तमहाराज! हरिस्ते यशसा सितः ।

नाभिपद्मस्य गन्धेन विज्ञातो निर्जरैरयम् ॥

एषूदाहरणेषु तु मिलितत्वे सति विज्ञानम्। निवृत्तमानाया मिलिततताया निवृत्तायाश्च मिलिततताया अप्युदाहरणे मया दृष्टे ॥

क्रमेण यथा—

लीनश्चन्दनबिन्दुस्ते गौरे सखि! मुखाम्बुजे ।
मदपाटलरागेण क्रमशः परिदृश्यते ॥ १ ॥
चम्पकस्त्रक्तवाङ्गेऽसौ स्वर्णवर्णे न दृश्यते ।
सेयं प्रदृश्यते म्लाना तव वक्षःस्थलेऽधुना ॥ १ ॥

उक्तरीत्योन्मीलितेऽपि चमत्कारस्तु मिलितस्यैव । अत्र पदार्थां एवं मिलिताः सन्ति, यदुक्तज्ञापकैर्विना न ज्ञायन्ते इति । सामान्यालंकारप्रकरणे प्रकाशकारोऽपि लिखति—

वेत्रत्वचां तुल्यरुचां वधूनां
कर्णाग्रतो गण्डतलाङ्गनानि ॥
भृङ्गाः सहेलं यदि नापतिष्य
न्कोऽवेदयिष्यन्नवचम्पकानि ॥ १ ॥

अत्र निमित्तान्तरजनितापि नानात्वप्रतीतिः प्रथमप्रतिपन्नमभेदं न व्युदासितुमुत्सहते । भोजमहाराजोपि निवृत्तभ्रान्तेर्भ्रान्त्यलंकारप्रभेदत्वमेवाज्ञापयतिस्म। न त्वलंकारान्तरत्वम्। अतो मम मतेप्युन्मीलितस्थले मिलितमेवालंकारः ॥

इत्युन्मीलितप्रकरणम् ॥ २९ ॥

---

## ॥ उपमेयोपमा ॥

---

अस्य नाम्नो व्युत्पत्तिस्तूपमेयेनोपमेति ॥

यथा—

यशवन्तमहाराजः सुरेश्वर इवाधुना ॥
यशवन्तमहाराज इव दाता सुरेश्वरः ॥

एवं परस्परमुपमानोपमेयभावे दण्ड्याचार्यः परस्परोत्कर्षकथनरूपफलं मत्वाऽस्याः परस्परोपमानामकमुपमाप्रकारत्वमाह । अन्ये केचन प्राचीना अस्याः फलं तृतीयसदृशव्यवच्छेदं मत्वाऽलंकारान्तरत्वमङ्गीचक्रुः । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"विपर्यास उपमेयोपमा तयोः ॥" इति ॥

तयोरुपमानोपमेययोः । उपमेयस्योपमानेनोपमा, उपमानस्य चोपमेयेनोपमा, उपमेयोपमेत्यर्थः। मम तु मतम्, फलभेदेनालंकारान्तरं न भवति। अत इयमुपमाप्रकार एवेति । अथ च तृतीयसदृशव्यवच्छेदे पर्यवसानकरणे आक्षेपालंकारः ॥

इत्युपमेयोपमाप्रकरणम् ॥ ३० ॥



## ॥उपसंहारः ॥



उपसंहारशब्दार्थः समाप्तिः । उक्तं चिन्तामणिकोषकारेण "उपसंहारः समाप्तौ" इति ॥ भानुदत्त उपसंहारमलंकारान्तरं मन्वानः समाप्तिमात्रे लोकविलक्षणचमत्काराभावादिदं लक्षणमाह—

"मुखे स्तुतिरुपसंहारे निन्दा, मुखे निन्दोपसंहारे स्तुतिरित्युभयमप्युपसंहारः ॥ " इति ॥

मम तु मतं, एतादृशस्थलेऽपि न भूषणार्हचमत्कारः । प्रत्युताकाण्डप्रथनदूषणम् । एतादृशस्थले चमत्कारश्चेदाश्चर्यस्यैव । तस्य च विचित्रालंकारेऽन्तर्भावो भवेत् । भानुदत्तस्य क्रमेणेमे उदाहरणे—
यथा—

जयति जलदलेखानिर्विशेषा तनुस्ते
दशनमिदमुदारस्तम्भगम्भीरकान्ति ।

उभयमपि करीन्द्र! व्यर्थमेव प्रतीमो
यदि भवति शिशूनामङ्कुशस्य प्रहारः ॥१॥
नीराणि नक्रवडवानलदूषितानि
तीराणि दुस्तरतरङ्गदुरुत्तराणि ।
श्लाघ्यं किमस्ति जलधे! यदि नैष सूनु-
राशाप्रसाधनकरो रजनीकरः स्यात् ॥ २ ॥

अत्राऽऽशाशब्दे श्लेषः। आशा दिक्, अप्राप्तवस्त्वाकाङ्क्षा च। उक्तं चिन्तामणिकोषकारेण "आशा दिशि। अप्राप्तवस्त्वाकाङ्क्षायां च॥" इति॥प्रसाधनशब्देऽपि श्लेषः। प्रसाधनमलंकाररचनादिकृतशोभा, प्रकृष्टनिष्पत्तिश्च। उक्तं चिन्तामणिकोषकारेण "प्रसाधनमलंकाररचनादिकृतशोभायां। प्रकृष्टनिष्पत्तौ" इति। मम तु मतं, अलंकारा उदाहरणानुसारेणाङ्गीकृताः। अनयोश्चोदाहरणयोर्भानुदत्तलक्षणसङ्गतौ तु न कश्चिच्चमत्कारः। चमत्कारस्तु मत्स्पष्टीकृतलेशालंकारोत्थापिताधिकालंकारानुप्राणितव्याघातालंकारस्यैव। पूर्वोदाहरणे करिदुःसाध्यताकारणभूतस्यान्यप्राण्यपेक्षया शरीरोन्नत्यादिगुणसमुदायस्य बालवशवर्तित्वरूपदोषलेशेन स्वस्याधिकतया व्याघातः कृतः। उत्तरोदाहरणे च समुद्रासेव्यताकारणभूतस्य नीरे नक्रवडवानलसंयोगादिदोषसमुदायस्य चन्द्रतनयोद्भवरूपगुणलेशेन स्वस्याधिकतया व्याघातः कृतः। यद्यप्युक्तोदाहरणयोरप्रस्तुतप्रशंसा, यदिपदबोधितः संभावनाभासोऽपि च वर्तते। असंभावितवस्तुसंभावने एव संभावनाऽलंकारः। नात्र तथेति तस्याभासत्वम्। यदिशब्देन क्षणं भासमानत्वात्। तथापि लेशाधिकालंकारवत्तयोरप्यप्राधान्याद‌त्रालंकृतिव्यवहारस्तु व्याघातस्यैव॥

इत्युपसंहारप्रकरणम् ॥ ३१ ॥



## ॥ उभयन्यासः ॥



अस्य शब्दस्यार्थो द्वयोर्न्यसनमिति। केचन प्राञ्च उभयन्यासमलंकारान्तरं मन्वते। रुद्रट इमे लक्षणोदाहरणे दर्शयति—

"सामान्यावप्यर्थौ स्फुटमुपमायाः स्वरूपतोपेतौ ॥
निर्दिश्येते यस्मिन्नुभयन्यासः स विज्ञेयः ॥" इति ॥

यथा—

सकलजगत्साधारणविभवा भुवि साधवोऽधुना विरलाः ॥
सन्ति कियन्तस्तरवः स्वादुसुगन्धिचारुफलाः ॥

अत्र पूर्वार्द्धे मनुष्यविशेषस्य, उत्तरार्द्धे वृक्षविशेषस्य च नाम्नोऽभावादनयोः सामान्यता । मम तु मतं, उभयन्यासोऽपि दृष्टान्तान्न भिन्न इति। उक्तोदाहरणे दृष्टान्त एवालंकारः। किं चोभयन्यासोऽर्थान्तरन्यासस्य पर्यायान्तरम् । अलंकारगणनारसिकैर्नामान्तरेणालंकारान्तरं दर्शितम् ॥

॥ इत्युभयन्यासप्रकरणम् ॥ ३२ ॥



## ॥ उल्लासः ॥

———

अत्र, उदित्युपसर्गस्यार्थः प्राबल्यम्। लसधात्वर्थः श्लेषः । संबन्ध इत्यर्थः । "लसश्लेषणक्रीडनयोः" इति शास्त्रात् । उल्लास इति शब्दसमुदायार्थः प्रबलसंबन्धः । अत्रान्यत्र प्रबलसंबन्धभवने उल्लासशब्दस्य रूढिं मन्वानाः प्राचीना उल्लासनामकमलंकारान्तरं मन्वते । चन्द्रालोकस्येदं लक्षणम्—

"एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि ॥" इति ॥

अस्य चत्वारः प्रकाराः। कस्यचिद्गुणेनान्यस्य गुणः । कस्यचिद्दोषेणान्यस्य दोषः। कस्यचिद्गुणेनान्यस्य दोषः । कस्यचिद्दोषेणान्यस्य गुण इति । रसगङ्गाधरकारस्येदं लक्षणम्—

"अन्यदीयगुणदोषप्रयुक्तमन्यस्य गुणदोषयोराधानमुल्लासः ॥ " इति ॥

अन्यगुणदोषमूलकमन्यस्य गुणदोषाधानमर्थात्तद्वत्ताबुद्धिरुल्लास इत्यर्थः ॥

क्रमेण यथा—

अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जान्हवी ।

अत्र साध्व्याः पवित्रतारूपगुणेन गङ्गायाः पवित्रतारूपगुणस्य प्राप्तिरन्यस्य गुणेनान्यस्य गुणः ॥

लोकानन्दन चन्दनद्रुम सखे! नास्मिन्वने स्थीयतां
दुर्वंशैः परुषैरसारहृदयैराक्रान्तमेतद्वनम् ॥
ते ह्यन्योन्यनिघर्षजातदहनज्वालावलीसंकुला
न स्वान्येव कुलानि केवलमिदं सर्वं दहेयुर्वनम् ॥ १ ॥

अत्र वेणूनां परस्परघर्षणरूपदोषेण वनस्य दाहदोषोऽन्यदोषेणान्यस्य दोषः ॥

दानार्थिनो मधुकरा यदि कर्णतालै-
र्दूरीकृताः करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥ १ ॥

अत्र भृङ्गाणां शोभाकरत्वरूपगुणेन भृङ्गगतिवारणात्करिणः शोभाहीनत्वरूपदोषोऽन्यगुणेनान्यस्य दोषः ॥

आघ्रातं परिचुम्बितं परिमुहुर्लीढं पुनश्चर्वितं
त्यक्तं वा भुवि नीरसेन मनसा तत्र व्यथां मा कृथाः ॥
हे सद्रत्न ! तवैतदेव कुशलं यद्वानरेणादरा-
दन्तःसारविलोकनव्यसनिना चूर्णीकृतं नामुना ॥ १ ॥

अत्र वानरस्य चञ्चलतादोषेणोक्तलोकक्रमेण स्फोटयित्वा सम्यक्परीक्षाया अकरणाद्रत्नस्य चूर्णनाभावरूपगुणोऽन्यस्य दोषेणान्यस्य गुणः । मम तु मतं, अत्र नामार्थानुसारेण त्वस्यालंकारस्य स्वरूपमन्यत्र संबन्धः । अयं तद्गुणस्य विषयः । अथ च लक्षणोदाहरणानुसारेण तद्गुणादियं विलक्षणता वर्तते । तद्गुणे तु—

पद्मरागायते नासामौक्तिकं तेऽधरत्विषा ॥

अत्राऽधरस्य स्वाभाविकाऽरुणतागुणेन मौक्तिके संबन्धः कृतः ॥

अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जान्हवी ॥

अत्र साध्व्याः साधुत्वगुणेन गङ्गायां पवित्रतागुणो जात इत्यन्यस्य साक्षाद्गुणस्यासंबन्धः । इत्थं गुणेन गुणस्य, दोषेण च दोषस्योत्पत्तौ हेत्वलंकारः। गुणेन दोषस्य, दोषेण च गुणस्योत्पत्तौ विचित्रालंकारः। अथ च गुणेन गुणस्य, दोषेण च दोषस्योत्पत्तौ यथायोग्यताङ्गीकारे समालंकारः। अथ च गुणेन दोषस्य, दोषेण च गुणस्योत्पत्तावयथायोग्यताङ्गीकारे विषमालंकारः। कस्मिन्नप्यंशेऽयमलंकारान्तरं भवितुं नार्हति ॥

इत्युल्लासप्रकरणम् ॥ ३३ ॥

---

## ॥ कल्पितोपमा ॥

---

कल्पितेन सहोपमा कल्पितोपमा । कल्पितोपमायाः प्राचीना अलंकारान्तरत्वं मन्वते । रत्नाकरकार इमे लक्षणोदाहरणे दर्शयति—

"कल्पितेन कल्पितोपमा ॥" इति ॥

वृत्तौ लिखति—" अस्य फलं तु सदृशान्तराभावः । अत उपमायामन्तर्भावो नास्ति " इति ॥

यथा—

अनिवारिततापसंपदं
फलहीनां सुमनोभिरुज्झिताम् ॥
खलतां खलतामिवासतीं
प्रतिपद्येत कथं बुधो जनः ॥ १ ॥

खलता, आकाशवल्ली । तस्या अभावात्कल्पितत्वम् । अत इयं कल्पितोपमा। दण्ड्याचार्योऽस्या उपमाप्रकारत्वमाह। मम मतेऽपि नायं पृथगलंकारः। अपि तूपमाप्रकार एव। सदृशान्तरस्याभावेऽलंकारताङ्गीकारे आक्षेपो भवेत् ॥

॥ इतिकल्पितोपमाप्रकरणम् ॥ ३४ ॥



## ॥ कारकदीपकम् ॥



काव्यप्रकाशगतकारिकाकारादयस्तु क्रियादीपकं कारकदीपकं चेति दीपकद्वयं मन्वते । चन्द्रालोककारादयः कारकदीपकं पृथगलंकारं मन्वते। मम तु मतं, इदं दीपकप्रकार एवेति दीपकप्रकरणे मया सविस्तरं लिखितम् ॥

इति कारकदीपकम् ॥ ३५ ॥

## कारणमाला ।

केचन प्राचीनाः कारणमालां पृथगलंकारं मन्वते । चन्द्रालोककार इमे लक्षणोदाहरणे दर्शयति—

"गुम्फः कारणमाला स्याद्यथाप्राक्प्रान्तकारणैः ॥" इति ॥

उत्तरोत्तरकारणभूतैः पूर्वपूर्ववस्तुभिः, पूर्वपूर्वकारणभूतैरुत्तरोत्तरवस्तुभिर्वा कृतं गुम्फनं कारणमालेत्यर्थः ॥

क्रमेण यथा—

नयेन श्रीः श्रिया त्यागस्त्यागेन विपुलं यशः ॥
भवन्ति नरकाः पापात्पापं दारिद्र्यसंभवम् ॥ १ ॥
दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत् ।

मम तु मतं, अत्र कारणांशे हेतुः। गुम्फनांशे च शृङ्खलाऽलंकारः। नात्र पृथगलंकारयोग्यता ॥

॥ इति कारणमाला ॥ ३६ ॥



# ॥ काव्यलिङ्गम् ॥

काव्यलिङ्गमिति ज्ञापकहेतोर्नाम । भगवद्वेदव्यासादयः कारक-हेतुः, ज्ञापकहेतुरिति हेत्वलंकारस्यैव प्रकारद्वयं मन्वते । चन्द्रालोककारादयश्चेमं पृथगलंकारं मन्वते । मम तु मतं, काव्यलिङ्गं तु हेतोरेव प्रकार इति । तत्तु हेत्वलंकारस्य प्रकरणे सविस्तरं लिखितम् ॥

॥ इति काव्यलिङ्गम् ॥ ३७ ॥

# ॥ क्रियातिपत्तिः ॥

अतिपत्तिशब्दार्थ उल्लङ्घनम् । आह चिन्तामणिकोषकारः "अति-पत्तिरतिपाते । अतिपातोऽतिक्रमे" इति ॥ क्रियातिपत्तिरिति शब्दसमुदायार्थः क्रियाया उल्लङ्घनम् । अत्राघाबाधे कस्यचिदपि कृत्यविषयभूत-क्रिया विवक्षिता । प्राचीनाः क्रियातिपत्तिनामकमलंकारान्तरं मन्वते । रत्नाकरकार इमे लक्षणोदाहरणे दर्शयति—

"यद्यर्थोक्तावसंभाव्यमानस्य कल्पनं
क्रियातिपत्तिः ॥" इति ॥

चेत्स्यादित्यादयः शब्दा यद्यर्थस्य वाचकाः ॥

यथा—

विच्छित्तिनर्मपरिकर्मविधौ त्वदीये
लोलेक्षणे ! तव वदामि गिरा कियत्या ॥
वैदग्ध्यतः सखि ! घटेत विवेचकोऽङ्ग ।
पुष्पायुधो यदि सहस्रविलोचनः स्यात् ॥

यथावा—

पुष्पं प्रवालोपहितं यदि स्या-
न्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्या
स्ताम्रोष्ठपर्यस्तरुचः स्मितस्य ॥

अत्र क्रियोल्लङ्घनं तु ब्रह्मणः कृत्यविषयत्वम् । कतिपयप्राचीना अमुं विषयमतिशयोक्तेः प्रकारमाहुः । कतिचन च संभावनालंकारम् । मम तु मतं, अत्र संभावनालंकार इति प्राक्प्रतिपादितम् ॥

इति क्रियातिपत्तिः ॥ ३८ ॥

---

## ॥ गूढम् ॥

---

गूढमित्यस्यार्थो गुप्तमिति । केचन प्राचीना गूढनामकमलंकारान्तरं मन्वते । रत्नाकरकार इमे लक्षणोदाहरणे दर्शयति—

"गूढमाकाङ्क्षोपनिबन्धो गूढम् ॥" इति ॥

गूढतयाऽऽकाङ्क्षितस्य वस्तुनो निबन्धनेऽर्थाद्वर्णने गूढालंकार इत्यर्थः ॥

यथा—

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥

नात्र पर्यायोक्तिः । पर्यायोक्तौ गूढताया अभावात् । नापि गुणीभूतव्यङ्ग्यम् । गूढार्थे व्यञ्जनाया अभावात् । मम तु मतं, ग्रामतरुणो नववञ्जुलमञ्जरीसनाथकरेण स्वस्य संकेतस्थानगमनं सूक्ष्मतयाऽसूचयदित्ययं सूक्ष्मालंकार एवेति ॥

॥ इति गूढप्रकरणम् ॥ ३९ ॥

## ॥ गूढोक्तिः ॥

गूढशब्दार्थो गुप्त इति । गूढस्योक्तिर्गूढोक्तिः । केचन प्राचीना इमामलंकारान्तरं मन्वते । चन्द्रालोककार इमे लक्षणोदाहरणे दर्शयति--

"गूढोक्तिरन्योद्देश्यं चेद्यदन्यं प्रति कथ्यते ॥" इति ॥

वृत्तौ लिखति--"यं प्रति किञ्चिद्वक्तव्यं तत्तटस्थैर्माऽज्ञायीति तदेव तदन्यं कञ्चित्प्रति श्लेषेणोच्यते चत्सा गूढोक्तिः" इति ॥

यथा--

वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः ॥

इदं परकलत्रं भुञ्जानं कामुकं प्रति कथनीयम् । तच्च समीपे परक्षेत्रे चरन्तं वृषं प्रत्युक्तम् । अत्रार्थश्लेषः । मम तु मतं,

संध्यायां सखि! यास्यामि कर्त्तुं शंकरपूजनम् ॥

इत्थमपि सूक्ष्मतया ज्ञापनसत्त्वादियं पृथगलंकारतां नार्हति ॥ अपि तु सूक्ष्म एवान्तर्भवति ॥

इति गूढोक्तिः ॥ ४० ॥

## ॥ छेकोक्तिः ॥

छेकश्चतुरः, तस्योक्तिश्छेकोक्तिः । चतुरोक्तिरिति यावत् । केचन प्राचीनाश्छेकोक्तिमलंकारान्तरं मन्वते । चन्द्रालोककार इमे लक्षणोदाहरणे दर्शयति--

"छेकोक्तिर्यदि लोकोक्तेः स्यादर्थान्तरगर्भता ॥" इति ॥

यथा--

भुजङ्ग एव जानाति भुजङ्गचरणं सखे!॥

केनचित्कस्यचिद्वृत्तान्तस्य दृष्टस्य समीपस्थमन्यं निर्दिश्यायमेव तस्य वृत्तान्तं जानातीत्युक्तवतः "अहेः पादानहिरेव जानाति" इति लोकवादानुकारः। अत्र स चायं च लोकविदिते धनार्जनादिव्यापारे सहचारिणाविति विदितविषयतया लोकोक्त्यनुवादस्य प्रयोजने स्थिते रहस्येऽप्यनङ्गव्यापारे तस्यायं सहचर इति मर्मोद्घाटनमपि तेन गर्भीकृतम्।

मम तु मतं, छेकोक्तिरपि सूक्ष्मालंकारस्य विषयः। लोकोक्तेराश्रयणात्पृथगलंकारो न भवति॥

इति छेकोक्तिः ॥ ४१ ॥

## ॥ तत्सदृशादरः ॥

तत्सदृशादर इति शब्दसमुदायार्थस्तेन सदृशस्यादर इति। प्राचीनास्तत्सदृशादरनामकमलंकारान्तरं मन्वते। अलंकारोदाहरणकार इमे लक्षणोदाहरणे दर्शयति—

"अभीष्टसिद्ध्यै तत्सदृशादरश्च ॥" इति॥

यथा—

मुखाय श्रद्धालुः सरसिरुहमैक्षिष्ट विकचं
कटाक्षाभ्यां रज्यन्नचकमत पङ्क्तीर्मधुलिहाम्।
वियोगे गौराङ्ग्या भुजलतिकयोः किं च रसिको
नृपस्तोयाधारेष्वतिनवमृणालीरभजत ॥ १ ॥

मम तु मतं, अयं प्रत्यनीकालंकार एव। कुत इति चेदत्र सादृश्यरूपपक्षे एव प्रीतिकरणम्॥

॥ इतितत्सदृशादरः ॥ ४२ ॥

## ॥ तन्त्रम् ॥

उभयार्थस्य प्रयोजकमर्थान्निमित्तं तन्त्रमाहुः। आह चिन्तामणिकोशकारः " तन्त्र उभयार्थप्रयोजके " इति। केचन प्राचीनास्तन्त्रमलंकारान्तरं मन्वते। रत्नाकरकार इमे लक्षणोदाहरणे दर्शयति—

"नानाफलप्रयुक्तः प्रयत्नस्तन्त्रम् ॥" इति ॥

वृत्तौ लिखति— " अनेकस्य फलस्य तुल्यतया साध्यस्य यत्र प्रयत्नप्रयोजकत्वं तत्तन्त्रम्। प्रयत्नश्चात्र व्यापारात्मकस्तेन विचित्रालंकारभेदत्वेन नेदं गणितम्। तस्य हीच्छाहेतुकस्य प्रयत्नस्य वैफल्यादिकं रूपम्। इहत्विच्छाऽभावेऽपि प्रयत्नात्तुल्यकार्यद्वयोत्पत्तिः" इति ॥

यथा—

यस्यासमं समरकर्म दिदृक्षमाणै—
र्दोषद्वयं फणिभिरापि चमूरजस्तः।
यत्कर्णतोऽक्षणतया न कबन्धनृत्यं
दृष्टं श्रुतो न च महाभटसिंहनादः ॥

अत्र रजसा जातेन नेत्रनिमीलनव्यापारेण दर्शनाभावश्रवणाभावयोर्द्वयोर्युगपदुत्पत्तिः। मम मतेपि नात्र विचित्रता। फलसमुच्चयेऽपि रजसा नेत्रनिमीलनेन दर्शनाभावो भवति। उक्तसर्पाणां श्रवणाभावस्यापि जातत्वादधिकताचमत्कारस्योद्धरकंधरतयाऽस्याधिकालंकारेऽन्तर्भावः॥

॥ इतितन्त्रम् ॥ ४३ ॥

---

## ॥ तात्पर्यम् ॥

तात्पर्यशब्दार्थः स्पष्टः। प्राञ्चस्तात्पर्यनामकमलंकारान्तरं मन्वते।

अलंकारोदाहरणकार इमे लक्षणोदाहरणे दर्शयति—

"अनेकनिर्देशे एकत्र तात्पर्येच्छा तात्पर्यम् ॥" इति ॥

अनेकनिर्देशो द्विधा भवति । संदेहेन विकल्पेन च ॥

क्रमेण यथा—

मात्सर्यमुत्सार्य विचार्य कार्य-
मार्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणा-
मुत स्मरस्मेरविलोचनानाम् ॥ १ ॥

अत्र भूधरनितम्बसेवा कर्तव्या, उत स्त्रीनितम्बसेवा कर्तव्येत्यनेकनिर्देशे संदेहः प्रतीयते । परं त्वियं विरक्तोक्तिश्चेद्भूधरनितम्बसेवायामेव तात्पर्यम् । कामुकोक्तिश्चेत्स्त्रीनितम्बसेवायामेव तात्पर्यम् ॥

आपदां दर्शितः पन्था इन्द्रियाणामसंयमः ।
तज्जयः संपदां मार्गो येनेष्टं तेन गम्यताम् ॥

अत्रेन्द्रियदमनादमनरूपाणामनेकेषां विकल्पेन कथनम् । परं त्विन्द्रियदमनस्य संपदां मार्गत्वाद्वक्तुस्तात्पर्यं त्विन्द्रियदमने एव । रत्नाकरकारः प्रथमप्रकारे संदेहाभासं द्वितीयप्रकारे च विकल्पाभासमङ्गीचकार । मम तु मतं, अनयोराभासत्वादाभास एवान्तर्भावः ॥

इतितात्पर्यम् ॥ ४४ ॥

---

## ॥ तिरस्कारः ॥

---

तिरस्कारोऽनादरः । केचन प्राचीना तिरस्कारमलंकारान्तरमङ्गीचक्रुः । अनुज्ञालंकारविपरीतभावे तिरस्कारनामकमलंकारान्तरं मन्वानो रसगङ्गाधरकार इदं लक्षणमाह—

"दोषविशेषानुबन्धाद्गुणत्वेन प्रसिद्धस्यापि द्वेषस्तिरस्कारः ॥" इति ॥

यथा—

श्रियो मे मा सन्तु क्षणमपि च माद्यद्गजघटा
मदभ्राम्यद्भृङ्गावलिमधुरसंगीतसुभगा ॥
निमग्नानामासु द्रविणरसपर्याकुलहृदां
सपर्यासौकर्यं हरिचरणयोरस्तमयते ॥ १ ॥

एवं लक्षणोदाहरणे दर्शयित्वा रसगङ्गाधरकारो वदति "अनुज्ञाऽलंकारमुक्त्वा तिरस्कारालंकारानभिधानं कुवलयानन्दकारस्य प्रमादः। मम तु मतं, अत्राङ्गीकारयोग्यस्यानङ्गीकारः। तथाचाऽत्रास्मत्स्पष्टीकृतोऽवज्ञालंकार एव। तिरस्कारोऽवज्ञालंकारात्पृथग्भवितुं नार्हति। चन्द्रालोकपथगामिनः कुवलयानन्दकारस्याप्रमादे प्रमादकथनं रसगङ्गाधरकारस्य प्रमादः। तिरस्कारस्त्ववज्ञायाः पर्यायः। कुवलयानन्दकारस्याऽवज्ञालंकारानुक्तावपि न प्रमादः। कुत इत्युक्तावलंकारस्य विपरीतभावेऽलंकारान्तरं भवत्येव। प्राचीनमतानुसारेण कुवलयानन्दकारेणापीदं दिग्दर्शनं कृतम् ॥

॥ इति तिरस्कारः ॥ ४५ ॥



## ॥ तुल्यम् ॥



तुल्यशब्दार्थः समानमिति। तुल्यं प्राचीनाः पृथगलंकारमङ्गीचक्रुः। रत्नाकरकार इमे लक्षणोदाहरणे दर्शयति—

"निवृत्तावन्योदयस्तुल्यम् ॥" इति ॥

वृत्तौ लिखति "एकदोषस्य निवृत्तौ सत्यामपि दोषान्तरस्योदयः, अथवैकगुणस्य निवृत्तौ सत्यां गुणान्तरस्योदयस्तुल्यमिति। अत्र तुल्यता तु पुनस्तथाभावः ॥

यथा—

देव! त्वद्गुणवर्णनेन सुखयत्याखण्डलं नारद-
स्तत्र श्रोत्रकटु क्वणन्ति मधुपास्तत्पारिजातस्रजि।
वार्यन्ते यदि चाप्सरोभिरभितस्ते चामराडम्बरै-
रुद्वेल्लद्भुजवल्लिकङ्कणकणत्कारस्तदा दुःश्रवः ॥ १ ॥

अत्र गुणश्रवणे प्रतिबन्धकत्वाद्भ्रमरध्वनिर्दोषः। तन्निवृत्त्यर्थं चामराडम्बरः। तेन जातश्चामरग्राहिणीनां कङ्कणरवोऽपि गुणश्रवणे प्रतिबन्धकत्वाद्दोषः। अतोऽत्र दोषान्तरस्योदयः। एकगुणस्य निवृत्तौ सत्यां गुणान्तरोदयस्येदमप्युदाहरणं भवितुमर्हति ॥

दीपे निर्वापितेऽप्यासीत्काञ्चीरत्नैर्महन्महः ॥

अत्र दीपस्य प्रकाशरूपगुणनिवृत्तौ रत्नप्रकाशरूपगुणान्तरस्योदयः। मम तु मतं, अयं पूर्वरूपालंकारेऽन्तर्भूतः ॥

इतितुल्यम् ॥ ४६ ॥



## ॥ निश्चयः ॥

---

निश्चयो निर्णयः। केचन प्राचीना निश्चयनामकमलंकारान्तरमङ्गीचक्रुः। अलंकाररत्नाकरकार इदं लक्षणोदाहरणं दर्शयति—

"विहितस्याशङ्कितस्य वा विशेषावगमाय
निषेधो निश्चयः ॥" इति ॥

वृत्तौ लिखति- "क्रियाया नञर्थस्य वा विहितस्याशङ्कितस्य वार्थस्य केनचिन्निमित्तेनायुक्ततया प्रतिभातस्य निषेधे क्रियमाणे कस्यचिद्विशेषस्य प्रतिपादनायादौ भ्रमवशादन्यथाऽवभातस्य पश्चादन्यथा निश्चयनं निश्चयः ॥" इति ॥

क्रमेण यथा—

देया शिलापट्टकवाटमुद्रा

श्रीखण्डशैलस्य दरीगृहेषु ॥
वियोगिनीकण्टक एष वायुः
कारागृहस्यास्तु चिरादभिज्ञः ॥ १ ॥
बाणेन हत्वा मृगमस्य यात्रा
निवार्यतां दक्षिणमारुतस्य ॥
इत्यर्थनीयः शबराधिराजः
श्रीखण्डपृथ्वीधरकन्दरस्थः ॥ २ ॥
यद्वा मृषा तिष्ठतु दैन्यमेते
नेच्छन्ति वैरं मरुतः किराताः ।
केलिप्रसङ्गं शबराङ्गनानां
स हि स्मरग्लानिमपाकरोति ॥ ३ ॥

अत्र वियोगिनीनां मलयानिलेन खेदितानां कातरतया कवाटमुद्रणादेः कार्यतया प्रतिभातस्यापि किरातानां तदनुकूलतयाऽयुक्तत्वेन निषेधो मलयानिलस्याशक्यानेराकरणीयत्वं तासां च यत्किञ्चन कर्तुमुद्यतानामशरणतया कादिशीकत्वमित्यादिविशेषमवगमयति ॥

सतां कदर्थनां व्यर्थं सखे दुर्जन! माकृथाः ।
अथवा नोपदेशेन माधुर्यं भजते विषम् ॥

अत्र "सतां कदर्थनां माकृथाः" इति नञर्थस्य विहितस्याप्यथवेत्यनेन खलानां तदनुकूलतयाऽयुक्तत्वेन निषेध उक्तविधानरूपोपदेशस्याशक्यत्वविशेषार्थः । मदधिगतरत्नाकरपुस्तकस्याशुद्धतयाऽऽशङ्कितार्थनिषेधोदाहरणस्य खण्डितत्वेन च तदुदाहरणमनधिगताभिप्रायम् । तथापि रत्नाकरतृतीयप्रकारस्य सर्वस्वाभिमतसंदेहतृतीयप्रकारनिश्चयान्तसंदेहेऽन्तर्भावो भवेत् । सर्वस्वस्येदमुदाहरणम्—

इन्दुः किं क्व कलङ्कः सरसिजमेतत्किमम्बु कुत्र गतम् ॥
ललितसविलासवचनैर्मुखमिति हरिणाक्षि! निश्चितं परतः ॥ १ ॥

रत्नाकरकारः कथयति "न चायमाक्षेपः । तस्य निषेधाभासरूपत्वात् । इह तु निषेधस्य पार्यवसानिकत्वात् । अलंकारान्तरत्वं वाच्यवि-

चन्द्रार्कचक्रघटनप्रधुरथाधिरूढं
तं चण्डताण्डवदृशं गिरिशं प्रपद्ये॥
यद्बाहुघातकलया परिताड्यमानो
वज्राहतिं सुखममन्यत शैलवर्गः॥

अत्र पिनाकिनो बाहुघातकलापेक्षया वज्राहतेस्तुच्छतायाः प्रतीतिः। मम तु मतं, अयं व्यतिरेकालंकारः। हंसगतेर्नायिकागतेश्चोपमानोपमेयभावः प्रसिद्धः। तस्माद्धंसदर्शनेनास्याः सादृश्ये न्यूनाधिकभावः प्रतीयते। अपिच चण्डघाते वज्रपातसमताया व्यवहारः प्रसिद्धः। तथाच हरस्य प्रलयनृत्यसमये गिरेर्बाहुघातवज्रपातयोर्न्यूनाधिकभावप्रतीतिर्जाता। अथच रत्नाकरकार आह "अस्य चोपमानाधिकगुणोपमेयोपनिबद्धरूपाद्व्यतिरेकाद्वस्त्वन्तरावगमनसमये वैलक्षण्यप्रतीतिरूपस्य सुव्यक्तो भेदः" इति॥ मम तु मतं, इदं किंचिद्वैलक्षण्यमलंकारान्तरतासाधकं न भवतीति। अपि च रत्नाकरकारो वदति "उपमेयादुमानस्य न्यूनत्वं व्यतिरेकस्य स्वरूपम्। अत्र तु वस्त्वन्तरसंबन्धसमये तुच्छत्वमहत्त्वयोर्विकल्पतायाः प्रतीतेरङ्गीकारः। विकल्पकथनादुपमानादुपमेयन्यूनत्वस्यापि ग्रहणम्। मम तु मतं, इदं समाधानमपि न समीचीनम्। उपमेयस्य न्यूनतायामपि "व्यतिरेकसंगतौ बाधकाभावात्। अथ च रत्नाकरकारो वदति "व्यतिरेकस्त्वौपम्यजीवितः। अयमौपम्यं विनापि भवति" इति॥

यथा--

[1]अण्णमहिलापसङ्गं दे देव! करेसु अम्ह दइवस्स।
पुरिसा एक्कन्तरसा ण हु दोसगुणे विआणन्ति॥ १॥

मम तु मतं, अत्रापि समताया व्यतिरेकः। अयमेव महाशयः सजातीयव्यतिरेकमपि मेने॥

॥ इतिपरभागप्रकरणम्॥ ४८॥

---

१ अन्यमहिलाप्रसङ्गं हे देव! कुर्वस्माकं दयितस्य। पुरुषा एकान्तरसा न खलु दोषगुणौ विजानन्ति॥ इति संस्कृतम्॥

# ॥ परिकराङ्कुरः ॥

केचन प्राचीनाः परिकराङ्कुरनामकमलंकारान्तरं मन्वते। चन्द्रालोककार इमे लक्षणोदाहरणे दर्शयति—

"साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः ॥" इति॥

अस्य नाम्नः सार्थकतामेवं मन्यन्ते । तदभिमतसाभिप्रायविशेषणवति परिकरालंकारे तु परिकरता विकाशरूपा । विशेषणतयोक्तेः परिकरतायाः स्पष्टं भासमानत्वात् । अत्र तु विशेष्यमात्रे परिकरतायाः स्फूर्तिः । अतोऽत्र परिकरताया अस्फुटत्वादङ्कुररूपत्वम् ॥

यथा—

फणीन्द्रस्ते गुणान्वक्तुं लिखितुं हैहयाधिपः ।
द्रष्टुमाखण्डलः शक्तः क्वाहमेष क्व ते गुणाः ॥ १ ॥

कुवलयानन्दकारश्चन्द्रालोकमतानुसारेण परिकराङ्कुरमेवं योजयामास । फणीन्द्र इत्यादिविशेष्यपदानि सहस्रवदनाद्यभिप्रायगर्भाणि । मम तु मतं, अत्र शेष इन्द्रश्च देवौ । हैहयाधीशो देवांशः । अतो राज्ञो यशसो वर्णनादावेते शक्ताः । तत्र तेषां सहस्रवदनादिकं परिकरः । ईदृशविशेष्याणां परिग्रहेऽभिप्रायस्तु सहस्रमुखेषु सहस्रबाहुषु सहस्रनेत्रेषु च वर्तते ॥

यथावा—

चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥

चतुर्भुज इति विशेष्यवाचकशब्दो विष्णौ रूढः। अवयवशक्त्या च चतुर्भुजविशिष्टबोधकोपि । तादृशविशेष्याभिधानेऽभिप्रायस्तु युगपद्धर्मार्थकाममोक्षरूपपदार्थचतुष्टयप्रदानयोग्यतायाम् । अत्रापि विष्णोः परमेश्वरत्वात्पदार्थचतुष्टयस्य युगपद्दानसामर्थ्ये चतुर्भुजता परिकरः ॥

यथावा—

ऋजुमप्युदितं वामा प्रियवाक्यं न मन्यते ॥

वामाशब्दः स्त्रियां रूढः। ईदृशविशेष्याभिधानेऽभिप्रायस्तु वर्णनी-

याऽस्त्रिया वक्रतायाम् । पुरुषापेक्षया स्त्रीषु कामक्रोधादीनां स्वत आधिक्यं कामशास्त्रेऽभिहितम् । अतः प्रियविनयास्वीकारे स्त्रीत्वं समर्थम् । तत्र वक्रता परिकरः । मम तु मतं, वामाशब्दः स्वतो न मानबोधकः । उत्तमायां नायिकायामपि वामाशब्दस्य प्रयोगात् । अतोऽधमाया नायिकायाः परिकरः । एवमन्यत्रापि बोध्यम् । परिकरो विशेष्ये भवतु विशेषणे वा; इदं किञ्चिद्वैलक्षण्यमलंकारान्तरतासाधकं न भवति । उदाहरणान्तरमात्रम् । अतोऽत्र परिकर एव ॥

इति परिकराङ्कुरप्रकरणम् ॥ ४९ ॥

---

## ॥ परिवृत्तिः ॥

---

परिवृत्तिशब्दार्थः परिवर्तनम् । बहवः प्राचीना विनिमयरूपपरिवृत्तिमलंकारान्तरं मन्वते । विनिमयशब्दस्यार्थः प्रतिदानम् । किञ्चिदादाय कस्यचित्प्रतिदानमित्यर्थः । उक्तं चिन्तामणिकोषकारेण "विनिमयः प्रतिदाने" इति ॥

यथा—

भूपालेभ्यो भुजबलाद्यशवन्तमहीपते ! ।
करमादाय किं नादाद्भवांस्तेभ्यः पुनः करम् ॥ १ ॥

अत्र राजराजेश्वरोऽन्यभूपालेभ्यः करमिति राजग्राह्यभागमग्रहीत् । पुनश्च तेभ्यः स्वयं करमदात् । तैर्विश्वासवचोदार्ढ्यार्थं हस्तमेलनमकरोदित्यर्थः । इयं लोकरीतिः ॥

अत्र निन्दाभासस्य संकीर्णता । केचन प्राचीनाः परिवृत्तेः समासमेति प्रकारावाहुः । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः ॥" इति ॥

असमस्य भेदद्वयम् । अधिकेन न्यूनस्य, न्यूनेनाधिकस्येति ॥

क्रमेण यथा—

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्त्वाऽऽश्रयति भृशमामोदमसमम् ।
लतास्त्वध्वन्यानामहह दृशमादाय सहसा
ददात्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥

अत्र पूर्वार्द्धे समेन समस्य, उत्तरार्द्धेऽधिकेन न्यूनस्य विनिमयः ॥

नानाविधप्रहरणैर्नृप! संप्रहारे
स्वीकृत्य दारुणनिनादवतः प्रहारान् ।
दृप्तारिवीरविसरेण वसुंधरेयं
निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥ १ ॥

अत्र न्यूनेनाधिकस्य विनिमयः । मम तु मतं, इदमुदाहरणान्तरम् । न तु प्रकारान्तरम् । लक्षणे समासमेति कथनं तु प्रमादः । अत्रापि चमत्कारस्तु विनिमयस्यैव । परस्परं दानादानं वा भवतु, उपकारापकारादिकं वा । एतावद्वैलक्षण्येनालंकारान्तरं न भवति ॥ अतोऽस्यान्योन्य एवान्तर्भावः । रुद्रटस्येदं लक्षणम्—

"युगपद्दानादाने अन्योन्यं वस्तुनोः क्रियेते यत् ।
क्वचिदुपचर्येते वा प्रसिद्धितः सेति परिवृत्तिः ॥" इति ॥

मम तु मतं, युगपद्दानादानाभ्यामप्यन्योन्याद्विलक्षणता न भवति। कुत इति चेद्युगपत्परस्परदानादाने वा विलम्बेन परस्परदानादाने वा न किञ्चिद्वैलक्षण्यम् । उपचरितस्येदमुदाहरणम्—

तस्य हि प्रवयसो जटायुषः
स्वर्गिणः किमिव शोच्यते बुधैः ।
येन जर्जरकलेवरव्यया-
त्क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥

नात्र वास्तवपरिवर्तनम् । किं तूपचरितम् । आरोपितमित्यर्थः । अलंकाररत्नाकरकारस्यायमाशयः—एकस्यैव वस्तुनोऽन्योन्यनिबन्धनेऽन्योन्यालंकारः। वस्त्वन्तरस्यान्योन्यनिबन्धने तु परिवृत्तिरिति। तस्यान्योन्यस्येदमुदाहरणम्—

सेनारेणुभरेण वा हयभुवा घोरान्धकारेण वा
दृष्टः शात्रवगात्रवञ्चनक्षणः कैर्लोचनैस्त्वं तदा ।
धन्यं तद्भुवनत्रयस्य परमं ज्योतिर्मयं लोचनं
येनालम्भि तवान्तरं त्वमपि वा यस्यान्तरं लब्धवान् ॥

अत्रान्तरलाभरूपैकस्यैव वस्तुनः परस्परनिबन्धनत्वम्। परिवृत्तेरिदमुदाहरणम्—

पद्मोद्भवो विहितपद्मवनावसानं
द्वैराज्यदुःस्थितकरं रजनीभुजङ्गम् ।
आधाय वक्त्रघटनेन कुरङ्गदृष्टेः
शङ्कां ममार्ज निजगोत्रपराभवोत्थाम् ॥

अत्र कुरङ्गदृष्टिवदननिर्माणेन पद्मावसानकारिणश्चन्द्रमसः पद्मोद्भवेन प्रत्यपकृतम् । नात्र परस्परमेकधर्मकरणम् । उक्तरीत्या परस्परं वस्त्वन्तरकरणम्। रत्नाकरकारलक्षणं भोजमहाराजोक्तपरिवृत्त्युदाहरणेऽपि संगच्छते ।

प्रश्च्योतन्मदसुरभीणि निम्नगायाः
क्रीडन्तो गजपतयः पयांसि कृत्वा ।
किञ्जल्कव्यवहितताम्रदानलेखै-
रुत्तेरुः सरसिजगन्धिभिः कपोलैः ॥

अत्र परस्परसुरभीकरणम् । तत्र गजपतयो निम्नगापयांसि दानेन सुरभीकुर्वन्ति । निम्नगापयांसि च गजपतिकपोलान् किञ्जल्कैः सुरभीकुर्वन्ति । इदं वस्त्वन्तरकरणम् । मम तु मतं, एकवस्तुनोऽन्योन्यकरणे वस्त्वन्तरस्यान्योन्यकरणे च न चमत्कृतिवैलक्षण्यम् । अत उदाहरणान्तरमात्रम् । अन्यथा गुणे दोषकरणे, दोषे गुणकरणेपि च परिवृत्त्यलंकारो भवेत् । न च तथा । अलंकाररत्नाकरकारः स्वयं वदति “ गुणकरणे दोषस्य, दोषविधाने वा गुणस्यासदनमिति भेदद्वयं प्रथमद्वितीयविषमालंकारभेदविषयः ॥” इति ।

क्रमेण यथा—

दानार्थिनो मधुकरा यदि कर्णतालै-

दूरीकृताः करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने वसन्ति ।

अत्राऽप्रस्तुतप्रशंसासंकीर्णत्वम् ।

पाटीर ! तव पटीयान्कः परिपाटीमिमामुरीकर्तुम् ।
यत्पिषतामपि नृणां पिष्टोऽपि तनोषि परिमलैः पुष्टिम् ॥

इयमपि विलक्षणता विषमस्योदाहरणान्तरं दर्शयति । न तु प्रकारान्तरम् । अत्र रत्नाकरकारस्य सर्वथा प्रमादः । भोजमहाराजः परिवृत्तेः प्रकारद्वयमङ्गीकृत्याज्ञापयति—

"व्यत्ययो वस्तुनोर्यस्तु यो वा विनिमयो मिथः ।
परिवृत्तिरिहोक्ता सा काव्यालंकारलक्षणे ॥१॥" इति॥

वस्तुनोर्व्यत्ययोऽर्थात्परस्परमन्यथात्वं, अथवा परस्परं विनिमयोऽर्थात्प्रतिदानं, इह काव्यालंकारशास्त्रे सा परिवृत्तिरुक्ता ॥ अनयोरिमं भेदमिच्छन्ति । स्वतः परिवर्तनं, इच्छया परिवर्तनं चेति । "भूपालेभ्यो भुजबलात्—" इत्यत्रेच्छया परिवर्तनम् । स्वतः परिवर्तनस्येदमुदाहरणम्—

कुमुदवनमपाश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः प्रीतिमाँश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां हन्त चित्रो विपाकः । १ ।

कुमुदस्य शोभा कमले गता, कमलस्य शोभा कुमुदे आगता । मम तु मतं, उक्तविषयेप्यन्योन्यतामूलक एव चमत्कारः । तदिदमुदाहरणान्तरम् ॥ परिवर्तनव्यवहारस्तु परस्परं दानादाने एव । परिवर्त्तनं च परिवृत्तिः । तदेवाह भानुदत्तः स्वलक्षणे—

"आत्मीयवस्तुदानपूर्वकपरकीय-
वस्त्वादानं परिवृत्तम् ॥" इति ॥

परं त्वन्यस्य संबन्धं विना वस्तुनः परिवर्तनस्यापि संग्रहं कृत्वा सर्वस्वरत्नाकरकारादयः परिवृत्तेः प्रकारद्वयमङ्गीचक्रुः । प्रथमप्रकारस्तु

परस्परं परिवर्त्तनम्। तस्योदाहरणं तु "भूपालेभ्यो भुजबलात्" इत्यादिकमेव। स्वतः परिवर्तनस्य द्वौ भेदावाहुः। एकं तु दानपूर्वकमन्यस्य ग्रहणम्। इतरस्त्यागपूर्वकमन्यस्य ग्रहणम्।

क्रमेण यथा—

यत्राधत्ते निशि मरुत्सौधेऽभ्रमणिशीकरैः।
घर्मोदबिन्दून्बालानां गण्डयोश्चन्द्रकान्तयोः।

अत्र सौधेऽभ्रमणिशीकरैर्घर्मोदबिन्दूनां समानां स्वीकारः कृतः। यद्यप्यत्र कपोलयोर्घर्मकणदानं शब्दे नोपात्तम्। तथाप्यर्थसिद्धत्वादत्रापि परस्परं परिवर्त्तनमेव। मारुतो मेघसंबन्धिशीकरान्दत्त्वा घर्मोदबिन्दूनादत्ते।

किमित्यपास्याभरणानि यौवने
धृतं त्वया वार्द्धकशोभि वल्कलम्।
वद प्रदोषे स्फुटचन्द्रतारके
विभावरी यद्यरुणाय कल्पते। १।

तपस्यन्तीं पार्वतीं प्रति हरस्योक्तिरियम्। अत्र त्यागपूर्वकं परिवर्तनम्। मम तु मतं, अत्रान्यग्रहीतुरभावान्न परस्परपरिवर्तनम्। ततश्च नात्र परिवर्त्तनस्य चमत्कारः। अत्र चमत्कारस्तु पर्यायस्य समस्य वा वर्तते। अत ईदृशस्थले पर्यायालंकारः समालंकारो वा भवेत्। अपि च परस्परं दानादानयोरप्यन्योन्यत्वमेव। "क्रियया तु परस्परं वस्तुनोर्जननेऽन्योन्यम्" इत्यन्योन्यलक्षणं वदन्काव्यप्रकाशगतकारिकाकारः परिवृत्त्यलंकारं पृथगङ्गीचकार। तत्तु न समीचीनम्। अनेन खण्डनेन प्रकाशकारानुसारिणां सर्वस्वकारादीनां सर्वेषां मतानि खण्डितानि। किञ्चिद्वस्तु कस्यचिदुपमेयं भूत्वा पुनः कस्यचिद्वस्तुन उपमानं भवति चेत्तादृशपरिवर्तनमप्यलंकारं मन्वानो भानुदत्त उक्तप्रसिद्धपरिवृत्तेरिदमलंकारान्तरमङ्गीचकार। नामभेदार्थं च प्रसिद्धपरिवृत्तिं परिवृत्तामिति, इदं च परिवृत्तिरित्याह। इदं च लक्षणोदाहरणं दर्शयति—

"पूर्वपूर्वस्योत्तरोत्तरोपमानभावः परिवृत्तिः॥" इति॥

यथा—

रघुर्दिलीपवत्तद्वदजस्तद्वत्तदात्मजः ।
पितुरेवोपमा सूनोरिति सूर्यकुलक्रमः ॥

भानुदत्तो वदति "परिवृत्त्यनन्वयनिदर्शनप्रतिवस्तूपमादृष्टान्ततुल्ययोगिता लुप्तोपमा एव । तेषां पृथक्त्वेऽभूतोपमापरस्परोपमाक्यङ्प्रभृतिप्रत्ययवाचकोपमानामपि पृथक्त्वापत्तेः ॥" इति ॥ मम तु मतं, अलंकारनामार्थस्वारस्यमजानतो भानुदत्तस्यायं प्रमादः । अलंकारव्यवहारस्तु प्रधानचमत्कारस्यैव । तस्य चान्योन्यादिष्वन्योन्यत्वादिष्वेव विवक्षणात्तादृशस्थलेऽन्योन्यादिरेवालंकारः । अभूतोपमादिषु च प्रधानचमत्कारस्योपमायामेव विवक्षणादतिशयाऽद्भुततादौ वाऽविवक्षणादुपमैवालंकारः । अस्यां भानुदत्ताभिमतपरिवृत्तौ सर्वस्वकाराद्यभिमतत्यागपूर्वकान्यग्रहणरूपपरिवृत्तिवन्न परिवर्तनचमत्कारः । भानुदत्तस्योक्तोदाहरणे तूपमायामेव चमत्कृतिपर्यवसानम् । उपमानस्योत्तरोत्तरमुपमेयभवनं तु शृङ्खलोपमालंकारः । स एव रसनोपमेत्यपि भण्यते । भानुदत्तोदाहरणोक्तसूर्यकुलपूर्वजानां तादृशोपमायास्तु मदुक्तनिजोपमायामन्तर्भावः । तद्भिन्नशृङ्खलोपमाया इदमुदाहरणम्—

सुरगुरुरिव वाल्मीकिः सदृशो वाल्मीकिना तथा व्यासः ।
व्याससमोऽभूद्बाणस्तुल्यो बाणेन मानभूपालः ॥

इति परिवृत्तिप्रकरणम् ॥ ५० ॥

## पुनरुक्तिवदाभासः

पुनरुक्तेरिव आभासः पुनरुक्तिवदाभासः । केचन प्राचीनाः पुनरुक्तिदोषस्याभासमलंकारान्तरमङ्गीचक्रुः । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"पुनरुक्तिवदाभासो विभिन्नाकारशब्दगा ॥
एकार्थतेव ॥" इति ॥

विभिन्नाकारशब्दगता एकार्थतेव अर्थात् न वास्तवैकार्थता, किंतु

एकार्थतया भानमात्रं पुनरुक्तिवदाभासालंकार इत्यर्थः ॥

यथा—

चकासत्यङ्गनारामाः कौतुकानन्दहेतवः ।
तस्य राज्ञः सुयशसो विबुधाः पार्श्ववर्त्तिनः ॥

अङ्गना रामा इति द्वावपि शब्दौ स्त्रीवाचकौ। एवं कौतुकमानन्द इति च शब्दावानन्दवाचकौ । सुमनसो विबुधा इति च शब्दौ देवतावाचकौ। एतेषु विभिन्नाकारशब्देष्वेकार्थता भासते । विवक्षितार्थस्तु, अङ्गनं गृहाङ्गणं, तस्य उपवनानि। कौतुकं क्रीडा तन्मूलाऽऽनन्दस्य हेतवः । सुमनसः समीचीनमनस्काः । विबुधाः पण्डिता इति । मम तु मतं, आभ्यां लक्षणोदाहरणाभ्यां पुनरुक्तिदोषाभासोऽलंकारत्वेनाङ्गीकृतः ।स त्वाभासालंकारस्य प्रकारः । यमकालंकारात्पृथक्करणार्थं "विभिन्नाकार" इति विशेषणमुपात्तम् ।

इति पुनरुक्तिवदाभासप्रकरणम् ॥ ५१ ॥

---

## ॥ पूर्वम् ॥

पूर्वशब्दार्थः प्रथम इति॥पश्चाद्भाविनः पूर्वं भावे पूर्वशब्दस्य रूढिमङ्गीकुर्वन्तः प्राचीनाः पूर्वनामकमलंकारान्तरं मन्वते । रुद्रट इमे लक्षणोदाहरणे दर्शयति—

यत्रैकविधावप्यर्थौ जायेते यौ तयोरपूर्वस्य ॥
अभिधानं प्राग्भवतः सतोऽभिधीयेत तत्पूर्वम्॥१॥

यथा—

काले जलदकुलाकुलदशादिशि पूर्वं वियोगिनीवदनम् ।
गलदविरलसलिलभरं पश्चादुपजायते गगनम् ॥

वर्षाकाले गगनं वियोगिनीवदनं च जलवर्षणरूपैकक्रियोपेतम् । तयोर्मध्याद्गगनानन्तरं जलवर्षिणो वियोगिनीवदनस्य पूर्वं जलवर्षणम-

भिहितम् । अतोऽत्र पूर्वालंकारः । रत्नाकरकारः पश्चाद्भाविनः कार्यस्य पूर्वं भावेऽसंगत्यलंकारप्रकारमाह ॥ भोजमहाराजस्तु "असंख्याश्चित्रहेतवः ।" इत्याज्ञापयन्नस्य चित्रहेतुप्रकारत्वमङ्गीचकार । मम तु मतं, अयं विचित्रालंकारेऽन्तर्भूतः ॥

इतिपूर्वम् ॥ ५२ ॥

---

## ॥ प्रतिप्रसवः ॥

---

निषिद्धस्य पुनर्विधानं प्रतिप्रसवः । आह चिन्तामणिकोषकारः "प्रतिप्रसवो निषिद्धस्य पुनर्विधाने" इति ॥ प्राचीनाः प्रतिप्रसवमलंकारान्तरं मन्वते । अलंकाररत्नाकरकार इमे लक्षणोदाहरणे दर्शयति—

"प्रत्यापत्तिः प्रतिप्रसवः ॥" इति॥

प्रत्यापत्तिः पुनरापतनम् ।

यथा—

द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन् सैव चिरन्तनप्रणयिनी शून्येऽपि राज्यस्थितिः ॥

शत्रुराजधानीशून्यतापक्षे—खड्गिनो मृगविशेषाः । गजा वनगजाः । कञ्चुकिनः सर्पाः । महिष्यः सैरिभ्यः । राज्यस्थितिपक्षे—खड्गिनः खड्गधारिणः । गजाः परिपालितगजाः । कञ्चुकिनोऽन्तःपुररक्षार्थमधिकृताः क्लीबाः । महिष्यः पट्टाभिषिक्ता राज्ञ्यः । मम तु मतं, अयं पूर्वरूपालंकारेऽन्तर्भूतः ॥

॥ इति प्रतिप्रसवप्रकरणम् ॥ ५३ ॥

---

## ॥ प्रतिबन्धः ॥

प्रतिबन्धशब्दार्थः प्रतिरोधक इति । उक्तं चिन्तामणिकोषकारेण "प्रतिबन्धः प्रतिरोधके" इति ॥ प्राचीनाः प्रतिबन्धमलंकारान्तरं मन्वते । अलंकारोदाहरणकार इमे लक्षणोदाहरणे दर्शयति—

" प्राप्तस्य प्रतिबन्धः प्रतिबन्धः ॥" इति ॥

यथा—

पिनाकिनो मूर्त्तिषु सर्पिरर्पितं
न यत्र नेत्राग्निबलाद्विलीयते ।
किरीटकोटीगृहमेधिनो विधोः
प्रभाभिराश्यानमिवोत्तरायणे ॥

अत्र शिवस्य घृताभिषेके तस्य तृतीयनेत्राग्निबलाद् घृतद्रुतिः प्राप्ता तस्याः शशिरश्मिसंबन्धेन प्रतिबन्धः । मम तु मतं, प्रतिबन्धांशस्यात्यन्तं लौकिकत्वात्तत्र चमत्कारो नानुभवसिद्धः । प्रतिबन्धस्य यत्किञ्चिद्धेतुजन्यत्वाद्धेत्वलंकारो भवेन्नाम । अस्मिन्नुदाहरणे नयनाग्निरूपकारणसत्त्वे घृतद्रुतिरूपकार्याजनने तु विचित्रहेत्वलंकारः । शशिरश्मिसंबन्धेऽपि घृतद्रुतेरभाव इति तु हेत्वलंकारः । नयनाग्न्यपेक्षया शशिशीतलताया आधिक्यविवक्षायां त्वधिकालंकारः । प्रतिबन्धोऽलंकारान्तरं भवितुं नार्हति ॥

॥ इति प्रतिबन्धप्रकरणम् ॥५४॥

## ॥ प्रतिभा ॥

सर्वतः स्फुरन्ती कविबुद्धिः प्रतिभेत्युच्यते ॥ तदुक्तं कोषकारेण—

"स्फुरन्ती सत्कवेर्बुद्धिः प्रतिभा सर्वतोमुखी ॥" इति ॥

प्राचीनाः प्रतिभानामकमलंकारान्तरं मन्वते । रत्नाकरकार इमे लक्षणोदाहरणे दर्शयति—

"संभाव्यमानस्य कल्पनं प्रतिभा ॥" इति॥

यथा--

स्वर्गस्त्री यदि तत्कृतार्थमभवच्चक्षुःसहस्रं हरे-
र्नागी चेन्न रसातलं शशभृता शून्यं मुखेऽस्याः सति ।
जातिः स्यात्सकलान्यजातिजयिनी विद्याधरी चेदियं
स्यात्सिद्धान्वयजा यदि त्रिभुवने सिद्धाः प्रसिद्धास्ततः॥१॥

अत्र कविप्रतिभारूपा बुद्धिस्तु वर्णनीयनायिकायां संदिह्यमानेन कविना सुरसुन्दरीपक्षे शक्रस्य सहस्रनेत्रसफलीकरणस्य. नागकन्यापक्षे पाताले चन्द्रशून्यत्वनिराकरणस्य, विद्याधरीपक्षे तज्जात्या अन्योत्कर्षविधायित्वस्य, सिद्धकन्यापक्षे सिद्धानां प्रसिद्धीकरणस्य च कथनेन यत्र तत्र संभाव्यमानकार्यस्य कल्पना कृतेति । मम तु मतं, प्रतिभामात्रं तु नालंकारः । तस्याः सार्वत्रिकत्वात् । लक्षणोदाहरणानुसारेण तु संभावनालंकारः । नत्वलंकारान्तरम् ॥

॥ इति प्रतिभाप्रकरणम् ॥ ५५ ॥



## ॥ प्रतिवस्तूपमा ॥



केचन प्राचीनाः प्रतिवस्तूपमानामकमलंकारान्तरमङ्गीचक्रुः । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्--

" प्रतिवस्तूपमा तु सा ॥
सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः॥" इति ॥

यत्रैकस्य सामान्यस्येति साधारणधर्मस्य वाक्यद्वये द्विवारं स्थितिः सा प्रतिवस्तूपमेत्यर्थः ॥ वृत्तौ लिखति "साधारणो धर्म उपमेयवाक्ये उपमानवाक्ये च कथितपदस्य दुष्टताया अभिहितत्वाच्छब्दभेदेन यदुपादीयते सा वस्तुनो वाक्यार्थस्योपमानत्वात्प्रतिवस्तूपमा " इति ॥

यथा---

देवीभावं गमिता परिवारपदं कथं भजत्येषा ।

न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥

अत्र परिचर्योपयोगित्वाभावरूपः साधारणधर्मः सकृदुपमेयवाक्ये पुनश्चोपमानवाक्ये इति वारद्वयमभिहित इति प्रतिवस्तूपमा । अत्र साधारणधर्मस्य "परिवारपदं कथं भजति" इति, "न खलु परिभोगयोग्यम्" इत्येवं विभिन्नशब्दाभ्यां कथनं तु कथितपददोषवारणार्थम् । चन्द्रालोककार इमे लक्षणोदाहरणे दर्शयति—

"वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता ॥" इति ॥

यथा—

तापेन भ्राजते सूर्यः शूरश्चापेन राजते ॥

कुवलयानन्दकारो वृत्तौ लिखति "यत्रोपमानोपमेयवाक्ययोरेकः समानो धर्मः पृथङ्निर्दिश्यते सा प्रतिवस्तूपमा । प्रतिवस्तु प्रतिवाक्यार्थमुपमा समानधर्मोऽस्यामिति व्युत्पत्तेः । यथात्रैव "भ्राजते राजते" इत्येक एव धर्म उपमानोपमेयवाक्ययोः पृथग्भिन्नपदाभ्यां निर्दिष्टः ।" इति । आचार्यदण्डी त्विममुपमाप्रकारं मन्वान इमे लक्षणोदाहरणे दर्शयति—

"वस्तु किञ्चिदुपन्यस्य न्यसनात्तत्सधर्मणः ॥
साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा यथा ॥" इति ॥

यथा—

न कोपि त्वादृशोऽद्यापि जायमानेषु राजसु ॥
ननु द्वितीयो नास्त्येव पारिजातस्य पादपः ॥ १ ॥

अत्र द्वितीयसदृशव्यवच्छेदरूपः साधारणधर्म उपमेयोपमानरूपवाक्यार्थयोरुक्तः । उपमोदाहरणेषु तु समानधर्मस्य सकृत्कथनम् ॥

उदारो मरुभूपालः सुरेन्द्र इव राजते ॥

काप्युपमेयवाक्ये उपमानवाक्ये च समानधर्मो वारद्वयमभिहितश्चेन्मम मते तूपमाचमत्कारे न किञ्चिद्वैलक्षण्यम् । अतो नेदमलंकारान्तरम् । अपितूपमाया उदाहरणान्तरमेव । साधारणधर्मस्य भिन्नशब्दाभ्यां निर्देशस्तु प्राचीनमतेऽपि दोषाभावमात्रम् । न त्वलंकारः । मम मतेन त्वत्र कचित्कचित्प्रसादगुणविद्रुष्यर्थज्ञानास्पष्टत्वं तु दोषः । प्रतिवस्तूपमाया उपमोदाहरणान्तरत्वादुपमायामन्तर्भावः ॥

इति प्रतिवस्तूपमाप्रकरणम् ॥ ५६ ॥

## ॥ प्रतिषेधः ॥

अस्य शब्दस्यार्थो निषेधः । प्राचीनाः प्रतिषेधमलंकारान्तरमङ्गीचक्रुः । चन्द्रालोककार इमे लक्षणोदाहरणे दर्शयति--

प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्तनम् ॥" इति ॥

वृत्तौ लिखति " निर्ज्ञातो निषेधः स्वतोऽनुपयुक्तत्वादर्थान्तरं गर्भीकरोति । तेन चारुत्वान्वितोऽयं प्रतिषेधनामाऽलंकारः " इति ॥

यथा--

न द्यूतमेतत्कितव! क्रीडनं निशितैः शरैः ॥

युद्धे प्रवर्त्तमानं शकुनिं प्रति पाण्डवोक्तिरियम् । इदं युद्धं, न द्यूतमिति प्रसिद्धौ सत्यामपि निषेधकरणं तव सामर्थ्यं द्यूते एव नतु युद्धे इत्युपहासगर्भितम् । अयमुपहासः कितवशब्देन स्पष्टीकृतः । मम तु मतं, उक्त उपहासो व्यङ्ग्यः । एतद्व्यङ्ग्यद्वारा निषेधे चमत्काराङ्गीकारेऽप्ययमाक्षेपात्पृथङ्न भवति ॥

॥ इति प्रतिषेधप्रकरणम् ॥ ५७ ॥

## ॥ प्रतीपम् ॥

प्रतीपमलंकारान्तरं मन्वानाः प्राचीना अस्य नाम्न इममर्थं कुर्वन्ति ॥ "प्रातिलोम्यात्प्रतीपम् " इति ॥ प्रातिलोम्यं प्रतिकूलता, सा यत्र भवति तत्र प्रतीपालंकारः । अत्रोपमानविषयकप्रतिकूलतायां रूढिमङ्गीकुर्वन्ति । उपमानस्योपमेयकरणमित्यादिकं स्वादरयोग्यस्योपमानस्यानादरः । इयमेव प्रतिलोमता । काव्यप्रकाशसर्वस्वादिषु च बहुषु ग्रन्थेष्वयमलंकार उक्तः । केचनास्य द्वौ प्रकारावाहुः । केचन पञ्च प्रकारानाहुः । मम तु मतं, अनादरयोग्यस्यानादरे तु न कोपि चमत्कारः । आदर-

योग्यस्यानादरे त्ववज्ञालंकारः। अत्रोपमानानादरे एव नियमकरणं न समीचीनम्। तत्तूक्तावज्ञालंकारोदाहरणेषु स्पष्टम्। प्रतीपस्य प्रकारद्वयं मन्वानः काव्यप्रकाशगतकारिकाकार इदं लक्षणमाह—

"आक्षेप उपमानस्य प्रतीपमुपमेयता॥
तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धनम्॥" इति॥

अस्य धुरं सुतरामुपमेयमेव वोढुं प्रौढमिति कैमर्थ्येन यदुपमानमाक्षिप्यते। यदपि तस्यैवोपमानतया प्रसिद्धस्योपमानान्तराविवक्षयाऽनादरार्थमुपमेयभावः कल्प्यते तत्, उपमेयस्योपमानप्रातिकूल्यवर्तित्वात्, उभयरूपं प्रतीपम्। काव्यप्रकाश एवमुदाजहार—

सर्वाभिलाषापरिपूरकं त्वां
विधाय वेधा यशवन्तसिंह!।
व्यधात्किमर्थं सुरशाखिवर्गं
चिन्तामणिं कामदुघां च धेनुम्।

मम तु मतं, अत्र कल्पवृक्षादिरूपोपमानस्य निषेधः। स त्वाक्षेपस्य विषयः। अन्ये प्राचीनाः प्रतीपस्य पञ्च प्रकारान्मन्वते। चन्द्रालोके प्रथमस्येदं लक्षणम्—

"प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम्॥" इति॥

यथा—

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये! तवमुखच्छायानुकारी शशी।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते॥

मम तु मतं, अत्रोपमानस्यानादरे एव विवक्षाङ्गीकारेऽवज्ञालंकारः। परं त्वत्र चमत्कारस्तूपमानस्योपमेयताकरणे। स तूपमायाः प्रकारः। इदं च विपरीतोपमाप्रकरणे सविस्तरं प्रतिपादितम्। ननु समादिविपरीतभावे विषमादयः पृथगलंकाराः स्वीकृताः, तद्वदुपमाया विपरीततायामपि प्राचीनानां प्रतीपनाम्ना पृथगलंकाराङ्गीकारः समीचीन

इति चेच्छृणु। उपमाया विपरीतभावेऽनुपमा वर्तते। सा त्वाक्षेपालंकारस्य विषय इति मयाऽऽक्षेपप्रकरणे लिखितम्। अत्र तु केवलप्रसिद्धोपमानोपमेयभावस्य विपरीततामात्रम्। उपमायास्तथारूपतया स्थितत्वादिदं किञ्चिद्विलक्षणत्वमुपमाप्रकारतासाधकम्। न त्वलंकारान्तरतासाधकम्।

द्वितीयस्येदं लक्षणम्—

"अन्योपमेयलाभेन वर्ण्यस्याऽनादरश्च तत्॥" इति॥

वृत्तौ लिखति "अत्युत्कृष्टगुणतया वर्ण्यमानस्यान्यत्र स्वसादृश्यमसहमानस्योपमेयं किञ्चित्प्रदर्श्य तावता तस्य तिरस्कारो द्वितीयप्रतीपं, पूर्वस्मादपि विच्छित्तिविशेषशालि" इति॥

यथा—

मा भवत्ववलेपस्ते यशवन्तनरेश्वर!।
दातारस्त्वत्समा लोके श्रूयन्ते कल्पशाखिनः॥ १॥

अत्रान्यत्र स्वसादृश्यमसहमानस्यात्युत्कृष्टगुणतया वर्णनीययशवन्तसिंहराजराजेश्वरस्य कल्पवृक्षरूपप्रसिद्धोपमाने उपमेयतां प्रदर्श्य तावतैवोक्तराजराजेश्वरस्य तिरस्कारः। स्वसादृश्यमसहमानस्य सादृश्यदर्शनात्। मम तु मतं, अत्रोपमेयराजराजेश्वरस्याऽद्वितीयतागर्वखण्डनेनोपमेयस्य तिरस्कारः। कल्पवृक्षस्योपमानस्योपमेयताप्रदर्शनेन चोपमानस्य तिरस्कारः। अनया रीत्योपमेयोपमानयोर्द्वयोस्तिरस्कारः सिद्ध्यति। इत्थं वर्णनीयस्य तिरस्कारश्च सर्वथा वर्जनीयः। अत्रोऽत्र न वास्तवोऽद्वितीयतागर्वः। न च वस्तुतो गर्वखण्डनम्। अपितु कविकृतपरिहासमात्रम्। परिहासस्येदं लक्षणम्—

अन्यमुखे दुर्वादो यः प्रियवदने स एव परिहासः।
इतरेन्धनजन्मा यो धूमः सोऽगुरुभवो धूपः॥

उक्तव्यवस्थानुसारेण वर्णनीयतिरस्कारस्य विरसत्वादत्र परिहासः सिद्ध्यति। ततोऽत्रोपमाप्रदर्शनविषये वर्णनीयस्योपमेयताप्रदर्शनापेक्षया वर्णनीयस्योपमानताप्रदर्शनं युक्तमिति प्रसङ्गे इयं विपरीतोपमा कृत। तस्मादिदमपि स्थलं विपरीतोपमाया उदाहरणान्तरम्। दीक्षितस्य कुवलयानन्दनिर्माणं चन्द्रालोकानुसारीति तत्रोक्तोभयप्रतीपप्रतिपादनम्। तेनैव स्वातन्त्र्यविहितचित्रमीमांसायां तु "विपरीतोपमारूपं प्रतीप-

मप्रकृतोपमावत्प्रकृतस्योपमा । सा तूपमैव । यथा, अप्रकृतात्प्रकृतस्य, प्रकृतादप्रकृतस्य च स्मरणादिकं स्मृत्यलंकार एव । न त्वलंकारान्तरम्" इति प्रतिपादितम् । तृतीयस्येदं लक्षणम्—

"वर्ण्योपमेयलाभेन तथान्यस्याप्यनादरः ॥" इति ॥

वृत्तौ लिखति "अत्युत्कृष्टगुणतया क्वचिदप्युपमानभावमसहमानस्यावर्ण्यस्य वर्ण्यमुपमेयं परिकल्प्य तावता तस्य तिरस्कारः पूर्वप्रतीपवैपरीत्येन तृतीयं प्रतीपम्" इति ॥

यथा—

अहमेव गुरुः सुदारुणानामिति हालाहल ! मास्म तात दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥

मम तु मतं, अत्राप्युपमानस्याप्यनादराविवक्षा चेदवज्ञालंकारः । नात्रोपमानस्यानादरे पर्यवसानम् । अपितूपमायामेव । प्रसिद्धगुणोपमानस्योपमयाऽप्रसिद्धगुणोपमेयस्य गुणपरिमाणप्रसिद्धेरुपमेयोत्कर्षो भवतीति तस्याद्वितीयगर्ववदुपमानस्योपमयोपमेयोत्कर्षाधिक्यप्रतिपादनमत्र प्रयोजनम् । अनया रीत्येदं शुद्धोपमाया उदाहरणान्तरमेव । रसगङ्गाधरकारोपि वदति "वस्तुत आदिमास्त्रयः प्रकारा उपमायामेवान्तर्गताः। चतुर्थप्रतीपस्येदं लक्षणम्—

"वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत् ॥" इति ॥

वृत्तौ लिखति "अवर्ण्ये वर्ण्योपमाया अनिष्पत्तिवचनं पूर्वेभ्य उत्कर्षशालि चतुर्थं प्रतीपम् ॥" इति ॥

यथा—

तरुराजस्त्वया दाने माने कुरुनरेश्वरः ॥
यशवन्तमहाराज ! मूढैरेवोपमीयते ॥१॥

यथावा—

यशवन्तमहाराजसदृशो भोजभूपतिः ॥
आसीदिति कवीशानां प्रवादो वर्तते वृथा ॥

रसगङ्गाधरकारो वदति "अनिष्पत्तिवचनरूपं प्रतीपमनुक्तवैधर्म्यव्यतिरेकेऽन्तर्गतम् । मम मतेऽपि रसगङ्गाधरकारमतं समीचीनम् । "तरु;

राजस्त्वया दाने—" इत्यत्र तरुराजो न राजराजेश्वरसदृशः। तरुराजोऽर्थनया ददाति। राजराजेश्वरस्त्वर्थनां विनापि प्रयच्छतीति तरुराजस्य न्यूनत्वम्। एवं विवक्षा चेदीदृशस्थलेऽनुक्तवैधर्म्यस्य व्यतिरेकः सिद्ध्यति। क्वचिच्च वैधर्म्यस्योक्तिश्चेदुक्तवैधर्म्यव्यतिरेको भवेत्॥

यथा—

अभिलषसि यदीन्दो! वक्त्रलक्ष्मीं मृगाक्ष्याः
पुनरपि सकृदब्धौ मज्ज संक्षालयाङ्कम्॥
सुविमलमथ बिम्बं पारिजातप्रसूनैः
सुरभय वद नो चेत्त्वं क्व तस्या मुखं क्व॥ १॥

अत्रापि समतायाः सर्वथाऽभावस्य विवक्षा चेदुपमानिषेधरूपालंकारो भवेत्॥

यथावा—

राजञ्श्रीयशवन्तसिंह! भवता दत्त्वा यथेच्छं तु मे
नीतो वै विरसं रसायनविधिः कामप्रदोग्ध्र्यां पुनः॥
कामो वारित एव चिन्तनमलं चिन्तामणौ त्याजित-
मल्पा कल्पतरोः कथा विरचिता जीयाश्चिरं भूतले॥१॥

पञ्चमप्रतीपस्येदं लक्षणम्—

"प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते॥" इति॥

वृत्तौ लिखति "उपमेयस्यैवोपमानधूर्वहत्वेनोपमानकैमर्थ्यमुपमानप्रातिलोम्यात्पञ्चमं प्रतीपम्"॥ इति॥

यथा—

तदोजसस्तद्यशसः स्थिताविमौ
वृथेति चित्ते कुरुते यदा यदा॥
तनोति भानोः परिवेषकैतवा-
त्तदा विधिः कुण्डलनां विधोरपि॥

यथावा—

तवोरुयुगमालोक्य रम्भास्तम्भनिभं प्रिये ! ॥
कुण्डलीकृतशुण्डाग्रा मदं मुञ्चति दन्तिनः ॥

उक्तोदाहरणयोरुपमानस्य पुनरुक्तवद्व्यर्थत्वान्निषेधः । दीक्षितः कुवलयानन्दे परमतेन लिखति "अन्ये तु पञ्चमं प्रतीपप्रकारमुपमानाक्षेपत्वादाक्षेपालंकारमाहुः" इति ॥ ममाप्यत्राक्षेपभावे संमतिः ॥ काव्यप्रकाशगतकारिकाकारोऽप्यस्य प्रतीपस्य स्वरूपमाक्षेपमेवाह " आक्षेप उपमानस्य" इति ॥ यद्यप्यस्मिन्विषये आर्थः प्रतिनिधिरूपः प्रतिमालंकारो गर्भीकृतोऽस्ति । तथापि तत्र विवक्षाऽभावादत्राक्षेप एवालंकारः । प्रतीपस्य पञ्चस्वपि प्रकारेषूपमानानादरस्य चमत्कारानाधायकत्वादवज्ञापर्यायवाचि प्रतीपं नालंकारः। अपि तु प्रथमप्रकारत्रये उपमा, चतुर्थप्रकारे व्यतिरेकः, पञ्चमप्रकारे चाक्षेपालंकारः । अलंकाररत्नाकरकारः प्रतीपस्येदं लक्षणमाह—

"अधिकस्यानादरः प्रतीपम् ॥" इति ॥

वृत्तौ लिखति "अधिकगुणस्योपमानस्यान्यस्य वा न्यक्कारेण तुल्यत्वापादनेन वाऽनादरस्तिरस्कारः प्रतीपम् ॥" इति ॥ अलंकाररत्नाकरकार उपमानानादररूपप्रतीपस्य प्रकारत्रयमाह "उपमानस्यानादरः क्वचिदुपमेयस्यैवोपमानभारोद्वहनसामर्थ्येनानुपयोगात्, कुत्रचिदुपमेयताकल्पनेनाप्रसिद्धतापादनात्, क्वाप्यनन्यसामान्यगुणस्यान्यसमानतापादनेन वा भवतीति त्रयो भेदाः" इति ॥ चन्द्रालोककारादयो रत्नाकरकारस्य प्रथमप्रकारं पञ्चमप्रकारं, द्वितीयप्रकारं तृतीयप्रकारं च तृतीयप्रकारं मन्वते । रत्नाकरकारोऽन्यस्येत्युपमानत्वेनाप्रसिद्धस्य प्रकारद्वयमाह "अर्थान्तरस्य तु न्यूनगुणेन तत्कार्यकरणे नैरर्थक्यात्, अवरत्वापादनाद्वेति द्वैविध्यम् ॥" इति ॥

अर्थान्तरस्य क्रमेणोदाहरणम्—

किं कर्णपूरैर्यदि साधुवादा
मुक्ताफलैः किं यदि वाग्विलासाः ॥
किं चूर्णयोगैर्यदि रूपशोभा
लावण्यमास्ते यदि चन्दनैः किम् ॥

अत्र साधुवादादिभिरेव श्रोत्रशोभादिजनने कर्णपूरादेरधिकगुणस्य

कारणान्तरस्यानादर उपनिबद्धः। अत्र च यद्यपि कर्णपूरसाधुवादादीनां शोभाकारित्वादिनोपमानोपमेयभावो यथाकथंचिद्वक्तुं शक्यते; तथापि पूर्वोदाहरणेषूपमानत्वेन प्रसिद्धस्य कुवलयादेरुपमानस्य सतस्तिरस्कारः। इह तु तिरस्कृतस्यैवैककार्यकारित्वादिना साधर्म्यमित्युपमानस्याविवक्षितत्वादर्थान्तरस्येत्युक्तम्॥ मम तु मतं, अत्रापि कर्णपूरादिफलस्यानादरविवक्षायामवज्ञालंकारः, निषेधे पर्यवसाने त्वाक्षेपालंकारः॥

वैकुण्ठाय श्रियमभिनवां शीतभानुं भवाय
प्रादादुच्चैःश्रवसमपि वा वज्रिणे तत्क गण्यम्॥
तृष्णार्ताय स्वमपि मुनये यद्ददाति स्म देहं
कोऽन्यस्तस्माद्भवति भुवनेष्वम्बुधेर्बोधिसत्त्वः॥ १॥

अत्र लक्ष्म्यादेरधिकगुणस्यापि "तत्क गण्यम्" इत्यवरत्वापादनेनानादरः। मम तु मतं, अस्याप्यादरार्हलक्ष्म्यादेरनादरविवक्षायामवज्ञालंकारः। लक्ष्म्यादिदानमहिमनिषेधे पर्यवसाने त्वाक्षेपेऽन्तर्भावः। अपि च रत्नाकरकारो भणति "अस्य च न्यूनगुणादराख्यविरुद्धत्वमुखेनापि कचिदुपनिबन्धः" इति॥

एवं चोदाहरति—

विपदः सन्तु नः शश्वद्यासु संकीर्त्यते हरिः॥

अत्र न्यूनगुणविपत्तेरादरः। मम तु मतं, अत्रादरानर्हविपत्तेर्हरिस्मरणहेतुतयाऽऽदरोऽनुज्ञालंकारस्य विषयः। चन्द्रालोककारोऽनुज्ञाया इदमेवोदाहरणमदात्। प्रतीपे प्रातिलोम्ये पर्यवसाने त्वयथायोग्यतयाऽस्य विषमेऽन्तर्भावः।

अलंकारतिलकस्येदं लक्षणम्—

"भङ्गीभिरुपमानप्रतिक्षेपः प्रतीपम्॥" इति॥

यथा—

जानीमस्तव केशपाशरचनाश्यामायमानः करः
क्वापि क्वापि चकोरचारुनयने यत्प्रोञ्छि चेतोभुवा॥
तेनाजायत षट्पदस्य पटली पाथोमुचः कन्दली
ध्वान्तस्य प्रसरः कलापनिकरः शैवालजालाङ्कुरः॥ १॥

मम तु मतं, अत्र लक्षणानुसारेण रचनान्तरेण कथने तु पर्यायोक्तिः। उपमेयस्याधिक्ये पर्यवसानं चेदधिकालंकारः। उपमानस्य श्यामताया अल्पताविवक्षा चेदल्पालंकारः। अतः परमुपमानस्यानादरविवक्षायामवज्ञालंकारः। अवज्ञा तिरस्कारः प्रतीपमित्येतानि पर्यायनामानि। अतोऽवज्ञालंकारं तिरस्कारालंकारं वोक्त्वा पुनः प्रतीपालंकारकथने पुनरुक्तिदोषापातः। येन चैतेषु केनचिन्नाम्नैक एवालंकार उक्तस्तस्य कथनं तु युक्तमेव। रत्नाकरकारं कटाक्षयन् विमर्शनीकार आह "प्रतीपे साधर्म्यमेव जीवनम्। औपम्यं विना नेदमुपपद्यते॥ तेन

णिद्दच्चिअ वंदिज्जिअ किं किरऊ देवआहिँ अण्णाहिँ।
जाइ पसाएण पिओ लंभइ दूरे वि णिवसन्तो॥ १॥

अत्रापि प्रतीपालंकारो न वाच्यः। अत्र हि देवतान्तराणां तथा सामर्थ्यादर्शनात्तदाक्षेपेण स्वप्नकाले प्रियोपलब्धिदायिन्या निद्राया विरहिणीकर्तृकं वास्तवमेव वन्द्यत्वम्। वस्तु च नालंकार इति निर्विवादः" इति॥ मम तु मतं, औपम्यं विना प्रतीपालंकारो नास्तीति विमर्शनीकारस्यायं सिद्धान्तो न समीचीनः॥

विपदः सन्तु नः शश्वद्यासु संकीर्त्यते हरिः॥

इत्यादावौपम्यं विनाप्यनादरस्यालंकारत्वात्। अस्मिन्नुदाहरणे वस्तुस्थितिसद्भावात्प्रतीपालंकारो नास्तीति कथनमपि प्रमादः। कुत इत्युक्तौ देवतानां सुतरामादरार्हत्वेऽप्याराधनादिश्रममन्तरा तथाकार्यकारित्वाभावः। निद्रायास्तु श्रममन्तरापि तथाविधायित्वमित्यादिकारणेभ्य आदरार्हदेवतानादरस्य मनोरञ्जकत्वादत्रावज्ञालंकारः॥

॥ इति प्रतीपप्रकरणम्॥ ५८॥

## ॥ प्रत्यादेशः॥

प्रत्यादेशशब्दस्यार्थो निराकृतिः॥ आह चिन्तामणिकोषकारः

---

* निद्रैव वन्दनीया किं कार्यं देवताभिरन्याभिः। यस्याः प्रसादेन प्रियो लभ्यते दूरेऽपि निवसन्॥ इति संस्कृतम्॥

"प्रत्यादेशो निराकृतौ" इति ॥ प्राचीनाः प्रत्यादेशनामकमलंकारान्तरं मन्वते । रत्नाकरकारस्येदं लक्षणम्—

"कुतश्चिन्निमित्तात्स्थितस्य स्थापितस्य वा निवृत्तस्य वा निवृत्तिः प्रवृत्तिश्च प्रत्यादेशः ॥" इति ॥

क्रमेण यथा—

श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम् ॥
धत्ते वक्षः कुचसचिवतामद्वितीयं तु वक्त्रं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ १ ॥

अत्र यौवननिमित्तेन नायिकाया नितम्बादिस्थितकृशतादेर्निवृत्तिः। स्थापितस्य निवृत्तेरुदाहरणं स्वयमूह्यम् ॥

लावण्यकान्तिरमला मलिनात्र माभू-
द्भीत्या सखीति विलिलेख न पत्रलेखाम् ।
अक्लेशयन्पुनरिमां प्रतिमागतेन्दु-
रङ्कप्रभाभिरधिकं तनुते कपोले ॥ १ ॥

अत्र मृगमदपत्त्ररचनाया निवृत्तायाः कपोले मृगाङ्कप्रतिबिम्बमुखेन प्रवृत्तिः । निवृत्तस्य प्रवृत्तिरपि निवृत्तेर्निराकरणमित्यत्रापि प्रत्यादेश-नामसंगतिः ॥ मम तु मतं, स्थितस्य स्थापितस्य वा निवृत्तेस्तूपलक्षणतया ऽऽक्षेपेऽन्तर्भावः । निवृत्तेः प्रवृत्तिस्तु पूर्वरूपालंकारः । पूर्वोदाहरणे श्रोणी-बन्धादेः कृशतादित्यागस्त्वाक्षेपालंकारः । उत्तरोदाहरणे च मृगमदरच-नाप्रवृत्तेः पूर्वरूपत्वात्पूर्वरूपालंकारः । अत्रैवं न शङ्क्यम्, पूर्वं मृगमदरचना नैव कृतेति कथं पूर्वरूपत्वमिति ? कुत इतिचेदुपलक्षणतया कर्तव्यत्वेन वाञ्छितस्यापि संग्रहो युक्तः । अनया रीत्यास्योदाहरणान्तरेष्वप्यन्ये-ऽन्येऽलंकारा भवेयुः । लक्षणानुसारेणास्य कश्चिदप्यंशो नालंकारान्तरत्व-योग्यः ॥

इति प्रत्यादेशप्रकरणम् ॥ ५९ ॥



## ॥ प्रत्यूहः ॥

प्रत्यूहो विघ्नः । आह चिन्तामणिकोषकारः "प्रत्यूहो विघ्न" इति ॥ प्राचीनाः प्रत्यूहनामकमलंकारान्तरं मन्वते । रत्नाकरकार इदं लक्षणोदाहरणं दर्शयति—

"हेत्वन्तरात्प्राप्तस्य प्रतिबन्धः प्रत्यूहः ॥" इति ॥

यथा—

पिनाकिनो मूर्तिषु सर्पिरर्पितं
न यत्र नेत्राग्निबलाद्विलीयते ॥
किरीटकोटीगृहमेधिनो विधोः
प्रभाभिराश्यानमिवोत्तरायणे ॥ १ ॥

अलंकारोदाहरणकार इममलंकारं प्रतिबन्धनाम्ना प्राह । मम तु मतं, अस्यालंकारान्तरत्वायोग्यतया लोकेऽन्तर्भावः । तच्च प्रतिबन्धप्रकरणे लिखितम् ॥

इति प्रत्यूहप्रकरणम् ॥ ६० ॥

## ॥ प्रसङ्गः ॥

अन्यकार्यप्रवृत्तावन्यकार्यस्यापि करणं प्रसङ्गः । आह चिन्तामणिकोषकारः "प्रसङ्गोऽन्योद्देशेनान्यदीयस्यापि सहानुष्ठाने" इति ॥ कतिपयप्राचीनाः प्रसङ्गमलंकारान्तरं मन्वते । रत्नाकरकारस्येदं लक्षणम्—

"प्रसङ्गादन्यार्थः प्रयत्नः प्रसङ्गः ॥" इति ॥

वृत्तौ लिखति "यत्र प्राधान्यात्केनचित्फलेन प्रयुक्तस्य प्रयत्नस्यावान्तरकार्यकारिता प्रसङ्गाद्भवति स प्रसङ्गः । यत्रैकप्रयत्नेनानेकफलप्राप्तिः समकक्षतया भवति तत्र तन्त्रालंकारः । यत्र प्रयत्ने एकं कार्यं प्रधानमन्यदा-

नुषङ्गिकं भवति तत्र प्रसङ्गालंकारः। प्रसङ्गालंकारे च कार्यद्वयमपि चिकीर्षितं भवति। यत्र चैककार्यार्थमारम्भे फलान्तरमचिकीर्षितमुत्पद्यते तत्र तृतीयविशेषः" इति॥ मम तु मतं, इदमीषद्वैलक्षण्यं नालंकारान्तरत्वसाधकम्।

यथा—

"अङ्गेषु सान्द्रहरिचन्दनपङ्कचर्चा
माङ्गल्यहारवलयादिभिरङ्गबन्धः॥
योऽभूद्दिवापतिवियोगविषाददम्भो
ज्योत्स्नाभिसारपरिकर्म स नक्तमासीत्॥ १॥"

मम मतेनायमधिकालंकारेऽन्तर्भूतः॥

॥ इति प्रसङ्गप्रकरणम्॥ ६१॥

## ॥ प्रस्तुताङ्कुरः॥

प्राचीनाः प्रस्तुताङ्कुरनामकमलंकारान्तरं मन्वते। प्रस्तुताङ्कुरशब्दस्याक्षरार्थस्तु "प्रस्तुतोऽङ्कुर इव प्रस्तुताङ्कुरः" इति॥ प्रस्तुतोऽर्थो यत्राङ्कुरसदृशो भवति तत्र प्रस्तुताङ्कुरालंकार इत्यर्थः। अस्य तात्पर्यं तु, अप्रस्तुतप्रशंसायां वाच्यार्थस्याप्रासङ्गिकत्वात्प्रस्तुतार्थः स्पष्टं प्रतीयते। अत्र तु वाच्यार्थस्य प्रस्तुतत्वात्प्रस्तुतार्थे विश्रान्तिर्भवतीत्यन्यस्य प्रस्तुतार्थस्य स्पष्टं प्रतीयमानत्वाभावात्प्रतीयमानप्रस्तुतार्थोऽङ्कुरतुल्य इति॥ चन्द्रालोककार इमे लक्षणोदाहरणे दर्शयति—

"प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः॥" इति॥

यथा—

"किं भृङ्ग! सत्यां मालत्यां केतक्या कण्टकेद्धया॥"

प्रियेण सह वनविहारं कुर्वत्या नायिकाया उक्तिरियम्॥ तत्र

भ्रमरवृत्तान्तोपि पुरोवर्तित्वात्तस्मिन्समये प्रस्तुतः ॥ निजनायकं प्रत्युपदेशोपि विवक्षितत्वात्प्रस्तुतः । अत्र भ्रमरवृत्तान्तेन नायकं प्रत्ययमुपदेशः प्रतीयते, सुखलभ्यस्वकीयां परित्यज्य नाथननान्द्रादिभिर्दुष्प्रापपरकीयासेवनं किमर्थं क्रियत इति ॥ मम तु मतं, अत्राप्यप्रस्तुतप्रशंसैवालंकारो नान्य इत्यप्रस्तुतप्रशंसाप्रकरणे सविस्तरं प्रतिपादितम् ॥

॥ इति प्रस्तुताङ्कुरप्रकरणम् ॥ ६२ ॥



## ॥ प्रौढोक्तिः ॥



प्रौढशब्दार्थः प्रवृद्धिमानिति । आह चिन्तामणिकोषकारः "प्रौढः प्रवृद्धे" इति ॥ अत एव लज्जासमकामवती नायिका मध्या, लज्जाधिककामवती नायिका प्रौढेति भण्यते । उक्तिः कथनम् । प्रवृद्धिमत्युक्तिः प्रौढोक्तिः । अत्र प्रौढता त्वाधिक्यम् । कतिपयप्राचीनाः प्रौढोक्तिमलंकारान्तरं मन्वते । मम तु मतं, इदमधिकालंकारस्य नामान्तरम् । कश्चिदधिकं प्रौढोक्तिनाम्ना प्राह । यथा क्रमालंकारस्य यथासंख्यनाम्ना कस्याचित्कथनम् । अत्र लोकवैलक्षण्यार्थमूढशब्देन सह प्रोपसर्गप्रयोगः । अस्यालंकारस्येदृशनामकर्तुरिदमुदाहरणम्—

"कचाः कलिन्दजातीरतमालस्तोममेचकाः ॥"

अत्र वर्णनीयनायिकाकचेष्वन्यनायिकाकचापेक्षया श्यामताधिक्यं विवक्षितम् । अत उपमानतमालेष्वन्यतमालापेक्षया श्यामताया आधिक्यप्रतिपादनाय तेषां तमालानां यमुनातीरजननमुक्तम् । प्राञ्चः "कचाः कलिन्दजातीर—" इत्युदाहरणे उक्ततमालेषु श्यामताधिक्यार्थं यमुनातीरहेतुमहेतुं ज्ञात्वाऽस्यालंकारस्य स्वरूपमहेतौ हेतुत्वकल्पनमित्यबोधिषुः ॥ चन्द्रालोकस्येदं लक्षणम्—

"प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम् ॥" इति ॥

मम तु मतं, प्राचामयं प्रमादः । प्रथमतस्तावदहेतौ हेतुत्वकल्पन-

मिति न प्रौढोक्तिशब्दार्थः। अपरतश्च, उत्कर्षस्यार्थादाधिक्यस्याहेताबुत्कर्षस्य हेतुत्वकल्पनामिति प्राचां नामार्थसंगतिरपि यथाकथंचिद्भवतीति न समीचीना। व्याख्याविषये च श्रीहर्षकवेरियमुक्तिः—

"व्याख्या बुद्धिबलापेक्षा सा नोपेक्ष्या सुखोन्मुखी॥" इति॥

अस्याभिप्रायस्तु सुखपूर्वकं व्याख्यानं कर्तव्यं, क्लिष्टकल्पना न कर्तव्येति। अपि चाहेतोर्हेतुतया कथनं प्रसिद्धविरुद्धदूषणं, न तु भूषणम्। न च वाच्यम्, मिथ्याध्यवसितावपि मिथ्यावर्णनं वर्तते इति? कुत इति चेन्मिथ्याध्यवसितौ तु वर्णनीयस्य मिथ्यात्वनिश्चयार्थकमिथ्यासंबन्धस्य मिथ्यारूपतयैव कथनं, न तु सत्यरूपतयेति न तत्र प्रसिद्धविरुद्धदूषणम्। प्राचां लक्षणे कल्पनाशब्दकथने कारणगुणदोषसंबन्धः कार्यान्वयीति बलेनाहेतौ हेतुत्वकल्पनविवक्षा चेदस्य विषयस्य हेतूत्प्रेक्षायामन्तर्भावः। प्रवृद्ध्यंशस्त्वधिकेऽन्तर्भूत इति न केनाप्यंशेन प्रौढोक्तेरलंकारान्तरत्वम्। मम तु मतं, अत्राहेतौ न हेतुकल्पना। हेतोर्वास्तवत्वेन विवक्षणात्। देशकालादिगुणदोषसंबन्धस्य तु बहुधा वस्तूत्पत्तिवृत्तित्वम्। मलयमारुते सौरभ्यं देशस्य हेतुतया, कलिकालमनुजेषु दुराचरणं च कालस्य हेतुतयेत्यादि। अस्यालंकारस्योदाहरणानीदृशान्येव भवन्ति॥

यथा—

"कैलासेन हरेण गाङ्गपयसा कर्पूरपुञ्जेन च
साम्यं ते यशसो वदन्ति कवयस्ते वै परं बालिशाः॥
राकारात्रिषु शारदीषु जनितैर्हंसैश्च मुक्ताफलै-
र्दुग्धाम्भोधिभवैश्च तुल्यमिति मे राजन्मुरारेर्मतम्॥ १॥"

अत्र राजराजेश्वरयशस्यन्यनृपयशोऽपेक्षया श्वैत्याधिक्यं विवक्षितम्। अत उपमानहंसेष्वन्यहंसापेक्षया श्वैत्याधिक्यप्रदर्शनाय हंसानां शरदृतुजनिर्हेतुः कालरूपः। उपमानमुक्ताफलेषु चान्यमुक्ताफलापेक्षया श्वैत्याधिक्यप्रदर्शनाय मुक्ताफलानां क्षीराब्धिजनिर्हेतुर्देशरूपः। अत्र हेतोराधिक्यदर्शनप्रयोजनकत्वाद्गौणत्वम्। अत एवात्र प्रधानतयाऽधिकालंकारः॥ कुवलयानन्दकारेण प्रौढोक्तेरिदमुदाहृतम्—

"कल्पतरुकामदोग्ध्रीचिन्तामणिधनदशङ्खानाम्।
रचितो रजोभरपयस्तेजःश्वासान्तरैरेषः ॥ १ ॥"

कल्पतरुरजः पृथ्वी, कामधेनुपयो वारि, चिन्तामणितेजस्तेजः, कुबेरश्वासो वायुः, शङ्खान्तरमाकाशः। अत्र शङ्खश्च निधिरूपो विवक्षितः। नवनिधिष्वेकः शङ्खनिधिरपि विद्यते। तदुक्तं शब्दार्णवे—

"महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ॥
मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव॥" इति ॥

अस्मिन्नुदाहरणे तु निर्विवादं वाचकलुप्ता हेतूत्प्रेक्षा। अत्र राज्ञो रचनायामपि तान्येव पञ्चमहाभूतानि, यानि सकलसृष्टिकारणभूतानि। तथापि राज्ञो विलक्षणोदारताबलेन कविनोक्तमहाभूतानि हेतुत्वेनोक्तानि। अत्र तादृशोत्प्रेक्षाफलं च राज्ञ उत्कर्षः। फलं च तस्य वस्तुनः स्वरूपं न भवति। यज्ञफलं स्वर्गो यज्ञस्य स्वरूपं न भवति। रसगङ्गाधरकारस्येदं लक्षणम्—

"कस्मिंश्चिदर्थे किञ्चिद्धर्मकृतातिशयप्रतिपिपादयिषया प्रसिद्धतद्धर्मवता संसर्गस्योद्भावनं प्रौढोक्तिः॥" इति॥

आह च सः—

"शशशृङ्गधनुर्लसत्करा
गगनाम्भोरुहमालिकाधराः।
तनयैः सह भाविजन्मनां
तव खेलन्ति नरेन्द्र! वैरिणः" ॥ १ ॥

इत्यादावेकस्य मिथ्यात्वसिद्ध्यर्थं मिथ्याभूतवस्त्वन्तरकल्पनं मिथ्याध्यवसित्याख्यमलंकारान्तरमिति न वक्तव्यम्। प्रौढोक्त्यैव गतार्थत्वात्। "कचाः कलिन्दजातीरतमालस्तोममेचकाः" इत्यादौ प्राचीनकृतप्रौढोक्त्युदाहरणे यथा तमालेषु श्यामत्वातिशयार्थं श्यामत्वाधिकरणीभूतकालिन्दीसंबन्ध उद्भाव्यते, तथा वैरिष्वपि मिथ्यात्वसिद्धये मिथ्यात्वाधिकरणशशशृङ्गादिसंबन्ध इत्यस्यापि सुवचत्वात्। तत्र श्यामतातिशयः, इह तु मिथ्यात्वमात्रं न तु तस्यातिशयः सिद्ध्यतीति वैल-

क्षणं तु न वाच्यम्। तमालस्तोमे प्रमाणान्तरेण सिद्धेऽपि श्यामत्वे कालिन्दीसंसर्गोद्भावनं पुनः श्यामत्वसाधनेनातिशयागूरकमेव स्यात्। वैरिषु तु मिथ्यात्वस्यासिद्धत्वाच्छशशृङ्गादिसंबन्धैर्मिथ्यात्वस्य सिद्धिरित्यार्थसमाजाधीनेयमतिशयसिद्धिर्वैलक्षण्यं न प्रयोजयति" इति ॥ रसगङ्गाधरकारस्यैतत्कथनस्यायमभिप्रायः। तादृशमिथ्यात्वसंबन्धो वैरिणां मिथ्यात्वस्यातिशयार्थमेवेति। मम तु मतं, रसगङ्गाधरकारस्यायं प्रमादः। तमालस्तोमे श्यामतायाः स्वतःसिद्धत्वेन कालिन्दीसंसर्गोद्भावनं तमालस्तोमस्य श्यामत्वातिशये पर्यवस्यति। वैरिषु मिथ्यात्वस्य तु स्वतःसिद्धत्वाभावाच्छशशृङ्गादिसंसर्गोद्भावनं वैरिमिथ्यात्व एव पर्यवस्यति। एतावन्मात्रेणैव च मिथ्याध्यवसित्यलंकारः सिध्यति ॥ अत्र सहृदयहृदयमेव साक्षि ॥ रसगङ्गाधरकारः स्वलक्षणानुसारेण प्रौढोक्तेरिदमुदाहरणं ददौ—

"मन्थाचलभ्रमणवेगवशंवदा ये
दुग्धाम्बुधेरुदपतन्नणवः सुधायाः ॥
तैरेकतामुपगतैर्विविधौषधीभि-
र्धाता ससर्ज तव देव! दयादृगन्तान् ॥ १ ॥"

अत्र दृगन्तेषु न केवलं संजीवकत्वादयोऽमृतमात्रगुणा एव कवेर्बुबोधयिषिताः, अपि तु निखिलजनवशीकारकत्वादयोऽन्येपीति सुधाकणेष्वौषधीसंसर्गो विशेषणतयाऽतिशयार्थमुपात्तः ॥ मम तु मतं, रसगङ्गाधरकारः प्रौढोक्तेः साक्षात्स्वरूपानभिज्ञः। अस्यैतल्लक्षणोदाहरणमुखेन प्रौढोक्तेः स्वरूपप्रदर्शनं प्रमादः। राज्ञो दृगन्तेषु संजीवकत्वाद्यमृतगुणापेक्षया निखिलजनवशीकारकत्वाद्यतिशयस्त्वधिकालंकारस्य विषयः। उक्तगुणार्थं सुधाकणेषु विशेषणतयौषधीसंसर्गोद्भावनं तु हेत्वलंकारः। नास्य लक्षणस्य केनाप्यंशेनालंकारान्तरत्वसाधकत्वम्। मम मतेन त्वस्मिन्नुदाहरणे हेतूत्प्रेक्षालंकारः।

## इति प्रौढोक्तिप्रकरणम् ॥ ६३ ॥

* आर्थसमाजाधीना अर्थसिद्धेत्यर्थः।

# ॥ भङ्गिः ॥



अत्र भङ्गिशब्दार्थो नानाविधशब्दरचनाचातुर्यं विवक्षितम् । उक्तं चिन्तामणिकोषकारेण " नानाविधशब्दरचनावैदग्ध्यविशेषा भङ्ग्य इति व्याख्यातारः " इति ॥ प्राचीना भङ्ग्याख्यमलंकारान्तरं मन्वते । भानुदत्तस्येदं लक्षणम्—

"शब्दस्य नानार्थता भङ्गिः ॥" इति ॥

वृत्तौ लिखति "श्लेषस्य शब्दालंकारत्वात्ततो भेदः" इति ॥ अस्यायमभिप्रायः, यत्र काव्ये विशेष्यद्वयकथनं तयोः प्रसङ्गो वा भवति तद्विशेषणशब्दाश्च नानार्थका भवन्ति तत्रैकवृन्तगतफलद्वयन्यायेन द्वयोरर्थयोराश्लेषाच्छ्लेषालंकारः । अत्र तु वक्ष्यमाणोदाहरणे केवलं संध्याया एव प्रासङ्गिकत्वात्प्रथमं संध्यापक्षैकार्थबोधः । ततश्च शब्दानामनेकार्थतायाः स्त्रीपुंल्लिङ्गत्वादेः सामर्थ्येन च संध्याचन्द्रमसोर्दंपतिभावप्रतीतेर्न श्लेषः ॥

यथा—

"कलावति करं बिभ्रत्यम्बरे लोलतारकम् ॥
वारुणीसंगता संध्या सहसा मानमत्यजत् ॥ १ ॥"

अत्र शब्दानां नानार्थता तु कलावांश्चन्द्रः, कामकलाकुशलश्च । करः किरणः, हस्तश्च । अम्बरमाकाशः, वस्त्रं च । तारका नक्षत्रं, नेत्रकनीनिका च । वारुणी पश्चिमादिक्, मदिरा च । मानं परिमाणं, कोपश्च । मम मते त्वयं समासोक्त्यलंकारः । अभिसारिकानायिकां प्रति सख्या इयमुक्तिः। उद्दीपनत्वार्थं संध्याचन्द्रमसोर्दंपतिभावेन सख्याः संक्षेपेण वर्णनम् । समासोक्तेः साक्षात्स्वरूपमजानानाः प्राचीना इमं विषयं भङ्गिनाम्ना पृथगलंकारं मन्यन्ते । भानुदत्तस्य समासोक्तेरिदं लक्षणोदाहरणम्—

"अभिप्रेतस्य वस्तुनो वस्त्वन्तरेणाभिधानं समासोक्तिः ॥" इति ॥

अत्र संक्षेपस्तु, एकस्य कथने द्वयोः कथनमिति ॥

यथा–

"अपहाय सुवर्णकेतकीं
भ्रमर! प्रस्थितमेव च त्वया ॥
न वपुर्न वयो न वा गुणः
पुरुषं रोद्धुमपि प्रवर्तते ॥ १ ॥"

अत्रोत्तरार्धे दृष्टान्तः। अत्र वाञ्छितवस्तु तु सुन्दररमणीपरित्यागो भ्रमरवृत्तान्तरूपवस्त्वन्तरेणाभिहित इति। मम तु मतं, अत्र प्राचामभिमतः प्रस्तुताङ्कुरालंकारः। स चास्माभिरप्रस्तुतप्रशंसायामन्तर्भावितः ॥ अपि च

"आदाय खड्गं यशवन्तसिंह–
सेनासमक्षं प्रतियान्ति ये तु ॥
सुराङ्गनोरःस्थललग्नगात्राः
स्वपन्ति ते देवपुरे सुखेन ॥ १ ॥"

एवं रचनान्तरेण कथनं तु पर्यायोक्त्यलंकारः ॥

इति भङ्गिप्रकरणम् ॥ ६४ ॥

## ॥ भावः ॥

भावस्त्वभिप्रायः। प्राचीना भावमलंकारान्तरं मन्यन्ते। भोजमहाराज ईदृशं लक्षणोदाहरणमाज्ञापयाति–

"अभिप्रायानुकूल्येन प्रवृत्तिर्भाव उच्यते।
सोद्भेदोऽथ निरुद्भेदश्चैकतश्चाभितश्च सः ॥" इति ॥

स्वाभिप्रायानुसारेण प्रवृत्तिराचरणं भाव इत्यर्थः। स च सोद्भेदः प्रकाशसहितः, निरुद्भेदः प्रकाशरहितः। उभयमप्येकतः सर्वतश्च भवति ॥ तत्र सोद्भेदो यथा–

"गेण्हह पलोएह इमं विअसिअवअणा पिअस्स अप्पेइ ॥
घरिणी सुअस्स पढमुब्भिएणदन्तजुअलं किअं बोरम् ॥ १॥"

अत्र सुतस्य दन्तोद्गमादहमुपभोगयोग्यास्मीति गृहिण्या एवमभिप्रायः प्रकर्षविकाशिनयनतयोद्भिद्यते, न पुनः पत्युरित्येकतः सोद्भेदोयं भावः ॥

निरुद्भेदो यथा—

"सालिवणगोविआए उज्जीवन्ती अपूसविदाइं ।
सव्वङ्गसुन्दरीए वि पहिआ अच्छीइँ पेच्छन्ति ॥ १ ॥"

अत्रातिसौन्दर्येण देवीभ्रान्त्या शालिवनगोपिकामालोकयतां पथिकानां तदक्षिनिरीक्षणेऽयमभिप्रायः, शालिवनतिरस्कारेण देवमानुषयोर्विशेषभूतः पद्भ्यामेव भूमिस्पर्शो भूम्यस्पर्शो वा न लक्ष्यते इति तदक्षिणी एव पश्यामः । यदीयं निमिषति तदा मानुषीयं, यदि न निमिषति तदा देवीयमिति । सर्वाङ्गसुन्दर्या अपि पथिकानामेव जायमानो नेह केनचित्कर्मणोद्भिद्यते इत्येकतो निरुद्भेदोऽयं भावः । अभित इति नायिकानायकयोरुभयोरप्यभिप्रायानुकूलाचरणम् ॥ सोद्भेदनिरुद्भेदयोरभितोभावोदाहरणं तु स्वयमूहनीयम् । मया ग्रन्थगौरवभयान्न लिखितम् । मम तु मतं, सामान्यतयाऽभिप्रायानुकूल्येन प्रवृत्तिस्तु प्राणिमात्रस्य भवतीति तस्या अत्यन्तं लौकिकत्वान्नालंकारार्हत्वम् । अत्र पथिकानामियं नरकन्या देवकन्या वेति नायिकाविषयसंदेहस्तु संदेहालंकारस्य विषयः । महाराजस्य, एकतः सोद्भेदः, अभितः सोद्भेदः, एकतो निरुद्भेदः, अभितो निरुद्भेद इति प्रकारकथनमपि प्रमादः । एषामुदाहरणान्तरयोग्यत्वात् ॥

## ॥ इति भावप्रकरणम् ॥ ६५ ॥



* गृहाण प्रलोकय इमं विकसितवदना प्रियस्य अर्पयति । गृहिणी सुतस्य प्रथमोद्भिन्नदन्तयुगलकृतवचनम् ॥ १ ॥ इति संस्कृतम् ॥

† शालिवनगोपिकाया उज्जीवन्त्याः कीरव्रातान् । सर्वाङ्गसुन्दर्या अपि पथिका अक्षिणी प्रेक्षन्ते ॥ १॥ इति संस्कृतम् ॥

# ॥ भाषासमः ॥



भाषासम इति शब्दसमुदायार्थो भाषासु सदृश इति । अत्र शब्दे रूढिः । भिन्नभाषायां प्रायः शब्दः स्वरूपान्तरमापद्यते । भिन्नभाषाकथनकारणमप्येतदेव । द्वित्रादिभिन्नभाषासु शब्दस्यैकरूपतया स्थितिर्लोकविलक्षणेति मन्वानः साहित्यदर्पणकारो भाषासमनामकं शब्दालंकारमाह । तस्येदं लक्षणम्—

"शब्दैरेकविधैरेव भाषासु विविधास्वपि ॥
वाक्यं यत्र भवेत्सोऽयं भाषासम इतीष्यते" ॥ इति ॥

यथा—

"मञ्जुलमणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे ॥
विरसासि केलिकीरे किमालि धीरे च गन्धसारसमीरे ॥१॥"

एष श्लोकः संस्कृत-प्राकृत-सौरसेनी-प्राच्याऽऽवन्ती-नागराऽपभ्रंशेष्वेकविध एव । मम तु मतं, अत्रानुप्रासश्लेषवल्लोकविलक्षणचमत्कृतिर्नानुभवसिद्धेत्यस्य लोकेऽन्तर्भावः । शब्दस्य परिवर्तनाभावे चमत्काराङ्गीकारे तु प्राचां दिग्दर्शनेन परिणामालंकारप्रतिभटभूतोऽपरिणामालंकारो मन्तव्यः स्यात् । एकभाषावृत्तिशब्दस्य द्वित्रादिभाषासु तेनैव स्वरूपेण वर्तनमित्यंशे चमत्कृतिपर्यवसानाङ्गीकारे च भाषान्तरे स्वरूपान्तरप्राप्तिमच्छब्देभ्योऽस्य शब्दस्याधिक्यादधिकालंकारः । अस्यालंकारगणनारसिकमहाशयस्य नामान्तरेण भाषासमस्य नवीनालंकारतया प्रदर्शनं तु प्रमादः ॥

इति भाषासमप्रकरणम् ॥ ६६ ॥



# ॥ मतम् ॥



मतशब्दार्थः सिद्धान्तः । प्राचीना मतनामकमलंकारान्तरं मन्यन्ते । रुद्रटस्येदं लक्षणोदाहरणम्—

"तन्मतमिति यत्रोक्त्वा वक्तान्यमतेन सिद्धमुपमेयम् ॥
ब्रूयादथोपमानं तथा विशिष्टं स्वमतसिद्धम् ॥ १ ॥" इति ॥

यथा—

"मदिरामदभरपाटलमलिकुलनीलालकालिधम्मिल्लम् ॥
तरुणीमुखमिति यदिदं कथयति लोकः समस्तोऽयम् ॥ १ ॥
मन्येऽहमिन्दुरेषः स्फुटमुदयेऽरुणरुचिः स्थितैः पश्चात् ॥
उदयगिरौ छद्मपरैर्निशातमोभिर्गृहीत इव ॥ २ ॥"

मम तु मतं, एतल्लक्षणोदाहरणानुसारेण त्वयमुत्प्रेक्षालंकारः ॥ उत्प्रेक्षालंकारस्य साक्षात्स्वरूपापरिज्ञानात्प्राचीनानामस्मिन्विषयेऽलंकारान्तरत्वाङ्गीकारस्तु प्रमादः ॥

इति मतप्रकरणम् ॥ ६७ ॥

## ॥ मालादीपकम् ॥

मालादीपकशब्दार्थो दीपकानां मालेति । केचन प्राचीना मालादीपकमलंकारान्तरं मन्यन्ते । काव्यप्रकाशगतकारिकाकारः क्रियादीपकं कारकदीपकं चेति दीपकद्वयमुक्त्वा मालादीपकमाह ॥

तस्येदं लक्षणम्—

"मालादीपकमाद्यं चेद्यथोत्तरगुणावहम् ॥" इति ॥

यथा—

"सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ॥
कोदण्डेन शराः शरैरिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरमला कीर्त्या च लोकत्रयम् ॥ १ ॥"

अत्रैकस्या मिलनरूपक्रियाया अनेकत्र संबन्धो दीपकम् ॥ अत्रो-त्तरोत्तरं गुम्फनान्माला । चन्द्रालोककारस्येदं लक्षणोदाहरणम्—

"दीपकैकावलीयोगान्मालादीपकमिष्यते ॥" इति ॥

यथा—

"स्मरेण हृदये तस्यास्तेन त्वयि कृता स्थितिः ॥"

सर्वस्वकारस्त्वौपम्याभावनिमित्तेन मालादीपकमलंकारान्तरं म-न्यते । विमर्शनीकारोऽपि "अत्रौपम्याभावादस्य दीपकप्रकारत्वं न व-क्तव्यं, दीपकस्यौपम्यजीवितत्वात्" इत्याह ॥ केचन प्राचीना दीपन-मात्रसमानतयेदं दीपकालंकारानन्तरं लक्षयामासुः । अपि चास्मिञ्छृङ्ख-लारीत्या चारुताविशेषोऽस्तीति सर्वस्वकारः शृङ्खलाबद्धालंकारप्रसङ्ग इदं लक्षयामास । रत्नाकरकारोऽत्र शृङ्खलामूलकचमत्कारं मन्वानः शृ-ङ्खलालंकारस्य कारणमाला, एकावली, मालादीपकं चेति प्रकारत्रयमाह । मम तु मतं, अत्र दीपकशृङ्खलयोः संकरः । स च चन्द्रालोकलक्षणेन स्प-ष्टतरः । संकरे च तृतीयनवीनचमत्कारोत्पत्तेरभावात्तस्य नालंकारान्तर-त्वम् । अपि त्वलंकारसमुच्चयरूपत्वात्समुच्चयालंकार एव ॥ अयं च विषयो वक्ष्यमाणसंसृष्टिसंकरप्रकरणे सविस्तरं प्रतिपादयिष्यते । रत्नाक-रमतानुसारेण तु शृङ्खलायाः प्रकारान्तरमपि न भवति । दीपके उपमायां तात्पर्याभाव इति तु दीपकप्रकरण उक्तमस्माभिः ॥

इति मालादीपकप्रकरणम् ॥ ६८ ॥

## ॥ युक्तिः ॥

युक्तिशब्दार्थो योजना । उक्तं चिन्तामणिकोषकारेण "युक्तिर्यो-जनायाम्" इति ॥ प्राञ्चो युक्तिनामकमलंकारान्तरं मन्वते । चन्द्रालोक-कार इदं लक्षणोदाहरणं दर्शयति—

"युक्तिः परातिसंधानं क्रियया मर्मगुप्तये ॥" इति ॥

मर्मगोपनार्थं क्रियया परस्यातिसंधानं वञ्चनं युक्तिरित्यर्थः । अत्रास्मिन् विषयेऽनेन युक्तिनाम्नो रूढिरङ्गीकृता ।

यथा—

"त्वामालिखन्तीं दृष्ट्वाऽन्यं धनुः पौष्पं करेऽलिखत् ॥"

यथावा—

"दंपत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच-
स्तत्प्रातर्गुरुसंनिधौ निगदतस्तस्यातिमात्रं वधूः ॥
कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्चूपुटे
व्रीडार्ता विदधाति दाडिमफलव्याजेन वाग्बन्धनम् ॥ १ ॥"

कुवलयानन्दकारेण व्याजोक्तेरस्याश्चायं भेदोऽभिहितः । व्याजोक्तावाकारगोपनम्, अत्र त्वाकारेणान्यगोपनमिति । मम तु मतं, आकारस्य गोपनं, आकारेणान्यगोपनं, वचनेन गोपनं, क्रियया गोपनमिति किञ्चिद्वैलक्षण्यं त्वपन्हुतेरुदाहरणान्तरत्वसाधकम् । न त्वलंकारान्तरत्वसाधकम् ॥

इति युक्तिप्रकरणम् ॥ ६९ ॥

---

## ॥ ललितम् ॥

---

ललितशब्दार्थ ईप्सित इति । उक्तं चिन्तामणिकोषकारेण "ललितमीप्सिते" इति ॥ प्राञ्चो ललितमलंकारान्तरं मन्वते । चन्द्रालोकस्येदं लक्षणोदाहरणम्—

"वर्ण्ये स्याद्वर्ण्यवृत्तान्तप्रतिबिम्बस्य वर्णनम् ॥
ललितम् ॥" इति ॥

अस्य मते वर्णयितुमिष्टस्य प्रतिबिम्बे ललितशब्दस्य रूढिः ॥

यथा—

"अबुधा निर्गते नीरे सेतुमेषा चिकीर्षति ॥"

अत्र नायकगमनानन्तरं कलहान्तरिता नायिका नायकप्रसादार्थं यत्नयतीति कथनीये तत्त्यागपूर्वकं तत्प्रतिबिम्बभूतो जलनिर्गमनानन्तरं सेतुबन्धनप्रयासः सख्या उक्तः ॥

यथावा—

"नान्यास्ति किं भूमितले सुरूपा
सीतैव वा किं भवतोऽनुरूपा ॥
आकर्षता चन्दनशाखिशाखां
प्रबोधितोऽयं भवता फणीन्द्रः ॥ १ ॥"

अत्र मन्दोदर्या रावणं प्रति सीताहरणमातन्वता त्वया विनाशकारी रामचन्द्रो रोषित इति कथनीये तत्त्यागपूर्वकं तत्प्रतिबिम्बभूत उक्तवृत्तान्त उक्तः॥ रसगङ्गाधरकारस्तु ललितालंकारो निदर्शनालंकारान्नातिरिच्यते इत्याह । अस्यैवं कथनं च निदर्शनालंकारस्य साक्षात्स्वरूपापरिज्ञानात् । निदर्शनायाः साक्षात्स्वरूपं त्वस्माभिस्तत्प्रकरणे स्फुटतरमुक्तम् । मम तु मतं, वर्णयितुमिष्टस्य वर्णनाभावपूर्वकं तत्प्रतिबिम्बस्य कथनं तु पर्यायोक्त्यलंकारः । प्रतिबिम्बस्य बिम्बप्रकारान्तरत्वात् ॥

इति ललितप्रकरणम् ॥ ७० ॥

# ॥ वर्द्धमानकम् ॥

वृधुधातुर्वृद्ध्यर्थकः । वर्धमानशब्दार्थो वर्तमानव्यापारानुकूलवृद्धिमानिति । ततश्च स्वार्थिककप्रत्ययः । प्राञ्चो वर्धमाननामकमलंकारान्तरं मन्यन्ते । रत्नाकरकार इमे लक्षणोदाहरणे दर्शयति—

"रूपधर्माभ्यामाधिक्यं वर्द्धमानकम् ॥" इति ॥

क्रमेण यथा—

"किं छत्रं किं नु रत्नं तिलकमथ तथा कुण्डलं कौस्तुभो वा
चक्रं वा वारिजं वेत्यमरयुवतिभिर्यद्बलिद्वेषिदेहे ॥

ऊर्ध्वं मौलौ ललाटे श्रवसि हृदि करे नाभिदेशे च दृष्टं
पायात्तद्वोऽर्कबिम्बं स च दनुजरिपुर्वर्द्धमानः क्रमेण ॥ १ ॥"

अत्र भगवतो वामनस्य शरीरावस्थायाः स्वरूपस्याधिक्यमर्थावृद्धेरुदयः ॥

"अतसीकुसुमप्रभं मुखे
तदनु त्वत्कचमेचकद्युति ॥
अथ बालतमालमांसलं
प्रसृतं संप्रति सर्वतस्तमः ॥ १ ॥"

अत्र प्रसङ्गविध्वंसमानमोचनोपायकर्त्र्याः सख्या उक्तावारम्भेऽतसीकुसुमसमनीलता. ततः कामिनीकचसदृशनीलता, पुनश्च सघनतमालतुल्यनीलतेत्येवं नीलधर्मस्याधिक्यमर्थावृद्धेरुदयः । रत्नाकरकारः

"राज्ये सारं वसुधा वसुधायां पुरं पुरे सौधम् ॥"

इत्युदाहरणे उत्तरोत्तरसारतारूपधर्मस्याधिक्यात् "उत्तरोत्तरमुत्कर्षः सारः" इति लक्षणलक्षितसारालंकारो वर्धमानकेऽन्तर्भूत इति न पृथक्" इत्याह । वर्धमानके सारस्यान्तर्भावयोग्यत्वम् । न तु सारालंकारे वर्धमानकस्यान्तर्भावयोग्यता । अल्पविषये महाविषयस्यान्तर्भावाभावयोग्यत्वात् । अपि च विमर्शनीकारः "सारालंकारे वर्धमानकालंकारमन्तर्भावयन्वदति "यथायथमारोहक्रमेण धाराधिरूढतयोत्कर्षप्रतिपादनं स्यादिति सारालंकारबीजम् । सारालंकारस्योत्तरोत्तरस्योत्कर्षोपनिबद्धत्वादन्वर्थत्वम् । सार एकस्यैव वस्तुनो बहूनां वा स्यादित्यस्य द्वैधम् । उत्तरोत्तरमुपचयः स्वरूपेण धर्मेण वा भवतीत्यस्य चातुर्विध्यम् । क्रमेण यथा—

" किं छत्रं किं नु रत्नं तिलकमथ—"

इत्यत्रैकस्यैव त्रिविक्रमस्य स्वरूपेणोत्तरोत्तरमुत्कर्षः ॥

" अतसीकुसुमप्रभं मुखे—"

इत्यत्रैकस्यैव तमसो धर्मेणोत्तरोत्तरमुत्कर्षः ॥

"अत्युच्चाः परितः स्फुरन्ति गिरयः स्ववासिशैलस्तत-

स्तस्माद्विष्णुपदं ततः किमपरं स्यादन्यदत्युन्नतम् ॥
तस्मात्सर्वत एव साधुहृदयान्युत्तुङ्गभङ्गीनि त-
त्कस्मादुन्नतये तवार्थिपदवीं चिन्तामणे!तन्वते ॥ १ ॥"

अत्रानेकेषां पूर्वपूर्वापेक्षया स्वरूपेणोत्तरोत्तरमुत्कर्षः ॥

"कुक्षेः कोटर एव कैटभरिपुर्धत्ते त्रिलोकीमिमां
तामप्यूढभरो बिभर्ति तमपि प्रीतो भुजङ्गेश्वरः ॥
श्रीकण्ठस्य स कण्ठसूत्रमभवद्देव! त्वया तं हृदा
बिभ्राणेन परेषु पौरुषकथा श्रीकर्ण! निर्नाशिता ॥ १ ॥"

अत्र कैटभारिप्रभृतीनां पौरुषाख्यधर्मेणोत्तरोत्तरमुत्कर्षः ॥" इति ॥

वर्धमानकालंकारात्सारालंकारं पृथङ्मन्वानो रसगङ्गाधरकारः

"पङ्क्तिरूपेण निबद्धानामर्थानां पूर्वपूर्वस्योत्तरोत्तरस्मिन्नुत्तरोत्तरस्य वा पूर्वपूर्वस्मिन्संसृष्टत्वं शृङ्खला ॥"

इति शृङ्खलालंकारलक्षणं कथयन्सारालंकारस्य

"सैव संसर्गस्योत्कृष्टापकृष्टभावरूपत्वे सारः ॥"

इति शृङ्खलामूलकसारालंकारं लक्षयन्वदति "एकविषयिणी शृङ्खला न चारुताहेतुरिति शृङ्खलानुप्राणितः सारोऽप्येकस्मिन्विषये न चारुताहेतुः। शृङ्खलायां वस्तुस्वरूपभेदस्यापेक्षणादवस्थाकृतभेदे शृङ्खला न भवति। "किं छत्रं किं नु रत्नम्"—इत्यत्र वृद्धौ वामनस्यावस्थाभेदः। "अतसीकुसुमप्रभं मुखे" इत्यत्र वृद्धौ तमसोऽप्यवस्थाभेदः। न तु वस्तुनः स्वरूपभेदः। ततोऽत्र शृङ्खलान्यायाभावाच्छृङ्खलामूलकसारालंकारस्य वर्धमानके नान्तर्भावः। अपि तु सारवर्धमानकौ पृथगलंकारौ" इति। रसगङ्गाधरकारश्च सारालंकारस्येदमुदाहरणमदात्—

"संसारे चेतनास्तत्र विद्वांसस्तत्र साधवः।
साधुष्वपि स्पृहाहीनास्तेषु धन्या निराशयाः ॥ १ ॥"

महाविषयेऽल्पविषयस्यान्तर्भावो भवति। न त्वल्पविषये महाविषयस्यान्तर्भाव इति तु सर्वेषां मतम्। तथापि सारवर्धमानकयोरितरेत-

रस्मिन्नन्तर्भावे विवादः। रत्नाकरकारो वदति "उत्तरोत्तरमुत्कर्षः सारः" इति लक्षणलक्षितसारस्येदमुदाहरणम्—

"राज्ये सारं वसुधा वसुधायां पुरं पुरे सौधम् ॥" इति ॥

अत्रोत्तरोत्तरसारताया अर्थादुत्कर्षताधर्मस्याधिक्यादस्य वर्धमानकेऽन्तर्भावः। कुत इति चेत्स्वरूपाधिक्यं, धर्माधिक्यं, उत्कर्षाधिक्यं चेति सर्वेषां विशेषरूपत्वादल्पविषयत्वम्। वृद्धेरुदयस्य सामान्यरूपत्वान्महाविषयत्वम्। सारालंकारे उत्कर्षस्योत्तरोत्तराधिक्यं तु राज्ये वसुधोत्कृष्टं वस्तु, वसुधायां पुरमुत्कृष्टं वस्त्वित्यादि। एवमुत्कृष्टेषूत्कृष्टता तु परंपरयाऽऽधिक्यम्। विमर्शनीकारश्चाह "आरोहक्रमेण धाराधिरूढतयोत्कर्षप्रतिपादनं सारालंकारस्य बीजमिति सारशब्दोऽत्रान्वर्थकः" इति॥ तात्पर्यमिदं, सारशब्दः सृधातोर्निष्पन्नः। सृधातुर्गत्यर्थकः। सारशब्दार्थः सरणं, गतिरिति यावत्। अत्र राज्ये वसुधा सारं, वसुधायां पुरं सारमित्यादिरीत्या सरणम्। वर्धमानकेऽपि च सरणम्। स्वरूपाधिक्यस्य सरणं, धर्माधिक्यस्य सरणं, उत्कर्षाधिक्यस्य च सरणमिति सर्वेषां विशेषरूपतयाऽल्पविषयत्वम्। सरणस्य च सामान्यरूपतया महाविषयत्वम्। अत एव वर्धमानकस्य सारेऽन्तर्भावः।" इति॥ रसगङ्गाधरकारश्च कथयति "एकविषये शृङ्खलाया अचारुत्वात्तदनुप्राणितः सारो न चारुतां धत्ते। तस्याः स्वाभाविकभेदापेक्षित्वेनावस्थादिकृतभेदेऽनुल्लासात्।" इति॥ अस्यायमभिप्रायः, शृङ्खलालंकारो लोकशृङ्खलान्यायेनाङ्गीकृतः। शृङ्खला चानेकवलयात्मिकैव चारुताधायिका, न त्वेकवलयात्मिकापि। उत्कर्षरूपः सारोपि परंपरामन्तरा न चारुताधायकः। शृङ्खलायामेकवलयाद्वलयान्तरभेदः स्वरूपभेदो न त्ववस्थाकृतभेदः। एवं सारेप्युत्कर्षस्य स्वरूपभेदो नत्ववस्थाकृतभेद इति सारस्य शृङ्खलामूलकत्वम्। वर्धमानके चावस्थाकृतभेदो न तु स्वरूपभेदः। तमसः पूर्वं तावदतसीकुसुमसमश्यामत्वं, ततश्च कामिनीकचसदृशश्यामत्वमित्यादीति वर्धमानकस्य न शृङ्खलामूलकत्वम्। अनया युक्त्या सारवर्धमानकालंकारयोः पृथक्त्वमिति। मम तु मतं, अस्मिन् विषये एषां त्रयाणामपि प्रमादः। सरणं न सारालंकारस्य स्वरूपम्। अत्र सारशब्दस्य श्रेष्ठांशवाचकत्वात्। एकसारादपि सारस्यालंकारता सिद्ध्यतीति चतुर्थाकृतौ सारालंकारप्रकरणे स्फुटतरमुक्तम्।

वर्धमानके सरणांशस्य न चमत्काराधायकत्वं, अपि त्वाधिक्यांशस्येति तस्याधिकेऽन्तर्भावः। किं चात्र परंपरांशे शृङ्खलायाश्चमत्कार इतीदृशस्थलेऽधिकशृङ्खलयोः संकरः। संकरस्यालंकारसमुच्चयरूपत्वात्समुच्चयालंकार इत्यग्रे स्फुटीभविष्यति। दुरूहत्वादिदं सूक्ष्मया दृष्ट्याऽवधारणीयम् ॥

इति वर्द्धमानकप्रकरणम् ॥ ७१ ॥



## ॥ विकल्पाभासः ॥



विकल्पस्याभासं केचन प्राचीना अलंकारान्तरं मन्यन्ते। रत्नाकरकारस्येदं लक्षणोदाहरणम्—

"विकल्पितयोरेकत्र तात्पर्येच्छा विकल्पाभासः ॥" इति ॥

यथा—

"आपदां दर्शितः पन्था इन्द्रियाणामसंयमः।
तज्जयः संपदां मार्गो येनेष्टं तेन गम्यताम् ॥ १ ॥"

इन्द्रियजयस्य संपन्मार्गत्वादिन्द्रियजये एवात्र वक्तुस्तात्पर्यम्। विकल्पस्त्वाभासरूपः। मम तु मतं, आभासो यस्य कस्यापि भवतु, तत्र प्रधानचमत्कारस्त्वाभासस्यैव। आभासोऽनेकेषां पदार्थानां भवतीति प्रतिपदार्थमाभासस्य पृथगलंकारत्वमयुक्तमित्यस्याभासेऽन्तर्भावः ॥

॥ इति विकल्पाभासप्रकरणम् ॥ ७२ ॥



## ॥ विकस्वरः ॥



विकस्वरशब्दार्थो विकसनशील इति। उक्तं चिन्तामणिकोषका-

रेण "विकस्वरो विकसनशीले" इति ॥ प्राञ्चो विकस्वरनामकमलंकारान्तरं मन्यन्ते । चन्द्रालोककारस्येदं लक्षणोदाहरणम्—

"यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः ॥" इति ॥

यत्र कस्यचिद्विशेषस्य समर्थनार्थं सामान्यं विन्यस्य तत्प्रसिद्धावप्यपरितुष्यता कविना तत्समर्थनाय पुनर्विशेषान्तरमुपमानरीत्याऽर्थान्तरन्यासविधया वा विन्यस्यते तत्र विकस्वरालंकार इत्यर्थः । अत्र विकासन्यायेन विकस्वरनामसंगतिः । विकासन्यायश्च विशेषस्य सामान्येन समर्थनं कृत्वा पुनः सामान्यस्य समर्थनम् ॥

क्रमेण यथा—

"अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम् ॥
एको हि दोषो गुणसंनिपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ १ ॥"

इदमुपमानरीत्या विशेषान्तरन्यासस्योदाहरणम् ॥

"कर्णारुन्तुदमन्तरेण रणितं गाहस्व काक! स्वयं
माकन्दं मकरन्दशालिनमिह त्वां मन्महे कोकिलम् ॥
धन्यानि स्थलवैभवेन कतिचिद्वस्तूनि कस्तूरिकां
नेपालक्षितिपालभालतिलके पङ्के न शङ्केत कः ॥ १ ॥"

इदमर्थान्तरन्यासरीत्या विशेषान्तरन्यासस्योदाहरणम् । मम तु मतं "अनन्तरत्नप्रभवस्य—" इत्युदाहरणे प्रथमविशेषार्थं प्रति सामान्यार्थो हेतुः । सामान्यार्थोत्तरवर्ती विशेषार्थश्चोदाहरणालंकारस्य दृष्टान्तालंकारस्य वा विषयः ॥ "कर्णारुन्तुदमन्तरेण—" इत्यत्र दृष्टान्तालंकारः । विकस्वरोदाहरणेषु प्रायो दृष्टान्तोदाहरणालंकारावेव भवतः । विकस्वरो न पृथगलंकारः । विकासांशस्तु विकासालंकारस्य विषयः ॥

॥ इति विकस्वरप्रकरणम् ॥ ७३ ॥



# ॥ वितर्कः ॥

तर्कशब्दार्थ ऊहः । व्युपसर्गोपि तदर्थकः । तथा च वितर्कः, ऊह इति पर्यायान्तरम् । प्राचीना वितर्कमलंकारान्तरं मन्यन्ते । भोजमहाराज इदं लक्षणमाज्ञापयति—

"ऊहो वितर्कः संदेहनिर्णयान्तरधिष्ठितः ॥
द्विधाऽसौ निर्णयान्तश्चाऽनिर्णयान्तश्च कीर्त्यते॥"इति॥

क्रमेण यथा—

"अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ॥
कृतान्तः किं साक्षान्महिषवदनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥ १ ॥"

"इन्द्रो यदि स्यात्क्व सहस्रनेत्रता
विष्णुर्यदि स्यात्क्व चतुर्भुजं वपुः ॥
ईशो यदि स्यात्क्व नु भाललोचनं
श्येनध्वजोऽयं यशवन्तभूपतिः ॥ २ ॥"

पूर्वोदाहरणे मध्ये मध्ये निश्चयः, मार्तण्डो नेत्यादिः । तथाप्यन्ते राजराजेश्वरोऽयमिति तु न निश्चयः । उत्तरोदाहरणे तु राजराजेश्वरोऽयमित्यन्ते निश्चयः । काव्यप्रकाशगतकारिकाकारादीनामयं सिद्धान्तः, भेदोक्तिसंदेहोऽपि संदेहस्यैव प्रकार इति । भोजमहाराजस्य सिद्धान्तस्तु त्रिशङ्कुवत्संदेहनिश्चययोर्मध्यवर्ती तृतीय एवायं संदेहनिश्चयात्मकत्वाभावाद्वितर्करूपः पृथगलंकार इति । मम तु मतं, काव्यप्रकाशगतकारिकाकारादीनां सिद्धान्तः समीचीनः । एतादृशस्थले संदेहस्यैव प्रधानतया चमत्कारकारित्वात् । उक्तवितर्कस्य चानिश्चयात्मकतया संदेहरूपत्वात् । आह चिन्तामणिकोषकारः "ऊहो विमर्शात्मकतर्के । विमर्शः संशयात्मिकायां वृत्तौ" इति ॥ रत्नाकरकारस्येदं लक्षणम्—

"संभावितसंभाव्यमानापोहो वितर्कः" इति ॥

उक्तोदाहरणद्वयं तु संभावितापोहस्य ॥

संभाव्यमानापोहो यथा—

"गतं तिरश्चीनमनूरुसारथेः
प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ॥
पतत्यधो धाम विसारि सर्वतः
किमेतदित्याकुलमीक्षितं जनैः ॥ १ ॥"

विहायसाऽऽगच्छतो नारदस्य वर्णनम् । पूर्वोदाहरणयोः संभावितापोहस्तु राजराजेश्वरे मार्तण्डादीनाशङ्क्य पुनश्च तदपोहः । "गतं तिरश्चीनम्—" इत्युदाहरणे संभाव्यमानापोहश्च सूर्यादिशङ्कायाः संभवे तदपोहः ॥ एवं चापोहे निराकरणे पर्यवसाने स्वाक्षेपालंकारः ।

इति वितर्कप्रकरणम् ॥७४॥



## ॥ विधिः ॥



विधिशब्दार्थो विधानम् । प्रतिषेधालंकारस्य प्रतिद्वन्द्विभावे प्राञ्चो विध्याख्यमलंकारं मन्यन्ते । चन्द्रालोककारः परमतेनेदं लक्षणमाह—

"सिद्धस्यैव विधानं यत्तदाहुर्विध्यलंकृतिम् ॥" इति ॥

वृत्तौ लिखति— "सम्यक्प्रकारेण ज्ञातस्य विधानं निरर्थकत्वाद्बाधितं सदर्थान्तरगर्भीकरणेन चारुतरं सदलंकारपदवीं प्राप्नोति ॥" इति

यथा—

"पञ्चमोदञ्चने काले कोकिलः कोकिलो भवेत् ॥"

अत्र कोकिलस्य कोकिलत्वविधानं न कोकिलस्य कोकिलत्वपरिज्ञानार्थकम्, अपि तु मधुरपञ्चमध्वनिशालितया सकलजनहृद्यत्वप्रतीत्यर्थकम् । तच्च "पञ्चमोदञ्चने" इति कालविशेषणेनाविष्कृतम् ॥

यथावा—

"त्रुट्यन्ति शीर्षाणि कबन्धयूथा-
श्चोत्थाय युद्ध्यन्ति रणाङ्गणेषु ॥
तस्मिन्क्षणे श्रीयशवन्तयोधा
योधा भवन्तीति वचः कवीनाम् ॥ १ ॥"

अत्र राजराजेश्वरभटानां पुनर्भटत्वविधानं खेलने नैषां भटत्वम्। अपि तु रणाङ्गणे इति विशेषप्रतिपादनार्थकम्। प्राञ्च आक्षेपालंकारे विधिनिषेधयोराभासत्वं, इह तु वास्तवत्वात्स्थिरत्वमित्यनयोर्भेदमाहुः। मम तु मतं, इतरसमये कोकिलत्वादेर्निषेधविवक्षा चेदाक्षेपालंकार एव। तत्तदर्हसमये तत्तत्कार्यविधानविवक्षा चेदस्याज्ञातज्ञापके विधावन्तर्भावः॥

॥ इति विधिप्रकरणम् ॥ ७५ ॥

## ॥ विध्याभासः ॥

विधेराभासं प्राञ्चो विध्याभासाख्यमलंकारान्तरं मन्वते। रत्नाकरकारस्येदं लक्षणोदाहरणम्—

"अनिष्टविधाने विध्याभासः॥" इति ॥

यथा—

"गच्छ गच्छसि चेत्कान्त! पन्थानः सन्तु ते शिवाः ॥
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ १ ॥"

अत्र नायकप्रवासस्य नायिकाया अनिष्टत्वाद्विधाने न तात्पर्यम्, अतस्तस्य भानमात्रम्। मम तु मतं, ईदृशाभासानां धुरंधराभिताभासेऽन्तर्भाव इति ॥

॥ इति विध्याभासप्रकरणम् ॥ ७६ ॥

# ॥ विनोदः ॥



अत्र विनोदशब्दार्थोऽपनोदः। तदुक्तं चिन्तामणिकोषे "विनोदोऽपनोदे। अपनोदनं दूरीकरणे" इति॥ केनापि निमित्तेनानन्दपूर्वकसमयनिर्गमने विनोदशब्दो रूढः। प्राचीना विनोदाख्यमलंकारान्तरमङ्गीकुर्वन्ति। रत्नाकरकारस्येदं लक्षणोदाहरणम्—

"अन्यासङ्गात्कौतुकविनोदो विनोदः॥" इति॥

वृत्तौ लिखति—"असंनिहितेऽनुभूते, अननुभूतेऽपि वाऽभिलष्यमाणेऽर्थे प्रतिच्छन्दसदृशादिवस्त्वन्तरानुभवात्मकादन्यासङ्गात्कौतुकातिवाहनं विनोदः॥" इति॥

क्रमेण यथा—

"कोपादपावृत्तमुखीषु यत्र
प्रियासु गोत्रस्खलनेन यूनाम्॥
विनोदहेतुर्मणिभित्तिभागा
स्तद्भूमिकालम्बनतो भवन्ति॥ १॥"

अत्रानुभूतानां प्रियामुखानां पराङ्मुखत्वेऽपि युवभिस्तत्प्रतिबिम्बयुक्तमणिभित्तिदर्शनेन विरहसमय आनन्दपूर्वकमतिवाहितः॥

"मुखाय श्रद्धालुः सरसिरुहमैक्षिष्ट विकचं
कटाक्षेभ्यो रज्यन्नचकमत पङ्क्तीर्मधुलिहाम्॥
वियोगे गौराङ्ग्या भुजलतिकयोः किंच रसिको
नृपस्तोयाधारेष्वभिनवमृणालीरभजत॥ १॥"

अत्र गौराङ्ग्याः पराङ्मुखत्वेनानुभूतस्य मुखादेरदर्शने तत्सदृशसरसिजाद्यवलोकनेनोत्कण्ठातिवाहनम्॥

"णँरणाह! तुज्झ कित्तिप्पवाहमवलोइऊण दीहअरम्॥

* नरनाथ! तव कीर्तिप्रवाहमवलोक्य दीर्घतरम्। अस्माभिरद्य गमिता क्षीरोदधिदर्शनोत्कण्ठा॥ १॥ इति सस्कृतम्॥

अम्माहिँ अज्ज गमिआ छीरोअहिदंसणोक्कण्ठा ॥ १ ॥"

अत्रानुभूतस्य क्षीरोदधे राज्ञः कीर्तिप्रवाहदर्शनेनोत्कण्ठाया अतिवाहनम्। वृत्तावादिपदात्संदेशश्रवणचिन्तनादिभिः प्रियावियोगेऽप्यानन्दपूर्वकं समयातिवाहनोदाहरणानि स्वयमूह्यानि। मम तु मतं, वस्त्वन्तरदर्शनहेतुकविनोदस्य तु प्रतिमायामन्तर्भावः। संदेशश्रवणहेतुकविनोदस्य च प्रत्यक्षेऽन्तर्भावः। चिन्ताहेतुकविनोदस्य च चिन्तासंचारिरूपतया नालंकारत्वम्। विनोदः कथमप्यलंकारान्तरत्वं नार्हति ॥

॥ इति विनोदप्रकरणम् ॥ ७७ ॥

## ॥ विपर्ययः ॥

विपर्ययो विपरीतभावः। प्राञ्चो विपर्ययमलंकारान्तरं मन्यन्ते। रत्नाकरकारस्येदं लक्षणोदाहरणम्—

"धर्मधर्मिभावस्य धर्माणां वा विनिमयो विपर्ययः॥" इति ॥

यथा—

"काचो मणिर्मणिः काचो येषां तेऽन्ये हि देहिनः ॥
सन्ति ते सुधियो येषां काचः काचो मणिर्मणिः ॥ १ ॥"

अत्र पूर्वं तावत्काचधर्मिणि मणेर्धर्मरूपता, अनन्तरं च मणिधर्मिणि काचस्य धर्मरूपतेति धर्मधर्मिभावस्य वैपरीत्यम् ॥

"विपर्ययस्तत्र बभूव कान्ता-
बिम्बोष्ठरागाञ्जनपुञ्जयोगात् ॥
रक्ताम्बुजत्वं दधुरुत्पलानि
पद्मानि नीलोत्पलतामवापुः ॥ १ ॥"

अत्र रक्तोत्पलतानीलोत्पलतारूपधर्ममात्रविपर्ययः ॥

यथा वा—

"अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः ॥

मार्गणौघः समायाति गुणा यान्ति दिगन्तरम् ॥ १ ॥"

अन्यधनुर्धारिणां मार्गणा बाणा यान्ति, गुणा मौर्व्य आयान्ति। अस्य तु धनुर्धारिणो नृपस्य मार्गणा याचका आयान्ति, उदारतादयो गुणाश्च यान्ति व्याप्नुवन्तीति क्रियारूपधर्मविपर्ययः। मम तु मतं, नामार्थानुसारेण गन्तुरागमनमित्येतादृशविपर्ययपर्यवसाने त्वस्य परिणामेऽन्तर्भावः। अन्यथाभावस्य विद्यमानत्वात्। विनिमये विश्रान्तौ त्वन्योन्यालंकारः। वैचित्र्यविवक्षायां च विचित्रालंकारः। अत्र प्रथमोदाहरणेऽन्योन्यं, उत्तरोदाहरणयोश्च विचित्रालंकारः। न त्वलंकारान्तरम् ॥

॥ इति विपर्ययप्रकरणम् ॥ ७८ ॥

## ॥ विभावना ॥

प्राचीना विभावनामलंकारान्तरं मन्यन्ते ॥ "विभाव्यते* कारणान्तरमस्याम्" इति व्युत्पत्तिं कुर्वतो भगवतो वेदव्यासस्येदं लक्षणम्—

"प्रसिद्धहेतुव्यावृत्त्या यत्किञ्चित्कारणान्तरम्।
यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ॥" इति ॥

अत्र भावनाशब्दार्थः कल्पना। उक्तं चिन्तामणिकोषकारेण "भावना कल्पनायाम्" इति ॥ कल्पनायाश्च कारणान्तरे रूढिरङ्गीकृता। दण्ड्याचार्यो भोजमहाराजश्चेदमेव लक्षणमाहतुः ॥

क्रमेण यथा—

"अपीतक्षीबकादम्बमसंमृष्टामलाम्बरम् ॥
अप्रसादितशुद्धाम्बु जगदासीन्मनोहरम् ॥ १ ॥"

मत्तताया मधुपानं, अम्बुशुद्धेः कतकाद्यौषधं, अमलतायाश्च प्रक्षालनमिति प्रसिद्धकारणानि। अत्र तेभ्य ऋतेपि कार्योत्पत्तिरिति कारणान्तरजिज्ञासायां शरदृतुरूपकारणान्तरस्य विभावना ॥

* यत्र रचनायां कारणान्तरस्य विशेषेण भावना कल्पना भवति सा विभावनेत्यर्थः ॥

"अनञ्जिताऽसिता दृष्टिर्भ्रूरनावर्जिता नता ॥
अरञ्जितोऽरुणश्चायमधरस्तव सुन्दरि! ॥ १ ॥"

दृष्टेरसितताया अञ्जनं, भ्रूनमनस्याकर्षणं, अधरारुणतायाश्च रञ्जनमिति प्रसिद्धकारणानि। अत्र तेभ्य ऋतेपि नयनादावसिततादिकार्योत्पत्तिरिति कारणान्तरजिज्ञासायां विरञ्चिरचनारूपस्वभावस्य विभावना। कारणं विना कार्योत्पत्तिर्विरोध इति विरोधपरिहारार्थं कारणान्तरविवक्षेति प्राचां सिद्धान्तः। तमेव दण्ड्याचार्यः कारिकयाह—

"यदपीतादिजन्यं स्यात्क्षीबत्वाद्यन्यहेतुजम् ॥
अहेतुकं च तस्येह विवक्षेत्यविरुद्धता ॥ १ ॥" इति ॥

सर्वस्वस्येदं लक्षणम्—

"कारणाभावे कार्योत्पत्तिर्विभावना ॥" इति ॥

सर्वस्वकारोऽपि वृत्तावाह "विरोधपरिहारार्थं कारणान्तरस्याक्षेपः" इति। रत्नाकरकारादयोऽपि वेदव्यासानुसारिणः। सर्वस्वकार उक्तनिमित्ताऽनुक्तनिमित्तेति विभावनायाः प्रकारद्वयमाह ॥

क्रमेण यथा—

"असंभृतं मण्डनमङ्गयष्टे-
रनासवाख्यं करणं मदस्य ॥
कामस्य पुष्पव्यतिरिक्तमस्त्रं
बाल्यात्परं साऽथ वयः प्रपेदे ॥ १ ॥"

अत्र नववयः कारणान्तरमुक्तम् ॥

" अनञ्जिताऽसिता दृष्टिः—"

इत्यत्र स्वभावोऽनुक्तः। रत्नाकरकारोऽनुक्तनिमित्तायाश्चिन्त्यानिमित्ताऽचिन्त्यानिमित्तेति भेदद्वयमाह ॥

क्रमेण यथा—

"तनोतु भूतिं दहतादघानि
स शूलिनो लोचनपावको वः ॥
धूमानभिज्ञोऽपि रतेरजस्र-

मश्रुस्नुतेर्योऽजनि सूत्रधारः ॥ १ ॥"

अत्र धूमं विनाऽश्रूत्पत्तिरूपकार्ये मदनदहनरूपं कारणान्तरमनुक्तम् । तच्च प्रसिद्धत्वाच्चिन्त्यम् ॥

"निरुपादानसंभारमभित्तावेव तन्वते ॥
नमस्तस्मै जगच्चित्रकलाश्लाघ्याय शूलिने ॥ १ ॥"

अत्र भित्तिं विना चित्रनिर्मितिरूपकार्ये कारणान्तरमनुक्तम् । तच्चाचिन्त्यम् । चिन्त्यनिमित्तास्थले निमित्तं स्वरूपेण चिन्तनविषयो भवति । अचिन्त्यनिमित्तास्थले तु "स्यादस्य कारणं किञ्चित्" इति सामान्यरूपेण चिन्तनाविषयत्वम् । न तु विशेषस्वरूपेणेति भेदः । मम तु मतं, कारणान्तराक्षेपांशस्त्वर्थविधेः प्रकारो न त्वलंकारः । प्रसिद्धकारणस्याक्षिप्तकारणस्य चोभयोरपि हेत्वलंकारविषयतेति तादृशविभावनाया हेतावन्तर्भावः । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ॥" इति ॥

काव्यप्रकाशगतकारिकाकारेण कारणान्तराक्षेपो नोक्तः । अस्य मते "विगता भावना यस्यां सा विभावना" इति विभावनानामार्थः । अत्र वीत्युपसर्गो गतार्थे । भावनाशब्दार्थो भवनानुकूलव्यापारः । निष्कृष्टार्थस्तु कारणाभाव इति । चन्द्रालोककारो विभावनायाः षाड्विध्यमाह ॥

तत्र प्रथमा—

"विभावना विनापि स्यात्कारणं कार्यजन्म चेत् ॥" इति ॥

यथा—

"अप्यलाक्षारसासिक्तं रक्तं त्वच्चरणद्वयम् ॥"

अत्र लाक्षारसासेकरूपकारणाभावेऽपि रक्तिमकार्योत्पत्तिः ॥

द्वितीया—

हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता ॥" इति ॥

यथा—

"अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः ॥"

अत्र जगज्जये साध्ये हेतूनामस्त्राणामसमग्रत्वं तीक्ष्णत्वादिगुणवैकल्यम् ।

तृतीया—

"कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके ॥" इति ॥

यथा—

"नरेन्द्रानेव ते राजन्दशत्यसिभुजङ्गमः ॥"

अत्र नरेन्द्रा विषवैद्याः सर्पदंशप्रतिबन्धकमन्त्रौषधिशालिनः श्लेषेण गृहीता इति सत्येव प्रतिबन्धके कार्योत्पत्तिः ॥

चतुर्थी—

"अकारणात्कार्यजन्म चतुर्थी स्याद्विभावना ॥" इति ॥

यथा—

"शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतम् ॥"

अत्र शङ्खत्वेन कमनीयः कामिनीकण्ठस्तन्त्रीनिनादत्वेन तद्गीतं चाध्यवसीयते इत्यकारणात्कार्यजन्म ॥

पञ्चमी—

"विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावना ॥" इति ॥

यथा—

"शीतांशुकिरणास्तन्वि ! हन्त संतापयन्ति माम् ॥"

अत्र तापनिवर्तकतया तापविरुद्धैरिन्दुकिरणैस्तापजनिरुक्ता ॥

यथावा—

"अविवेकिकुचद्वन्द्वं हन्तु नाम जगत्त्रयम् ॥
श्रुतिप्रणयिनोरक्ष्णोरयुक्तं जनमारणम् ॥ १ ॥"

यथावा—

"उदिते कुमारसूर्ये कुवलयमुल्लसति भाति नक्षत्रम् ॥
मुकुलीभवन्ति चित्रं परराजकुमारपाणिपद्मानि ॥ १ ॥"

पूर्वोदाहरणे श्रुतिप्रणयिनोर्नयनयोः प्राणहरणं विरुद्धकारणात्कार्योत्पत्तिः । वेदस्य मुख्यतयाऽहिंसापरत्वात् । तदुक्तं वेदे "मा

हिंस्यात्सर्वा भूतानि" इति॥ श्रुतिशब्दे श्लेषः, वेदः श्रवणं च। उत्तरोदाहरणे कुवलयसंकोचक–नक्षत्राभ्राजक–पद्मोल्लासकबालातपात्कुवलयोल्लासः, नक्षत्रप्रकाशनं, पद्मानां मुकुलीभावश्च विरुद्धकारणात्कार्योत्पत्तिः॥

षष्ठी––

"कार्यात्कारणजन्मापि दृष्टा काचिद्विभावना॥" इति॥

यथा––

"यशः पयोधिरभवत्करकल्पतरोस्तव॥"

समुद्रः कारणम्। कल्पतरुः कार्यम्। कल्पतरोः समुद्रजनिः कार्यात्कारणोत्पत्तिः। कारणं विना कार्योत्पत्तिश्च दण्ड्याचार्यभोजमहाराजमतानुसारेण चित्रहेतोः प्रकारः। तस्य च मन्मते विचित्रेऽन्तर्भाव इति विभावना न पृथगलंकारः। विभावनायाः षट्स्वपि प्रकारेषु कारणाभावो वर्तते, तत्र कारणं विना कार्योत्पत्तिः (१) असमग्रकारणस्य कारणाभाव एव (२) "नरेन्द्रानेव ते–" इत्यत्र प्रतिबन्धके सति कार्ये सर्पदंशे हेतोर्विषवैद्याभावस्याभावः कारणाभावः (३) अकारणात्कार्यजन्मेति चतुर्थप्रकारेपि प्रसिद्धकारणाभावः (४) विरुद्धकारणात्कार्योत्पत्तिरिति पञ्चमप्रकारेपि प्रसिद्धकारणाभावः (५) कार्यात्कारणोत्पत्तिरिति षष्ठप्रकारेऽपि प्रसिद्धकारणाभावः (६) इति विभावनाया नामरूपसामान्यलक्षणे षण्णामपि संग्रहादेषां विभावनाप्रकारत्वम्॥ इतरपञ्चप्रभेदेषु कारणं विना कार्योत्पत्तिरित्यनङ्गीकृत्य, एका विभावना, द्वे विभावने इति विभावनाषट्कं मन्यते चेत्तत्रापि सर्वत्र कार्यकारणसंबन्धिचित्रताया विद्यमानत्वात्तत्रैव चमत्कारपर्यवसानादासां सर्वासां चित्रहेतावन्तर्भावः॥

"हेतुं विना, च हेतोरसमग्रत्वेऽपि, बाधके च सति॥
अहेतुतोऽपि, विरुद्धात्कार्यं, कार्याच्च कारणोत्पत्तिः॥१॥
चित्रा हेतव एते भोजो ह्येतानसंख्यकान्प्राह॥
श्रीयशवन्तधराधिप! विचित्रभूषाविधा इमे सर्वे॥ २॥"

यथावा—

"कलुषत्वेऽपि गङ्गाम्भो दुर्दिनत्वेऽपि वासरः॥

शृङ्खलितत्वेऽपि शार्दूलो विपद्ग्रस्तोऽपि राघवः ॥१॥"

मम तु मतं, अत्र कलुषत्वेऽपि गङ्गाऽम्भस आदरार्हत्वमित्यादि ॥ एवं चात्र "कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके ॥" इति लक्षणलक्षिता न तृतीयविभावना । प्राचीनाभिमतषट्स्वपि विभावनासु कार्यकारणयोर्दुर्घटतारूपाश्चर्यस्यैवालंकारार्हचमत्कृतिजनकत्वात् । अत एव भोजमहाराज एतादृशकार्यकारणदौर्घट्यानां चित्रहेतुनामकहेत्वलंकारप्रकारत्वमङ्गीकृत्यासंख्यत्वमाह । अत्र च गङ्गानीरादीनामादरादेः स्वतः सिद्धासाधारण्यादाश्चर्यरूपा चमत्कृतिर्नास्तीत्यत्र कार्यकारणयोर्दौर्घट्याभावान्नास्ति विभावना । अपि त्वत्यन्ताभावस्य निषेधो विवक्षितः । तत्रैव च चमत्कारपर्यवसितिः । कलुषत्वेऽपि गङ्गाम्भसः सर्वथाऽनादरार्हताऽभावः, दुर्दिनत्वेऽपि दिवसस्य सर्वथा प्रकाशराहित्याभावः, शृङ्खलितत्वेऽपि सिंहस्य सर्वथा बलहानेरभावः, तथैव राघवस्य विपद्ग्रस्तत्वेऽपि सर्वथा धृत्यादिपरित्यागाभाव इति निषेधादाक्षेपालंकारः । यद्यप्यत्रात्यन्ताभावनिषेधेऽल्पाभावोऽर्थसिद्धस्तथाप्यत्रात्यन्ताभावनिषेधे चमत्कृतिपर्यवसितेराक्षेपालंकारो न त्वल्पालंकारः ॥

॥ इति विभावनाप्रकरणम् ॥ ७९ ॥

# ॥ विरोधाभासः ॥

केचन प्राचीना विरोधाभासमलंकारान्तरं मन्यन्ते । चन्द्रालोककारस्येदं लक्षणोदाहरणम्—

"आभासत्वे विरोधस्य विरोधाभास इष्यते ॥" इति ॥

यथा—

"विनापि तन्वि! हारेण वक्षोजौ तव हारिणौ ॥"

अत्र हाररहितावपि हारिणौ हृद्याविति श्लेषमूलको विरोधाभासः ॥ मम तु मतं, अयं विरोधाभासोप्याभासेऽन्तर्भूतः ॥ विरोधाभासं

विरोधालंकारं मन्वानो वाग्भटः शब्दार्थकृतं भेदद्वयमुक्त्वाऽर्थविरोधे इदमुदाहरति—

"येनाक्रान्तं सिंहासनमरिभूभृच्छिरांसि विनतानि ॥

क्षिप्ता युधि शरपङ्क्तिः कीर्तिर्याता दिगन्तेषु ॥ १ ॥"

एतादृशविषये स्वसंगतिचमत्कारस्योद्धरकंधरत्वादसंगतिरेवालंकारो न तु विरोधाभासः । मम मते त्वर्थविरोधस्येदमुदाहरणम्—

"तन्मुखशशिप्रकाशस्मरणस्याप्तौ विनिर्गतं स्मरणम् ॥"

अत्र शब्दविरोधे सत्यप्यर्थविरोधस्योद्धरकंधरत्वादार्थविरोधाभासस्यैवालंकारत्वम् ॥

## ॥ इति विरोधाभासप्रकरणम् ॥ ८० ॥

## ॥ विवृतोक्तिः ॥

विवृतशब्दार्थ उद्घाटित इति । उक्तं चिन्तामणिकोषकारेण "विवृत उद्घाटिते" इति ॥ विवृतोक्तिरितिशब्दसमुदायार्थो विवृतकरणार्थमुक्तिरिति । प्राञ्चो विवृतोक्तिं पृथगलंकारं मन्यन्ते । चन्द्रालोककारस्येदं लक्षणोदाहरणम्—

"विवृतोक्तिः श्लिष्टगुप्तं कविनाऽऽविष्कृतं यदि ॥" इति ॥

अत्र कविनाऽऽविष्कृतमितिविशेषणं रमणीयतार्थकम् ॥

यथा—

"वृषाऽपेहि परक्षेत्रादिति वक्ति ससूचनम् ॥"

श्लिष्टगुप्तं वस्तु यथाकथञ्चित्कविनाऽऽविष्कृतं चेद्विवृतोक्तिः । वृषापेहीत्युदाहरणे गूढोक्तिवद्गुप्तं वस्तु ससूचनमिति कथनात्कविनाऽऽविष्कृतम् । मम तु मतं, एतावन्मात्रवैलक्षण्येनास्या गूढोक्तेर्न पृथगलंकारत्वम् ।

उन्मीलिते मिलितचमत्कारस्येवात्र गूढोक्तिचमत्कारस्यानुभवसिद्धत्वादस्या गूढोक्तावन्तर्भावः। तस्याश्च सूक्ष्मेऽन्तर्भाव इत्युक्तं प्राक्॥

इति विवृतोक्तिप्रकरणम्॥ ८१॥

## ॥ विवेकः ॥

विवेकस्तु मिथो विलक्षणतया वस्तुस्वरूपस्य निश्चयः। तदुक्तं चिन्तामणिकोषकारेण "विवेको मिथो व्यावृत्त्या वस्तुस्वरूपनिश्चये" इति॥ प्राचीना विवेकमलंकारान्तरं मन्वते। रत्नाकरकारस्येदं लक्षणम्—

"तस्यां कुतश्चिद्विवेको विवेकः॥" इति॥

वृत्तौ लिखति "गुणसाम्याद्भेदाप्रतीतौ सत्यामपि केनचिन्निमित्तेन वैलक्षण्यावगतिर्विवेकः" इति॥

यथा—

"नवाम्बुवाहप्रतिबिम्बवत्यां
यत्रोच्चहर्म्यारुणरत्नभूमौ॥
व्यक्तिं लभन्ते सुरसुन्दरीणां
सालक्तकाः प्रावृषि पादमुद्राः॥ १॥"

अत्रालक्तकपादमुद्राणामरुणरत्नभूमावलक्ष्याणां नवाम्बुवाहप्रतिबिम्बेन भूमेर्नीलिमावगतौ स्फुटतया प्रतीतिः॥ रसगङ्गाधरकारस्त्वस्यानुमानालंकारान्तर्गततया न पृथगलंकारत्वमित्याह। मम तु मतं, ईदृशविषये नानुमानम्। उन्मीलितं विशेषो वा भवेत्। उक्तोदाहरणे उन्मीलितम्। उन्मीलितं च मिलितान्न पृथक्। यथा सामान्याद्विशेषः। अन्ये तु विवेकमुन्मीलितनाम्ना वदन्ति॥

॥ इति विवेकप्रकरणम्॥ ८२॥

## ॥ विशेषः ॥

अत्र विशेषशब्दार्थोऽतिशयः। उक्तं चिन्तामणिकोषकारेण "विशेषोऽतिशये" इति ॥ प्राचीना विशेषनामकं पृथगलंकारं मन्यन्ते। काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

" विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ॥
एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥ १ ॥
अन्यत्प्रकुर्वतः कार्यमशक्यान्यस्य वस्तुनः ॥
तथैव करणं चेति विशेषस्त्रिविधः स्मृतः ॥ २ ॥"

प्रसिद्धमाधारं विनाऽऽधेयस्य विशिष्टा स्थितिः, एकस्य वस्तुन एकेनैव स्वरूपेण युगपदनेकस्थलेषु वृत्तिः, अन्यत्प्रकुर्वतोऽशक्यस्यान्यवस्तुनस्तेनैव यत्नेन भवनमिति त्रिविधो विशेषः। लोकवैलक्षण्यार्थं प्रथमलक्षणे वीत्युपसर्गः, तृतीये चाशक्येति।

क्रमेण यथा—

"दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ॥
रमयन्ति जगन्ति गिरः कथमिह कवयो न ते वन्द्याः ॥१॥"

गिरां प्रसिद्धाधारो मुखम्। वाल्मीक्यादिकवीनां स्वर्वासकरणात्तन्मुखमन्तराप्यत्र जगति गिरामाधेयस्य स्थितिः। मम तु मतं, अस्य विशेषस्याश्चर्यकारित्वाद्विचित्रेऽन्तर्भावः। विचित्रता चासंख्या ॥

"सा* वसइ तुम्ह हिअए, सा चेअ अच्छीसु, सा अ वअणेसु ॥
अम्हारिसाणँ सुन्दर! ओआसो कत्थ पावाणम् ॥ १ ॥"

मम तु मतं, एकं वस्त्वेकदैकस्मिन्नाधारेऽवतिष्ठते। अत्रैकस्याः सपत्नीरूपकामिन्या एकरूपेण युगपदनेकत्र (हृदयादौ) स्थितिरित्याधारसंख्याया आधिक्यादधिकालंकारः। क्वचिदीदृशविषये आश्चर्ये पर्यवसितिश्चेद्विचित्रतायाः प्राधान्याद्विचित्रालंकारो भवेत्। प्राचीना अने-

* सा वसति तव हृदये, सा चैवाक्षिषु, सा च वचनेषु। अस्मादृशां सुन्दर! अवकाशः कुत्र पापानाम् ॥ इति संस्कृतम् ॥

कवाहकाशिरस्सु दीर्घदण्डस्यैकदाऽवस्थानेऽपि न विशेषालंकार इत्याहुः। रत्नाकरकारो द्वितीयविशेषस्येदमुदाहरणमदात्।

"भयमेकमनेकेभ्यः शत्रुभ्यो युगपत्सदा ॥
ददासि तच्च ते नास्ति राजन्नित्यद्भुतं महत् ॥ १॥"

मम मतेऽपि प्राचामुक्तमतानुसारेणात्र लोकोत्तरत्वाभावान्न विशेषालंकारः। वर्णनीयनृपे भयाभावेऽपि शत्रुभ्यो भयदानमिति कारणं विना कार्योत्पत्तेर्विचित्रालंकारः॥

"स्फुरदद्भुतरूपमुत्प्रताप-
ज्वलनं त्वां सृजताऽनवद्यविद्यम्।
विधिना ससृजे नवो मनोभू-
र्भुवि सत्यं सविता वृहस्पतिश्च ॥ १॥"

अत्र राजसर्जनरूपमेकं कार्यं कुर्वतो विधेस्तेनैव यत्नेन, अशक्यस्य मनोभूप्रभृतिसर्जनरूपकार्यान्तरस्य करणम्॥

यथावा—

"त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम्॥"

अत्र मनोऽभिलषितपूरणरूपगुणसाम्याद्राजानं पश्यतोऽर्थिजनस्याशक्यकल्पवृक्षनिरीक्षणम्। मम तु मतं, अशक्येतिविशेषणं व्यर्थम्। उक्तचमत्कृतौ विशेषानाधायकत्वात्। अत्रैककार्यकरणे कार्यान्तरकरणमिति विवक्षायां संख्याया आधिक्यादधिकालंकारः। विस्मयविवक्षायां तु विचित्रालंकारः। रत्नाकरकारस्तृतीयविशेषस्य भेदद्वयमाह॥

"संभावितादधिकस्य विरुद्धस्य वा संपत्तिश्च विशेषः॥" इति॥

मम तु मतं, संभाविताद्विरुद्धोत्पत्तेस्तु

"विचित्रं तत्प्रयत्नश्चेद्विपरीतफलेच्छया॥"

इति चन्द्रालोकलक्षणलक्षिते विचित्रेऽन्तर्भावः॥

इतरस्माद्व्यावर्तक इति विशेषशब्दस्यापरोऽर्थः। उक्तं चिन्तामणिकोषकारेण "विशेष इतरव्यावर्तके" इति ॥ चन्द्रालोककारादयः

कतिपयप्राचीना इदं विशेषद्वयं पृथक्पृथगलंकारद्वयं मन्वाना नामभेदार्थं पूर्वं विशेषनाम्ना, उत्तरं च विशेषकाख्यया प्राहुः। चन्द्रालोककार उन्मीलितविशेषकयोरेकत्रेदं लक्षणमाह—

"भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ ॥" इति ॥

यथा—

"वेत्रत्वचा तुल्यरुचां वधूनां
कर्णाग्रतो गण्डतलागतानि ॥
भृङ्गाः सहेलं यदि नापतिष्य-
न्कोऽवेदयिष्यन्नवचम्पकानि ॥ १ ॥"

प्रकाशकारः सामान्यालंकारे इदमुदाहृत्याह "अत्र निमित्तान्तरजनितापि नानात्वप्रतीतिः प्रथमप्रतिपन्नमभेदं न व्युदसितुमुत्सहते। प्रतीतत्वात्तस्य, प्रतीतेश्च बाधायोगात्।" इति। रसगङ्गाधरकारस्तु "तिरस्कृतत्वात्पूर्वप्रतीतेर्न चमत्कारित्वम्, किं तु चरमप्रतीतेरेवेति तथैव व्यपदेशो न्याय्यः। अन्यथा व्यतिरेकेऽप्युपमापत्तेः" इत्याह। मम संमतिस्त्वस्मिन्विषये प्रकाशकृता सहैव। ईदृशविषये भेदप्रतीतिवर्णने कवेर्न विवक्षा, किं त्वभेदज्ञानदृढीकारे वर्तते ॥

यथावा—

"लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च ॥"

अत्र कमलाकरप्रविष्टसुन्दरीवदनप्रतीतिरिन्दोरुदयेनैव भवति। अन्यथा न भवति। अत्र चमत्कारपर्यवसितिस्तु सामान्यतायां, न तु विशेषतायाम्। व्यतिरेके तु कवेरारम्भः पृथक्करण एवेति तत्र पृथग्भाव एव चमत्कृतेः पर्यवसानम्। अत्र सहृदयहृदयमेव साक्षि। एवं चास्य विशेषस्य समान्य एवान्तर्भावो युक्तः। सामान्यस्य च मिलितेऽन्तर्भावः॥

॥ इति विशेषप्रकरणम् ॥ ८३ ॥



# ॥ विशेषोक्तिः ॥



प्राञ्चो विशेषोक्तिमलंकारान्तरं मन्यन्ते । विशेषार्थमुक्तिर्विशेषोक्तिरिति नामार्थं कुर्वतो भगवतो वेदव्यासस्य विशेषोक्तेरिदं लक्षणम्—

"गुणजातिक्रियादीनां यत्तु वैकल्यदर्शनम् ॥
विशेषदर्शनायैव सा विशेषोक्तिरुच्यते ॥" इति ॥

अत्र कारणगतगुणजातिक्रियादीनां न्यूनत्वे विशेषशब्दस्य रूढिः ॥ दण्ड्याचार्य इदमेव लक्षणमभिधायैवमुदाहरति ।

गुणविकलता यथा—

"न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः ॥
तथापि जितमेवासीदमुना भुवनत्रयम् ॥ १ ॥"

तीक्ष्णकठोरत्वं शस्त्रस्य गुणः । तस्य न्यूनत्वप्रदर्शनं तु वर्णनीयमदनस्य विशेषदर्शनार्थम् ॥

जातिविकलता यथा—

"न देवकन्यका नापि गन्धर्वकुलसंभवा ॥
तथाप्येषा तपोभङ्गं विधातुं वेधसोऽप्यलम् ॥ १ ॥"

देवतादिर्जातिः । तस्या न्यूनत्वप्रदर्शनं तु वर्णनीयनायिकाया विशेषदर्शनार्थम् ॥

क्रियाविकलता यथा—

"न बद्धा भ्रुकुटिर्नापि स्फुरितो दशनच्छदः ॥
न च रक्ताऽभवद्दृष्टिर्जितं च द्विषतां बलम् ॥ १ ॥"

भ्रूभङ्गादिः क्रिया । तस्या न्यूनत्वप्रदर्शनं तु वर्णनीयनृपस्य विशेषदर्शनार्थम् । अयमलंकारस्तु चन्द्रालोककाराभिमतद्वितीयविभावनैवेत्यस्य विचित्रेऽन्तर्भावः । ईदृशविशेषेण विशेषोक्तिरिति नामकथनं तु भगवतो वेदव्यासस्य प्रमादः । वर्णनीयस्य विशेषाश्चानेकप्रकारका भवन्तीति सर्वत्र विशेषोक्तिरेव स्यात् । मम तु मतं, ईदृशविशेषाणां फल-

रूपत्वान्नालंकारत्वम्। विशेषोक्तौ वीत्युपसर्गो गतार्थे। शेषशब्दार्थः कार्यम्। न्यायसूत्रभाष्यकारेण शेषवदित्यनुमानप्रभेदमुक्त्वाकार्यात्कारणानुमितिरुदाहृता। विशेषोक्तिरिति शब्दसमुदायार्थो गतं कार्यं यस्य तस्योक्तिरिति। कारणसत्त्वे कार्यानुत्पत्तिरित्यर्थः। विभावनायाः प्रतिद्वन्द्विभावेऽयमलंकारः। विभावनायां कारणाभावः। अत्र च कार्याभावः। विशेषोक्तिनाम्न इममर्थमभिप्रेत्य काव्यप्रकाशगतकारिकाकार इदं लक्षणमाह—

"विशेषोक्तिरखण्डेषु कारणेषु फलावचः॥" इति॥

कारणेऽखण्डत्वं तु न्यूनताया अभावः। चन्द्रालोककारस्येदं लक्षणम्—

"कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे॥" इति॥

यथा—

"निद्रानिवृत्तावुदिते द्युरत्ने
सखीजने द्वारपदं पराप्ते॥
श्लथीकृताशेषरसे भुजङ्गे
चचाल नालिङ्गनतोऽङ्गना सा॥ १॥"

अत्र निद्रानिवृत्तिसूर्योदयादिरूपकारणसत्त्वेऽप्यालिङ्गनपरित्यागरूपकार्याभावोक्तिः॥

यथावा—

"अनुरागवती संध्या दिवसस्तत्पुरःसरः॥
अहो दैवगतिश्चित्रा तथापि न समागमः॥ १॥"

सर्वस्वकारोऽस्य चिन्त्यनिमित्ताऽचिन्त्यनिमित्तेति प्रकारद्वयमाह। रत्नाकरकारो वदति—"चिन्त्यताऽचिन्त्यता च नाम न वस्तुधर्मः। पुरुषापेक्षत्वात्तदेव हिं कस्यचिदचिन्त्यस्य प्रज्ञातिशयवतश्चिन्त्यमेव भवति। न च नियतप्रमात्रुद्देशेन काव्यलक्षणं प्रवृत्तम्। न च सर्वेषामचिन्त्यमेवेत्यत्र प्रमाणमस्ति।" इति॥ मम तु मतं, अत्र विषये चमत्कारस्तु कारणे सति कार्याभावः। तत्र कार्यानुत्पत्तौ निमित्तनिर्देशस्तु प्रत्युतोक्तचमत्कृतिहानिकरः। प्राचीनानां विरोधपरिहारार्थं प्रयत्नस्तु

मुधैव । अस्मिञ्शास्त्रे प्रायोऽतिशयोक्तेरङ्गीकारात् । कारणे सति कार्यानुत्पत्तिरित्यपि चित्रहेतुप्रकार इति तस्य विचित्रालंकारेऽन्तर्भावः ॥

इति विशेषोक्तिप्रकरणम् ॥ ८४ ॥

## ॥ वैधर्म्यम् ॥

विरुद्धो धर्मो वैधर्म्यम् । प्राचीना वैधर्म्यनामकमलंकारान्तरं मन्वते । रत्नाकरकारस्येदं लक्षणोदाहरणम्—

"उद्दिष्टप्रतिपक्षतयाऽनुनिर्देशो वैधर्म्यम् ॥" इति ॥

वृत्तौ लिखति—"पूर्वाभिहितार्थापेक्षया प्रतिभटभूतार्थान्तराणां पश्चान्निर्देशो वैधर्म्यालंकारः । न चायं द्वितीयो व्यतिरेकः । साधर्म्यगन्धस्याप्यभावात् । उपमानोपमेयभावस्याविवक्षणाच्च ॥" इति ॥

यथा—

"नाथे नः पुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दातरि परे नारायणे तिष्ठति ॥
यं कञ्चित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं
सेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥ १ ॥"

यथावा—

"कुमुदवनमपश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः प्रीतिमाँश्चक्रवाकः ॥
उदयति दिननाथो याति शीतांशुरस्तं
हतविधिलसितानां ही विचित्रो विपाकः ॥ १ ॥"

रत्नाकरकारः "अस्यालंकारान्तरसंसर्गे चारुतातिशयो जायते" इत्यप्याह ॥

यथा—

"ज्यायान्धन्वी नवधृतधनुस्ताम्रहस्तोदरेण
क्षत्रक्षोदव्यतिकरपटुस्ताडकाताडनेन ॥
कर्णाभ्यर्णस्फुरितपलितः क्षीरकण्ठेन साकं
योद्धुं वाञ्छन्नु कथममुना लज्जते जामदग्न्यः ॥ १ ॥"

अत्र जामदग्न्यदाशरथ्योः प्रौढाप्रौढत्वेन विरूपयोः संघटनेति विषमालंकारगर्भता। मम तु मतं, उन्मत्तवत्पूर्वाभिहितार्थापेक्षया प्रतिभटभूतार्थान्तराणां पश्चान्निर्देशोऽचारुतया नालंकारः। अलंकारस्तु कयाचिदपि युक्त्या भवतीति यत्र वैधर्म्ये पर्यवसितिस्तत्र व्यतिरेकालंकारः। समानवस्तुनोः पृथग्भावे व्यतिरेकालंकार इति प्राचीनमतानुसारेण मयापि व्यतिरेकप्रकरणे लिखितं, तथापि विमर्शने तु वैधर्म्यस्यापि व्यतिरेके एवान्तर्भावो भवति। धुरंधराभिमताभेदालंकारस्य वैपरीत्ये भेदालंकारस्यैवौचित्यात्। भेदो व्यतिरेकश्चेति पर्यायान्तरम्। भोजमहाराजो व्यतिरेकस्य भेद इति नामान्तरमप्याह। तथा च "नाथे नः पुरुषोत्तमे–" इत्यत्र वैधर्म्ये पर्यवसानाद्व्यतिरेकालंकारः। "कुमुदवनमपश्रि–" इत्यत्र "ज्यायान्धन्वी–" इत्यत्र च वैधर्म्यात्परतोऽयथायोग्यतायां पर्यवसानाद्विषमालंकारः। रत्नाकरकारस्य "कुमुदवनमपश्रि–" इत्यत्र वैधर्म्यालंकारकथनं प्रमादः। "ज्यायान्धन्वी–" इत्यत्र च वैधर्म्यालंकारमङ्गीकृत्य विषमसंसर्गप्रतिपादनं तु महाप्रमादः। प्रधानस्यैवालंकारव्यवहारात् ॥

इति वैधर्म्यप्रकरणम् ॥ ८५ ॥

## ॥ व्यत्यासः ॥

व्यत्यासशब्दार्थो विपर्ययः। प्राचीना व्यत्यासनामकमलंकारान्तरं मन्यन्ते। रत्नाकरकारस्येदं लक्षणोदाहरणम्—

"दोषगुणयोरन्यथात्वं व्यत्यासः ॥" इति ॥

अस्य देशभेदेन वा कालभेदेन वा गुणदोषयोरन्यथाभावे चत्वारो भेदाः ॥

क्रमेण यथा—

"सच्चं* जाणइ दट्ठुं सरिसम्मि जणम्मि जुज्जए राओ ॥
मरउ ण तुमं भणिस्सं मरणं वि सलाहणिज्जं से ॥ १॥"

अन्यासां मरणस्य दुष्टत्वेऽप्यस्या मरणस्य श्लाघनीयत्वेन गुणत्वं देशभेदेन दोषस्यान्यथात्वम् ॥

"सर्वत्र समदृष्टित्वं गुणोऽयं खलुयोगिनाम् ॥
अकीर्तिहेतुः सुमहान्दोषस्तु पृथिवीपतेः ॥ १ ॥"

योगिविषयतया समदृष्टित्वस्य गुणस्यापि राजविषयतया दुष्टत्वं देशभेदेन गुणस्यान्यथात्वम् ॥

"अन्यदा भूषणं पुंसां शमो लज्जेव योषिताम् ॥
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥ १ ॥"

अत्रान्यदा पराक्रमवैयात्ययोर्दोषयोः पराभवसुरतविषये गुणत्वमिति कालभेदः ॥

"मध्येसभं सुकविकोविदमण्डलीनां
मौलौ निवेश्य किमपि प्रतिपत्तिपूतैः ॥
यन्मानितोऽस्मि भवता रुचिरैर्वचोभि-
र्जातं तदेव बत शल्यमिवाधुना ते ॥ १ ॥"

अत्र संमानस्य पूर्वं परितोषकत्वेन गुणस्याधुना मानयितुरतीतत्वाच्छल्यायमानत्वेन दुष्टत्वमिति कालभेदः। मम तु मतं, गुणस्य दोषत्वं दोषस्य च गुणत्वमिति त्ववस्थान्तरप्राप्तिरित्ययमलंकारः परिणामान्नातिरिच्यते ॥

## ॥ इति व्यत्यासप्रकरणम् ॥ ८६ ॥



* सत्य जानाति द्रष्टु सदृशे जने युज्यते राग. । म्रियता न त्वा भणिष्यामि मरणमपि श्लाघनीयं तस्या' ॥ १ ॥ इति संस्कृतम् ॥

# ॥ व्याजनिन्दा ॥



अत्र व्याजनिन्दाशब्दार्थो व्याजेन छलेन निन्देति। केचन प्राचीना व्याजनिन्दां पृथगलंकारं मन्यन्ते। चन्द्रालोककारस्येदं लक्षणोदाहरणम्—

" निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते ॥" इति॥

यथा—

"विधे! स निन्द्यो यस्ते प्रागेकमेवाहरच्छिरः ॥"

अत्र हरनिन्दया विषमविपाकं संसारं प्रवर्तयतो विधेरभिव्यङ्ग्या निन्दा। मम तु मतं, निन्दांशमात्रे न चमत्कारः। निन्दया निन्दाया गम्यत्वं च व्यङ्ग्यस्य विषय इति नालंकारता। व्याजनिन्दाया नामार्थेन तु मिषालंकारे, लक्षणेन च हेत्वलंकारेऽन्तर्भावः। केवलं निन्दामात्रविशेषतयाऽलंकारान्तरं न भवति। अत्रान्यस्य निन्दयाऽन्यस्य निन्देति विवक्षायां तु चित्रहेतुप्रकारतया विचित्रेऽन्तर्भावः॥

॥ इति व्याजनिन्दाप्रकरणम् ॥ ८७ ॥



# ॥ व्याजस्तुतिः ॥



बहवः प्राचीना व्याजस्तुतिमलंकारान्तरं मन्यन्ते। दण्ड्याचार्यस्येदं लक्षणम्—

" यदि निन्दन्निव स्तौति व्याजस्तुतिरसौ स्मृता ॥
दोषाभासा गुणा एव लभन्ते ह्यत्र संनिधिम् ॥" इति॥

यथा—

"तापसेनापि रामेण जितेयं भूतधारिणी॥
त्वया राज्ञापि सैवेयं जिता माभून्मदस्तव॥ १ ॥"

अत्र श्रवणमात्रेण राज्ञो निन्दाया आभासेऽपि विचारदशायामीश्वरावतारेण परशुरामेण यावती भूमिर्जिता तावती त्वया मनुष्येणापि सता जितेति स्तुतौ पर्यवसानम् ॥

यथावा—

"इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठपीठी मुरारि-
दिङ्नागानां मदजलमषीभाञ्जि गण्डस्थलानि ॥
अद्याप्युर्वीवलयतिलक ! श्यामलिम्नाऽनुलिप्ता-
न्युद्भासन्ते वद धवलितं किं यशोभिस्त्वदीयैः ॥ १ ॥"

अत्र श्रवणमात्रेण राजयशसोऽतद्गुणतामूलकनिन्दाया आभासेऽपि विचारदशायामुक्तचन्द्रकलङ्कादिपदार्थेषु तद्गुणताहानिप्रतिपादनाल्लोकत्रयेऽपीतरसमस्तपदार्थेषु राजयशसस्तद्गुणता मत्स्पष्टीकृतविशेषोक्तिद्वारा दार्ढ्यमासादयतीति स्तुतौ पर्यवसानम् । ननु सूत्रकारवामनस्य

"एकगुणहानौ गुणसाम्यदार्ढ्यं विशेषोक्तिः ॥"

इति विशेषोक्तिलक्षणे त्वेकगुणहानेर्नियमः । अत्र तु चन्द्रकलङ्कादिबहुस्थलेषु तद्गुणतारूपगुणहानिप्रतिपादनेन शेषस्य सकलजगतस्तद्गुणता प्रतिपादितेति कथमिह लक्षणसंगतिः; इति चेन्न । मत्सिद्धान्ते धुरंधरनामार्थस्यैव लक्षणात् । गतस्य शेषेण कथनमिति विशेषोक्तेः सामान्योऽर्थः । तत्रैकद्व्यादिनियमाभावात् । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ॥" इति ॥

अत्रान्यथात्वं तु निन्दायाः स्तुतौ पर्यवसानं, स्तुतेश्च निन्दायां पर्यवसानमिति । अत्रोभयत्रापि नामार्थसंगतिस्तु व्याजरूपा स्तुतिः, व्याजेन वा स्तुतिर्व्याजस्तुतिरिति । व्याजरूपा स्तुतिरितिपक्षे स्तुतेर्व्याजत्वं, निन्दायाश्च वास्तवत्वम् । व्याजेन स्तुतिरिति पक्षे निन्दाया व्याजेन स्तुतिः । स्तुतिमुखनिन्दाया इदमुदाहरणम्—

"साधु दूति! पुनः साधु कर्तव्यं किमतः परम् ॥
यन्मदर्थे विलूनासि दन्तैरपि नखैरपि ॥ १ ॥"

अत्र मदर्थे महाक्लेशमनुभूतवत्यसीति व्याजरूपया स्तुत्या मदर्थं न गतासि किंतु रन्तुमेव गतासि, धिक् त्वां दूतिकाधर्मविरुद्धकारिणीमिति निन्दाऽवगम्यते। मम तु मतं, मम्मटदण्ड्याचार्ययोर्लक्षणोदाहरणेषु निन्दास्तुत्योराभासः सिद्ध्यतीत्यस्याभासालंकारेऽन्तर्भावः। सर्वस्वस्येदं लक्षणम्—

"स्तुतिनिन्दाभ्यां निन्दास्तुत्योर्गम्यत्वे व्याजस्तुतिः॥" इति।

सर्वस्वकारः "स्तुतिनिन्दारूपविच्छित्तिविशेषस्य सद्भावादप्रस्तुतप्रशंसातो भेदः" इत्याह॥ रत्नाकरकारादयोऽस्यानुगामिनः। रसगङ्गाधरकारो वदति "इयं च व्याजस्तुतिर्यस्यैव वस्तुनः स्तुतिनिन्दे प्रथममुपक्रमेते तस्यैव चेन्निन्दास्तुत्योः पर्यवसानं भवेत्तदा भवति। वैयधिकरण्ये तु नेति प्राचामलंकारशास्त्रप्रवर्तकानां समयः" इति॥ अस्याभिप्रायस्तु स्तुतिनिन्दयोरेकाधिकरणकत्वेऽधिकरणस्य प्रस्तुतत्वमेवेति नाप्रस्तुतप्रशंसाऽलंकारः। भिन्नाधिकरणकत्वे एवैकं प्रस्तुतमपरमप्रस्तुतं भवति। तथा चोदाहृतमप्रस्तुतप्रशंसाप्रकरणे दण्ड्याचार्येण—

"सुखं जीवन्ति हरिणा वनेष्वपरसेविनः॥
अन्नैरयत्नसुलभैस्तृणदर्भाङ्कुरादिभिः॥ १॥"

अत्र मृगस्तुत्या राजसेवकपुरुषनिन्दायाः प्रतीतिः॥ मम तु मतं, अत्र प्राचां प्रमादः। अर्थान्तरगम्यताया व्यङ्ग्यार्थत्वान्नालंकारत्वम्। प्राचामप्रस्तुतप्रशंसास्वरूपस्यापरिज्ञानादप्रस्तुतप्रशंसातो व्यावर्तयितुमयं यत्नः। अपि चाप्रस्तुतप्रशंसायाः स्वरूपमर्थान्तरगम्यतेति स्वीकारेपि स्तुतिनिन्दारूपविच्छित्तिविशेषस्य किञ्चिद्वैलक्षण्यापादकत्वान्नालंकारान्तरत्वसाधकत्वम्। एकाधिकरणेऽपि स्तुतौ प्रस्तुतायां निन्दाया अप्रस्तुतत्वमेव। अधिकरणस्य भिन्नत्वेपि नालंकारान्तरत्वम्। किंचात्र वाच्यार्थरूपस्तुतिनिन्दयोर्व्यङ्ग्यार्थरूपनिन्दास्तुत्योः शोभाकरत्वाभावादनयोर्नालंकारपदप्राप्तिः। अप्रस्तुतप्रशंसालंकारस्वरूपं तु

"मालाकारेण यो ग्रीष्मे प्रीत्या संवर्धितो द्रुमः॥
सुसंवृष्टेऽपि पर्जन्ये विस्मार्योपकृतिः कथम्॥ १॥"

मरुदेशान्तर्गतरायपुराधिपतेरूदावतराठोड़जातीयसामन्तार्जुनसिं-

हस्य विषये कविराजवांकीदासकृतं काव्यमिदम् । अस्य वाच्यार्थस्य सुभटाविषये कवेरुक्तावसमञ्जसत्वादुक्तकवेर्विपद्यनेन सुभटेन सुष्ठु भरण-पोषणं कृतं, ततश्चायं कवी राजराजेश्वरमानसिंहस्य प्रीतिपात्रं बभूव । तस्मिन्समये पूर्वोपकारप्रसङ्गेऽयं मालाकारद्रुमयोरप्रस्तुतवृत्तान्त उक्त इति प्रतीयते । अस्य च वृत्तान्तस्य वाच्यशोभाकरत्वादलंकारत्वम् ॥ अत्र वाच्यार्थे एव पर्यवसाने तु मेघान्मालाकारोपकारस्याधिक्यादधिकालंकारः । चन्द्रालोककारः

"उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः ॥"

इति व्याजस्तुतेर्लक्षणमुक्त्वा प्रकारपञ्चकमाह । तस्यैव निन्दया तस्यैव स्तुतिः (१) तस्यैव स्तुत्या तस्यैव निन्दा (२) अन्यस्य निन्दयाऽन्यस्य स्तुतिः (३) अन्यस्य स्तुत्याऽन्यस्य निन्दा (४) अन्यस्य स्तुत्याऽन्यस्य स्तुतिः (५) इति ॥

क्रमेण यथा—

"तापसेनापि रामेण—"

इत्यत्र राज्ञो निन्दया तस्यैव राज्ञः स्तुतिः ॥

"साधु दूति ! पुनः साधु—"

इत्यत्र दूत्याः स्तुत्या तस्या एव निन्दा ॥

"कस्त्वं वानर! रामराजभवने लेखार्थसंवाहको
यातः कुत्र पुराऽऽगतः स हनुमान्निर्दग्धलङ्कापुरः ॥
बद्धो राक्षससूनुनेति कपिभिः संताडितस्तर्जितः
स व्रीडात्तपराभवो वनमृगः कुत्रेति न ज्ञायते ॥ १ ॥"

अत्राङ्गदकृतहनुमन्निन्दयेतरवानरस्तुतिः ॥

"यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा
नैषां गर्ववचः शृणोषि न च तान्प्रत्याशया धावसि ॥
काले बालतृणानि खादसि परं निद्रासि निद्राऽऽगमे
तन्मे ब्रूहि कुरङ्ग! कुत्र भवता किं नाम तप्तं तपः ॥ १ ॥"

अत्र हरिणस्तुत्या राजनिर्विण्णस्यात्मनो निन्दा ॥

"शिखरिणि क्व नु नाम कियच्चिरं
किमभिधानमसावकरोत्तपः ॥
तरुणि ! येन तवाधरपाटलं
दशति बिम्बफलं शुकशावकः ॥ १ ॥"

अत्र शुकशिशुस्तुत्या सुन्दर्या अधरस्य स्तुतिः । मम तु मतं, सर्वस्वकारादीनां लक्षणोदाहरणानुसारेण तु हेत्वलंकारः । किंच स्तुत्या निन्देत्यादौ पर्यवसाने तु चित्रहेतुः । अपि च नामार्थ एव पर्यवसाने तु मिथ्यालंकारः । व्याजस्तुतिर्न पृथगलंकारः ॥

॥ इति व्याजस्तुतिप्रकरणम् ॥ ८८ ॥

---

## ॥ व्याजोक्तिः ॥

---

व्याजरूपा उक्तिः, व्याजोक्तिः । प्राञ्चो व्याजोक्तिमलंकारान्तरं मन्यन्ते । काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपानिगूहनम् ॥" इति ॥

यथा—

"शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस—
द्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः ॥
आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥ १ ॥"

सर्वस्वस्येदं लक्षणम्—

"उद्भिन्नवस्तुनिगूहनं व्याजोक्तिः ॥" इति ॥

उद्भिन्नेतिविशेषणदानस्य तात्पर्यं तु गूढवस्तुनिगूहनस्यानावश्यकत्वादुद्भिन्नवस्तुनिगूहनमावश्यकमिति ॥ रत्नाकरकारादीनामपि लक्षणोदाहरणानीदृशान्येव । मम तु मतं, छलेन गोपनं, उक्त्या गोपनं, प्रा-

कव्यशङ्कया गोपनं, प्रकटस्य गोपनमित्यादि किञ्चिद्वैलक्षण्यमपन्हुतेर्न पृथगलंकारत्वसाधकम् । एषामपन्हुत्युदाहरणान्तरत्वात् । अपि चैते प्राञ्चोऽपन्हुतेर्व्याजोक्तेश्चैवं भेदं दर्शयन्ति, अपन्हुतौ तु प्रकृतोत्कर्षार्थं साम्यदर्शनं, व्याजोक्तौ प्रकृतवस्तुनोऽप्रकृतवस्तुना गोपनमिति ॥ "शैलेन्द्रप्रतिपाद्यमान—" इत्यत्र पुलकितादिसात्त्विकभावैरुद्भिन्नरतिभावस्य हिमगिरिसंबन्धिशैत्यकारणान्तरकथनेन गोपनम् । मम मतेनेदं समाधानमपि न समीचीनम् । कुत इति चेत्

"नेदं नभोमण्डलमम्बुराशि-
नैमाश्च तारा नवफेनखण्डाः ॥
नायं शशी कुण्डलितः फणीन्द्रो
नायं कलङ्कः शयितो मुरारिः ॥ १ ॥"

इत्याद्युदाहरणेषु यत्र साम्यं विवक्षितं तत्र रूपकाद्यलंकारः । यत्र चापन्हवो विवक्षितस्तत्रापन्हुत्यलंकारः ॥

इति व्याजोक्तिप्रकरणम् ॥ ८६ ॥

## ॥ व्याप्तिः ॥

व्याप्तिर्व्यापनम् । प्राञ्चो व्याप्तिमलंकारान्तरं मन्यन्ते । रत्नाकरकार ईदृशं लक्षणोदाहरणं दर्शयति—

"सर्वथा संभवासंभवौ व्याप्तिः ॥" इति ॥

सर्वथा अर्थाद्विरुद्धपक्षद्वयेऽपि व्याप्तिर्व्याप्त्यलंकारः । स च संभवासंभवभेदेन द्विविधः ।

क्रमेण यथा—

"वर्जनीयो मतिमतां दुर्जनः सख्यवैरयोः ॥
श्वा भवत्युपघाताय लिहन्नपि दशन्नपि ॥ १ ॥"

अत्र सख्यवैरयोरुभयोरपि पक्षयोर्वर्जनीयत्वस्य संभवरूपस्य व्यापनाद्व्याप्तिः ॥

"अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ॥
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥ १॥"

अत्र दर्शनादर्शनयोरुभयोरपि पक्षयोः सुखस्याभावः । मम मते त्वयं मत्स्पष्टीकृतस्तुल्ययोगितालंकारः ॥ नात्रालंकारान्तरत्वम् ॥

इति व्याप्तिप्रकरणम् ॥ ६० ॥

## ॥ व्यासङ्गः ॥

व्यासङ्गशब्दार्थो विक्षेपः। उक्तं चिन्तामणिकोषकारेण "व्यासङ्गो विक्षेपे" इति ॥ प्राञ्चो व्यासङ्गाख्यमलंकारान्तरं मन्यन्ते । रत्नाकरकारस्येदं लक्षणोदाहरणम्—

"अनुभवस्मृत्यादेरन्यासङ्गात्प्रत्यूहो व्यासङ्गः ॥" इति ॥

वृत्तौ लिखति "प्रक्रम्यमानस्य प्रक्रान्तस्य वा अनुभवस्य स्मृतेरादिशब्दात्क्रियान्तरस्य वा पूर्ववदन्यासङ्गादन्तरायः प्रत्यूहो व्यासङ्गः॥" इति ॥

क्रमेण यथा—

"दृष्टास्वग्रे झटिति कनकच्छेदगौरीषु यस्यां
दूरादभ्रंलिहगृहशिखासङ्गिनीष्वङ्गनासु ॥
सद्यो विद्याधरयुवतयः केलिपूर्वं प्रियाणां
हेमक्रीडासरसिजरजो लोचनेषु क्षिपन्ति ॥ १॥"

अत्र भाविनोऽनुभवस्य क्रीडारविन्दरजःप्रक्षेपेणान्तरायः ॥

"तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ॥

इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात्तस्याश्च तद्विस्मृतम्॥ १॥"

अत्रानुभूयमानस्य स्तनमुद्राङ्कितत्वस्य संस्कार आलिङ्गनसुखानुभवेन तिरोहितः॥

"तत्र तीर्थसलिलेन दीर्घिका-
स्तल्पमन्तरितभूमिभिः कुशैः॥
सौधवासमुटजेन विस्मर-
न्संचिकाय फलनिस्पृहस्तपः॥ १॥"

अत्र दीर्घिकादिस्मृतिसंस्कारस्तीर्थसलिलादिसदृशानुभवेनाच्छादितः॥

"उत्सृज्य गीतमसमाप्य विलासलास्य-
मङ्कादपास्य सहसा मणिवल्लकीं च॥
अत्युन्मनास्तदवलोकनकौतुकेन
वातायनान्यधिरुरोह पुरंध्रिवर्गः॥ १॥"

अत्र गीतादेः क्रियान्तरस्य प्रक्रान्तस्य नृपावलोकनकौतुकात्प्रत्यूहः॥ अपि च रत्नाकरकारो वदति "न चैवगादेः स्मृत्यादेर्व्यभिचारिभावस्य प्रशमनाद्भावप्रशमध्वनावन्तर्भाव इति शङ्कनीयम्॥ स्मृत्यादेरिह प्रशान्तस्य तत्र प्रशाम्यत्त्वस्य च विवक्षितत्वात्॥ तथाहि भावोदयध्वनौ भावस्य प्रागभावो न रसपरिपोषकः। सर्वत्र लज्जाद्यनुत्पत्तौ तत्प्रसङ्गात्। नाप्युदितता भावोदयध्वनिः। तस्या भावध्वनौ भावात्। किं पुनरुद्यदवस्था। तथात्र प्रशाम्यदवस्था भावप्रशान्तिर्न तु प्रध्वंसरूपा प्रशान्तता। स्मृत्यादिप्रशान्ततताया अपस्मारादिभावसमयेऽपि भावात्। इह च स्मृत्यादिनिवृत्तेरेव विवक्षितत्वादिति न कश्चित्संकरः॥" इति॥ मम तु मतं, अस्य विषयस्याक्षेपेऽन्तर्भावः॥ विक्षेपस्य रोधस्य वा प्रतिषेधरूपत्वात्। भोजमहाराजो रोधालंकारमाक्षेपेऽन्तर्भावितवान्। उक्तं चाक्षेपलक्षणे-"रोधो नाक्षेपतः पृथक्" इति॥ रोधस्येदमुदाहृतम्—

"गच्छ गच्छसि चेत्कान्त! पन्थानः सन्तु ते शिवाः॥

ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ १ ॥"

अत्र ममापि तत्र जन्म भूयादिति कथनेन मरणसूचनात्प्रियगमननिषेधः ॥ "दृष्टास्वग्रे झटिति–" इति ॥ "तस्याः सान्द्रविलेपन–" इत्यत्र च मिषस्य संकीर्णत्वम्। 'तत्र तीर्थसलिलेन–" इत्यत्र प्रतिमायाः संकीर्णत्वम्॥ "उत्सृज्य गीतमसमाप्य–" इत्यत्र संगीतादितो राजदर्शने आनन्दाधिक्यादधिकस्य संकीर्णत्वम् ॥

॥ इति व्यासङ्गप्रकरणम् ॥ ६१ ॥

## ॥ संदेहाभासः ॥

प्राञ्चः संदेहस्याभासमलंकारान्तरं मन्यन्ते । रत्नाकरकारस्येदं लक्षणोदाहरणम्—

"संदिह्यमानयोरेकत्र तात्पर्येच्छा संदेहाभासः॥" इति ॥

यथा—

"मात्सर्यमुत्सार्य विचार्य कार्य-
मार्याः समर्यादमुदाहरन्तु ॥
सेव्या नितम्बाः किमु भूधराणा-
मुत स्मरस्मेरविलोचनानाम् ॥ १ ॥"

अत्र वीतरागस्य वक्तुर्वननिवास एव कार्यतयाऽवभासत इति किं भूधराणां नितम्बाः सेव्याः, उत युवतीनामिति ताटस्थ्येनाभिधानमार्याणां युवतिनितम्बपरिहारेण भूधरनितम्बानामवश्यसेवनीयत्वमुचितमिति विशेषप्रतिपादनाय संदेहाभासः । मम मतेन त्वयमाभासालंकारेऽन्तर्भूतः ॥

॥ इति संदेहाभासप्रकरणम् ॥ ६२ ॥

# ॥ सजातीयव्यतिरेकः ॥



प्राचीनाः सजातीयव्यतिरेकमलंकारान्तरं मन्यन्ते। रत्नाकरकारस्येदं लक्षणोदाहरणम्—

"सजातीयस्यातद्धर्मत्वे च व्यतिरेकः॥" इति॥

वृत्तौ लिखति "अतद्धर्मत्वं च सजातीयसंबन्धिधर्माभावाद्विजातीयधर्मसद्भावाच्च द्विविधम्॥" इति॥

क्रमेण यथा—

"न पङ्कादुद्भूतिर्न जडसहवासव्यसनिता
वपुर्दिग्धं कान्त्या स्थलनलिनरत्नद्युतिमुषा॥
व्यधास्यद्दुर्वेधा हृदयलघिमानं यदि न ते
त्वमेवैको लक्ष्म्याः परममभविष्यः पदमिह॥१॥"

अत्र स्थलनलिनस्य नलिनान्तरसंबन्धिपङ्कोद्भवत्वादिधर्माभावः।

"शङ्खाः सन्ति सहस्रशो जलनिधेर्वीचिच्छटाघट्टना-
त्पर्यन्तेषु नटन्ति ये दलशतैः कल्माषितक्ष्मातलाः॥
एकः कोपि स पाञ्चजन्य उदभूदाश्चर्यभूमिः सतां
यः संवर्तभयक्षमैर्मधुरिपोः श्वासानिलैःपूर्यते॥१॥"

अत्र पाञ्चजन्यस्य शङ्खान्तरगतवीचिभङ्गुरत्वादिधर्माभावः। तदसंभविमधुरिपुश्वासानिलापूरणमहत्त्वसद्भावश्चोपनिवद्धः॥ रत्नाकरकारः कथयति "न चास्य पूर्वलक्षितव्यतिरेकेऽन्तर्भावः। उपमानोपमेयभावावलम्बितत्वात्तस्य सजातीयानां च तदभावस्योपपादितत्वात्। तत्र च यस्माद्व्यतिरेकस्तस्यैव न्यूनत्वमिह त्वितरस्यापि। सजातीयत्वं च स्वाभाविकमारोपितं वा" इति॥ मम तु मतं, व्यतिरेकस्य स्वरूपं तु पृथग्भावः। उपमेयोपमानभावालम्बनानालम्बनादि किञ्चिद्वैलक्षण्यं प्रकारान्तरत्वस्य साधकं, न त्वलंकारान्तरस्यापि॥

॥ इति सजातीयव्यतिरेकप्रकरणम्॥ ९३॥



## ॥ समता ॥



प्राचीनाः समतां पृथगलंकारं मन्यन्ते। रत्नाकरकारस्येदं लक्षणोदाहरणम्—

"दोषगुणयोस्तदन्याभ्यां समाधानं समता ॥" इति ॥

वृत्तौ लिखति "यत्र कस्यापि दोषस्तत्संबन्धिनैव गुणेन गुणो वा दोषेण समाधीयते समपर्यायते तत्र समता" इति ॥

दोषस्य गुणेन समाधानं यथा—

"यः कोटिहोमानलधूमजालै-
मलीमसीकृत्य दिशां मुखानि ॥
तत्कीर्तिभिः क्षालयति स्म शश्व-
दखण्डधारामतिपाण्डुराभिः ॥ १ ॥"

अत्र धूममुखेन होमादुत्पन्नस्य मालिन्यस्य तज्जनितेनैव कीर्तिप्रवाहेण क्षालनमिति दोषो गुणेन समाहितः ॥

यथा वा—

"य इह पथिकविप्रयोगदीर्घी-
करणवशादुदभून्मधोरधर्मः ॥
मुकुलितरजनेः स चक्रनाम्नां
विरहतनूकरणेन तस्य शान्तः ॥ १ ॥"

अत्र मधोः स्वाधिकारे वर्तमानस्य पथिकविरहवशादुत्पन्नस्याधर्मस्य चक्रवाकविरहतनूकरणान्निवृत्तिः ॥

गुणस्य दोषेण समाधानं यथा—

"पादाम्बुजे मज्जति सुन्दरीणां

सोच्छ्वासमासीत्सरसीषु पद्मम् ॥
उत्कंधरं वीक्ष्य पुनर्मुखेन्दुं
विडम्बनां प्रापदकाण्ड एव ॥ १ ॥"

अत्र जलकेलिप्रवृत्तसुन्दरीपादाम्बुजानां स्वसदृशानां निमज्जनाऽजनितस्य पद्मोच्छ्वासस्य गुणस्य तत्सदृशमुखदर्शनेन दोषेण समाधानम् ॥

यथावा

"पादानतः प्रातरुपेत्य शौरि-
र्ममार्ज मन्युं मनसः प्रियायाः ॥
नामग्रहादन्यव्रजाङ्गनायाः
पुनर्दिदीपे द्विगुणं सखे सः ॥ १ ॥"

अत्रानुनयार्थं पादपतनचाटुकादि कुर्वता पादपतनेनार्जितस्य प्रसादाख्यगुणस्य चाटुकान्तर्गतेन गोत्रस्खलनेन हारणमिति गुणो दोषेण समाहितः ॥ रत्नाकरकारो वदति "अस्याश्च नाचिन्त्यालंकारान्तर्भावशङ्का कार्या । यतः, अपरेण समाधानं विवक्षा गुणदोषयोः समतायाम्. अचिन्त्ये तु तदभावाद्विरुद्धतेति" इति ॥ मम तु मतं, एवं समाधानेऽपि पश्चात्तथाकरणं पश्चात्तथाभावो वा । स तु पूर्वरूपस्यैव विषयः । "यः, कोटिहोमानल-" इत्यत्र समाधानाद्दिशां पुनस्तथाकरणम् । "य इह पथिकविप्रयोग-"इत्यत्र समाधानेन मधोः पश्चात्तथाभावः । गुणदोषरूपविशेषस्यापि नालंकारान्तरत्वसाधकत्वम् ॥

॥ इति समताप्रकरणम् ॥ ६४ ॥



## ॥ समाधिः ॥



समाधिरित्यत्र समुपसर्गार्थः सम्यगिति । आधिशब्दार्थः स्थापनम् । उक्तं चिन्तामणिकोषकारेण "आधिरधिष्ठाने । अधिष्ठानमध्यासने",

इति। अन्यधर्मस्यान्यत्र स्थापने समाधिशब्दस्य रूढिमङ्गीकृत्य भगवान्वेदव्यासः समाध्याख्यमलंकारान्तरं मन्वान इदं लक्षणमाह—

"अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना ॥
सम्यगाधीयते यत्र स समाधिरिह स्मृतः ॥" इति ॥

भोजमहाराजस्येदं लक्षणोदाहरणम्—

"समाधिरन्यधर्माणामन्यत्रारोपणं विदुः ॥" इति ॥

यथा—

"चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन् सरय्वा
वादद्वैतं सुचिरमभवत्सिद्धयूनोः कयोश्चित् ॥
एको ब्रूते प्रथमनिहतं केशिनं कंसमन्यः
स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम् ॥ १ ॥"

अत्र राज्ञि विष्णुधर्मस्यारोपः ॥

मम तु मतं, एतल्लक्षणलक्षितस्य पर्यायेऽन्तर्भावः। उदाहरणे चाभेदालंकारः। अन्यधर्मस्यान्यत्रारोपस्थले जयदेवस्तु ललितोपमेत्युपमाप्रकारमाह। तदुदाहरणं तु निदर्शनाप्रकरणे लिखितम्। अयं समाधिः पर्यायाभेदोपमातो नातिरिच्यते ॥

॥ इति समाधिप्रकरणम् ॥ ६५ ॥

## ॥ समाहितम् ॥

अत्र समुपसर्गार्थः सम्यगिति। आहितशब्दार्थश्च संपादित इति। आह चिन्तामणिकोषकारः "आहितः संपादिते" इति ॥ समाहित इति शब्दसमुदायार्थः सम्यक्संपादित इति। प्राञ्चः समाहिताख्यमलंकारान्तरं मन्यन्ते। सूत्रकारवामनस्येदं लक्षणोदाहरणम्—

"यत्सादृश्यं तत्सपत्तिः समाहितम्" इति ॥

संपत्तिश्च प्राप्तिः। आह चिन्तामणिकोषकारः "संपत्तिरिष्टप्राप्तौ" इति ॥

यथा—

"तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा ॥
चिन्तामोहमिवास्थिता मधुलिहां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा ॥१॥"

वामनेनेदमुदाहरणं विक्रमोर्वशीयत्रोटकादुद्धृतम्। तत्रायं प्रसङ्गः। उर्वश्यां कोपाक्रान्ततया प्रयातायां तादृशोर्वशीसादृश्यं लतायामवलोक्य विरहविह्वले पुरूरवसि लतामाश्लिष्यति साक्षादुर्वशीलाभः। मम तु मतं, सदृशवस्तुना विनोदकरणे साक्षाद्वस्तुनः काकतालीयन्यायेन प्राप्तिरपि प्रहर्षणालंकारः। प्रहर्षणस्य प्राचीनोक्ता न त्रय एव प्रभेदाः, अपि त्वनेके इति स्पष्टीकृतं मया प्रहर्षणप्रकरणे ॥

॥ इति समाहितप्रकरणम् ॥ ९६ ॥

---

## ॥ सामान्यम् ॥

---

समानानां भावः सामान्यम्। समानास्तुल्याः। अत्र समानवस्तुषु विशेषपरिज्ञानाभावे सामान्यशब्दो रूढः। काव्यप्रकाशगतकारिकाकारादयो बहवः प्राचीनाः सामान्यं मिलितात्पृथगलंकारमङ्गीचक्रुः ॥ काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया ॥
ऐकात्म्यं बध्यते योगात्तत्सामान्यमिति स्मृतम् ॥" इति ॥

चन्द्रालोककारस्येदं लक्षणम्—

"सामान्यं यदि सादृश्याद्विशेषो नोपलक्ष्यते ॥" इति ॥

यथा—

"पद्माकरप्रविष्टानां मुखं नालक्षि सुभ्रुवाम् ॥"

यथावा—

"रत्नस्तम्भेषु संक्रान्तप्रतिबिम्बशतैर्वृतः ॥
लङ्केश्वरः सभामध्ये न दृष्टो बालिसूनुना ॥ १ ॥"

पूर्वोदाहरणे पद्मकान्तामुखयोः सामान्यस्य वर्णनम् । उत्तरोदाहरणे च प्रतिबिम्बरूपलङ्केश्वरबिम्बरूपलङ्केश्वरयोः सामान्यस्य वर्णनम् । काव्यप्रकाशगतकारिकाकारादीनामयं सिद्धान्तः, "समानतयाऽन्यवस्तुनो वस्त्वन्तरेणाच्छादनात्तस्य प्रतीत्यभावे मिलितालंकारः । वस्तुपार्थक्ये समानतया किमिदं किमिदमिति प्रतीत्यभावे सामान्यालंकारः" इति ॥ रत्नाकरकारस्तु सामान्यं मिलितान्न पृथगित्याह । इमां च कारिकामुपन्यस्य

"भेदेनानुपलम्भस्य बलवद्गुणसंगतिः ॥
सामान्ये मीलिते तुल्यो हेतुस्तेन न भिन्नता ॥" इति ॥

वृत्तौ लिखति "वस्त्वन्तरस्याच्छादनात्सामान्यमपि मीलितस्यैव भेदो भवितुमर्हति" इति । अस्येदं तात्पर्यम्, मीलिते वस्तुन आच्छादनम्, सामान्ये तु वस्तुन अन्यताया आच्छादनमित्यनयोर्न भेदः । ममापि रत्नाकरकारेण सहैकमत्यम् । नीरक्षीरन्यायेन मिलनेपि मिलनव्यवहारो भवति । रत्नराशौ सजातीयरत्नमिलने तद्भेदाज्ञानेपि मिलनव्यवहारो भवतीति तादृशमिलनस्य प्रकारान्तरत्वात्सामान्यस्य मिलितेऽन्तर्भावः ॥

॥ इति सामान्यप्रकरणम् ॥ ९७ ॥



## ॥ साम्यम् ॥



साम्यशब्दार्थः समता । प्राञ्चः साम्याख्यमलंकारान्तरं मन्यन्ते ॥

भोजमहाराजस्येदं लक्षणम्—

"द्वयोर्यत्रोक्तिचातुर्यादौपम्यार्थोऽवगम्यते ॥

उपमारूपकान्यत्वे साम्यमित्यामनन्ति तत् ॥" इति ॥

।—

"स्थितः स्थितामुच्चलितः प्रयातां
निषेदुषीमासनबन्धधीरः ॥
जलाभिलाषी जलमाददानां
छायेव तां भूपतिरन्वगच्छत् ॥ १ ॥"

भोजमहाराजः साम्यालंकारस्योपमातः पृथक्त्वमभिप्रेत्योपमाया लक्षणमाह—

"प्रसिद्धेरनुरोधेन यः परस्परमर्थयोः ॥
भूयोऽवयवसामान्ययोगः सेहोपमा मता ॥" इति ॥

राजस्योपमाया उदाहरणम्—

"मुखमिन्दुसुन्दरं ते
बिसकिसलयकोमले भुजालतिके ॥
जघनस्थली च सुन्दरि !
तव शैलशिलाविशालेयम् ॥ १ ॥"

अत्र मुखादीनां चन्द्राद्युपमानानि प्रसिद्धानि । मुखचन्द्रयो- थः सौन्दर्याकृतिवर्णाद्यनेकावयवैः साम्यम् । करकिसलययोर्मिथः कुमार्यारुणताद्यनेकावयवैः साम्यम् । जघनशैलशिलयोर्मिथ आकृति- वर्णत्वाद्यनेकावयवैः साम्यम् । "स्थितः स्थिताम्–" इत्यत्र तु धेनुच्छा- ा सह दिलीपस्योपमा लोकेऽप्रसिद्धा । क्रियारूपधर्मेणैकावयवेन म्यम् । महाराजानुसारेणास्माभिः पुनरुदाह्रियते—

"स्नातक्ताः केचिन्मधुरिपुसमाना नृपतयः
प्रपञ्चे संलीना विधिरिव परे भोजनरताः ॥
गजास्यामा अन्ये रविरिव सदाकर्षणपरा
वदान्यत्वे त्वद्येश्वर इव दधद्भ्राजति भवान् ॥ १ ॥"

अत्र वदान्यत्वे महादेवोपमाया बहुभिरुक्तत्वात् प्रसिद्धावपि भोज-

नासक्तयादौ गजाननाद्युपमाया न तथा प्रसिद्धिः । अपि चैतासूपमासु भोजनासक्तत्वादिधर्मरूपेणैकैकावयवेन साम्यमित्युपमातो वैलक्षण्यम् । भोजमहाराज उपमानोत्कर्षाख्यसाम्यस्येदमुदाहरणमदात्—

"गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि भद्रे! ॥
सन्तीदृशानि दिशि दिशि सरस्सु ननु नीलनलिनानि ॥ १ ॥"

अत्रोपमेयनायिकायां लोचनयोर्युगलम्, उपमानसरसि च नीलनलिनबाहुल्यमित्युपमानस्योत्कर्षः। लोके नयनविषये नीलोत्पलोपमायाः प्रसिद्धावपि नीलोत्पलविषये नयनोपमा त्वप्रसिद्धैवेति कवेर्नवीनोक्तिरियम्। मम तु मतं, उपमाया नवीनकल्पनया वर्णादिधर्मरूपेणैकावयवेन च समतायामुपमायाश्चमत्कृतौ वैलक्षण्याभावादुक्तसाम्यालंकारो न पृथक् । भोजमहाराजेन साम्यालंकारस्य बहवः प्रभेदा दर्शितास्तेषामुदाहरणेषु क्वचिद्विपरीतोपमा क्वचिच्च व्यतिरेकप्रभृतयो बोध्याः । अत्र तु ग्रन्थविस्तरभयान्न प्रदर्श्यन्ते । रुद्रटः साम्यालंकारस्य प्रकारद्वयमाह । प्रथमप्रकारस्येदं लक्षणोदाहरणम्—

"अर्थक्रियया यस्मिन्नुपमानस्यैति साम्यमुपमेयम् ॥
तत्सामान्यगुणादिककारणया तद्भवेत्साम्यम् ॥ १ ॥"

यथा—

"अभिसर रमणं किमिमां दिशमैन्द्रीमाकुलं विलोकयसि ॥
शशिनः करोति कार्यं सकलं मुखमेव ते मुग्धे! ॥ १ ॥"

अत्र कान्तिरूपसमानगुणेन शशिनो यत्कार्यं प्रकाशस्तत्कारितया शशिसाम्याद्धेतोराननस्योपमेयतालाभः । मम तु मतं, अयं विषयः प्रतिमालंकारात्पृथङ्नेति । रुद्रटस्य द्वितीयप्रकारस्येदं लक्षणोदाहरणम्—

"सर्वाकारं यस्मिन्नुभयोरभिधातुमन्यथा साम्यम् ॥
उपमेयोत्कर्षकरं कुर्वीत विशेषमन्यत्तत् ॥" इति ॥

यथा—

"मृगं मृगाङ्कः सहजं कलङ्कं
बिभर्ति तस्यास्तु मुखं कदाचित् ॥

आहार्यमेवं मृगनाभिपत्र-
मियानशेषेण तयोर्विशेषः ॥ १ ॥"

अत्रोपमानमृगाङ्के मृगरूपमङ्कं सहजं शाश्वतिकं च। उपमेये मुखे तु मृगनाभिपत्ररचनमाहार्यं कादाचित्कं चेत्युपमेयस्य विशेषकथनान्नयनानन्दकारित्वाद्युपमेयस्यान्यथासर्वात्मसाम्यं साधितम्। मम तु मतं, अत्र विषये व्यतिरेको मत्स्पष्टीकृतो वा विशेषोक्त्यलंकारः। रुद्रटोक्तं साम्यमपि न पृथगलंकारः॥

इति साम्यप्रकरणम् ॥ ९८ ॥

## ॥ अन्तर्भूतालंकारगणना ॥

अङ्गा[1]चिन्त्या[2]वतिशयो[3]ऽत्युक्ति[4]श्चानङ्ग[5]मेव च ॥
तथाऽनध्यवसायो[6]ऽथानन्वय[7]श्चाप्यनादरः[8] ॥ १ ॥
अनुकूलं[9] चानुकृति[10]स्ततश्चानुगुणः[11] स्मृतः ॥
अप्रत्यनीका[12]भावा[13]ख्यावभीष्टं[14] च ततः परम् ॥ २ ॥
अभ्यासो[15]ऽर्थान्तरन्यासो[16]ऽवरोहो[17]ऽशक्य[18]मेव च ॥
असंगति[19]स्ततोऽसंभवा[20]समा[21]हेतव[22]स्तथा ॥ ३ ॥
आदर्श[23]पत्त्य[24]लंकारौ ततश्चावृत्तिदीपकम्[25] ॥
आशी[26]रुद्भेद[27] उद्रेक[28]स्ततश्चोन्मीलितं[29] मतम् ॥ ४ ॥
उपमेयोपमा[30] चैवोपसंहार[31]स्ततः परम् ॥
ततश्चैवोभयन्यास[32] उल्लासः[33] कल्पितोपमा[34] ॥ ५ ॥
दीपकं[35] कारकाख्यं स्यात्ततः कारण[36]मालिका ॥
काव्य[37]लिङ्गमलंकारस्ततो मरुधराधिप! ॥ ६ ॥
क्रिया[38]तिपत्ति[39]र्गूढं गूढो[40]क्तिश्छेको[41]क्तिरेव च ॥
अलंकारस्ततो राजन् भवेत्तत्सदृशादरः[42] ॥ ७ ॥

[४३]तन्त्राख्यश्चैव [४४]तात्पर्यं [४५]तिरस्कारश्च [४६]तुल्यकम् ॥
[४७]निश्चयः [४८]परभागश्च ततः [४९]परिकराङ्कुरः ॥ ८ ॥
[५०]परिवृत्तिरलंकारो यशवन्त ! ततः परम् ॥
[५१]पुनरुक्तिवदाभासः [५२]पूर्वाख्यश्च [५३]प्रतिप्रसूः ॥ ९ ॥
[५४]प्रतिबन्धानन्तरं स्यात्[५५]प्रतिभालंकृतिर्नृप ! ॥
[५६]प्रतिवस्तूपमा चैव [५७]प्रतिषेधः [५८]प्रतीपकम् ॥ १० ॥
[५९]प्रत्यादेशो महाराज ! [६०]प्रत्यूहालंकृतिस्ततः ॥
[६१]प्रसङ्गानन्तरं राजन्भूषा स्यात्[६२]प्रस्तुताङ्कुरः ॥ ११ ॥
[६३]प्रौढोक्ति[६४]भङ्गि[६५]भावाख्या [६६]भाषासम[६७]मताभिधौ ॥
[६८]मालादीपक[६९]युक्त्याख्यौ [७०]ललितं [७१]वर्द्धमानकम् ॥ १२ ॥
[७२]विकल्पाभासनामा च ततश्चैव [७३]विकस्वरः ॥
[७४]वितर्क[७५]विधि[७६]विध्याभास-[७७]विनोद[७८]विपर्ययाः ॥ १३ ॥
[७९]विभावना नरपते ! [८०]विरोधाभास एव च ॥
[८१]विवृतोक्ति[८२]र्विवेकश्च [८३]विशेषः परिकीर्तितः ॥ १४ ॥
[८४]विशेषोक्तिश्च [८५]वैधर्म्यं [८६]व्यत्यासो [८७]व्याजनिन्दिका ॥
[८८]व्याजस्तुतिर्महाराज! [८९]व्याजोक्ति[९०]र्व्याप्तिरेव च ॥ १५ ॥
[९१]व्यासङ्गालंकृतिः पश्चात्[९२]संदेहाभास एव च ॥
[९३]व्यतिरेकः सजातीयः [९४]समता च [९५]समाधिकः ॥ १६ ॥
[९६]समाहितं च [९७]सामान्यं [९८]साम्याख्यं भूषणं नृप ! ॥
अन्तर्भावार्हभूषाणां द्व्यूनं शतमिदं स्मृतम् ॥१७॥
उपमेयोपमा साम्यं प्रतिवस्तूपमा तथा ॥
प्रतीपस्य त्रिकं पूर्वं पञ्चमी कल्पितोपमा ॥ १८ ॥
उपमान्तर्गता एते यशवन्तधराधिप ! ॥
अन्तर्भवेदतिशयोक्तावत्युक्तिरलंकृतिः ॥ १९ ॥
अतुल्ययोगितायां च लीयतेऽङ्गमनङ्गकम् ॥
अधिकेऽतिशयस्तन्त्रमुद्रेकानुगुणौ तथा ॥ २० ॥

प्रौढोक्तिश्च प्रसङ्गश्च लीयते वर्द्धमानकम् ॥
परिवृत्तिस्तथाऽन्योन्ये लीयतेऽपन्हुतौ नृप!॥ २१ ॥
व्याजोक्तियुक्तिनामानौ लीयेते नात्र संशयः ॥
अप्रस्तुतप्रशंसायां लीयते प्रस्तुताङ्कुरः ॥ २२ ॥
अल्पेऽवरोहोऽवज्ञायां तिरस्कारोऽप्यनादरः ॥
आक्षेपान्तर्गता राजन्व्यासङ्गोऽनन्वयोऽसमः ॥ २३ ॥
अभावः प्रतिषेधश्च पञ्चमं च प्रतीपकम् ॥
आभासालंकृतौ विध्याभासस्तात्पर्यमेव च ॥ २४ ॥
पुनरुक्तिवदाभासो विकल्पाभास एव च ॥
विरोधाभाससंदेहाभासौ लीना भवन्ति षट् ॥ २५ ॥
उत्प्रेक्षायां मतं राजल्लीयते नात्र संशयः ॥
आपत्त्याख्यस्तु काव्यार्थापत्तौ संलीयते नृप!॥ २६ ॥
व्याप्तिश्चानुकृतिस्तुल्ययोगितान्तर्गतौ नृप!॥
आवृत्तिदीपकं चैव तथा कारकदीपकम् ॥ २७ ॥
दीपकान्तर्गतावेतौ मालादीपकमेव च ॥
दृष्टान्ते चोभयन्यासो लीयते धरणीधर!॥ २८ ॥
अलंकारे परिकरे लीनः परिकराङ्कुरः ॥
व्यत्यासोप्यनुकूलं च परिणामे प्रलीयते ॥ २९ ॥
पर्यायोक्तौ च ललितमुद्भेदः पिहिते गतः ॥
प्रतिप्रसवतुल्याख्यौ समता पूर्वरूपके ॥ ३० ॥
विनोदः प्रतिमायां च लीयते मनुजाधिप! ॥
प्रत्यनीकेऽप्रत्यनीकं तथा तत्सदृशादरः ॥ ३१ ॥
प्रहर्षणे प्रलीयेताभीष्टं चैव समाहितम् ॥
प्रेयोऽलंकार एवाशीरन्तर्भावमवाप्नुयात् ॥ ३२ ॥
उन्मीलितविवेकाख्यौ सामान्यं मिलिते गताः ॥
अभ्यासाशक्यभावाश्च प्रत्यूहः प्रतिबन्धकः ॥ ३३ ॥

लोकेऽन्तर्भावमायान्ति यशवन्तधराधिप ! ॥
विभावना विशेषोक्तिरचिन्त्याहेत्वसंभवाः ॥ ३४ ॥
विचित्रे संप्रलीयन्ते पूर्वं चैव नराधिप ! ॥
विधिर्विधौ विलीयेत व्यतिरेके तथा नृप ! ॥ ३५ ॥
वैधर्म्यं परभागश्च प्रतीपं च चतुर्थकम् ॥
व्यतिरेकः सजातीयो लीनाः स्युर्मरुनायक ! ॥ ३६ ॥
उपसंहारभूषा च व्याघाते लीयते नृप ! ॥
संदेहे च वितर्काख्यो लीनोऽनध्यवसायकः ॥ ३७ ॥
क्रियातिपत्तिः प्रतिभा लीना संभावनोदरे ॥
समासोक्तौ भङ्गिभूषा सूक्ष्मे गूढं तथा शृणु ॥ ३८ ॥
छेकोक्तिर्विवृतोक्तिश्च गूढोक्तिर्लीयते नृप ! ॥
हेतौ राजन्काव्यलिङ्गमन्तर्भावमवाप्नुयात् ॥ ३९ ॥
दृष्टान्तोदाहरणयोरन्तर्भावमवाप्नुयात् ॥
भूषा ह्यर्थान्तरन्यासो यशवन्तनरेश्वर ! ॥ ४० ॥
असंगतिर्विचित्राख्ये विषमे च विलीयते ॥
अनुज्ञायां पूर्वरूपे आदरोऽन्तर्भवेदिह ॥ ४१ ॥
उल्लासो लीयते हेतौ विचित्रे तद्गुणे समे ॥
विषमे च महाराज ! पञ्चस्वेतेषु नान्यथा ॥ ४२ ॥
हेतुशृङ्खलयो राजल्लीना कारणमालिका ॥
निश्चयो लीयते भ्रान्तौ संदेहाक्षेपयोस्तथा ॥ ४३ ॥
परिवृत्तिः शृङ्खलायामन्योन्योपमयोस्तथा ॥
प्रत्यादेशः पूर्वरूपे आक्षेपे च प्रलीयते ॥ ४४ ॥
भाषासमश्च लीयेत लोके नृप ! तथाधिके ॥
दृष्टान्तोदाहरणयोर्विकस्वर इह स्मृतः ॥ ४५ ॥
विपर्ययो विलीयेत ह्यन्योन्यपरिणामयोः ॥

विशेषस्त्वधिके लीनो विचित्रे मिलितेऽपि च ॥ ४६ ॥
मिषहेतुविचित्रेषु व्याजनिन्दा विलीयते ॥
मिषाभासविचित्रेषु व्याजस्तुतिरलंकृतिः ॥
उपमाभेदपर्याये समाधेः संग्रहो भवेत् ॥ ४७ ॥
इत्यूनं शतमलंकारगणनारसिकैरिदम् ॥
वृथैव गणितं कैश्चिद्यशवन्तनरेश्वर ! ॥ ४८ ॥

## ॥ अथ प्रमाणालंकाराः ॥

ईश्वरादिनिर्णयार्थं प्रमाणानि मन्यन्ते। तत्र चार्वाकाः केवलं प्रत्यक्षमेव प्रमाणं मन्यन्ते। वैशेषिकशास्त्रनिर्माता कणादमुनिर्बौद्धाश्च प्रत्यक्षानुमानेतिप्रमाणद्वयमङ्गीकुर्वन्ति। सांख्यशास्त्रज्ञाः प्रत्यक्षानुमानशब्देतिप्रमाणत्रयं स्वीकुर्वन्ति। न्यायशास्त्रनिर्माता गौतमः प्रत्यक्षानुमानशब्दोपमानेतिप्रमाणचतुष्टयं मन्यते। मीमांसैकदेशी प्रभाकरः प्रत्यक्षानुमानशब्दोपमानार्थापत्तीति प्रमाणपञ्चकमूरीकरोति। भट्टमीमांसको वेदान्तिनश्च प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यनुपलब्धीतिप्रमाणषट्कं स्वीकुर्वन्ति। पौराणिकाश्च प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यनुपलब्धिसंभवैतिह्येति प्रमाणाष्टकं मन्यन्ते। भोजमहाराजोऽप्पयदीक्षितश्च प्रत्यक्षादिप्रमाणानुसारेणालंकारान् स्वीचक्रतुः। प्रमा तु यथार्थानुभवः। उक्तं चिन्तामणिकोषकारेण "प्रमा यथार्थानुभवे। प्रमैव प्रमाणम्" इति॥ स्मृत्यतिरिक्तं ज्ञानमनुभवः॥

## ॥ प्रत्यक्षालंकारः ॥

प्रतिशब्दार्थः सांमुख्यम्। उक्तं चिन्तामणिकोषकारेण " प्रति

आभिमुख्ये" इति ॥ अक्षशब्दो नेत्रादीन्द्रियवाची । ज्ञानाधिकरणं चात्मा । अक्षाभिमुख्येनार्थादिन्द्रियद्वारा जन्यं ज्ञानं प्रत्यक्षशब्दार्थः । भोजमहाराजः प्रत्यक्षालंकारस्येदं लक्षणमाह—

"प्रत्यक्षमक्षजं ज्ञानं मानसं चाभिधीयते ॥
स्वानुभूतिभवं चैवमुपचारेण कथ्यते ॥" इति ॥

स्वानुभूतिभवमिति योगाभ्यासादिना स्वात्मानुभवजन्यज्ञानम् । भोजमहाराजोऽक्षजं ज्ञानं युगपदेकशश्चेति द्विधा प्राह । दीक्षितस्तु नोवाच ।

क्रमेण यथा—

"क्रान्तकान्तवदनप्रतिबिम्बे
भग्ननालसहकारसुगन्धौ ॥
स्वादुनि प्रणिहितालिनि शीते
निर्ववार मधुनीन्द्रियवर्गः ॥ १ ॥"

अत्र मदिराश्रयाणां मुखप्रतिबिम्बसौगन्ध्यस्वादुताश्रव्यत्वशैत्यानां दृग्घ्राणरसनश्रवणत्वागिन्द्रियप्रत्यक्षता प्रतीयते ॥

"मन्दमन्दविगलत्त्रपमीष-
च्चक्षुरुल्लासितपक्ष्म दधत्या ॥
वीक्ष्यते स्म शनकैर्नवबध्वा
कामिनो मुखमधोमुखयैव ॥ १ ॥"

तदेतच्चाक्षुषम् ।

यथावा—

"अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः
पश्चाल्लीलावलयरणितं चामरग्राहिणीनाम् ॥
यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं
नो चेच्चेतः! प्रविश सहसा निर्विकल्पे समाधौ ॥ १ ॥"

अत्र गीतकविताकङ्कणरवाणां श्रवणेन प्रत्यक्षम् । मम तु मतं,

ज्ञानस्य युगपत्पञ्चेन्द्रियजन्यत्वे एकैकेन्द्रियजन्यत्वे वा न प्रकारान्तरात्वम्। अपि तूदाहरणान्तरमात्रम् ॥

"धन्यानां गिरिकंदरे निवसतां ज्योतिः परं ध्यायता-
मानन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्के स्थिताः ॥
अस्माकं तु मनोरथोपरचितप्रासादवापीतट-
क्रीडाकाननकेलिकौतुकजुषामायुः परं क्षीयते ॥ १ ॥"

तदेतन्मानसज्ञानमपि गौणया वृत्त्या प्रत्यक्षमभिधीयते ॥

"उद्घाट्य योगकलया हृदयाब्जकोशं
धन्यैश्चिरादपि यथारुचि गृह्यमाणः ॥
यः प्रस्फुरत्यविरतं परिपूर्णरूपः
श्रेयः स मे दिशतु शाश्वतिकं मुकुन्दः ॥ १ ॥"

अत्र योगाभ्यासेनाज्ञानरूपावरणनिवृत्त्यनन्तरमात्मनः स्वप्रकाशरूपज्ञानमपि गौणया वृत्त्या प्रत्यक्षमभिधीयते ॥

इति प्रत्यक्षप्रमाणालंकारप्रकरणम् ॥ १ ॥



## ॥ अनुमानालंकारः ॥



अत्रानुशब्दार्थो लक्षणम्। आह चिन्तामणिकोषकारः "अनु-लक्षणे" इति। लक्षणं चिन्हमिति पर्यायान्तरम् ॥ "चिन्हं लक्ष्म च लक्षणम्" इत्यमरः ॥ माधात्वर्थो मितिरिति। मितिर्ज्ञानम्। अनुमितिरितिशब्दसमुदायार्थश्चिन्हेन ज्ञानमिति॥ अनुमितिकरणं चानुमानम् ॥ कुवलयानन्दकारस्येदमुदाहरणम्—

"यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः ॥
यथा विद्युज्ज्वालोल्लसितपरिपिङ्गाश्च ककुभ-

स्तथा मन्ये लग्नः पथिकतरुखण्डे स्मरदवः ॥ १ ॥"

अत्र जलदधूम-कीटमणिस्फुलिङ्ग-विद्युज्ज्वालारूपचिन्हैर्विरहित-रुखण्डे कामदावानलज्ञानम् । भोजमहाराजोऽनुमानस्येदं लक्षणमाह—

"लिङ्गाद्यल्लिङ्गिनो ज्ञानमनुमानं तदुच्यते ॥
पूर्ववच्छेषवच्चैव दृष्टं सामान्यतश्च यत् ॥" इति ॥

यत्र कारणात्कार्यज्ञानं तत्पूर्ववत् । यत्र कार्यात्कारणज्ञानं तच्छेषवत् । यत्र कार्यकारणभावं विनाप्यविनाभावेनान्यतरज्ञानं तत्सामान्यतो दृष्टम् ॥

क्रमेण यथा—

"अविरलविलोलजलदः
कुटजार्जुननीपसुरभिवनवातः ॥
अयमायातः कालो
हन्त हताः पथिकगेहिन्यः ॥ १ ॥"

अत्र वर्षर्तोः कारणभूतात्कार्यभूतविरहिणीनां मरणमनुमीयते, तदेतत्पूर्वं कारणमिहास्तीति पूर्ववदुच्यते ॥

"सावज्ञमागमिष्य-
न्नूनं पतितोऽसि पादयोस्तस्याः ॥
कथमन्यथा ललाटे
यावकरसतिलकपङ्क्तिरियम् ॥ १ ॥"

अत्र यावकरसतिलकपङ्क्तेः कार्यभूतायाः कारणभूतं पादपतनमनुमीयते, तदेतच्छेषवदुच्यते ॥

"गँज्जन्ते खे मेहा फुल्ला णीवा पणच्चिआ मोरा ॥
णट्ठो चंदज्जोओ वासारत्तो हलायत्तो ॥ १ ॥"

* "गर्जन्ते खे मेघाः फुल्ला नीपाः प्रनर्तिता मयूराः । नष्टश्चण्डज्योत्स्नो वर्षर्तुरहो आयातः ॥" ॥ इति संस्कृतम् ॥

अत्र वर्षर्तुरविनाभूतैर्मेघगर्जितादिभिः सामान्येनैवानुमीयते, तत्सामान्यतोदृष्टमिदम्। अविनाभावस्त्वेकमन्तराऽन्यतरस्याभावः ॥

॥ इत्यनुमानालंकारप्रकरणम् ॥ २ ॥

## ॥ शब्दालंकारः ॥

शब्दजन्यं यथार्थज्ञानं शब्दप्रमाणम् ॥

यथा—

"विवृण्वता दोषमपि च्युतात्मना
त्वयैकमीशं प्रति साधु भाषितम् ॥
यमामनन्त्यात्मभुवोऽपि कारणं
कथं स लक्ष्यप्रभवो भविष्यति ॥ १ ॥"

कुमारसंभवे वटुवेषं हरं प्रति पार्वत्या इयमुक्तिः ॥ अत्र शिवः परमेष्ठिनोऽपि कारणमित्यत्र श्रुतिरूपं प्रमाणमुपन्यस्तम् ॥ केचित्सदाचारमपि प्रमाणं मन्यन्ते ॥

यथा—

"महाजनाचारपरंपरेदृशी
स्वनाम नामाददते न साधवः ॥
अतोऽभिधातुं न तदुत्सहे पुन-
र्जनः किलाचारमुचं विगायति ॥ १ ॥"

नलं तन्नाम पृच्छन्तीं दमयन्तीं प्रति नलस्योक्तिरियम्। स्वनाम्नोऽनभिधानं सदाचारः। तस्य च वेदवचनानुपलम्भेऽपि वेदमूलकतानुमीयते। सदाचारस्य वेदमूलकत्वात्। अस्यापि शब्दप्रमाणेऽन्तर्भावः। केचनात्मतुष्टिमपि प्रमाणत्वेनाङ्गीकुर्वन्ति। अस्यापि वेदमूलकत्वाच्छब्द-

प्रमाणेऽन्तर्भावः । यत्र सतामात्मनस्तुष्टिस्तस्य कार्यस्य कर्तव्यत्वम् । अकार्ये सदात्मतुष्टेरभावात् ॥

यथा—

"असंशयं क्षत्रपरिग्रहक्षमा
यदार्यमस्यामभिलाषि मे मनः ॥
सतां हि संदेहपदेषु वस्तुषु
प्रमाणमन्तःकरणस्य वृत्तयः ॥ १ ॥"

॥ इति शब्दप्रमाणालंकारप्रकरणम् ॥ ३ ॥

## ॥ उपमानम् ॥

भोजमहाराज उपमानप्रमाणस्येदं लक्षणमाह—

" सादृश्यात्सदृशज्ञानमुपमानम् ॥ " इति ॥

यथा—

"तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले ॥
यस्तन्वि ! तारकान्यासः शकटाकारमाश्रितः ॥ १ ॥"

अत्र शकटसादृश्यज्ञानादिदं रोहिणीनक्षत्रमिति प्रतीयते ॥

यथावा—

"अत्र मन्मथमिवातिसुन्दरं
दानवारिमिव दिव्यतेजसम् ॥
शैलराजमिव धैर्यशालिनं
वेद्मि वेङ्कटपतिं महीपतिम् ॥ १ ॥"

पूर्वोदाहरणे उपमानभूतमतिदेशवाक्यं दर्शितम् । अत्रातिदेशवाक्यार्थसादृश्यप्रत्यक्षरूपमुपमानं फलेन सह दर्शितमिति विशेषः ॥

इत्युपमानालंकारप्रकरणम् ॥ ४ ॥

## ॥ अर्थापत्त्यलंकारः ॥



अर्थस्यापतनमर्थापत्तिः । तस्या इदं लक्षणम्—

"अनुपपद्यमानेनार्थेनोपपादककल्पनमर्थापत्तिः" इति ॥

यथा—

"निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ! ॥
अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥ १ ॥"

कुचमन्तरा मध्यभारधारणस्यानुपपद्यमानत्वान्मध्यं कल्प्यते ॥ मीमांसका अर्थापत्तिं पृथक्प्रमाणं मन्यन्ते । नैयायिका अर्थापत्तिप्रमाणमनुमानप्रमाणेऽन्तर्भावयन्ति ॥

इत्यर्थापत्त्यलंकारप्रकरणम् ॥ ५ ॥



## ॥ अनुपलब्ध्यलंकारः ॥



नञत्र वर्जने । उपेत्युपसर्गार्थः सामीप्यम् । लब्धिशब्दार्थो लाभ इति ॥ अनुपलब्धिरितिशब्दसमुदायार्थः सामीप्ये लाभाभावः । अदर्शनमित्यर्थः । वस्तुनोऽदर्शनात्तदभावस्य निश्चयोऽनुपलब्धिप्रमाणम् ॥

यथा—

"स्फुटमसदवलग्नं तन्वि ! निश्चिन्वते ते
तदनुपलभमानास्तर्कयन्तोऽपि लोकाः ॥
कुचगिरिवरयुग्मं यद्विनाधारमास्ते
तदिह मकरकेतोरिन्द्रजालं प्रतीमः ॥ १ ॥"

अत्र मध्यादर्शनान्मध्याभावस्य निश्चयः । नैयायिका अनुपलब्धिप्रमाणं प्रत्यक्षेऽन्तर्भावयन्ति ॥ यस्य वस्तुनो येनेन्द्रियेण प्रत्यक्षं, तदभावस्यापि तेनैवेन्द्रियेण प्रत्यक्षं भवति । घटप्रत्यक्षस्य चक्षुर्जन्यत्वात्तद-

भावज्ञानमपि चक्षुर्जन्यमेवेति नैयायिकराद्धान्तः । अनुपलब्धिरभाव इति पर्यायान्तरम् । प्रत्यक्षज्ञानसाधनीभूतचक्षुरादीन्द्रियाणि प्रत्यक्षप्रमाणानि ॥ अथ तावद्दूरमनुधावनमकृत्वाऽभावांश एव पर्यवस्यते चेदस्य विषयस्याक्षेपालंकारेऽन्तर्भावः । अत एवास्माभिरभावालंकार उक्तस्वरूपेण प्रमाणालंकारेभ्यः पृथक् प्राक् प्रदर्शितः ॥

॥ इत्यनुपलब्धिप्रमाणालंकारप्रकरणम् ॥ ६ ॥

## ॥ संभवालंकारः ॥

"संभवत्यस्मादिति संभवः" इति चिन्तामणिः ॥ तेनैव च "सहस्रे शतम्" इत्युदाहृतम् ॥ सहस्रे च शतस्य संभवाच्छतार्थं सहस्रं संभवप्रमाणम् ॥

यथा—

"ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः ॥
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ १ ॥"

कालस्य निरवधिकत्वाद्भूमेश्च विपुलत्वादस्य कवेः समानधर्मिणः कस्यचिदग्रे भाविनोऽधुना भाविनो वा सिद्धतया निरवधिकालस्य विपुलायाः पृथिव्याश्च संभवप्रमाणत्वम् ॥ एवं संभवप्रमाणमनुमानादिप्रमाणेभ्यो विलक्षणम् ॥ नैयायिकास्तु संभवप्रमाणमनुमानेऽन्तर्भावयन्ति ॥

॥ इति संभवप्रमाणालंकारप्रकरणम् ॥ ७ ॥

## ॥ ऐतिह्यालंकारः ॥

परंपरायात उपदेश ऐतिह्यम् । अस्य चानिर्दिष्टप्रवक्तृकप्रवादपारंपर्यरूपत्वम् ॥

यथा—

"कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ॥
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ १ ॥"

नेदं श्रुतिस्मृतिवाक्यम्। लोकोक्तिरियम्। भोजमहाराजेन लोकोक्तेः शब्दप्रमाणेऽन्तर्भावः कृतः। स च युक्ततरः। लोकोक्तेः शब्दरूपत्वात् ॥

॥ इत्यैतिह्यप्रमाणालंकारप्रकरणम् ॥ ८ ॥

न्यायशास्त्रस्य प्रसिद्धाचार्यो गौतममुनिरर्थापत्त्यादिप्रमाणानि यथासंभवं प्रत्यक्षादिप्रमाणेष्वन्तर्भाव्य प्रत्यक्षादीनि चत्वारि प्रमाणानि मन्यते ॥ गौतमस्येदं सूत्रम्—

"प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति ॥

वैशेषिकशास्त्रस्य प्रसिद्धाचार्यः कणादमुनिः शब्दोपमानयोरनुमानात्पार्थक्यमनादृत्य प्रत्यक्षानुमाने द्वे एव प्रमाणे स्वीकरोति। उक्तं हि कणादमतानुयायिना विश्वनाथेन भाषापरिच्छेदे—

"शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥
अनुमानगतार्थत्वादिति वैशेषिकं मतम् ॥" इति ॥

प्राचीना उक्तरीत्योपमानादिप्रमाणषट्कस्य प्रत्यक्षानुमानयोरन्तर्भावं चक्रुः। मम तु मतं, अनुमानस्य ज्ञापकहेतुविशेषत्वाज्ज्ञापकहेतावन्तर्भावः। प्रत्यक्षज्ञानमात्रकथनस्य लोकोत्तरत्वाभावात्तत्रालंकारार्हचमत्कारो नानुभवसिद्ध इति लोकेऽन्तर्भावः ॥ प्रत्यक्षस्य वर्णने स्वभावोक्त्यादयोऽलंकारा भवेयुः। "क्रान्तकान्तवदनप्रतिबिम्बे—" इति ॥ इह तु समुच्चयोऽधिको वाऽलंकारः। "मन्दमन्दविगलत्त्रपम्—" इत्यत्र स्वभावोक्त्यलंकारः ॥ "धन्यानां गिरिकंदरे निवसताम्—" इत्यत्र प्राचीनमतीयो वैधर्म्यालंकारः। स चास्माभिर्व्यतिरेकेऽन्तर्भावितः। किं चात्र वास्तवप्रासादाद्यभावेऽपि मनोरथोपरचितप्रासादादिक्रीडाकौतुकजुषा केनचिद्भोगिजनेन निजनिन्दाप्रसङ्गे उक्तयोगिजनानामप्रस्तुतकथाऽभिहिता चेदप्रस्तुतप्रशंसालंकारः। प्राचामप्रस्तुतप्रशंसालंकारोदाहरणेषु प्रस्तुतवृत्तान्तस्य व्यङ्ग्यलभ्यत्वं, न तु वाच्यलभ्यत्वम्। तच्च कविसंप्रदा-

यविरुद्धमिति प्रसिद्धविरुद्धदूषणमिति चेन्न। सहृदयहृदयोद्वेगजनकत्वाभावात्। उक्तं हि दण्ड्याचार्येण—

"न लिङ्गवचने भिन्ने न न्यूनाधिकताऽपि वा ॥
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥" इति ॥

अपि चोपमाद्यलंकारा व्यङ्ग्या वाच्याश्चेत्युभयथापि भवन्तीत्यस्यापि तथा भवने को दोषः। किं च मनोरथोपरचितप्रासादादिभिर्वास्तवप्रासादादिसदृशानन्दप्राप्तौ पर्यवसानं चेत्प्रतिमालंकारः॥ "उद्घाट्य योगकलया—" इत्यत्रोदात्तालंकारः॥ ननु कार्यकारणभावं विनाऽविनाभावेनाप्यनुमितिरिति भवताऽधुनैवोक्तत्वादनुमानस्य सर्वथा ज्ञापकहेतौ कथमन्तर्भावः? इति चेच्छृणु। एतादृशप्रकारदर्शनं तु वैदग्ध्यविनोदः। सिद्धान्ते कस्मिंश्चिदपि वस्तुनि सर्वदा कारणाकारणत्वयोरभावात्। प्रसङ्गप्राप्तस्य वस्तुमात्रस्य कारणत्वौचित्यात्॥ "गज्जन्ते खे मेहा—" इत्यत्राविनाभावेनानुमानोदाहरणेऽपि मेघादिषु वर्षतोर्ज्ञापकत्वं विवक्षितं चेद् घनादीनां वर्षतोर्ज्ञापकहेतुत्वम्॥

"प्रत्यक्षेऽनुपलब्धिस्तल्लोकेऽन्तर्भवेत्तथा शब्दे ॥
ऐतिह्यमात्मतुष्टिरथो विलीनो भवेत्सदाचारः ॥ १॥
अनुमानेऽर्थापत्तिः संभवशब्दावथोपमानं च ॥
राजंस्तथानुमानं ज्ञापकहेतौ च लीयेत ॥ २ ॥
श्रीयशवन्तधराधिप! भूषा नैव पृथक् प्रमाणानि ॥
अस्मन्मतं तदेतदनुमन्तव्यं भवद्भिरपि ॥ ३ ॥"

॥ इति प्रमाणालंकारप्रकरणम् ॥



## ॥ संसृष्टिसंकरालंकारौ ॥



एकस्मिन्काव्येऽनेकालंकारस्थितौ प्राञ्चः संसृष्टिसंकरनामानौ पृथगलंकारौ मन्यन्ते। काव्यप्रदीपकारः "अस्ति पुनः कश्चिद्विषयो यत्रा-

ङ्गदादिसंबद्धपद्मरागप्रमुखमणिमेलकवत्प्रोक्तानामलंकाराणां संवलन एव चमत्कारः तस्मात्सोप्यलंकारः । तत्र द्वयी गतिः । परस्परमनपेक्ष्य व्यवस्थितेस्तदभावाच्च । तत्र प्रथमा संसृष्टिरुच्यते, द्वितीया तु संकरः।" इत्याह । संसृष्टिशब्दार्थः सङ्गः । उक्तं चिन्तामणिकोषकारेण "संसृष्टिः संसर्गे । संसर्गः सङ्गे" इति ॥ अत एवात्र प्राचीनाः संसृष्टिशब्देन तिलतण्डुलन्यायमनुसृत्यालंकारमिश्रणमिच्छन्ति । संकरशब्दार्थं च कोषकारा व्यामिश्रत्वमिति वदन्ति । उक्तं चिन्तामणिकोषकारेण "संकरो व्यामिश्रत्वे" इति ॥ व्युपसर्गार्थो विशेषः । आङुपसर्गार्थः समन्तादिति । मिश्रशब्दः संयुक्तार्थे । उक्तं चिन्तामणिकोषकारेण "मिश्रः संयुक्ते" इति । एवं च व्यामिश्रत्वेतिशब्दसमुदायार्थः सर्वतो विशिष्टं मिश्रणमिति । एतदक्षरार्थानुसारेण प्राञ्चः संकरशब्देन नीरक्षीरन्यायेनालंकारमिश्रणमिच्छन्ति ॥

संसृष्टिर्यथा—

"वदनसौरभलोभपरिभ्रम-
भ्रमरसंभ्रमसंभृतशोभया ॥
चलितया विदधे कलमेखला-
कलकलोऽलकलोलदृशाऽन्यया ॥ १ ॥"

अत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः ॥

"देव! क्षपा गलति चक्षुरमन्दतार-
मुन्मीलयाशु नलिनीव सभृङ्गमब्जम् ॥
एष त्वदाननरुचेव विलङ्घ्यमानः
पश्याम्बरं त्यजति निष्प्रतिभः शशाङ्कः ॥ १ ॥"

अत्रोपमोत्प्रेक्षयोरर्थालंकारयोः संसृष्टिः ॥

"आनन्दमन्थरपुरंदरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ॥
पादाम्बुजं भवतु मे विजयाय मञ्जु-
मञ्जीरसिञ्जितमनोहरमम्बिकायाः ॥ १ ॥"

अत्र शब्दार्थालंकारयोरनुप्रासोपमयोः संसृष्टिः ।

इति संसृष्टिप्रकरणम् ॥

## ॥ अथ संकरः ॥

यथा—

"आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते ॥
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन्! गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥"

अत्र तद्गुणो भ्रान्तेः कारणम् । पूर्वं तद्गुणाभावे भ्रान्त्यभाव इति भ्रान्तितद्गुणयोः कार्यकारणभावः संबन्धः ॥ संसृष्ट्युदाहरणापेक्षयाऽत्र भ्रान्तितद्गुणयोर्मिश्रणमतिशयितमिति नीरक्षीरन्यायेनात्र संकरालंकारः ॥ संसृष्ट्युदाहरणेषु त्वेकाधारतामात्रसंबन्धेन तिलतण्डुलन्यायेनालंकारसंसृष्टिः ॥ प्राचीनैः संसृष्टिसंकरयोरलंकारान्तरत्वार्थमुक्तलोकालंकारन्यायः प्रदर्शितः ॥ मम मतेऽपि लोके सुवर्णमालातो रत्नमालायाः स्वरूपं विलक्षणम् । तत्र रत्नजटितसुवर्णालंकारनिर्माणेऽन्यदेव तृतीयस्वरूपं शोभा चोत्पद्यते । रत्नमालायामपि मुक्तामालातो माणिक्यमालायाः स्वरूपं शोभा च पृथगेव । तत्र मुक्तामाणिक्यादिमेलनेन मालानिर्माणेऽन्यदेव तृतीयस्वरूपं शोभा चोत्पद्यते । तथा काव्यालंकारेष्वप्युपमानुपमयोर्भिन्नाभिन्नचमत्कारः । तत्रानयोरलंकारयोर्मिश्रणे व्यतिरेकनामकस्तृतीयोऽलंकार उत्पद्यते ॥ किं चासंगतेः प्रथमप्रकारे—

"*जस्सेअ वणो तस्सेअ वेअणा भणइ जणो तं अलीअं ॥
दंतक्खअं कवोले बहूए वेअणा सवत्तीणं ॥ १ ॥"

* यस्यैव व्रणस्तस्यैव वेदना भणति जनस्तदलीकम् । दन्तक्षतं कपोले वेदना सपत्नीनाम् ॥ १ ॥
॥ इति संस्कृतम् ॥

यस्याः क्षतं तस्या वेदनाऽभाव इति विशेषोक्तेः, सपत्नीनां क्षतं विना वेदनेति विभावनायाश्च मिश्रणेऽसंगतिनामकस्तृतीयोऽलंकार उत्पद्यते ॥ शुद्धोपमाविपरीतोपमयोर्भिन्नभिन्नचमत्कारः। तत्रानयोरुपमाप्रकारयोर्मिश्रणे परस्परोपमानामकस्तृतीय उपमाप्रकार उत्पद्यते ॥ सुवर्णरत्नमिश्रणे तृतीयलोकालंकारन्यायो व्यतिरेकेऽसंगतौ च संगच्छते। रत्नप्रकारमिश्रणे तृतीयलोकालंकारन्यायः परस्परोपमायां संगच्छते। तथोक्तलोकालंकारन्यायः संसृष्टिसंकरयोर्न घटते। तादृशतृतीयचमत्कारस्यानुत्पद्यमानत्वात्। संसृष्टिसंकरयोः कामिनीकृतानेकालंकारधारणमात्रन्यायो घटते। स तु समुच्चयालंकारस्य विषयः ॥ किं च संसृष्टिसंकरयोर्नामार्थतापि समुच्चयस्य प्रकारतैव। लोके एकालंकारधारणापेक्षयाऽनेकालंकारधारणे कामिन्याः शोभातिशयवत्काव्येप्येकालंकारापेक्षयाऽनेकालंकारता काव्यस्य शोभातिशयं पुष्णाति ॥ कामिन्या अनेकालंकारधारणे द्वयी गतिः। प्रथमा तावदलंकाराणां परस्परं मुख्यगौणभावः ॥ द्वितीया च समकक्षभावः ॥ कामिन्याः शृङ्गारसमये रत्नसुवर्णनिर्मितमुख्यालंकारधारणे साधारणरजतमुद्रिकादेर्गौणालंकारस्य विद्यमानत्वेऽपि न तस्यालंकारव्यवहारः ॥ तस्मिन्समये समकक्षालंकाराणामेवालंकारव्यवहारात् ॥ समकक्षालंकाराणामपि द्वयी गतिः। प्रथमा तावत्परस्परं संबन्धाभावेन स्थितिः। यथा चूडामणि-नासिकाभरण-माला-मेखलाप्रभृतीनां परस्परं संबन्धाभावेन धारणम् ॥ द्वितीया, परस्परं संबन्धेन स्थितिः। यथा कुण्डला-ऽङ्गद-चूड़िका-कङ्कण-नूपुरादीनां धारणम् ॥ कुण्डलादीनां युगलं भवति। चूड़िका अनेका भवन्ति॥ एषां परस्परमविनाभावः संबन्धः। कुण्डलादयो युगलमन्तरा शोभाकरा न भवन्ति। चूडिकाश्च समुदायमन्तरा शोभाकरा न भवन्ति। अनेन लोकालंकारन्यायेन काव्येऽनेकालंकारास्थितेरपि द्वयी गतिः। प्रथमा तावद्गौणमुख्यभावः। गौणमुख्यभावे च मुख्यस्यैवालंकारव्यवहारो न तु गौणस्य। यथा तुल्ययोगितायां दीपकसत्त्वेऽपि तुल्ययोगितायाः प्राधान्यात्तस्या एवालंकारत्वम्। गौणत्वान्न तु दीपकस्यापि ॥ उक्तं रत्नाकरकारेणापि—

"यन्न्यस्यति स्म स्मयवत्यशोके
पदं रणन्नूपुरमुत्पलाक्षी ॥

स्वैरं स चक्रे तत एव मूर्ध्नि
पदं बताशेषमहीरुहाणाम् ॥१॥”

अत्र पदकरणादनुरूपस्याशोककर्तृकस्य तरुषु पदकरणस्य कार्यस्योत्पादात्समच्छाया। पादघातस्य तिरस्कारहेतुत्वेनानर्थोत्पादे सर्वतरूणां मूर्ध्नि पदकरणेन महत्त्वोत्पत्तिरूपस्यार्थस्योत्पत्तिरिति विषमच्छायापि। तथाप्यत्र समस्य प्राधान्यात्तस्यैवालंकारव्यवहारो न्याय्यः; न तु विषमस्यापि। गौणत्वात्। अलंकारशास्त्रे मुख्यगौणभावश्चमत्कारस्य न्यूनाधिकभावबोध्यः। अपरा समकक्षभावः। समकक्षभावे च सर्वेषामप्यलंकारव्यवहारो भवति। समकक्षभावोऽपि द्विधा। प्रथमस्तावदलंकाराणां परस्परमसंबन्धेन स्थितिः। अपरश्च संबन्धेन सह स्थितिः। एवमेकस्मिन्काव्येऽनेकालंकारास्थितिस्तु दशाभेदमात्रम्। तस्य च समुच्चयप्रकारत्वं, न त्वलंकारान्तरत्वमित्यनुभवसिद्धम्। प्राचामुक्तसंसृष्ट्युदाहरणेषु तु परस्परमसंबन्धेनानेकालंकाराणां स्थितिः। संकरोदाहरणेषु च मिथः संबद्धानामनेकालंकाराणां स्थितिः। संसृष्टिशब्दार्थः सङ्गः। मिथः संबन्धरहितानामनेकालंकाराणामेकत्र स्थितौ धुरंधरो रूढ्या संसृष्टिरिति नाम चकार। संकरशब्दार्थश्च व्यामिश्रत्वम्। मिथः संबन्धसहितानामनेकालंकाराणामेकत्र स्थितौ धुरंधरो रूढ्या संकर इति नाम चकार॥ धुरंधराशयमज्ञात्वाऽनयोरलंकारान्तरत्वाङ्गीकारस्तु प्राचां प्रमादः। संकरे वस्तुतो नीरक्षीरसममिश्रणाभावेऽपि संसृष्ट्यपेक्षया मिश्रणस्याधिक्यादेवं विभागदर्शनं यथा कथञ्चित्सादृश्ये उपमाङ्गीकारसदृशम्॥ अनेकलोकालंकाराणामेकत्र स्थितावपि प्राचीनानामुक्तन्याययुगलं जाघटीति। चूडामणि-नासिकाभरण-माला-मेखलाप्रभृतिसंबन्धरहितालंकाराणामेकत्र स्थितावेषां स्वरूपं विजातीयतया तिलतण्डुलन्यायेन भिन्नभिन्नं प्रतीयते। कुण्डला-ऽङ्गद-चूड़िका-कङ्कण-नूपुरप्रभृतिसंबन्धसहितालंकाराणामेकत्र स्थितौ परस्परमेषां स्वरूपं सजातीयतया तादृग्भिन्नाभिन्नं न प्रतीयते। अपि तु नीरक्षीरन्यायवदेकरूपतैव प्रतीयते॥ रत्नाकरकारः परस्परसंबन्धाभावेऽनेकालंकाराणामेकत्र स्थितौ रमणीयतामनङ्गीकुर्वाण इमां कारिकामुपन्यस्यति—

"अन्योन्यसंबन्धविवर्जिताना-
मलंकृतीनां विनिवेशनं चेत् ॥
अनन्वितत्वाद्दशदाडिमादि-
वाक्यार्थवद्दूषणमेव तर्हि ॥ १ ॥" इति ॥

मम तु मतं, परस्परसंबन्धाभावेऽनेकालंकारास्थितौ रत्नाकरकारस्यासंबद्धप्रलाप इव दूषणभणनं तु प्रमादः । कामिन्याः संबन्धरहिताः संबन्धसहिताश्चोभयेऽप्यलंकाराः शोभाकरा भवन्ति । तथा काव्येऽपि संबन्धरहिताः संबन्धसहिताश्चोभयेऽप्यलंकाराः काव्यस्य शोभाकरा भवन्तीत्यनुभवसिद्धम् ॥ रत्नाकरकारस्य सर्वस्वकारोपरि कटाक्षोयम् । विमर्शनीकारो रत्नाकरकारसिद्धान्तं खण्डयन्सर्वस्वाभिमतसंसृष्ट्यलंकारं च मण्डयन्नाह "देव! क्षपा गलति चक्षुरमन्दतारम्-" इत्यत्रोपमोत्प्रेक्षयोः परस्परमङ्गाङ्गिभावादिसंबन्धाभावेऽपि राज्ञो विनिद्रीकरणरूपे एकस्मिन्नर्थे उपमोत्प्रेक्षयोः प्रवृत्तिः । प्रभातकालिककमलचन्द्रमसोर्वर्णनात् । अत्र परस्परमङ्गाङ्गिभावाभावान्न संकरः । एकस्मिन्नर्थे उभयोः प्रवृत्तेः संबन्धाभावोऽपि न । अत एव संसृष्टिर्न निर्मूला" इति ॥ मम तु मतं, विमर्शनीकारस्यायं परिश्रमो व्यर्थः । शब्दालंकारार्थालंकारसंसृष्टावनेकालंकारस्थितेः काव्यशोभाधिक्यमनुभवसिद्धमिति तत्रैतादृक्को वाऽन्यो संबन्धो वाच्यः । बहुषु स्थलेष्वनेकेषामर्थालंकाराणां स्थितेः काव्यशोभाया आधिक्यमनुभवसिद्धम् । एतादृशसंबन्धरहितान्युदाहरणान्यग्रे प्रदर्शयिष्यन्ते ॥ काव्यप्रकाशगतकारिकाकारस्येदं लक्षणम्—

"सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥" इति ॥

अनेन कारिकाकारेण "भेदेन यदिह स्थितिः" इति संसृष्टिलक्षणेन "उक्तालंकाराणामभेदेन स्थितौ संकरालंकारः" इत्यर्थसिद्धं संकरालंकारलक्षणं मत्वाऽङ्गाङ्गिभावादयस्त्रयः प्रकाराः संकरस्योक्ताः । अलंकारमिश्रणे एकस्याङ्गत्वेऽपरस्य चाङ्गित्वेऽङ्गाङ्गिभावसंकरः १ ॥ अत्रायं वाऽलंकारोऽयं वाऽलंकार इति संदेहे संदेहसंकरः २ ॥ अलंकारयुगलस्यैकवचने प्रवेशे एकवाचकानुप्रवेशसंकरः ३ ॥

"अङ्गाङ्गिभावः संदेहः प्रवेशश्चैकवाचके ॥
इत्थं मरुधराधीश ! संकरस्त्रिविधः स्मृतः ॥ १ ॥"

क्रमेण यथा—

"आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते ॥
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन् ! गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥ १ ॥"

अत्र तद्गुणो भ्रान्तेः कारणमित्यनयोरङ्गाङ्गिभावसंकरः ॥ अङ्गाङ्गिभावोऽप्येकविधः संबन्धः ॥

"विलीयेन्दुः साक्षादमृतरसवापी यदि भवे-
त्कलङ्कस्तत्रत्यो यदि च विकचेन्दीवरवनम् ॥
ततः स्नानक्रीडाजनितजडभावैरवयवैः
कदाचिन्मुञ्चेयं मदनशिखिपीडापरिभवम् ॥ १ ॥"

अत्र यद्येतावत्साधनं संपद्येत तदा तापशान्तिसंभव इत्यर्थे कविसंरम्भश्चेत्तदा संभावनाऽलंकारः ॥ एतावत्साधनं कदापि न संभवत्येवातस्तापशान्तिरपि गगनकुसुमतुल्येत्यर्थे संरम्भश्चेदुपात्तसिद्ध्यर्थं मिथ्याध्यवसितिरित्युभयथा संभवः। संभावनालंकारस्य मिथ्याध्यवसितेर्वा साधकबाधकाभावादिदं न निश्चीयतेऽत्र संभावनालंकारो वा मिथ्याध्यवसितिरलंकारो वा विद्यत इति ॥ अत एव चोभयोः संदेहात्संदेहसंकरः। संदेहस्थले संदिह्यमानवस्तुनोर्मिथः संदेहरूपः संबन्धः ॥

"स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम् ॥
श्लिष्टाष्टदिग्दलकलापमुखावतार-
बद्धान्धकारमधुपावलि संचुकोच ॥ १ ॥"

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ ॥

यथावा—

"भ्रमरीकबरीभारभ्रमरीमुखरीकृतम् ॥

दूरीकरोतु दुरितं गौरीचरणपङ्कजम् ॥ १ ॥"

अनुप्रासेनास्य काव्यस्य पूर्तिकरणादिदमर्थसिद्धं, कविनाऽनुप्रासार्थं स्त्रीलिङ्गविशिष्टभ्रमरीशब्दोपन्यासः कृत इति । तेन च तिर्यग्जातीयाः पुरुषभ्रमरा अपि यदङ्गं स्प्रष्टुमशक्ता इति पार्वत्या अलौकिकसतीत्वमहिमरूपव्यङ्ग्यलाभादधिकालंकारः ॥ देवाङ्गनानां सौन्दर्यं प्रसिद्धतरम् । न तु सतीत्वमपि । अत एव देवाङ्गनाकेशपाशे सौगन्ध्यवशाद्भ्रमरीभ्रमरयोरुभयोरपि निवासस्य संभवः । पार्वत्याः सतीत्वमहिमतो देवाङ्गनाकेशपाशगताः पुरुषभ्रमरा मूर्धानतिसमयेऽत्यन्तसामीप्येऽपि पार्वतीपदपङ्कजं न स्पृशन्ति । अत्र व्यतिरेकस्य गौणत्वादधिकस्य च प्राधान्यादधिकस्यैवालंकारत्वम् ॥ अत्रैकस्मिन् भ्रमरीशब्देऽधिकानुप्रासयोः प्रवेशादेकवाचकानुप्रवेशसंकरः ॥ कतिचन प्राचीनाः "गौरीचरणपङ्कजम्-", इत्यत्र पङ्कजे पार्वतीचरणपरिणाममन्तरा दुरितदूरीकरणक्रियाया असंभवात्परिणामालंकार इत्याहुः ॥ स तु प्रमादः ॥ अत्रान्यथाभावाभावात् । न ह्यत्र पङ्कजस्य पार्वतीचरणत्वापत्तिः । अपि तु पङ्कजस्यानुकरणं विवक्षितम् । अतो न परिणामः । अपि तु रूपकम् ॥ अत्र दुरितदूरीकरणं पार्वतीचरणयोर्विवक्षितं, न तु पङ्कजे । पङ्कजरूपकं च रक्तवर्ण-मृदुता-सहजसुगन्धिशीलमात्रेण । रूपकपरिणामयोः स्वरूपं नामार्थानुसारेणात्यन्तविलक्षणम् । प्राञ्चः स्वस्योक्तनियमानुसारेण परिणामस्येदं लक्षणमाहुः—

"परिणामः क्रियार्थश्चेद्विषयी विषयात्मना ॥" इति ॥

इदं चन्द्रालोकस्य लक्षणं "यशवन्त ! प्रसादात्ते रङ्का राजत्वमागताः" इत्याद्युदाहरणेष्वव्याप्तम् ॥ अत्रान्यथाभावमात्रस्य विवक्षितत्वात् । क्रियायाश्चाविवक्षितत्वात् ॥

अथवा—

"विधुकरपरिरम्भादात्तनिष्यन्दपूर्णैः
शशिदृषदुपक्लृप्तैरालवालैस्तरूणाम् ॥
विफलितजलसेकप्रक्रियागौरवेण
व्यरचि स हृतचेतास्तत्र भैमीवनेन ॥ १ ॥"

अत्र भैमीवनस्य सकलतर्वालवालानां चन्द्रकान्तमणिमयत्वस्य लोकसीमातिवर्तनरूपत्वादतिशयोक्त्यलंकारः। पतिदर्शने द्रवीभूतत्वं धर्मपत्नीनां परमो धर्मः। स च चन्द्रकान्तमणिभिश्चन्द्रोदये द्रवीभूय स्वयं कृत्वा दर्श्यते इति निदर्शनाऽलंकारश्च। अत्रातिशयोक्तिनिदर्शनयोरेकवाक्योपात्तत्वादेकवाचकानुप्रवेशसंकरः। लोके एकोदरोत्पत्त्या सहोदरभावसंबन्धवदलंकाराणां परस्परमेकवाक्यप्रवेशरूपः संबन्धः। अङ्गाङ्गिभावस्य संदेहसंकरस्यैकवाचकानुप्रवेशसंकरस्य च नामार्थानुसारेण पृथक् पृथक् चमत्कारः। कुवलयानन्दकारः समप्राधान्यसंकरनामकं संकरस्य चतुर्थप्रकारमाह। यत्र प्रधानतया समीभूतानामनेकालंकाराणां युगपद्भानं तत्र समप्राधान्यालंकारः॥

यथा—

"अवतु नः सवितुस्तुरगावली
समतिलङ्घिततुङ्गपयोधरा॥
स्फुरितमध्यगतारुणनायक-
मरकतैकलतेव नभःश्रियः॥१॥"

अत्र पयोधरादिशब्दश्लेषमूलातिशयोक्त्याऽङ्गभूतयोत्थाप्यमानैव सवितृतुरगावल्यां मरकतैकावलीतादात्म्योत्प्रेक्षा नभोलक्ष्म्यां नायिकाव्यवहारसमारोपरूपसमासोक्तिगर्भैवोत्थाप्यते। पयोधरश्लेषश्चोभयोस्तुल्य इति विनिगमनाविरहात्समप्राधान्यम्। कश्चिदाह, अङ्गाङ्गिभावसंकरे तरुबीजन्यायः। अत्रैकोऽलंकारोऽन्यतमस्य कारणं भवति। संदेहसंकरे दिनरात्रिन्यायः। दिवा रात्र्यभावः। रात्रौ दिवसाभावः। एकवाचकानुप्रवेशसंकरे नृसिंहन्यायः। भगवतो नृसिंहस्यैकस्यैव शरीरस्य नरसिंहोभयाकृतिमत्त्ववदेकवाक्येऽलंकारोभयसत्त्वात्॥ समप्राधान्यसंकरे दिनरविन्यायः। दिनं रविश्च सहैव प्रकाशेते। मम तु मतं, एतैरप्यंशैः संकरस्य नालंकारान्तरत्वमुचितम्। अलंकारसमुच्चये तु समुच्चयालंकारः। अङ्गाङ्गिभावांशे हेत्वलंकारः। संदेहांशे संदेहालंकारः। एकवाचकानुप्रवेशांशेऽधिकालंकारः। समप्राधान्यांशे च सहोक्त्यलंकारः॥ उक्तोदाहरणेष्वलंकारद्विकस्थितेरेकापेक्षयाऽऽधिक्यादनेकत्वम्। तत एव च

समुच्चयत्वलाभः । अधुना बहुलालंकाराणामेकत्र स्थितेरुदाहरणं प्रदर्श्यते ॥

"जटाऽऽभाभिर्भाभिः करधृतकलङ्काक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः ॥
परिप्रेङ्खत्तारापरिकरकपालाङ्कितत॒ले
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति ॥ १ ॥"

उपमा रूपकमुत्प्रेक्षा श्लेषश्चेति चत्वारोऽत्र पूर्ववदङ्गाङ्गितया प्रतीयन्ते। "जटाभाभिर्भाभिः" इति "पितृवन इव व्योम्नि" इति चोपमा । "कलङ्काक्षवलयः" इति "तारापरिकरकपाल" इति च रूपकम्। "वियोगिव्यापत्तेः" इत्युत्प्रेक्षा । "वैराग्यविशदः" इति श्लेषः । तत्रोत्प्रेक्षा श्लेषाङ्गम्, तद्वशादेव "वैराग्यविशदः" इत्यत्र द्वितीयार्थानुसंधानात् । श्लेषश्च रूपकोपमयोरङ्गम्, तद्वशावगतनिर्वेदमहिम्नैव जटाया अक्षवलयधारणस्य च संगतेः। 'तारापरिकरकपाल" इति रूपकं "पितृवन इव" इत्युपमाया अङ्गम् । तद्बीजं च सादृश्यम् ॥ संबन्धरहितबहुलार्थालंकाराणां संसृष्टेरिदमुदाहरणम् ॥

"साहित्यपाथोनिधिमन्थनोत्थं
कर्णामृतं रक्षत हे कवीन्द्राः ! ॥
यत्तस्य दैत्या इव लुण्ठनाय
काव्यार्थचोराः प्रगुणीभवन्ति ॥ १ ॥
गृह्णन्तु सर्वे यदि वा यथेच्छं
नास्ति क्षतिः क्वापि कवीश्वराणाम् ॥
रत्नेषु लुप्तेषु बहुष्वमर्त्यै-
रद्यापि रत्नाकर एव सिन्धुः ॥ १ ॥"

अत्र प्रथमचरणे परंपरितरूपकम्। "दैत्या इव" इत्युपमा । "अद्यापि रत्नाकर एव सिन्धुः" इत्युदाहरणालंकारः। पूर्वकथितस्य काव्यार्थचोरेभ्यः कर्णामृतरक्षणोपदेशस्योक्तोदाहरणेन व्याघाताद्धुरंधरमतीयो व्याघातालंकारः । अत्रोक्तालंकारचतुष्टये परस्परं संबन्धाभावः ॥

"संसृष्टिः संकरश्चैव लीनौ स्यातां समुच्चये ॥
नेमौ पृथगलंकारौ यशवन्तमहीपते ! ॥ १ ॥"

॥ इति संसृष्टिसंकरप्रकरणम् ॥ १ ॥

यमकादिशब्दालंकाराणां त्वस्माभिरनुप्रासेऽन्तर्भावः कृतः । स च स्पष्टप्रतीत्यर्थं तत्रैव शब्दालंकारनिरूपणाकृतौ प्रदर्शितः । एतदलंकारशतं चास्माभिरुपमाद्यलंकारेषु लोके च यथासंभवमन्तर्भावितम् । एतद्दिग्दर्शनेनोक्तालंकारेभ्योऽधिकः कश्चिदन्तर्भावोचितोऽन्योप्यलंकार उपलभ्यते चेत्स यथासंभवमन्तर्भावनीयः । कस्यचिदलंकारस्य किञ्चिदप्युदाहरणान्तरमतिविलक्षणमुपलभ्यते चेत्तत्र वास्तवविचारेण सोऽलंकारो लक्षणीयः ॥ दृष्टान्तालंकारे प्रायो बिम्बप्रतिबिम्बभावभानं भवति ॥ प्रथमाकृतौ—

"भरतादिप्रमादो यो भोजकाले न निर्गतः ॥
यशवन्तमहाराजभाग्यादद्य विनिर्गतः ॥ १ ॥"

इदमनिश्चितवाक्यम् । उक्तप्रकारेण भरतादिप्रमादनिरसने राजराजेश्वरयशवन्तसिंहभाग्यस्य कारणत्वेनोक्तत्वात्तत्र ग्रन्थकर्तुः प्रतिभैव किं न कारणमिति संदेहे, तस्य निश्चयस्तु—

"प्रवादोऽनादिमानेष यशो भाग्यवशादिति ॥
वक्ष्येऽन्यामीदृशीं वार्तां यशवन्तमहीपतेः ॥ १ ॥"

इति कथनेन श्रोतॄनभिमुखीकृत्य, नानावंश्यानामनेकभूपालानां मण्डोवरमण्डलस्य पुनः सजलतासेरभावे राजराजेश्वरयशवन्तसिंहस्य सजलतासिरिति महावाक्ये दर्शितः। अत्रानिश्चितवाक्यस्य निश्चायकवाक्यस्य च बिम्बप्रतिबिम्बभावभानस्याविद्यमानत्वेऽपि दृष्टान्तालंकारः ॥

"वामभुज ! स्फुरणे चेज्जीवनमूलं मुरारिराप्येत ॥
दक्षिणभुजं तदाहं दूरे कृत्वा त्वयैव संश्लिष्ये ॥ १ ॥"

पुरुषस्य दक्षिणाङ्गं प्रधानम् । स्त्रिया वामाङ्गं प्रधानम् । अत्र स्त्रिया वामबाहुना स्फुरणरूपशुभलक्षणेन नायिकां प्रति कृष्णसंयोगः

* तत्रेति शेषः ।

सूचितः। नायिकया च प्रथमं तेनैव केवलेन वामबाहुना कृष्णालिङ्गनं स्वीकृतमित्यनयोरन्योन्योपकारादन्योन्यालंकारः। केवलवामबाहवे प्रथमालिङ्गनस्य सकलानन्दप्रदानं च वामबाहुं प्रति प्रत्युपकारः। ननु त्वयैवैतदाकृत्यारम्भे "येऽन्तर्भवन्त्यलंकारा इतरेषु वदामि तान्" इत्युक्तम्। पुनश्च त्वयैव कथं कतिचनालंकाराणां लोकेऽन्तर्भावः कृत इति चेच्छृणु। प्रायोऽलंकारा लोकव्यवहारेणाङ्गीकृताः। तत्र च कतिपयविषयाणामन्यालंकाराविलक्षणत्वेऽपि लोकोत्तरचमत्काराभावात्तेषां लोक एवान्तर्भावः कृतः। लोकस्य चोपलक्षणतया प्रारम्भनियमान्तर्गतत्वं बोध्यम्॥ प्राचीनाः कतिचनानलंकारानलंकारान्मन्यन्ते। तथा च क्वचित्तेषां प्रतिद्वन्द्विभावश्चेत्सोऽपि तादृशोनलंकारः। दण्ड्याचार्य एतादृशमाशीर्नामालंकारमङ्गीकरोति। तस्य प्रतिद्वन्द्विभावे चास्माभिः शापालंकारस्य दिग्दर्शनं कृतम्। ततोऽन्यत्रापि तथासंभवेऽयमेव न्यायो बोध्यः। भोजमहाराजोऽप्रस्तुतप्रशंसाशब्दार्थं यत्प्रशंसार्थमप्रस्तुतं तस्य प्रशंसाऽप्रस्तुतप्रशंसेति कुर्वन्स्तुत्यनर्हस्य स्तुतिमप्रस्तुतप्रशंसालंकारमङ्गीकरोति। तथा चास्य प्रतिद्वन्द्विभावे निन्दानर्हस्य निन्दा "अप्रस्तुतनिन्दा" इत्यप्यलंकारो भवेत्।

यथा—

"धन्या निर्धननारी या शयाना वन्दते विधुम्॥
धिगाढ्यतां यत्र लग्नाः कपाटानां तु कोटयः॥ १॥"

धनं सर्वथा प्रशंसार्हम्। उक्तं हि "सर्वे गुणाः काञ्चनमाश्रयन्ति" इति॥ तस्य धनस्यात्र निन्दा। मम तु मतं, न खलु भोजमहा[राज]ऽभिमताप्रस्तुतप्रशंसाया अलंकारार्हत्वम्। न च तत्प्रतिद्वन्द्वि[...]लंकारयोग्यत्वम्। किं तूभयत्र मत्स्पष्टीकृतो व्याघातालंक[ारः।] पूर्वत्रानुज्ञालंकार इह चावज्ञालंकारः॥ [...]श्वर-

इतिश्रीमन्मरुमण्डलमुकुटमणि—महाराजाधिर[ाज ...]दानवि- जी०सी०ऐस०आई० श्रीयशवन्तसिंहाज्ञानुसारेण [...]म षष्ठा- रचिते यशवन्तयशोभूषणग्रन्थेऽलंकाराणामन्तर्भा[वा]कृतिः समाप्ता॥ ६॥

सीतामहूपुरे च धरणीपालो बहादुराभिख्यः ॥
राष्ट्रवरेष्वेते मुनिसंख्याका भ्रातरो नृपास्तेऽद्य ॥ २२ ॥
अलवरपुरि भूपालो जयसिंहाख्यो विराजते कूर्मः ॥
गुहिलकुले संजात उदयपुरे राणफतमल्लः* ॥ २३ ॥
नगरे करोलिसंज्ञे यदुवंश्यो भँवरपालभूपालः ॥
उम्मेदसिंहनामा कोटाद्रङ्गेऽस्ति चाहुवाननृपः ॥ २४ ॥
अभिनव†माधवसिंहो जयपुर आस्ते च कूर्मकुलकलशः ॥
जा‡मोत्तरनगराख्ये बीभानामास्ति यादवो राजा ॥ २५ ॥
जैसलमेरपुरे च यदुवंश्यः शालिवाहनो भूपः ॥
§अभिनवजालमसिंहो झालापत्तनमधिष्ठितो झालाः ।२६।
डूंगरपुरे नृपालो गुहिलकुलश्चोदयाख्यनृपः ॥
द्रङ्गदड़ाभिधनगरे झालावंश्यश्च मानसिंहाख्यः ॥ २७ ॥
महताबसिंहभूपो नृसिंहदुर्गे प्रमार आस्तेऽद्य ॥
गुहिलकुले रघुनाथो प्रतापदुर्गे विराजते राजा ॥ २८ ॥
रघुवीरसिंहनामा बुन्दीद्रङ्गेऽस्ति चाहुवाननृपः ॥
गुहिलश्च तख्तसिंहो विराजते चापि भावनगरेऽद्य ॥२९॥
भुजनगरे खङ्गारेत्यभिधायुक्तो विराजते राजा ॥
धरणीमण्डलमेतद्यदुकुलजनुषा स्वलंकृतं येन ॥ ३० ॥
रीवांपुरे वघेलो व्यङ्कटरमणोत्तरं च यस्य पुनः ॥
रामानुजप्रसाद इति सोऽसौ राजते राजा ॥ ३१ ॥
लूनावाड़ानगरे चालुक्यो बख्तसिंहभूपालः ॥
नगरे च वांसवाड़ाख्ये गुहिलो लक्ष्मणाख्यनृपः ॥ ३२ ॥

---

* फतहसिंह इति प्रसिद्धः ॥
† "सवाई" इति प्रसिद्धो माधवसिंहः ॥
‡ जामशब्दादुत्तरं नगरं जामनगरं तदाख्ये ॥
§ "सवाई" इति प्रसिद्धो जालमसिंहः ॥

केसरिसिंहो राजा शीरोहीपुरि च चाहुवानोऽद्य ॥
विंशतिरेकेनोना राजन्संवन्धिनोऽद्य तव भूपाः ॥ ३३ ॥
ग्रन्थेऽस्मिन्ग्रथिता येऽद्य भूपाला भाग्यशालिनः ॥
अमरत्वमिताः सर्वे त्वया सह महीपते ! ॥ ३४ ॥

अत्र ये राजराजेश्वरस्य भ्रातृभूपतयो निर्दिष्टास्ते निम्नलिखितपूर्वजानां संततिः ॥

विक्रमनगर (वीकानेर) नृपो झाबुवापत्तननृपश्च रावयोधसिंहस्य संततिः। कृष्णगढ-रत्नपुर (रतलाम) सालाणो-सीतामहूनगरनृपतयो राज्ञ उदयसिंहस्य संततिः ॥ ईडरनृपो राजराजेश्वराजीतसिंहस्य संततिः ॥

विक्रमनगरं (वीकानेर) कृष्णगढपुरं च राजपुत्राणां राजस्थानमण्डल (राजपूताना) मध्यवर्तिनी ॥ अनयोः सीमा च योधपुरराज्यसीमासंवलिता ॥ झाबुवा-रत्नपुर (रतलाम) सालाणो- सीतामहूनामकनगराणि मालवाख्यदेशे ॥ ईडरपुरं गुर्जरदेशान्तर्वर्ति ॥

अत्र त एव राजराजेश्वरस्य संवन्धिनो नृपा अभिहिताः, येषां कन्या राजराजेश्वरपूर्वजैर्गृहीताः, तेभ्यः प्रत्ता वा । गवर्नमेण्टराज्ये च ये राजत्वेन व्यवह्रियन्ते ॥

फाल्गुनकृष्णे भौमे पूर्णं ग्रन्थं चतुर्दशीघस्रे ॥
यशवन्तेनादायि श्रुत्वेमं लक्षदानं हि ॥ १ ॥
हाटकभूषणभूषितगजराजं द्वौ च हयराजौ ॥
मुक्तामालां मणिमयशिरोविभूषां च कुण्डलं कटकम् ॥ २ ॥
वसनानि खड्गमतुलं यमदंष्ट्राख्यं च शस्त्रमतिमूल्यम् ॥
मुद्राः पञ्चसहस्रं प्रत्ताः परिजननिमित्तं मे ॥ ३ ॥
लक्षप्रदानपूर्त्यै प्रतिवर्षं षट्सहस्रमुद्राप्तयै ॥
दत्त्वा ग्रामसमूहं निजनामानं स्थिरं व्यधत्त नृपः ॥ ४ ॥
राज्याभिषेकसमयेऽप्येवंरीत्यैव लक्षदानं मे ॥
श्रीयशवन्तनृपालः प्रादाद्धुर्यो वदान्येषु ॥ ५ ॥

जनकः पितामहोऽहं पुनः पुनर्मानलब्धम संप्राप्ताः ॥
श्रीयशवन्तश्चक्रे प्रतिप्रणामेन मानपूर्तिं मे ॥ ६ ॥
पदवीं कविराज इति प्राग्दध्रेऽहं च सांप्रतं मरुराट् ॥
कविराजापददानाद्विभवेनाप्यकृत राजरूपं माम् ॥ ७ ॥
चमरं चरणे स्वर्णं मिलनं राज्ञः करौ प्रसार्य मुदा ॥
दुन्दुभिरथो ध्वजश्च मुद्रा द्वाःपालवेत्रं च ॥ ८ ॥
गमनागमनोत्थानं सादरलेखश्च राजपत्रेषु ॥
नेदिष्ठमासनं च वितीर्णमासीन्मरुक्षितीन्द्रेण ॥ ९ ॥
तदुपरि संप्रति राज्ञा प्रतिप्रणामस्य रीतिमनुसंरता ॥
भूमण्डले स्वकीर्तिर्वितानिता या प्रगीयते लोकैः ॥ १० ॥
यश एव धनं वेत्ति न धरां कनकं च यः ॥
चिरं जीव्यादुदारोऽसौ यशवन्तनरेश्वरः ॥ ११ ॥
आदौ पञ्चाननो ग्रन्थान्बहूनश्रावयद्धि माम् ॥
तिवाडीत्युपटङ्काढ्यो दाधीचस्तु बुधोत्तमः ॥ १२ ॥
सुब्रह्मण्यकथा पूर्वं भणिता मनुजेश्वर ! ॥
पुनर्न भण्यते तस्मात्पुनरुक्तिर्भवेदिति ॥ १३ ॥
मिश्रेण पूर्णचन्द्रेण ग्रन्थश्चैष व्यलिख्यत ॥
लम्बोदरेण लिखितं व्यासोक्तं भारतं यथा ॥ १४ ॥
दध्यङ्ङन्वयसंजातबलदेवतनूभुवा ॥
प्रबन्ध एष विदुषा रामकर्णेन शोधितः ॥ १५ ॥
कश्मीरदेशसंभवपण्डितपदवीधरेण विप्रेण ॥
ग्रन्थो महान्निरञ्जननाथेनायं हि मुद्रितः सहितम् ॥ १६ ॥

इतिश्रीमन्मरुमण्डलमुकुटमणि–महाराजाधिराज–राजराजेश्वर-जी०सी०एस्०आई० श्रीयशवन्तसिंहाज्ञया कविराजमुरारिदानविरचिते यशवन्तयशोभूषणग्रन्थे ग्रन्थसमाप्तिसमय–समकालिकभूपति–ग्रन्थप्रत्यु-पकारवर्णनं नाम सप्तमाकृतिः समाप्ता ॥ ७ ॥

# ॥ परिशिष्टम् ॥

## राजचिन्हे

पृष्ठ २ पङ्क्ति ३

(खड्गः) इत्यस्याग्रे

राष्ट्रवराणां प्रधानशस्त्रं खड्गः। यथा त्रिपुरारातेस्त्रिशूलं, परशुरामस्य पर्शुः, भीमसेनस्य च गदा, इत्यादि ॥

पृष्ठ ३ पङ्क्ति ५

( तत्र०सूर्यवंश्यम् ) इत्यत्र

सूर्यस्य मूलपुरुषत्वाद्राजराजेश्वरकुलं सूर्यवंश्यमिति भण्यते ॥

पृष्ठ ३ पङ्क्ति १६

(वरीवृतति) इत्यस्याग्रे

दक्षिणदेशाधीशराष्ट्रकूटकृष्णराजसूनुरिन्द्रराजो विक्रमस्य षष्ठशतकेऽष्टशतेभशोभितसैन्यो बभूवेति शिलालेखेषु लिखितम् ॥

## यशवन्तयशोभूषणे

पृष्ठ ३ पङ्क्ति २

(हस्तिकुण्डी) इत्यस्य टिप्पणम् ॥

गुणशरखचन्द्र (१०५३) मितविक्रमवर्षस्य माघशुक्लत्रयोदश्यामुत्कीर्णे धवलराजशिलालेखे इदमुपलभ्यते,-हस्तिकुण्डीनगर्या राष्ट्रकूटो विदग्धराजनृपो बभूव। हस्तिकुण्डीतो विनि सृता विदग्धराजवंश्या हस्तिकुण्डिका इत्युच्यन्ते। तस्यापभ्रंशः "हतूडिया" इति ॥ ग्रामसंवन्धादपि जातिः प्रख्यायत इति सुप्रसिद्धम्। यथा गुहिलवशक्षत्रियाः "शीशोदा" ग्रामसंवन्धात् "शीशोदिया" इति प्रथिताः। कतिपयहस्तिकुण्डिकराष्टकूटा मरुदेशेऽधुनापि वर्वृतति। तेऽपि "राठौड़" इति पदेनैव प्रसिद्धाः। तेषु च कतिपयहस्तिकुण्डिकराष्ट्रकूटा उदयपुरराज्ये सन्ति। ते च तत्र बहुलतरवर्षैरन्त पुररक्षणे विश्वस्ततया नियुक्ताः ॥

पृष्ठ ४ पङ्क्ति २१

( सेतुराम ) इत्यस्य टिप्पणम्

सेतुराम इति नामाक्षरार्थः सेतुबन्धको राम इति। शाकपार्थिवादित्वान्मध्यमपदलोपी समासः। पर्-

शुरामादितो भेदप्रदर्शनाय "सेतु" इति विशेषणम् । एतन्नामकरणप्रयोजनं तु सेतुबन्धकरामसदृशो भूयादिति ॥

पृष्ठ ५ पङ्क्ति २१

## [ सामन्तः ] इत्यस्य टिप्पणम्

सामन्तसिंहाख्यः ।

पृष्ठ ६ पङ्क्ति १७

## [ मेराचाचकनामकौ ] इत्यस्य टिप्पणम्

मेदपाटेश्वरमहाराणालाखानृपतेः शूद्रापुत्रौ मेराचाचकनामानौ लाखानृपस्यौरसपुत्रं मोकलनृपं हत्वा चित्तोड़दुर्गमहार्ष्टाम् ॥

पृष्ठ ६ पङ्क्ति १६

## टिप्पणे [ प्रतीहार०वर्तते ] इत्यन्तस्थाने

मण्डोवरेशप्रतीहारवंशे एका "ईंदा" इति शाखा वर्तते । मण्डोवरेशप्रतीहारनृपा राणापदभाजोऽभूवन् । साम्प्रतमपीन्दाप्रधानप्रतीहारो राणापदं धत्ते ॥

पृष्ठ ७ पङ्क्ति २८

## टिप्पणे ( मालदेव० अभवत् ) इत्यन्तस्थाने

**रावमालदेवान्तिकेऽयुतानामष्टौ८००००राष्ट्रवर्यसादिन आसन् ॥**

पृष्ठ १६ पङ्क्ति ४

## ( लक्षं ) इत्यस्य टिप्पणम्

लक्षं लक्षदानम् । मरुभाषायां लक्षदानं "लाखपसाव" इत्युच्यते । तत्र लक्षशब्दापभ्रंशः "लाख" इति । प्रसादशब्दार्थः प्रीतिपुरःसरं दानम् । उक्तं चिन्तामणिकोषकारेण "प्रसादस्तुष्टिंदाने" इति । मागधीभाषायां "प्रसादः" इत्यस्य "पसादो" इति भवति । तस्यापभ्रंशः "पसाव" इति । लक्षदाने च गजाश्वभूषावासोरजतमुद्रिकाप्रभृतयः प्रदीयन्ते । लक्षपूर्त्यर्थं च ग्रामा वितीर्यन्ते ॥

पृष्ठ २० पङ्क्ति १७

## [ सूचितम् ] इत्यस्याग्रे

**वने राज्ञि पाण्डौ पञ्चत्वमापन्ने माद्र्यां च तेन सह दग्धायां तत्तनयैः सह तद्धर्मपत्नीं कुन्तीमादाय चारणेषु हस्तिपुरमुपस्थितेषु द्वारपाले राज्ञो निवेदने महाभारतस्यादिपर्वणि षड्विंशाधिकशततमाध्यायस्यैकादशोत्तरशततमः श्लोकः—**

**"तं चारणसहस्राणां मुनीनामागमं तदा ॥**
**श्रुत्वा नागपुरे नृणां विस्मयः समपद्यत॥१॥" इति ॥**

पृष्ठ २० पङ्क्ति १८

## ( कथनमस्ति ) इत्यस्याग्रे

**आर्षग्रन्थातिरिक्तातिप्राचीनमहाकाव्येष्वपि चारणाः सादरं**

वर्णिताः । तस्येदं दिग्दर्शनं क्रियते॥ बाणभट्टकृतकादम्बरीग्रन्थे वेत्रवतीसरित्तीरस्थविदिशानगरीशकतिपयराजपुत्रयुतशूद्रकनृपतेः स्नानभूमिवर्णने—

"अनेकचारणगणाबध्यमानमण्डलाम्" इति ॥

तस्यैव श्रीहर्षचरितस्य तृतीयोच्छ्वासे श्रीकण्ठराष्ट्रीयस्थण्डीश्वरनगरवर्णने च—

"महोत्सवसमाज इति चारणैः, वसुधारेति च विप्रैरगृह्यत।"

इत्युपलभ्यते । बाणभट्टसमयश्च विक्रमस्य सप्तमः शतकः। यज्ञादिमहोत्सवेषु विबुधाकारणप्रथायाः पारंपरिकत्वादधुनापि क्षत्रियाणां विवाहादिमहोत्सवेषु कुङ्कुमपत्रिकाः संप्रेष्य चारणानाकारयन्ति। प्रसन्नराघवनाटकस्य प्रथमेऽङ्के सीतास्वयंवरायातभूपतिपरिचयार्थं मञ्जीरकं प्रति नूपुरकस्यायं प्रश्नः—

नूपुरकः— "वअस्स मंजीरअ ! को इमो सीदाकरग्गहवासनावसन्तलच्छीविलसन्तपुलअमुउलजालमंडिदं णिअभुअसहआरसाहिजुअलं पुलोअंतो चिट्ठदि ।"*

नूपुरकं प्रति मञ्जीरकस्येदमुत्तरम्—

मञ्जीरकः— "स एष निजयशःपरिमलप्रमोदितचारणचञ्चरीकचयकोलाहलमुखरितदिक्चक्रवालक्ष्मापालकुन्तलालंकारो मल्लिकापीडो नाम" इति ॥

कीर्तिप्रसारणकृत्यमादितश्चारणानाम् ।

पृ २४ पङ्क्ति २८

[ न्येवात्र ] इत्यस्य टिप्पणम्

अत्रालंकारशास्त्रे ।

पृ २८ पङ्क्ति ३

[ संकेतः ] इत्यस्याग्रे

---

* वयस्य मञ्जीरक ! कोऽयं सीताकरग्रहवासनावसन्तलक्ष्मीविलसत्पुलकमुकुलजालमण्डितं निजभुजसहकारशाखियुगलं प्रलोकयंस्तिष्ठति ॥

रूढिविषये चिन्तामणिकोषकारः " रूढिः शिष्टप्रयोगे । प्रसिद्धौ । अनादिव्यवहारसिद्धे संबन्धविशेषे । मुख्यशब्दवृत्तेर्भेदे" इत्याह ॥

पृष्ठ ३१ पङ्क्ति ८

(नामकर्तुरिच्छानुसारेण प्रसिद्धी रूढिरित्युच्यते) इत्यत्र

अलंकाराणां योगरूढनामसु न्यायादिशास्त्रलक्षणानि सम्यग्जाघटन्ति । अप्रस्तुतप्रशंसेत्यत्रावयवशक्तिबोध्योऽर्थोऽप्रस्तुतकथेति । प्रसङ्गे कथिताऽप्रस्तुतकथेति तु समुदायशक्तिबोध्योऽर्थः। अत्र रूढयङ्गीकारस्त्वर्थस्य संकोचविकासहेतुकः । अप्रस्तुतप्रशंसेत्यस्य योगार्थोऽप्रस्तुतकथेति । अनेन च प्रसङ्गकथिताऽप्रसङ्गकथितसकलकथाबोधनेऽप्यन्यार्थसंकोचेन प्रसङ्गकथिताप्रस्तुतकथेत्येतावन्मात्रार्थलाभार्थं रूढिः। नामकर्तुरिच्छानुसारेण प्रसिद्धी रूढिरित्युच्यते ॥ वयमलंकाराणां योगरूढनामस्वित्थमेव रूढिं वक्ष्यामः । रूढिप्रयोजनं चातिव्याप्तिवारणम् । तच्चोक्तरीत्या सर्वत्र स्वयमूहनीयम् ॥

पृष्ठ ३२ पङ्क्ति २२

टिप्पणे [ विद्वांस आसन् ] इत्यस्याग्रे

स्वयं च विद्वानासीत् । अलंकारशास्त्रे तन्निर्मितः सरस्वतीकण्ठाभरणाख्यः, ज्योतिषशास्त्रे च राजमृगाङ्काख्यः प्रसिद्धग्रन्थौ ॥

पृष्ठ ३३ पङ्क्ति २४

टिप्पणे [ लभन्ते स्म ] इत्यस्याग्रे

कस्याचिद्भारवाहस्य शिरस्यधिकतरं भारं समीक्ष्य भोजमहाराजस्तं पप्रच्छ "भारो न बाधति" इति। बाधधातोरात्मनेपदत्वाद्बाधतीत्यपप्रयोगमाकर्ण्य स राजानमाह "भारो न बाधते राजन् ! यथा बाधाति बाधते।" इति । अनेन भोजराजसमये भारवाहका अपि पठिता आसन्निति सिध्यति ॥

पृष्ठ ३८ पङ्क्ति ६

[ व्यतीताः ] इत्यतः पृ ३६ पं ७ [ किंचित् ] इत्यन्तस्थाने

दण्ड्याचार्यप्रणीतः काव्यादर्शग्रन्थः । अयं कविर्विक्रमस्य सप्तमशतके बभूव। तच्च वेदरसरस [ ६६४ ] मित विक्रमवर्षे कान्यकुब्जाभिषिक्तश्रीहर्षसमकालिकश्रीहर्षचरितनिर्मातुर्बाणकवेर्दण्डिनश्च विद्यारण्यप्रणीतशंकरदिग्विजयग्रन्थे समकालिकत्वप्रतिपादनादवसीयते । तत्रत्यं पद्यमिदम् । [सर्ग१५ श्लोक४१]

"स[1] कथाभिरवन्तिषु प्रसिद्धान्
विबुधान्बाणमयूरदण्डिमुख्यान् ॥
शिथिलीकृतदुर्मताभिमाना-
न्निजभाष्यश्रवणोत्सुकाँश्चकार ॥" इति ॥ ३ ॥

ध्वन्यालोकस्य प्रथमोद्योते "वामनाभिप्रायेणायमाक्षेपः" इत्युपलम्भात्काव्यालंकारसूत्रनिर्माता वामनो ध्वन्यालोकात्प्राक्तनः । अस्य विक्रमीयाष्टमशतकस्थकान्यकुब्जराजयशोवर्माश्रितविद्वद्वरभवभूतिविरचितोत्तररामचरितनाटकगतपद्योदाहरणप्रदानादष्टमशतकादर्वाक्तनत्वम् । अयं कविः काश्मीरभूपतेर्जयापीडस्य मन्त्री बभूव ॥ ४ ॥

ध्वन्यालोकग्रन्थकर्ता राजानकश्रीमदानन्दवर्द्धनाचार्योऽवन्तिवर्मसमय आसीत् । अवन्तिवर्मणो राज्यं काश्मीरमण्डले मुनिशराङ्क (९५७) मितविक्रमवर्षे बभूवेतिराजतरङ्गिण्यां स्पष्टम् ॥ ५ ॥

भोजमहाराजस्य निजनिर्मितसरस्वतीकण्ठाभरणे काव्यालंकारगतपद्योदाहरणप्रदानात्काव्यालंकारग्रन्थकर्ता रुद्रटो भोजमहाराजात्प्राक्तन इति निश्चीयते ॥ ६ ॥

भोजमहाराजस्य स्वनिर्मितः सरस्वतीकण्ठाभरणनामकग्रन्थः । भोजमहाराजो धनपतिभट्टाय वीराणकनामकं ग्रामं ददौ । तद्दानपत्रं मुम्बईनगरे एज्यूकेशनसोसाईटीयन्त्रालये मुद्रितम् । तत्र पत्रेऽष्टसप्तत्युत्तरसहस्र (१०७८) संख्याको विक्रमवत्सरो लिखितः । तस्माद्भोजमहाराजस्य समयः स एवेति सिद्धम् ॥ ७ ॥

पृ ३९ पं ८

(भोजमहाराजस्य पश्चात्.) इतिस्थाने

भोजमहाराजादर्वाचीनो रसेन्दुनयनाविधु (१२१६) मितविक्रमवर्षात्प्राचीनश्च मम्मटप्रणीतः काव्यप्रकाशग्रन्थः ॥

(पृ ३९ पं १४)

(उदाजहार) इत्यस्याग्रे (काव्यप्रकाशः) इत्यस्माच्च पूर्वम् ।

---

१ श्रीशंकराचार्यः ॥

"माणिक्यचन्द्रेण च रसेन्दुनयनविधु(१२१६)मितविक्रमवर्षे सङ्केताख्या. काव्यप्रकाशव्याख्या निरमायि ॥" इति ॥

पृ ४० पं १३

(लेखिष्यामः ॥ ८ ॥) इत्यतः पृ ४१ पं १४ (आसीत्) इत्यन्तस्थाने

वाग्भटालंकारग्रन्थकर्ता बाहड़ापराभिधो वाग्भटकविर्गुणेन्दुनयनविधु (१२१३) मितविक्रमवर्षे बभूव । अयमणहिलपुरपाटणनृपतेर्जयसिंहस्यामात्यः । एतद्विरचितजिनमन्दिरजीर्णोद्धारविषयं पद्यं हेमचन्द्राचार्यनिर्मितद्व्याश्रयकाव्य उपलभ्यते ।

यथा—

"श्रीमद्वाग्भटदेवोऽपि जीर्णोद्धारमकारयत् ॥
शिखीन्दुरविवर्षे च ध्वजारोपं व्यधापयत् ॥" इति ॥ ९ ॥

हेमचन्द्राचार्यविरचितोऽलंकारचूडामणिग्रन्थः । अयं जैनाचार्योऽङ्काग्निनेत्रेन्दु (१२२९) मितविक्रमवर्षे पञ्चतामवापेति जैनग्रन्थेषु प्रसिद्धम् ॥ १० ॥

प्रतापरुद्रीयग्रन्थकर्ता विद्यानाथश्चतुर्दशशताब्दौ समजनीति निश्चीयते। ओरङ्गलस्य काकतीयवंश्यो द्वितीयप्रतापरुद्रः खतुरङ्गगुणेन्दु-[१३७०] मितविक्रमवर्षे तैलङ्गदेशे हनुमत्कोण्डापत्तनाधिपतिर्बभूव । तन्नाम्ना चानेन कविनाऽयं ग्रन्थः प्रणीतः । तैलङ्गदेशे पर्वतः कोण्डापदादभिधीयते । तेन हनुमत्कोण्डेति हनुमत्पर्वतः ॥ ११ ॥

अलंकारतिलककर्तुर्भानुदत्तस्य रसमञ्जरीग्रन्थोपरि गोपालेन वेदाष्टाब्धीन्दु [१४८४] मितविक्रमवर्षे व्याख्या विरचितेति ततः प्राचीनत्वम् ॥ १२ ॥

काव्यप्रदीपप्रणेता गोविन्दठक्कुरः कमलाकरात्प्राचीनः । कमलाकरटीकायां प्रदीपोल्लेखात् । कमलाकरश्च वसुरसरसविधु [१६६८] मितविक्रमवर्षे काव्यप्रकाशव्याख्यां व्यरीरचत् ॥ १३ ॥

अलंकारशेखरनिर्मात्रा केशवमिश्रेण काङ्गड़ाधिपतिरामचन्द्रपौत्रधर्मचन्द्रसूनुमहाराजमाणिक्यचन्द्रस्याज्ञयाऽयं ग्रन्थो विहित इति तत्समकालिकत्वम् ॥ माणिक्यचन्द्रश्च खनेत्ररसविधु [१६२०] मितसंवत्सरात्संवत्सरसप्तकं राज्यं शशास ॥ १४ ॥

साहित्यसुधासिन्धुनिर्माता विश्वनाथः खबाणरसचन्द्र [१६५०] मितसंवत्सरसमीपवर्तीति तदन्तेवासिहस्तलिखितसाहित्यसुधासिन्धुपुस्तकगतनवशररसविधु [१६५९] मितवर्षादनुमीयते ॥ १५ ॥

कुवलयानन्दनिर्माताऽप्पयदीक्षितो विक्रमस्य सप्तदशशताब्दौ स-मजनीति सुप्रसिद्धम् ॥ अप्पयदीक्षितविरचितात्मार्पणस्तुतिव्याख्याविधात्रा शिवानन्देन वेदबाणरसाब्धि[४६५४] मितकलिगतवर्षेषु खचन्द्ररसेन्दु [१६१०] मितविक्रमवर्षेष्वतीतेषु विरञ्चिपुरेऽप्पयदीक्षितो जनिमासादयामासेति लिलिखे ॥ अतिप्रसिद्धोऽयं ग्रन्थः। अस्मिन्ग्रन्थे लक्ष्यलक्षणकारिकास्तु प्रायश्चन्द्रालोकस्यैवेति स एवाह—

"येषां चन्द्रालोके दृश्यन्ते लक्ष्यलक्षणश्लोकाः।
प्रायस्त एव तेषामितरेषां त्वभिनवा विरच्यन्ते॥" इति॥ १६॥

चित्रमीमांसाग्रन्थोऽप्पयदीक्षितविहित एव। अपूर्णश्च। दीक्षितोपरि कटाक्षं कुर्वन् रसगङ्गाधरकारो बहुषु स्थलेषु लिखति "किमुक्तं द्रविडपुङ्गवेन" इति ॥ १७ ॥

त्रिशूल्युपनामको रसगङ्गाधरप्रणेता जगन्नाथो विक्रमस्य सप्तदशशतके बभूव। अयं दिल्लीपतेः शाहजहांयवनस्य पण्डितस्तैलङ्गदेशीयो ब्राह्मणः। दिल्लीपतिना चास्मै महाकविराज–महापात्रपदे प्रददाते। अनेकशश्च रत्नैरस्यास्यमपूरि। अनेकशश्च तत्तुल्यहाटकेनायं प्रतोल्य तत्तस्मै प्रददे। शाहजहांयवनराजश्च वेदाष्टरसचन्द्र [१६८४] मितविक्रमवर्षाद्बाणेन्दुमुनिचन्द्र [१७१५] मितसंवत्सरं यावत्पृथ्वीं पालयामास॥ १८ ॥

अलंकारकौस्तुभकर्ता विश्वेश्वरः शरमुनिमुनिविधु(१७७५)मितसंवत्सरसमीपवर्तीति सुनिश्चितम्। अयं कविः पाण्डे इत्युपाख्यस्य लक्ष्मीधरस्यात्मजः। अधुना चानूपपत्तनेऽस्याष्टमः पुरुषो विद्यमानः ॥ १९ ॥

चन्द्रालोकग्रन्थकर्ता जयदेवः काव्यप्रकाशादर्वाचीनः। काव्यप्रकाशोपरि कटाक्षं कुर्वन् जयदेवश्चन्द्रालोके

"अङ्गीकरोति यः काव्यं शब्दार्थावनलंकृती।
असौ न मन्यते कस्मादनुष्णमनलं कृती ॥१॥"

इति लिखति ॥ अयं कविर्विक्रमस्य द्वादशशतक आसीदिति प्रसिद्धिः ॥ २० ॥

अलंकारसर्वस्वकर्ता राजानकरुय्यकः काव्यप्रकाशादर्वाचीनो द्वादशशतकोत्तरार्द्धवर्तीति श्रीकण्ठचरितकाव्यकर्तुर्द्वादशशतकचरमसमयसंभूतमङ्खककवेर्गुरुत्वादनुमीयते ॥ अनेन न केवलं सर्वस्व एव प्रणीतः अन्येऽपि बहवो ग्रन्था निर्मिताः। यथा, जल्हणस्य सोमपालविलासोपर्यलंकारानुसारिणीनामव्याख्या, काव्यप्रकाशसंकेतः, श्रीकण्ठस्तवः, सहृदयलीला, साहित्यमीमांसा, हर्षचरितवार्तिकं चेति । अयं रुचकाख्ययापि प्रथितः ॥ २१ ॥

अलंकाररत्नाकरः शोभाकरमित्रप्रणीतः । रत्नाकरकारस्य सर्वस्वोपरि कटाक्षोपलम्भात्सर्वस्वादर्वाचीनत्वम् ॥ २२ ॥

अलंकारसर्वस्वव्याख्याविमर्शिनीविधाता राजानकजयरथो रत्नाकरादर्वाचीनः। विमर्शिन्यां सर्वस्वसंबन्धिरत्नाकरकटाक्षितानां समाधानोपलम्भात्। अपि च तत्र पृथ्वीराजविजयकाव्यस्य "गृह्णाद्भिः परया भक्त्या" इति पद्योपलब्धेस्तस्मादर्वाचीनत्वम् । पृथ्वीराजो वसुवेदाक्षिचन्द्र (१२४८) मितविक्रमवर्षे मृतिमवापेति ताम्रपत्रैर्विनिश्चितम् ॥ २३॥

अलंकारोदाहरणस्यापि विधाता राजानकजयरथ एव। अलंकारोदाहरणान्ते—

"प्रतिज्ञामात्रमेवैतदित्युपेक्ष्यं विचक्षणैः ॥
अलंकारविमर्शिन्यां युक्तिरुक्तचराऽत्र यत् ॥ १ ॥
शृङ्गकमुद्दिश्य निजं सत्यपि बाल्ये श्रुतार्थिनं पौत्रम् ॥
अखिलं निखिलालंकृतिसिद्धान्तं जयरथः स्फुटार्थपदम् ॥२॥"

इति तेनैव कथितम् ॥ २४ ॥

साहित्यदर्पणप्रणेता विश्वनाथो रसप्रदीपप्रणेतुः प्रभाकरस्य गुरुरिति प्रभाकरलेखतोऽवसीयते। अयं विश्वनाथः प्रभाकरगुरुश्चेदस्य समयः खखरसचन्द्र (१६००) मितसंवत्सरस्य खवेदरसचन्द्र (१६४०) मितसंवत्सरस्य च मध्यवर्तीत्यनुमातव्यम् । अपि च साहित्यसुधासिन्धुरपि विश्वनाथेन प्रणीतः। तस्य च खबाणरसचन्द्र (१६५०) मितसंवत्सरसमीपवर्ती समय इत्ययं विश्वनाथः स एव स्यात् ॥ २५ ॥

पृष्ठ ४० पङ्क्ति १६

(विमर्शनी) इत्यस्याग्रे

विमर्शन्याः स्वतन्त्रग्रन्थत्वाभावेऽपि मूलग्रन्थसाम्यादस्माभिर्ग्रन्थेष्वियं गणिता ॥

पृष्ठ ४४ पङ्क्ति १२

[अनेन] इत्यतः पूर्वम्

एतद्व्यासवचनेनेदं सिध्यति, वाणी केवलशब्दालंकारेणालंकारवती न भवति। न च वाच्यम्, शब्दालंकारस्याप्यलंकारव्यवहारे वाणी कथं तेन नालंकारवतीति। एतद्व्यासवचनेनैव तत्समाधानात्। तथाहि अर्थमयरत्नसुवर्णालंकारैरेव कामिन्या अलंकारवत्त्वव्यवहारो नं तु काचरङ्गाद्यलंकारैरपि। शोभाकरधर्मस्य काचरङ्गाद्यलंकारेषु विद्यमानत्वेऽपि तत्र धनमयवैभवचमत्काराभावात्तैः कामिन्या अलंकारवत्त्वव्यवहारो न भवति। तद्वच्छब्दालंकारेषु शोभाकरधर्मस्य विद्यमानत्वेप्यर्थमयचमत्काराभावात्केवलशब्दालंकारेण वाण्या अलंकारवत्त्वव्यवहारो न भवति ॥

पृष्ठ ४५ पङ्क्ति १

भाषायां संकेतोऽपेक्षितः। अत्र तु नापेक्षितः। अस्य भाषानुवादत्वाद्यथाक्षरमुल्लेखः ॥

पृष्ठ ४५ पङ्क्ति ७

(जिह्वा जानाति च्छन्दः) इत्यस्याग्रे

तदेवोक्तं पिङ्गलसूत्रेऽपि

"जँइ दीहो विअ वण्णो लघु जीही पढइ सो वि लहू।
वण्णो वि तुरिअपढिओ दो तिण्णि वि एक्क जाणेहु ॥ १ ॥"

अस्येदमुदाहरणमाह—

"अरेरे[1] वाहहि कान्ह नाव छोटि, डगमग कुगति ण देहि।
तइ इथिँ णदिहिँ सँतार देइ, जो चाहसि सो लेहि ॥ १ ॥"

दोहावृत्तम् ॥

---

* "यदि दीर्घमपि वर्णं लघु जिव्हा पठति सोऽपि लघुः। वर्णौ (वर्णा वा) अपि त्वरितपठितौ द्वौ वा त्रयो वा एकं जानीत ॥ १ ॥"

[1] "अरेरे वाहय कृष्ण! नावं सूक्ष्मां डगमगकुगतिं न देहि। त्वमस्यां नद्यां संतारं दत्त्वा यदपेक्षसे तद्गृहाण ॥ १ ॥"

अत्र "अरेरे" इति संबोधनद्वयम्। अनयोस्त्वरितं पाठे वृत्तभङ्गो न भवति।

पृष्ठ ४६ पङ्क्ति ३
(अन्ते)

सरसकवयः शास्त्रमर्यादां नापेक्षन्ते। तदेवोक्तं केनचित्कविना—

"गणयन्ति नापशब्दं न वृत्तभङ्गं क्षयं तथार्थस्य।
रसिकत्वेनाकुलिता वेश्यापतयश्च कवयश्च॥" इति॥

वेश्यापतिपक्षे— अपशब्दो निन्दा, वृत्तभङ्गः सदाचारस्खलनम्, अर्थक्षयो धनक्षयः। निरङ्कुशकविपक्षे—अपशब्दो व्याकरणकोषरीत्याऽशुद्धप्रयोगः, वृत्तभङ्गश्छन्दोभङ्गः, अर्थक्षयो वाच्यार्थलक्ष्यार्थक्षतिः। एतदेवाभिप्रेत्य "निरङ्कुशाः कवयः" इत्युक्तम्। रघुवंशादिषट्काव्यटीकाकर्ता मल्लिनाथो व्याकरणरीत्याऽसिद्धशब्दप्रयोगे "निरङ्कुशाः कवयः" इत्याह। कावेरीसरित्तटे रघोर्निवेशे सैनिकस्नानवर्णनप्रसङ्गे रघुवंशकाव्ये चतुर्थसर्गस्य पञ्चचत्वारिंशं पद्यमिदम्—

"स सैन्यपरिभोगेण गजदानसुगन्धिना।
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत्॥" इति॥

अस्य व्याख्याने मल्लिनाथः "गन्धस्य—५।४।१३५" इत्यादिना इकारादेशः समासान्तः। यद्यपि "गन्धस्येत्वे तदेकान्तग्रहणं कर्तव्यम्" इति नैसर्गिकगन्धविवक्षायामेवेकारादेशस्तथापि "निरङ्कुशाः कवयः" इत्याह। न च वाच्यं, ईदृशकविभ्यो वेश्यापत्युपमा प्रदत्तेति। कुत इति चेद्वयमपि कवेरुक्तकृत्यमुत्तमश्रेण्यां न मन्यामहे, अपि त्वदोषमात्रम्। वेश्यापतिरपि ज्ञातिबाह्यो न भवति, तथैवोक्तकृत्यकरणात्कविरकविर्न भवति। "निरङ्कुशाः कवयः" इति कविस्वातन्त्र्यविषयवचनं त्वेतदभिप्रेत्योक्तम्, गजो बलेन प्रमाणेन च सर्वानपि स्थलचरप्राणिनोऽतिशेते। स च मदमत्तावस्थायामङ्कुशमर्यादोल्लङ्घनं कर्तुं शक्नोति। न त्वन्यप्राणिनोऽपि। तथा महाकवयः क्वचिद्रसमग्ना व्याकरणादिमर्यादोल्लङ्घनं कर्तुं शक्नुवन्ति। न तु साधारणकवयोऽपि।

विद्यार्थिनः पूर्वं प्राचीनच्छन्दःपाठात्तत्प्रकारविज्ञाने जिह्वायन्त्रेण संघटितां श्रवणतुलया च तुलितां छन्दोरचनां विदध्युः। काव्यार्थपरिज्ञाने पितामहकविराजबांकीदासकृतकविमतमण्डनभाषाग्रन्थोक्तनिम्नलिखित। विषयस्यात्यावश्यकत्वम् ॥ तद्विषयकं पद्यमिदम्—

"उक्तिर्विशेष्यविशेषणमध्याहारस्तथान्वयः शब्दः।
अर्थः ख्यातिः कर्ता नायक एतेऽर्थबोधकाः सर्वे ॥" इति ॥

इयं कस्योक्तिः। विशेष्यः कः। विशेषणं किम्। कस्यार्थस्याध्याहारः। कस्य शब्दस्य केन शब्देन सह संबन्धः। शब्दः कीदृशः, रूढो यौगिको योगरूढो वा। अर्थः, अनेकार्थवाचिशब्दस्यात्र कोऽर्थः। ख्यातिर्वृत्तान्तः। कर्ता काव्यनिर्माता। नायको वर्णनीयत्वेनाभिप्रेतः।

पृ ४६ पं ४

(उक्तवान्) इत्यस्याग्रे

निर्जीवमूर्तिरपि लोकेऽलंकारैरलंक्रियते। मूर्तय आलेख्यादयः पूजनप्रकरणेऽष्टधा कथिताः।

पृ ५२ पं १६

(भगवतो) इत्यारभ्य (ज्ञेयम्) इत्यन्तस्थाने

मम मते भरतस्यायमाशयः। काव्यश्रेण्यामुक्तप्रकारकं काव्यमुत्तममिति। तच्च समीचीनम्। प्रकाशकारस्य मध्यमाधमेति काव्यप्रकारकथनमसमीचीनम्। तादृशसंज्ञाया अरमणीयताबोधकत्वात्। अरमणीयतायां च काव्यत्वाभावात्। भगवतो भरतस्यानयाऽऽज्ञया काव्यप्रकाशस्य।

"तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि।
इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः ॥

क्वापीत्यनेनैतदाह, यत् सर्वत्र सालंकारौ क्वचित्तु स्फुटालंकारविरहेऽपि न काव्यत्वहानिः। ध्वनिमत्त्वाद्ध्वनिरिति व्यवहारः ॥" इति कारिकायामिदमनुमीयते, कारिकाकारमतं भरतमतानुसारेणैतावन्मात्रमेव। मध्यमाधमेति काव्यप्रकारकथनं त्वन्येषां मतमिति ॥

पृ ५४ पं ४

(इत्युच्यते) इत्यस्याग्रे

"तस्यार्थस्तु लक्ष्यार्थ इत्युच्यते" इति ॥

पृ ५५ पं २२

(इत्युच्यते) इत्यस्याग्रे

"तस्यार्थस्तु व्यङ्ग्यार्थ इत्युच्यते" इति ॥

पृष्ठ ५७ पङ्क्ति १६

(समीचीनाः) इत्यस्याग्रे

इमां शक्तिं यथारुचि केचिद्व्यञ्जनां केचिद्ध्वनिं केचिच्चाक्षेपां कथयन्ति ।

पृष्ठ ६० पङ्क्ति ७

(व्यापारः) इत्यस्याग्रे

उक्तोदाहरणानि तु संयोगादिभिरनेकार्थवाचिशब्दानामेकार्थतानियमनविषयाणि । ततश्च व्यङ्ग्यार्थस्योदयः । तदुदाहरणानि च यथालाभं स्वयमूह्यानि ॥ श्लेषे त्वनेकेऽर्था अभिधयैव बुध्यन्ते ।

पृ ६१ पं ८

(व्यञ्जनैवेत्यर्थः) इत्यस्याग्रे

अत्रादिपदाच्चेष्टादेः संग्रहः । "उव णिच्चलणिप्पन्दा"— इत्यत्र कविरेव वक्ता चेद्वाच्यार्थ एव विश्रान्तिर्भवति । दंपत्योर्मध्यादेकतरः, सखी वा वक्त्री चेद्व्यङ्ग्यार्थः प्रतीयते । व्यङ्ग्यार्थरूपकार्ये चोक्तकाव्यार्थ उपादानकारणम् । वक्तृवैलक्षण्यं सहकारिकारणम् । उक्तसहकारिकारणाभावश्चेद्व्यङ्ग्यस्यानुदयः । व्यङ्ग्योत्पत्तिस्तु वक्त्रादिसहकारिकारणसाहाय्यादर्थव्यापारद्वारा भवति । अत्रार्थपदेन वाच्यार्थलक्ष्यार्थव्यङ्ग्यार्थानां ग्रहणम् ॥

पृष्ठ ६५ पङ्क्ति ६

(गुणीभूतव्यङ्ग्यम्) इत्यस्याग्रे

प्रधानाप्रधानेति व्यङ्ग्यद्वैविध्यं तु काव्यप्रकाशकारमतमनुसृत्योक्तम् । प्रकाशकारस्येदं मतं च शब्दशक्तिमूलादिव्यङ्ग्यकथनादनन्तरं "अगूढमपरस्याङ्गम्" इति गुणीभूतव्यङ्ग्यप्रदर्शककारिकायाश्च पूर्वं "एवं

ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यप्रभेदानाह" इति कथनेन स्पष्टम्। मम तु मतं, समकक्षतायामेव प्रकारसंभव इति प्रधानाप्रधानवस्तु प्रकारान्तरतां नार्हत्येव॥ अलंकारशास्त्रस्य चायं सिद्धान्तः। "प्राधान्येन व्यपदेशा भवन्ति" इति॥ अत्र प्राधान्यं च चमत्कारमूलकम्। अत्रेदं विवक्षितम्, तत्तद्विषये प्रधानमुत्कटचमत्कारं वस्तु व्यपदेशास्पदं भवति। न्यूनचमत्कारं चमत्काराभावविशिष्टं वा वस्तु व्यपदेशास्पदं न भवति। अलंकारेषु चालंकरणरूपचमत्कारस्य प्रधानत्व एवालंकारव्यपदेशः। व्यङ्ग्ये च व्यङ्ग्यरूपचमत्कारस्य प्रधानत्व एव व्यङ्ग्यव्यपदेशः। यथा दीपक उपमासत्त्वेऽपि दीपक एव प्रधानचमत्कारो न तूपमायाम्। अत एव च दीपकस्यैवालंकारव्यपदेशो, न तूपमायाः। यत्र चोभावपि प्रधानचमत्कारविशिष्टौ तत्रोभयोरप्यलंकारव्यपदेशात्संसृष्टिसंकरेति नाम्ना निर्दिश्येते। "गोसदृशो गवयः" इत्यत्रापि सामीप्यकृतविशेषज्ञानस्य विद्यमानत्वेनोपमानाम्नः, "सह शिष्येणागतो गुरुः" इत्यत्र च सहभावकथनस्य विद्यमानत्वेन सहोक्तिनाम्नः प्राप्तावप्यत्रोपमासहोक्त्योश्चमत्काराभावादलंकारत्वेन न व्यपदिश्येते। अगूढादिगुणीभूतव्यङ्ग्येऽपि प्रतीयमानार्थस्य व्यञ्जनालभ्यत्वाद्व्यङ्ग्यनाम्नः प्राप्तावपि तादृशव्यङ्ग्यस्य प्रधानत्वाभावादर्थादुत्कटचमत्कारकारकत्वाभावादनादरणीयत्वम्॥ तदेव प्राचीनानां विध्यलंकारोदाहरणे प्रदृश्यते—

"पञ्चमोद्ञ्चने काले कोकिलः कोकिलो भवेत्॥" इति॥

अत्रायमभिसंधिः, मधुरध्वनिमत्त्वाद्वसन्तसमय एव कोकिलः कोकिलः। अन्यसमये तु कोकिलेति कथनमात्रम्। एवं व्यङ्ग्यार्थस्य प्रधानत्वेऽर्थादुत्कटचमत्कारकारित्वे व्यङ्ग्यव्यपदेशः। गुणीभूतव्यङ्ग्यस्य तु व्यङ्ग्येति कथनमात्रम्। तदेव सूचितं काव्यप्रकाशगतकारिकाकारेण "इदमुत्तममतिशयिनि" इति कारिकया। वाच्यार्थादतिशयचमत्कारकारिव्यङ्ग्य उत्तमं काव्यम्। ध्वनिमत्त्वात्तादृशं काव्यं बुधैर्ध्वनिरिति कथ्यते। एतत्कथनेनेदमर्थसिद्धं भवति। वाच्यात्प्रतीयमानार्थस्योत्कटचमत्कारकारित्वे ध्वनिरुच्यते। उत्कटचमत्कारकारित्वाभावे तु ध्वनिरिति नोच्यते। ध्वनिर्व्यङ्ग्यं चैकमेवेति व्यासवचनात्स्फुटतरम्। मम तु मतं, अनेन कारिकाकारेण गुणीभूतव्यङ्ग्यं व्यङ्ग्यस्य प्रकारत्वेन न प्रदर्शितम्।

अपि तु गुणीभूतव्यङ्ग्यबोधार्थं तस्य प्रकारप्रदर्शनं कृतम्। प्राचां व्यङ्ग्यप्रकारत्वेनावगमनं तु प्रमाद एव। गुणीभूतव्यङ्ग्यमग्रे दर्शयिष्यते ॥

पृष्ठ ६६ पङ्क्ति १

(तच्चै० भवति) इत्यत्र

तच्चैहिकपारलौकिकसमस्तदृश्यादृश्यवस्तुविषयम् । मनोवृत्तिरपि तदन्तर्भूता ॥

पृष्ठ ६६ पङ्क्ति ४

(विभावशब्दा० कर्ता) इत्यत्र

विभाव इत्यत्र वीत्युपसर्गो हेतुवाचकः। उक्तं चिन्तामणिकोषकारेण "वि हेतौ" इति ॥

पृष्ठ ७० पङ्क्ति २२

(सदृशः) इत्यस्याग्रे

गुणालंकारादिभिरपि श्रोतुः स्वादोत्पत्तिस्तथापि न सा रसदशासदृशा।

पृ ७२ पं १७

(भावो रस इति ) इत्यस्याग्रे

श्रीयशवन्तनृपाल! विभावै-
र्मिलितैः शुचिभिरथाप्यनुभावैः ॥
संचारिभिरपि संख्यातीतैः
स्वादुत्वे रसपदभाक् स्थायी ॥ १ ॥

पृष्ठ ७८ पं ३

(कान्ताविषयिका यथा) इत्यत्र

कान्ताविषयिका रतिरत्र कामसंबन्धिकान्ताविषयिका रतिर्विवक्षिता।
सा यथा—

पृ ९८ पं २५

(अनुभावः) इत्यस्याग्रे

अत्र लेखकस्य भये सत्यपि द्रष्टुर्हासस्य मुख्यत्वाद्धास्यमेव रसः। लेखकभयं तु संचारिरूपम्।

पृष्ठ १०६ पङ्क्ति १८

(कृतवान्) इत्यस्याग्रे

द्रविड़देशाद्युत्पन्ना नरा द्राविड़ादिपदैरुच्यन्ते ॥

पृष्ठ १०९ पङ्क्ति ५

(अनुचितः) इत्यस्मात्पूर्वम्

विभावानुभावसंचारिभावानां मिलित्वा स्थायिभावस्य स्वादुकारित्वे स्थायिभावो रसत्वमापद्यत इत्ययं सिद्धान्तः। तत्र कुत्रचिदेतेषु कस्यचिन्न्यूनत्वे कथं रसत्वमिति चेन्न। एकदेशविकृतस्यानन्यत्वात्। तदुक्तं "एकदेशविकृतमनन्यवत्" इति। न च वाच्यं, अस्य वचनस्य व्याकरणपरिभाषारूपत्वादलंकारशास्त्रे कथं प्रमाणत्वमिति। व्याकरणस्यापि शास्त्रत्वात्। प्रायः शास्त्रशैल्याश्चैकत्वात्। आज्ञापितं चाग्निपुराणे भगवता वेदव्यासेनोपमाप्रकरणे "किञ्चिदादाय सारूप्यं लोकयात्रा प्रवर्तते" इति। क्वचिच्च कण्ठरवेणानुक्ता अपि भावादयः प्रतीयन्ते। रसोत्पत्तिस्तु मनोवृत्त्यनुसारिणी। सा च कस्यचित्सकलसामग्रीसत्त्वेऽपि न भवति। कस्यचिच्च सामग्र्या न्यूनत्वेपि भवति ॥

पृष्ठ १०९ पं १९

(हास्यादीनामुत्पत्तेः) इत्यस्याग्रे

बहवः प्राचीनाः सामाजिकानां रसोत्पत्तिं मन्यन्ते। एतदेवाभिप्रेत्य प्रकाशकारः

"व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः"

इत्यत्र "अभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात्तत्कालविगलितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसंपर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणोऽलौकिकचमत्कारकारी शृङ्गारादिको रसः" इत्याह। भट्टलोल्लटप्रभृतयस्तु "विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणै रत्यादिको भावो जनितः, अनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः, व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्ये, तद्रूपतानुसंधानान्नर्तकेऽपि

प्रतीयमानो रसः" इत्याहुः ॥ अत्र प्रदीपकारस्तु "नटे तु तद्रूपतानुसंधानवशादारोप्यमाणः सामाजिकानां चमत्कारहेतुः" इति तत्तात्पर्यतया प्राह ॥ मम मते तु भट्टलोल्लटमतं समीचीनम्। अत्र सहृदयहृदयमेव साक्षि ॥ नाटके काव्ये च रसस्तु वर्णनीयविषयक एव प्रदर्श्यते। स च सामाजिकानां चमत्कारहेतुः। मुख्यतया तु वर्णनीय एव रस इति धुरंधराशयः। क्वचित्सामाजिकेष्वप्युक्तरीत्या रसप्रादुर्भावश्चेद्भवतु नाम। हासादिस्थायिभावेष्वप्येवमूहनीयम्। प्रकाशकारेण त्वस्मिन्विषये बहुलतरमुक्तम्। तत्तु मुधैव। ननु रसस्वरूपं तु ब्रह्मानन्दसहोदरत्वेनोक्तम्। तादृशानन्दश्च रत्याद्याश्रयाणां वर्णनीयानामेव भवति। शोकाद्याश्रयाणां वर्णनीयानां तु न भवति। सामाजिकानां तु रत्यादिमयनाट्यकाव्यदर्शने शोकादिमयनाट्यकाव्यदर्शने वाऽऽनन्दप्राप्तिरेवेति सामाजिकेष्वेव रस इति चेन्न। अत्र ब्रह्मानन्दो धर्मित्वेनोपमानत्वेनाभिप्रेतः। तत्र च विगलितवेद्यान्तरत्वे तदाकारवृत्तित्वं धर्मः। स च रत्यादिषु शोकादिषु च सर्वत्र व्याप्त इति नासामञ्जस्यम्। रसशब्दार्थ आस्वाद इति। स च रत्यादिषु रत्यादिरूपतया, शोकादिषु च शोकादिरूपतयाऽऽस्वाद्यते। यथा मधुराम्ललवणकटुकषायतिक्तेषु लौकिकषड्रसेषु मधुरो मधुररूपतया, कट्वादयश्च कट्वादिरूपतयाऽऽस्वाद्यन्ते। रसशब्देन च व्यवह्रियन्ते। न च वाच्यं, विभावादीनां मिलित्वा स्थायिभावस्य स्वादुत्वापादकत्वे रसत्वम्। तत्र च नायिकाया नायकविषयरत्युत्पादे नायक आलम्बनम्। वर्षादीन्युद्दीपनानि। हर्षोत्कण्ठादयः संचारिभावाः। एषामास्वादस्य नायिकाविषयत्वेऽपि नायिकानिष्ठनिजानुभावानामास्वादस्यासंभवात्कथं वर्णनीयेषु रस इति। कुत इति चेद्वस्तुमात्रस्यास्वादस्तु तत्तद्वस्तुज्ञानेन भवति। तत्र नायिकानिष्ठस्तम्भादिसात्त्विकभावास्तु नायिकाज्ञानविषया एव। नायिकानिष्ठभ्रूक्षेपकटाक्षादिनिजानुभावानां नायिकादर्शनस्यागोचरत्वेऽपि भ्रूक्षेपादिक्रियाणां नायिकाकर्तृकत्वात्तज्ज्ञानं नायिकाया भवत्येव। ताश्च क्रिया इच्छापूर्विका अनिच्छापूर्विका वा भवन्तु। मुखवैवर्ण्यादिज्ञानं तु दर्पणदर्शनाद्भविष्यति ॥ एवं विभावादीनां मिलित्वा नायिकाविषयरतिभावस्य स्वादुत्वापादकत्वं बोध्यम्। नायकनिष्ठानुभावानां नायिकास्वादविषयता त्वाधिक्यम्। "विभावानुभावव्यभिचारिसंयोगाद्रस

निष्पत्तिः" इत्यत्र तत्तत्स्थायिभावसंबन्धितत्तद्विभावानुभावसंचारिभावानां ग्रहणम् । एवमन्यत्रापि बोध्यम् ॥ किं च रत्यादिभावोत्पाद एव न रसोत्पत्तिः । अपि तु यस्य मनसि रत्यादिभावोत्पादस्तस्य विभावानुभावसंचारिभावानां सम्यगनुभवे रसोत्पत्तिः । रसोत्पत्तिपर्यन्तमतिचञ्चलमनसि रत्यादिभावानां सजातीयैर्विजातीयैरविरुद्धैर्विरुद्धैश्च भावैरतिरस्कृततया स्थिरत्वे रसोत्पत्तिरिति रत्यादिभावानां रसदशायां स्थायिसंज्ञा भवति । रत्यादीनां स्थयितादशायां च रत्यादिभिः सह स्थित्या संचारकरणेन वा स्थायिभावानां पोषकत्वे तत्तद्भावानां संचारिसंज्ञा भवति ॥ अस्मिन् ग्रन्थे यत्र यत्र सामाजिकानां रसोत्पत्तिरिति कथितं तत्तु परमतेन बोध्यम् ॥

पृष्ठ १२१ पङ्क्ति २२

(भवेदेव) इत्यस्याग्रे

सामान्यत एकार्थस्यान्यतरशोभाकरत्वे तस्य तु सर्वथा वैलक्षण्याभावादुपलक्षणतया रसवदादिष्वन्तर्भावः ॥

पृष्ठ १२७ पङ्क्ति १२

(मेलितः) इत्यस्याग्रे

वारंवारमुत्कृष्टतया न्यासस्त्वनेकवस्तूनां भवति । तथाप्यन्यत्रातिव्याप्तिवारणायात्र शब्दस्य वारंवारं न्यासे रूढिः ॥

पृष्ठ १३१ पङ्क्ति २८

(बोध्यम्) इत्यस्याग्रे

साधर्म्यमित्युपमानामार्थोऽपि न भवति । अनेनोपमायाः स्वरूपमपि च न स्फुटीभवति । ननु वर्णनीयस्य साधर्म्यदर्शनमुपमायाः स्वरूपमिति चेन्न । वर्णनीयवर्णनस्य तदुत्कर्षार्थकत्वात् । साहित्यशास्त्रे साधर्म्यप्रदर्शनस्य स्वद्वितीयतागर्वखण्डनरूपप्रातिलोमभावात्प्रतीपालंकारत्वेनाङ्गीकारः ॥ "प्रातिलोम्यात्प्रतीपम्" इति ॥ अत्र प्रातिलोमभावश्चादरार्हस्यानादरः । स चानादरोऽत्राद्वितीयतायाः खण्डनरूपः । साधर्म्यं च मत्स्पष्टीकृतनामार्थरूपलक्षणेऽपि प्रतीयते । तथापि तस्य विशेषज्ञानार्थकत्वाददुष्टत्वम् ॥ तदुक्तम्—

"अन्यमुखे दुर्वादो यः प्रियवदने स एव परिहासः ॥" इति ॥

साधर्म्यदर्शने हठादुत्कर्षाङ्गीकारे तु तस्याज्ञातज्ञापनरूपविध्यलंकारेऽन्तर्भावः ।

पृष्ठ १७० पङ्क्ति ३

(रुपमायाः) इत्यस्याग्रे

उपमाप्रकारेषु शुद्धोपमा प्राक्प्रदर्शिता । तत्र शुद्धशब्दस्तरङ्गहीनसमुद्रस्वभावपरः । उपमायाः प्रकाराश्च समुद्रतरङ्गतुल्याः । शुद्धशब्दस्य च नात्र स्तुतिवाचकत्वम् । अन्यथोपमाप्रकारा अशुद्धपदभाजो भवेयुः ॥

पृष्ठ १७३ पङ्क्ति २३

(तूल्लङ्घनं) इत्यस्याग्रे

उल्लङ्घनं तु गिरिसमुद्राद्यनेकेषां भवति ॥

पृष्ठ १८१ पङ्क्ति १८

(नास्ति) इत्यस्याग्रे

निगरणस्य निश्चये वास्तवत्वभाने तु लोकसीमातिवर्तनरूपचमत्कारस्वारस्यं तु भ्रश्येदेव ॥

पृष्ठ १८८ पङ्क्ति २१

(रूढिः) इत्यस्याग्रे

उपलक्षणेन श्लाघादेः संग्रहः ।

पृष्ठ १९५ पं २३

(जुगोप) इत्यस्याग्रे

अत्र भ्रान्तिमुत्पाद्यापन्हवो विहित इति भ्रान्त्यपन्हुत्योरङ्गाङ्गिभावसंकरः ॥

पृष्ठ २०० पं ६

(रेवालंकारः) इत्यस्याग्रे

अपन्हवाभावान्नापन्हुतिरलंकारः। अपि तु भ्रान्तेर्दूरीकरणमात्रम्।

पृष्ठ २०१ पं २१

(उदाहरणान्तराणि) इत्यस्याग्रे

एकं निषिध्यान्यस्य दर्शने दृढारोपरूपकादन्यचमत्कारस्तु भ्रान्तिनिवारणादज्ञातज्ञापनाद्वेतरो नैव भविष्यति । भ्रान्तिनिवारणं च भ्रान्त्यलंकार एव । उन्मीलितादिषु मिलिताद्यलंकारवत् ॥

पृष्ठ २०४ पं ३२

(कथा) इत्यस्याग्रे

अप्रस्तुतकथा तु कस्यचित्प्रसङ्गेऽप्रसङ्गे च सर्वत्रापि कथ्यते ॥

पृष्ठ २०७ पं २७

(अप्रस्तुत एव) इत्यस्याग्रे

एवंविधकाव्यानि प्रस्तावे प्रोच्यन्त इतीदृशकाव्यानि प्रस्तावेऽर्थात्प्रसङ्गे कथनयोग्यतया लोके प्रास्ताविकानीत्युच्यन्ते । प्रास्ताविकशब्दार्थश्च प्रस्तावसंबन्धीति ॥

पृष्ठ २१३ पङ्क्ति ६

(पर्यायोक्त्यलंकारः) इत्यस्याग्रे

सामान्यप्रसङ्गे विशेषाप्रस्तुतकथाकथने विशेषनिबन्धना, विशेषप्रसङ्गे सामान्याप्रस्तुतकथाकथने सामान्यनिबन्धनेति नियमकरणं प्राचां प्रमादः । कुत इति चेद्विशेषप्रसङ्गे विशेषाप्रस्तुतकथाकथने विशेषनिबन्धनेति सामान्यप्रसङ्गे च सामान्याप्रस्तुतकथाकथने च सामान्यनिबन्धनेति च कुतो न स्यात् । तथा च सामान्याप्रस्तुतकथानिबन्धने सामान्यनिबन्धना, विशेषाप्रस्तुतकथानिबन्धने च विशेषनिबन्धना भवति । प्राचां प्रमादोक्तनियमस्य न धुरंधरनामार्थगतत्वम् ॥

यथा—

"रुद्धोऽनयाऽऽशयाऽसौ भ्रमरः सेवन्तिकामूले ।
पुनरपि ऋतुराजे स्युः शाखास्वेतासु तानि पुष्पाणि ॥१॥"

अत्र सहृदयश्रोतुरिदं प्रतीयते पुनस्तथात्वाशया विनाशप्राप्तसंकेतस्थलपरिचर्यां कुर्वत्याः कस्याश्चिद्विशेषभूताया अनुशयनानायिकायाः प्रसङ्गे परिहासकर्त्र्या सख्येयं भ्रमरसंबन्धिनी विशेषाप्रस्तुतकथा कथितेति॥

पृष्ठ २४७ पङ्क्ति ५

(स्पष्टं) इत्यस्याग्रे

ज्ञापकहेतावप्यज्ञातज्ञापनं भवति ॥

पृष्ठ २५६ पङ्क्ति ११

(किमर्थम्) इत्यस्याग्रे

उत्प्रेक्षायाः साक्षात्स्वरूपं तु मत्स्पष्टीकृतधुरंधरनामार्थं एव ॥

पृ २७२ पङ्क्ति २२

(संकीर्णम्) इत्यस्याग्रे

पूर्वोदाहरणयोरापतितोऽर्थ उक्तः। इह त्वनुक्त इति भेदः॥

पृष्ठ २७२ पङ्क्ति २७

(अनुभवसिद्धम्) इत्यस्याग्रे

अध्याहारस्तु न्यूनतायाः पूर्तिकरणम्।

पृष्ठ ३११ पङ्क्ति ११

(इत्यर्थः) इत्यस्याग्रे

इदं च लक्षणं बहुषूदाहरणेष्वव्याप्तम्॥

यथा—

महाविशुद्ध्या जगतो विभूषा-
स्वरूपतो मोदविधायकत्वात्।
दारिद्र्यभङ्गात्किल सत्यमेव
सुवर्णसिंहासि सुवर्णतुल्यः॥ १॥

ज्योतिषशास्त्रानुसारेण पूर्वाभाद्रपदनक्षत्रद्वितीयचरणजातबालकः जन्मनाम सकारादि क्रियते। एतत्प्रथानुसारेण च रावराजासुवर्णसिंहस्येदं नामाकारि। तच्चास्माभिः साक्षात्सुवर्णवृत्तान्ते योजितम्। अत्र सुवर्णः सुवर्णवृत्तान्त एव योजित इति नान्यार्थकथनम्॥

यथावा—

"यन्मां चन्द्रमुखीति त्वं भाषसे सत्यमेव तत्।
यतस्त्वन्नेत्रनलिनं वीक्ष्य*वानतिमातनोत्॥ १॥"

चाटुपूर्वं सामोपायेन मानमोचनं कुर्वन्तं शठनायकं प्रति खण्डितोक्तिरियम्। अत्र चन्द्रमुखीतिकथनं साधर्म्यदर्शनार्थम्। तच्च नलिनसंकोचीकरणधर्मे योजितमिति नान्यार्थभ्रमलेशोऽपि॥ चन्द्रालोकपथगामिकुवलयानन्दकारादयोऽप्यनेनैव खण्डिताः॥

पृष्ठ ३१८ पङ्क्ति २२

(करोतीति) इत्यस्याग्रे

एतच्च तल्लक्षणादपि स्पष्टतरम्। आरोप्यमाणस्य प्रकृतोपयोगित्वं

* 'माम्' इति शेषः।

पृष्ठ ३८८ पङ्क्ति ६

(इत्युच्यते) इत्यस्याग्रे

अत्र काव्यरचनायां वर्णनीयवृत्तान्तपरायणलोकोक्तौ रूढिः ॥

पृष्ठ ३८८ पङ्क्ति २२

(रस्ति) इत्यस्याग्रे

उक्तोदाहरणयोर्लोकोक्तेर्वर्णनीयवृत्तान्तपरायणत्वादलंकारत्वम् ॥

पृ ४१६ पङ्क्ति १२

(मम तु मतम्) इत्यारभ्य (इति विषमप्रकरणम्) इत्यन्तम्

अत्रापि क्वचिद्विषादालंकारः, क्वचित्प्रहर्षणालंकारः, यद्वा विचित्रालंकारः। सर्वस्वकारादयः प्राचीना अप्येवं विषमत्रयमाहुः। तत्तु काव्यप्रकाशगतकारिकाकारखण्डनेन खण्डितम्। सर्वस्वकृता "एकं विषमं द्वितीयं विषमं तृतीयं विषमम्" इत्युक्तम्। अस्याशयं स्पष्टीकुर्वन्विमर्शनीकारो वदति "एकमित्याद्यभिदधता ग्रन्थकृता विषमाणां भिन्नत्वमुक्तम्। न प्रकारप्रकारित्वम्। सामान्यलक्षणस्यासंभवात्" इति॥ अपि च "विशेषस्त्रिविधः स्मृतः" इत्युक्तवतः काव्यप्रकाशगतकारिकाकारस्योपरि कटाक्षं कुर्वता रसगङ्गाधरकारेणाप्येवमुक्तम्॥ "विशेषालंकारस्य विभिन्नस्वरूपत्वादनुगतमेकलक्षणं न भवति। अतः प्रकारप्रकारीभावो न भवति। किं तु प्रथमो विशेषः, द्वितीयो विशेषः, तृतीयो विशेष इति कथनीयम्" इति॥ मम मते त्वत्र प्राचामेवं कथनं प्रमादः। कुत इति चेद्धुरंधरस्य नामरूपसामान्यलक्षणे सर्वेषां समावेशात्प्रकारप्रकारीभाव एव युक्ततरः। सर्वेषामपि विषमाणामयथायोग्यसंबन्धसूचकनामार्थरूपसामान्यलक्षणस्यैकस्य विद्यमानत्वात्। विशेषनामार्थसंगतिस्तु तस्य प्रकरणे करिष्यते। अपि च सर्वस्वकार आह "यत्र स्तुतिरभिधीयमानापि प्रमाणान्तराद्बाधितरूपा निन्दायां पर्यवस्यति तत्रासत्यत्वाद्व्याजरूपा स्तुतिरित्यनुगमेन तावदेका व्याजस्तुतिः। यत्रापि निन्दाशब्देन प्रतिपाद्यमाना पूर्ववद्बाधितरूपा स्तुतिः पर्यवसिता भवति सा द्वितीया व्याजस्तुतिः। व्याजेन निन्दामुखेन स्तुतिरिति कृत्वा" इति॥ सर्वस्वकारस्येममभिप्रायं स्पष्टीकुर्वन्विमर्शनीकारो वदति "एका द्वितीया चेत्यभिदधता द्वे एवात्र व्याजस्तुती, न पुनरेकैव द्विविधा व्या-

जस्तुतिरिति सूचितम् । प्रकारप्रकारीभावो हि सामान्यलक्षणासद्भावे न भवति । असंभवत्तत्सामान्यस्य तद्विशेषत्वाभावात् । शब्दनिबन्धनं तु सामान्यमाश्रित्य द्वयोरत्राभिधानम्" इति ॥ मम मतेऽपि सर्वस्वकारस्येदं कथनं समीचीनम् । उक्तरीत्या व्याजस्तुत्याख्यमलंकारद्वयम् । नाममात्रं चैकम् ॥ इति विषमप्रकरणम् ॥ ६१ ॥

पृष्ठ ४२० पङ्क्ति २३

( अत्र त्रि० त्रयस्त्रिंशच्च ) इत्यन्तस्थाने

अत्र त्रिदशशब्दार्थस्त्रयस्त्रिंशदिति तु "त्र्यधिकास्त्रिरावृत्ता दश त्रिदशाः" इत्यधिकावृत्तरूपार्थान्तर्भावेनैकार्थीभावाद्भवति । त्रिदशशब्दो देवेषु रूढः ॥

पृष्ठ ४३२ पङ्क्ति ८

( उक्तोदाहरणेषु विधानम् ) इत्यत्र

"जाल्मो गुणानीहते" इति कथनेनात्र स्थापनमर्थाद्विधानम् । मम तु मतं, धुरंधराशयानुसारेण त्वत्र वस्तूनां परंपरया ग्रथनाभावान्न शृङ्खलालंकारः । अपि तु शृङ्खलाया आभासः । एवमन्यत्रापि बोध्यम् ॥

पृष्ठ ४३२ पंक्ति १३

( अत्र निषेधः ) इत्यत्र

अत्राधाराधेययोरुत्तरोत्तरं शृङ्खलान्यायेन निबन्धनाच्छृङ्खलालंकारः । एवमन्यत्रापि ज्ञेयम् । अत्र नेति कथनादपोहनमर्थान्निषेधः ॥

पृष्ठ ४३५ पंक्ति ११

( रूढिः ) इत्यस्याग्रे

श्लेषो द्विविधः । शाब्द आर्थश्च ॥

पृष्ठ ४५६ पङ्क्ति १०

( लंकारः ) इत्यस्याग्रे

" अत्रोपमानोपमेयभावः संबन्धः ॥

पृष्ठ ४६० पंक्ति १६

( प्रतिपादयिष्यते० पृथगलंकारो न भवेत् ) इत्यन्तस्थले

समाधिस्थले कार्यकारणभावमङ्गीकृत्य प्रारम्भककारण-कार्यसुकरताकारककारणयोर्द्वयोः पर्यवसाने समुच्चयालंकारः । केवलं सुकरताका-

रककारण एव पर्यवसाने तु हेत्वलंकारः स्यात् । न त्वलंकारान्तरम् । कारकज्ञापकहेतुद्वयप्रदर्शनात्सहकारिहेतु–सुकरताकारकहेत्वादेरप्युपलक्षणेन संग्रहो वेदितव्यः ॥

पृष्ठ ४६७ पङ्क्ति २१

( दर्शयन्तः ० व्यदधुः ) इत्यत्र

दर्शयन्तः "उक्तार्थात्तत्समानविशेषणस्यान्यार्थस्य गम्यत्वम्" इत्यस्यालंकारस्य स्वरूपमुक्तवन्तः । तत्प्रमादविलसितम् ॥

पृष्ठ ४७५ पं १८

( प्रमादः ) इत्यस्याग्रे

एतल्लक्षणानुसारेणैकस्य द्विवाचकतायां पर्यवसाने त्वधिकालंकारः स्यात् ॥

पृष्ठ ४७६ पं ४

( सारीणि ) इत्यस्याग्रे

अस्यालंकारस्य "उत्तरोत्तरमुत्कर्षरूपं" स्वरूपं मन्वानः सर्वस्वकार इदमुदारनाम्ना प्राह ॥

"उत्तरोत्तरमुत्कर्षणमुदारः" इति ॥

अयमप्यस्यालंकारस्य स्वरूपं साक्षान्नाजानात् ॥

पृष्ठ ४९२ पंक्ति १६

( ज्ञापकहेतुः ) इत्यस्याग्रे

असंभवसमस्यापूर्तौ प्रायो ज्ञापकहेतुरलंकारो भवति ॥

यथा–

त्वं नो गोत्रगुरुस्तवेन्दुरधिपस्तस्यामृतं त्वत्करे<br>
एणीं व्याधशराहतां प्रणयिनीमेनां पुनर्जीवय ॥<br>
इत्यूर्द्ध्वं गगने निशापतिमृगं कारुण्यमातन्वतः<br>
शृङ्गाग्रादपतन्मृगस्य रुदतो वाष्पाम्बु भूमण्डले ॥ १ ॥

अत्र चतुर्थचरणगतासंभववृत्तान्तशङ्कानिवृत्त्यर्थं प्रथमचरणत्रयगतवृत्तान्तो ज्ञापकहेतुरिति ज्ञापकहेतुरलंकारः ॥

पृष्ठ४६५ पङ्क्ति ११

(अन्ते)

ननु त्वमेवान्यवस्तुनि बलेनान्यवस्त्वारोप उत्प्रेक्षालंकारमङ्गीकरोषि। तच्च बलं हेतुरूपमेवेति कथमुत्प्रेक्षालंकारस्य हेतोः पार्थक्यमिति चेत्सत्यम्। बलं विना "मन्ये शङ्के" प्रभृत्युत्प्रेक्षाव्यञ्जकशब्दैरेवान्यवस्तुन्यन्यवस्त्वारोपे तून्मत्तप्रलाप इव निर्हेतुदूषणम्॥

यथा—

"वैडूर्यरत्नाभरणं नसि यत्ते विराजते।
रसयन्तमहं मन्ये भृङ्गं चम्पककुड्मले॥ १॥"

रसगङ्गाधरकारेण सापन्हवोत्प्रेक्षाया इदमुदाहृतम्—

"जगदन्तरममृतमयैरंशुभिरापूरयन्नयं नितराम्॥
उदयति वदनव्याजात्किमु राजा हरिणशावनयनायाः॥"

अत्र संभावना विद्यते खलु। सा तु संदेहस्य प्रकारः। अत्र मुखे चन्द्रारोपे बलाभावाच्चन्द्रस्यासिद्धत्वम्॥ नन्वमृतस्य चन्द्रगतत्वान्मुखे वास्तवामृताभावः। चन्द्रश्चामृतमयकरैर्विश्वं पूरयतीति बलेन मुखे चन्द्रारोप इति चेच्छृणु। प्रथमं तावत्कविसृष्टौ मुखेऽमृतत्वाङ्गीकार इति भवत्कथने प्रसिद्धविरुद्धदूषणम्। वर्णनीयोत्कर्षहानिश्चेति व्याहतदोषश्च। अपि चोक्तकाव्ये मुखेऽमृतसत्तायाः कविना कण्ठरवेणोक्तत्वादिदं कथनं नोपपद्यते इति बलस्य हेतुरूपत्वेऽप्युत्प्रेक्षाचमत्कारो हेत्वंशे न पर्यवस्यति। अपि तु बलेनान्यवस्तुन्यन्यवस्त्वारोपेंशे इति तस्य चमत्कारस्योद्धरकंधरत्वादलंकारान्तरत्वम्॥

पृष्ठ ५५५ पं ६

(इति) इत्यस्याग्रे

युगपत्फलद्वयोत्पत्तेः समुच्चयादस्य भेदः॥ समुच्चये समुच्चीयमानवस्तूनामेकप्रयत्नकारिताया अभावः॥

पृष्ठ ६१५ पङ्क्ति १०

(वृत्तौ) इत्यतः पूर्वम्

रत्नाकरकारेण मीलितालंकारोत्तरं विवेकालंकार उक्तः। तल्लक्षणं च "धर्मसाम्याद्भेदाप्रतीतिर्मीलितम्" इति॥ अत एव

पृ ६५७ पं ५

(सुवर्ण) इत्यतः पूर्वम्

व्यतिरेक उपमानुपमाचमत्कारस्य, असंगतेः प्रथमप्रकारे विशेषोक्तिविभावनाचमत्कारस्य, परस्परोपमायां च शुद्धोपमाविपरीतोपमाचमत्कारस्य न्यग्भावः ।

पृ ६६४ पं १०

(लक्षणीयः) इत्यस्याग्रे

किं चान्तर्भावाकृतावलंकारनाम्नां योगरूढत्वं विस्तरभयान्न प्रतिपादितम् । तच्च विद्वद्भिः स्वयमूहनीयम् ॥



पृष्ठ ६२ पङ्क्ति ११

(उत्तम) इत्यारभ्य ( प्रकृतिकृताः ) इत्यन्तस्थाने

मानिन्यादयोपि प्रकाराः प्रकृतिकृता एव ॥

पृष्ठ ६२ पङ्क्ति १४

(मूढेति) इत्यारभ्य (शृङ्गाररसालम्बनम्) इत्यन्तस्थाने

नवीनेति । उक्तं चिन्तामणिकोषकारेण "मुग्धो नवे" इति ॥ अत्र यौवने रूढिः ॥ इति परिशिष्टम् ॥



पत्रं परमपवित्रं सिंहोत्तरपदमनोहराख्यस्य ॥
प्राप्तं यत्र चरित्रं मरुनृपतेरस्त्यतीव चोदारम् ॥ १ ॥
पत्रं प्रसङ्गवशतः प्रेषितमेतच्चिराय तेनैव ॥
मुद्रितमन्ते तदिदं चिरकालं स्मृतिगतं भूयात् ॥ २ ॥

॥ ७४ ॥ कविराजाजी श्रीमुरारिदानजी योग्यम् ॥

मारवाड़ प्रान्ते

पत्रं योधपुरं प्रति. स्थानं
सोजतीगोपुरम् ।

योधपुरम्



॥ श्रीरामो जयति ॥

श्रीनाथस्य

मत्प्रणामोऽवधार्यः । स-
कृतेर्हिकैनः स्वीकार्यः ।

स्वस्तिश्रीयोधपुरशुभस्थाने सर्वोपमासंयुक्तकविराजाजी श्रीमुरारिदानजीसमीपे सरदारदुर्गाट्ठक्कुरमनोहरसिंहस्य प्रणतयो वाच्याः । अत्रत्योदन्तस्तु सुदृष्टेः शुभोऽस्ति । भवतां सदा शुभमस्तु । भवन्तोऽस्माकं महागौरवास्पदम् । सदैव स्नेहो रक्ष्यते तथा रक्षणीयः । अपरं च भवतां दलं डाकद्वारा समायातम् । यशवन्तयशोभूषणग्रन्थमुद्रणप्रारम्भस्य सूचनाप्रदानादत्यानन्दो जातः । परमेश्वरप्रसादादयं ग्रन्थः शीघ्रं संमुद्र्य भवच्छ्रमः साफल्यमियात् । सर्वे च लाभभाजो भवेयुः । केवलमेतावाञ्छोको यत्स्वर्गवासिमहाराजश्रीयशवन्तसिंहसमयेऽस्य ग्रन्थस्य मुद्रणं भवितव्यं तच्च न जातमिति । महाराजस्य मनस्यस्य ग्रन्थस्यातीवोत्साह आसीत् । किमतोऽधिकम्, वयमेतद्ग्रन्थश्रवणार्थं योधपुरमाहूतास्तदैकदा मां बारहठकृष्णसिंहं च संबोध्य महाराज एतदाज्ञापयामास "कविराजेनास्माकमेष ग्रन्थ ईदृशो विहितः, यत्कविराजसमं सुवर्णं तोलयित्वा तेनास्य प्रतिमां विधाय सा सदैव पूज्यते" इति ॥ अनेन वचनेन विदितं भवति, महाराजस्य मनस्यस्य ग्रन्थस्य कियानुत्साह इति । परंतु परमेश्वरेण महाराजशरीरं न रक्षितमिति महाञ्छोकः । तथाप्येतद्ग्रन्थप्रभावात्स्वर्गवासिमहाराजनाम भवन्नाम च जगति सहस्रं समाः स्थास्यति । तदधुना त्वरितं मुद्रापयित्वा प्रसिद्धिमानेयोऽयं ग्रन्थः । मद्गृहं स्वगृहं मत्वा कार्यं लेखनीयम् ॥ संवत् १९५२ आषाढ—शुक्लपञ्चमी ॥

अयं ठक्कुरमनोहरसिंहो विद्वान् सकलगुणनिधिर्डोडियाजातीयक्षत्रियो महाराणामेदपाटेश्वरस्य महासामन्तेषु परिगणितः । एतट्ठक्कुरग्रामस्य पूर्वं "लावा" इति नामासीत् । उक्तठक्कुरस्य पूर्वजः सरदार-

सिंहो दुर्गं प्रासादं च रचयामासेत्यपरं सरदारगढेति नाम प्रसिद्धिमापेदे। राजराजेश्वरः स्वदेशिविदेशिविदुषां मण्डलं विरचय्य यशवन्तयशोभूषणग्रन्थमश्रौषीत्। तत्रोक्तठक्कुरोऽपि समाहूतः। अयं ठक्कुरो राजराजेश्वरस्य संबन्धी च। एतत्पूर्वजसरदारसिंहसुता गुलाबकँवरनाम्नी राजराजेश्वरपूर्वजमहाराजश्रीविजयसिंहेन परिणीता। उक्तपत्रे कृष्णसिंहस्याप्युल्लेखः। सोपि ग्रन्थश्रवणार्थं विद्वन्मण्डले समाहूतः। अस्य ग्रामः खेड़ानामकः शाहपुराप्रान्तान्तर्गतः। चारणेष्वयं सोदाबारहठजातीयः शाहपुराराजाधिराजस्य प्रतोलीपात्रम्॥



# ॥ शुद्धिपत्रम् ॥

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| | **राजचिन्हे** | | |
| सप्तशते | सप्तशततमे | २ | ४ |
| द्विसहस्त्रवर्षीयाः | द्विसहस्त्रवार्षिकाः | ३ | १४ |
| दानपत्राणि | दानपत्त्राणि* | ३ | १६ |
| | **यशवन्तयशोभूषणे** | | |
| नगरादष्टक्रोशे | नगरात्क्रोशाष्टके | २ | २४ |
| शासन्वसुमतीं | शासद्वसुमतीं | ३ | १८ |
| रासीदिति ॥ | रासीदिति ॥ दलशब्दो लोकभाषायां सेनावाचकः | ४ | २५ |
| नियुद्ध्य | नियुध्य | ५ | ६ |
| संयुद्ध्य | संयुध्य | ५ | १० |
| युध्वा | युद्ध्वा † | ५ | १५ |
| तद्दुदन्तं च | तद्दुदन्तश्च | ६ | २४ |
| असंख्याः सन्ति मानवाः। | सन्ति लक्षमिता भटाः। | १५ | ९ |
| दत्वा | दत्त्वा | १८ | १५ |
| जीया | जीव्या | १८ | १६ |
| लक्षमेकं | लक्षदानं | १८ | २१ |
| मनुष्याणां | सर्वेषां | १९ | २२ |
| अत एव तेषु केवलरूढनामान्यपि सन्ति। परमेश्वरकृतानि नामानि कविकर्मणा न सन्ति | ० | २२ | १६ |

* एवमग्रेऽपि बोध्यम्। † एवमग्रेऽपि बोध्यम्।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| कविकमर्णा | कविकर्मणा | २२ | १७ |
| यौगिकानि | अर्थवन्ति | २३ | २ |
| गौरीं मनोहरां | रम्यां गौरीं तथा | २५ | १७ |
| तत्र | तत्र प्रायो | २६ | १० |
| निर्मातुर्महती | निर्मातुमर्हती | २६ | ११ |
| यत्रावयवशक्तिविषये | यत्रावयवशक्तिनैर-पेक्ष्येण | २८ | १६ |
| यत्रावयवशक्तिनैरपेक्ष्येण | यत्र त्ववयवश-क्तिविषये | २८ | १९ |
| संकुच्यते | संकोच्यते | २९ | १३ |
| यत्र त्वत्रा | यत्र त्वन्यत्रा | ३१ | ३ |
| किचा | किंचा | ३१ | १६ |
| लंकारस्य | लंकारस्य सर्वसं-ग्राहकं | ३२ | ६ |
| न्यायज्योतिषव्याकरणादि | न्यायव्याकरण-ज्योतिषादि | ३२ | ११ |
| लाह्ली | लाँह्ली | ३४ | ५ |
| नटय | नाटय | ३६ | ३ |
| इत्युपमा | इति ॥ किंचोपमा | ३७ | १२ |
| भवितुर्महति | भवितुमर्हति | ३९ | २५ |
| यशस्क | जयरथ | ४१ | ५ |
| त्र्यशीत्यधिकसप्तशततमे (१७८३) | त्र्यशीत्यधिकषोडशशततमे (१६८३) | ४१ | १८ |
| जागरयन्वन्दी करोति | जागरयन्तो वन्दिनः कुर्वन्ति | ४३ | १५ |
| विरच्य | विरचय्य | ४५ | १३ |
| साक्षी | साक्षि | ४६ | २ |
| सहोदरानन्दस्य | सहोदररसरूपा– | | |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| | नन्दस्य | ५१ | १५ |
| दुर्मते | सन्मते ! | ५१ | २७ |
| कुशलवन | कुशादान | ५५ | २ |
| इदमञ्जन | तथा बुद्धिरूपचक्षुष इदमञ्जन | ५६ | ५ |
| शब्दार्थश्च | शब्दार्थश्च | ५६ | १६ |
| रेहई | रेहइ | ५७ | १ |
| किंतु ध्वनिन्यायेनार्थस्य | अपि त्वञ्जनरूपव्यञ्जनावृत्त्या प्रतीयते । किंच ध्वनिन्यायेनाप्यस्यार्थस्य | ५७ | ४ |
| सहकारी | सहकारिकारणम् | ५७ | १० |
| ह्याक्षेपश्चेति | ह्याक्षेपा चेति | ५८ | ६ |
| रेहई | रेहइ | ६३ | १३ |
| सुरतप्रस्तावे | यद्वा सखीवचनं | ६३ | १७ |
| सर्व, | सर्व– | ६४ | ८ |
| वैरिपुरः– | वैरिपुरः, | ६४ | ६ |
| इत्येवं रीत्योभयशक्तिमूलत्वम् ॥ | ० | ६४ | १५ |
| द्रोणाचार्यस्य रात्रियुद्धे पाण्डवसेनासुभटानां | युद्धे सेनासुभटानां | ७३ | ८३ |
| वास्तवमानस्यासंभवात् । | मानमात्रं न विवक्षितम् । | ७५ | २० |
| विंकाशे | विकाशे | ७५ | २३ |
| उद्वेगजनक | उद्वेगाजनक | ७६ | १३ |
| बोधः क्रमेण सम्यग्भवति ॥ | बोधे क्रमः सम्यग्बुध्यते ॥ | ७८ | १० |
| संचारी | संचारी । | ८१ | २५ |
| भूपालाः | भूपाल ! | ८५ | ११ |
| सिहः | सिंहः | ८५ | २० |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| पुष्पशय्याधि | पुष्पपर्यङ्क | ८६ | १८ |
| स रणाङ्गणेऽस्वपीत्तदा | छिन्नोरौ दुर्योधने रणाङ्गणे पतिते | ६० | १८ |
| चूर्णेनेन | चूर्णेनेन मृदुतया | ६० | २० |
| लेख्यं | लेखं | ६१ | ३ |
| निजपत्यर्थं | निजपतिविषये | ६३ | १ |
| लाष | लाषः | ६३ | २६ |
| कायिकस्य | नायकस्य | ६५ | २५ |
| हेतु को | हेतुको | ६६ | २४ |
| यशवन्त महीपते | यशवन्तमहीपते! | ६८ | २ |
| चात्रं | चौत्रं* | १०२ | २१ |
| नन्दरूपत्व | नन्दरूपत्वे | १०५ | ११ |
| इति चेच्छृणु | इति । | १०६ | १६ |
| भयनामत्वेपि | भयनाम्नि सत्यपि | १०८ | ४ |
| धात्र्याः | धात्र्या | १०६ | ३ |
| सिध्यङ्क | सिद्ध्यङ्क | ११० | २२ |
| व्यङ्ग्यव्यवहारः । | व्यङ्ग्यत्वव्यवहारः। | ११४ | १० |
| व्यङ्ग्यम् । | व्यङ्ग्यम् । अङ्गाङ्गिभावेऽङ्गिनः प्राधान्यमङ्गस्य च गौणत्वम् । धुरंधरेण च रसानां गौणदशायां रसवदाद्यलंकारा उक्ताः । ते च गुणीभूतव्यङ्ग्यत्वेन स्वीकृताः। व्यङ्ग्यस्य चालंकार्यत्वान्नालंकारत्वम्। अतोऽपि धुरंधरमते गुणीभूतव्यङ्ग्यस्याव्यङ्ग्यत्वं स्पष्टमेव । | ११४ | १५ |
| गणः | गुणः | ११५ | २ |

* एवमग्रेऽपि बोध्यम् ।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| पुष्ठान्ते | पमाद्यलंकाराः स्वीकृताः । अलंकारास्त्रिविधाः । शब्दालंकारा अर्थालंकारा उभयालंकाराश्चेति । अलंकारशब्दव्युत्पत्तिस्तु "अलंकरोति" इति ॥ अलंशब्दः शोभार्थकः । शारीरकगुणानां लावण्यादीनां मानसिकगुणानामुदारतादीनां हारादीनां च सर्वेषां मनुष्यस्य शोभाकरत्वेऽप्यलंकारनाम्नो रूढिस्तु हारादिष्वेव । तद्वच्छब्दार्थव्यङ्ग्यगुणानुप्रासोपमादीनां | ११६ | २४ |
| दलंकारः- | दलंकारः, | ११६ | ६ |
| वाक्य | काव्य | ११६ | १३ |
| सुवर्णादीनामलंकारवत् | सुवर्णमयाद्यलंकारवत् | १२० | ४ |
| अथ वै | अथवै | १२१ | २३ |
| नायकनायिका | नायिकानायक* | १२३ | ७ |
| चेलाञ्चेन | चेलान्तेन | १२४ | २१ |
| अनुप्रासोऽलंकृतिः स्याच्छ्रेष्ठ | अनुप्रासस्तु शब्दस्य श्रेष्ठ | १२७ | १५ |
| यथा | यथावा | १२८ | २ |
| छत्रं | छत्रं† | १२८ | ४ |
| मधु | मधुप | १३२ | २५ |
| समर्था ! | समर्था । | १३५ | १५ |
| नृत्यन्ती | नृत्यन्ती | १३७ | १६ |
| रायए | रेहइ | १३९ | १३ |

* एवमग्रेऽपि बोध्यम् । † एवमग्रेऽपि बोध्यम् ।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| बोधकरणम् । | बोधनम् | १४० | २४ |
| किञ्चित्सारूप्यमादाय | किञ्चिदादाय सारूप्यं | १४१ | २२ |
| उपमेयोपमानयोः | उपमानोपमेययोः* | १५० | २७ |
| कुतः | ० | १५१ | ४ |
| गुणस्त्वौदार्यशौर्यादिः । | गुणस्तु शौर्यौदार्यादिः । | १५१ | १५ |
| साधरण | साधारण | १५२ | २३ |
| वेप | कम्प | १५३ | १२ |
| शब्दः | शब्द– | १५३ | १४ |
| च्छाय– | च्छायः | १५३ | २१ |
| तवेति | तव रम्यमिति | १५५ | ११ |
| विद्रुम | प्रवाल | १६५ | २७ |
| वश | वशत्व | १६७ | १३ |
| त्व उप | त्वमुप | १६८ | २६ |
| अन्यदीयगुणस्याहुरसंबन्धमतद्गुणम् ॥ प्राचीनाः कवयः श्रीमन्यशवन्त नरेश्वर ॥१॥ | असंबन्धेऽन्यदीयस्य गुणस्यातद्गुणो भवेत् ॥ धुरंधरमते श्रीमद्यशवन्तनरेश्वर ! ॥ १ ॥ | १७० | १२ |
| चकास्ते | चकास्ति | १७० | १८ |
| यथावा | ० | १७० | १९ |
| दुःखभाव | दुःस्वभाव | १७१ | ७ |
| शङ्कास्पदो | शङ्कास्पदं | १७१ | २३ |
| कुवलय | कुवलये | १७७ | ४ |
| काव्य | काव्ये | १७७ | ५ |
| रकारस्य | रेफस्य | १७७ | १३ |
| ऽन्यद्वस्तु स्थाप्यते | तत्त्वेनारोप्यते | १७८ | ४ |

* एवमग्रेऽपि बोध्यम् ।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| सर्वत्रैके | सर्वत्रैक | १७८ | २३ |
| कर्योत्पत्तौ | कार्योत्पत्तौ | १८० | ६ |
| ध्वंसयोदर | ध्वंसस्योदर | १८० | १६ |
| तूक्त | तूक्ता | १८१ | १ |
| प्राचां दिग्दर्शनेनैतत् | धुरंधरस्य दिग्द-र्शात् | १८२ | ६ |
| विश्रान्तो न हि तख्तसिंह वि-तरन्हेमाम्बराणि | न श्रान्तः खलु तख्तसिंह ! वितर-न्हेमाम्बराणि | १८२ | २१ |
| जगाद्विशाले | महाविशाले | १८३ | १६ |
| न तस्यास्तत्रा | नु तस्य तत्रा | १८३ | १८–१६ |
| बुध्वा | बुद्ध्वा * | १६० | ८ |
| ष्यस्मिञ्छाहित्य | ष्यस्मिन्साहित्य | १६१ | २२ |
| करणनैव | करणेनैव | १६३ | ७ |
| अपन्हवे | अपनयने | १६४ | २२ |
| घाम | घर्म | १६५ | १५ |
| गोपायसि | गोपयसि | १६६ | १८ |
| गोपायति | गोपयति | १६६ | २० |
| रहस्यप्रकटने | रहस्ये प्रकटिते | २०१ | ५ |
| प्राचां दिग्दर्शनेनैतत् | धुरंधरस्य दिग्द-र्शात् | २०३ | ४ |
| स्तस्य संश्रयाः। | स्तत्समाश्रिताः। | २०३ | ७ |
| अ | नञ् | २०४ | ५ |
| प्रासा | प्रासा अप्रस्तुत | २०५ | १२ |
| श्चातुर्मासे | श्चतुर्मासे | २०७ | १५ |
| स्तुतशंसा | स्तुतप्रशंसा | २०६ | ८ |
| अप्रस्तु | अप्रस्तुत | २०६ | १५ |
| व्यङ्ग्य | व्यङ्ग्य | २१२ | ८ |

* एवमग्रेऽपि बोध्यम् ।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| मिलिन्ति | मिलन्ति | २१२ | ८ |
| थथा | यथा | २१२ | १७ |
| अङ्का | अङ्का | २१२ | २७ |
| च्चितं | च्चित्तं | २१४ | २१ |
| राक्षेप | राक्षेपा | २१६ | ११ |
| अजसेवने | गजासेवने | २१७ | १६ |
| राज्ञिं | राज्ञि | २२० | १३ |
| अखिलं वर्णितुं | सर्वं वर्णयितुं | २२० | २२ |
| जपवटायते | जपवटीयते | २२३ | ८ |
| किंचि | काचि | २२४ | १६ |
| "बाधकेः" | "बाधके" | २२७ | १७ |
| कज्जारं भ | कज्जारंभ | २३१ | ८ |
| एहि कस्यापि | ए एहि किमपि कस्या अपि | २३१ | २६ |
| मात्रम् | मात्रत्वम् | २३५ | २५ |
| मतीय वि | मतीयवि | २३६ | ५ |
| निकन्दनः | कदन | २३८ | १८ |
| लिंङ्गम् । | लिङ्गम् । | २४२ | ६ |
| इंद | इदं | २४२ | २१ |
| ॥ | ॥ २ ॥ | २४३ | २५ |
| धनं | घनं | २४४ | १६ |
| निमज्य | निमज्ज्य | २४८ | ५ |
| करणार्थं | निर्माणार्थं | २४६ | १३ |
| कंचिदा | किंचिदा | २४६ | १४ |
| प्राप्तिः | प्राप्तिलिप्सा | २५० | ७ |
| मषी | मसी | २५० | २१ |
| नान्त्यत | नात्यन्त | २५० | २६ |
| पवनो | पवनत्वं | २५१ | २ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| वेक | एक | २५२ | २६ |
| संपूर्णं | साक्षात् | २५३ | १३ |
| स्थिता | स्थिता | २५३ | १६ |
| उत्प्रेक्ष्य | उत्प्रेक्ष्य | २५४ | १ |
| निसंदिग्धं | निःसंदिग्धं | २५६ | ११ |
| त्वनेकेषां | भार्गवबलभ-द्वयोरपि | २५८ | २५ |
| कुट्टिमाग्र | कुट्टिमाग्र | २६१ | ८ |
| कथने | ग्रहणे | २६६ | १५ |
| ऽ | ध्व | २७१ | १ |
| विशषणं | विशेषणं | २७१ | ६ |
| काव्यार्थापत्तिराख्याताऽलंकृतिः कविपुङ्गवैः । | काव्यार्थापत्त्यलंकारो धुरंधरमते भवेत् ॥" | २७१ | १४ |
| सिह | सिंह | २७२ | २१ |
| न चाखादीन् | न चाखादि | २७२ | २७ |
| कव्या | काव्या | २७२ | २८ |
| प्राहुः सर्वेऽपि विदुषां वराः।" | भूप! धुरंधरमते भवेत्॥" | २७३ | ४ |
| षड्तुषु | षट्सु ऋतुषु | २७७ | १२ |
| "पङ्क्तश्च पङ्क्तिश्च" | करनयनाधरवदनैः—" | २७७ | २१ |
| पतन | उत्क्षेपण | २७७ | २४ |
| उभेऽ | उभे अ | २७८ | २ |
| "सङ्गात्संजायते" | "भवति हि सङ्गात्॥" | २८० | २ |
| "सङ्गात्" | "भवति हि सङ्गात्" | २८० | १२ |
| न्यत्राव्याप्ति | न्यत्रातिव्याप्ति | २८१ | ३ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| तु | वै | २८१ | ७ |
| तारा | ताराः | २८१ | १८ |
| निद्रया नयने मम | निद्रालीढे विलोचने। | २८१ | १८ |
| लंकारान्तर | लंकारान्तरत्व | २८५ | १७ |
| प्रकाशवत्संकोचवद्ध | संकोचविकासशालिव | २८५ | १६ |
| उपमाया– | उपमायाः | २८६ | ७ |
| तुल्ययोगिः | तुल्ययोगि– | २८६ | २६ |
| अत्यथा | अ त्यथा | २८८ | २२ |
| बालिकानां स्तनाः | बालिकानां च स्तनाः | २८८ | २७ |
| प्रकाशयन् | व्याकोचयन् | २९० | २२ |
| स अनेक | सोऽनेक | २९२ | १ |
| कृछ्रात् | कृच्छ्रात् | २९२ | १३ |
| पूर्वार्धोत्तरार्धौ | पूर्वार्धोत्तरार्धे | २९२ | २२ |
| कारयति | करोति | २९३ | ६ |
| यशवन्तपरो | यशवन्तात्परो | २९४ | ८ |
| यशवन्तपरो | यशवन्तात्परो | २९४ | १३ |
| दलेषु | बलेषु | २९५ | १३ |
| शूरः | शूर | २९६ | १२ |
| मर्त्यकलेवरस्य | मानुषवैभवस्य | २९८ | ६ |
| नरशरीरस्य | वैभवस्य | २९८ | १० |
| स च शक्यो भवत्वशक्यो वा, | तच्च शक्यं भवत्वशक्यं वा, | ३०१ | ५ |
| घनसारेण | मलयजेन | ३०६ | २६ |
| प्राहुर्नि | प्राह नि | ३०८ | १२ |
| चामरादयः | चामरादि | ३१२ | २२ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| आह्लाददान | आह्लादन | ३१८ | १२ |
| प्रकारमुक्त्वे | प्रकारं मत्वे | ३२६ | १६ |
| इन्द | इन्द्र | ३३० | २२ |
| त्वत्र | ऽप्यत्र | ३३२ | ७ |
| रमणीयं भूत्वा | रमणीयस्य रमणीयत्वापादक-त्वात्। | ३३३ | २२ |
| रमणीयतया | रमणीयस्य रमणीयत्वापादक-त्वात्। | ३३३ | २५ |
| रमणीयमिति | रमणीयस्य रमणीयत्वापादक-त्वमिति | ३३४ | २ |
| सिद्धे | सिद्धे व्यङ्ग्य | ३३४ | ३ |
| माच्छादयित्वा | माच्छाद्य | ३३७ | २६ |
| याचीत् | याजि | ३३८ | १८ |
| सिति | शिति | ३३८ | २३ |
| दयश्चाते | दयश्च। ते | ३४३ | १६ |
| प्यप | प्युप | ३४३ | २१ |
| पकरणीभावः | पकरणिभावः | ३४५ | ११ |
| प्रतिबिम्बः | प्रतिबिम्बं | ३४६ | २ |
| स्तषां | स्तेषां | ३४६ | २३ |
| पत्तस्प | पत्तस्य | ३५० | ३ |
| चेत ! | चेतः ! | ३५८ | १० |
| दष्टा- | दष्टा | ३५८ | २१ |
| कुतः इ | कुत इ | ३६२ | ५ |
| मिथ्यार्णने | मिथ्यार्णनात्। | ३६३ | ४ |
| व्याजम्। | व्याजः। | ३६६ | ५ |
| सिंहो जेता युवा संस्तु तपोबलेन | सिंहः स्वतेजसा जेष्यति यौव-नेऽयम्॥ | ३६६ | १७-१८ |

| अशुद्धम् | शुद्धम् | पृष्टम् | पङ्क्तिः |
|---|---|---|---|
| च्छलेन पदेऽस्य | च्छलेनाङ्घ्री<br>ह्यस्य | ३६६ | १६-२० |
| ईदश | ईदृश | ३६८ | २० |
| भवति। | भवति। वस्तुतस्तु मुद्रायामस्य लक्ष-<br>णस्यासंभव एव। | ३६६ | २ |
| पर्वसानं | पर्यवसानं | ३७० | ८ |
| शब्दार्थं कुवन् | शब्दार्थं कुर्वन् | ३७४ | ५-६ |
| विषयाच्छादनस्य | आरोपस्य विषयाच्छादन-<br>स्य च | ३७७ | २६ |
| अधिक्य | आधिक्य | ३८२ | ११ |
| तत्राधिकस्ये | तत्राधिकरूपकस्ये | ३८२ | १२ |
| एवं विवक्षायां तु व्यतिरेको भवेत्। ० | | ३८३ | ५ |
| स्वरश्लेषप्रभेदेन द्विविधेयं<br>प्रजायते। | स्वरश्लेषादिभेदेन विविधेयं<br>प्रजायते। | ३८६ | १५ |
| प्यस्ति, | प्यस्ति? | ३८६ | २० |
| विद्यते, | विद्यते? | ३८६ | २० |
| यथारुचि यथालाभं वा | रुचिर्लाभो वा | ३९२ | ११ |
| एकपक्षग्रहस्तत्र विकल्पालंकृ-<br>तिर्भवेत्। | यथारुच्येकपक्षस्य ग्रहस्तत्र<br>विकल्पकः॥ | ३९२ | १५ |
| नाना | द्वे | ३९३ | १८ |
| हरणे- | हरणे | ३९५ | २१ |
| शंभुना | शांभव | ३९७ | २२ |
| भुञ्जन् | भुक्त्वा | ३९७ | २३ |
| प्रवृत्या | प्रवृत्त्या | ४०० | ८ |
| "शुक्रं बिन्दुप्रमाणं"- | "एतस्मात्किमिवेन्द्र-<br>जालमपरं"- | ४०१ | ८ |
| वरोहणं | धिरोहणं | ४०३ | ४ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| विनोक्तिर्भूषणं तत्र कथ्यते कविकोविदैः ॥ | विनोक्तिनामालंकारो धुरंधरमते भवेत् ॥ | ४०५ | २ |
| वापोऽग्नी | वबर्ग्नी | ४०८ | ७ |
| विज्ञेया कविकोविदैः ॥ | धुरंधरमते भवेत् ॥ | ४१२ | २० |
| लक्षणा | लक्षण | ४१७ | २४ |
| इतिशास्त्रम् । | ० | ४१८ | ४ |
| विषादालंकृतिः प्रोक्ता विवादेन विना बुधैः ॥ | विषादनामालंकारो धुरंधरमते भवेत् ॥ | ४१८ | २२ |
| हरिष्यति | हसिष्यति | ४१९ | २ |
| व्याघातः। | व्याघात इत्येव। | ४२८ | ६ |
| तवेभबन्धनन्यायाल्लोकैर्ज्ञाता नराधिप ॥ | गजेन्द्रबन्धनन्यायाज्ज्ञातवांस्तां धुरंधरः॥ | ४३१ | १० |
| दोलिनौ | दोलिनी | ४३४ | १९ |
| रास्यत्वस्य | रत्वं | ४४० | २६ |
| स्यत्वस्य | स्यत्वं | ४४० | २७ |
| शब्दश्लेषार्थश्लेषावुभौ यत्र | शब्दश्लेषः, अर्थश्लेषः, यत्र चोभौ | ४४२ | २५ |
| संभवोऽयोग्यता | संभवो योग्यता | ४४८ | २२ |
| सहस्र- | सहस्रं | ४४९ | ३ |
| भूमावर्थ | विद्याभूमावर्थ | ४४९ | १९ |
| संस्कारं कवयः प्राहुरलंकारं नराधिप! ॥ | संस्कारस्तु महाराज! संस्कारालंकृतिर्भवेत् ॥ | ४५१ | ५ |
| गहे | गेहे | ४५१ | २२ |
| त्वत्सङ्ग | त्वत्खड्ग | ४५२ | ८ |
| एवेति। | एव ” इति। | ४५५ | १९ |
| शून्यत्व | शून्य | ४५५ | २० |
| छन्न | च्छन्न | ४५६ | १७ |
| श्लोकी | श्लोकि | ४६० | १९ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| तत्राहुः कविवल्लभाः। | तत्र प्राह धुरंधरः॥ | ४६० | २२ |
| तस्य | ० | ४६१ | ८ |
| नोन्नत्ति | नोन्नति | ४६१ | १३ |
| न्निदु | न्निन्दु | ४६२ | ६ |
| शिवेनेन्दोः | शिवस्येन्दोः | ४६२ | ८ |
| विद्वद्भिर्गु | विदुषां गु | ४६२ | ६ |
| वहार प्रति | वहारप्रति | ४६२ | २१ |
| दऽत्रै | दत्रै | ४६७ | १४ |
| विरहिणी प्राण | विरहिणीप्राण | ४७२ | १२ |
| सहेव | सहैव | ४७६ | १० |
| गमयति | नमयति | ४७७ | ५ |
| सूक्ष्मतावर्णनं सूक्ष्मालंकारः कथ्यते बुधैः॥ | सूक्ष्मतावर्णनं यत्र सूक्ष्मः स्यात्तत्र भूषणम्॥ | ४८० | १३ |
| एते चेमान्युदाहरणान्यदुः। | अनयोरिमे उदाहरणे। | ४६० | ७ |
| न चैतेषामुदाहरणेषु | न चैतयोरुदाहरणयोः | ४६० | १६ |
| प्रोच्यते कविकोविदैः॥ | धुरंधरमते भवेत्॥ | ४६१ | ४ |
| संपन्नकरणे | संपन्नत्वकरणे | ४६१ | ६ |
| मल्ल | हस्तिमल्ल | ४६१ | १६ |
| अ सू | असू | ४६२ | १ |
| स्वाभावोक्ति | स्वभावोक्ति | ४६६ | १७ |
| संयोगादिर्भवेत्तत्र | वक्रादिकं भवेत्तत्र | ४६७ | १४ |
| मनोवृत्तिं तदितरद्वस्तु वा कविकोविदाः। वर्णयन्ति | दृश्यादृश्याखिलं वस्तु वर्णयन्ति कवीश्वराः। तत्र राजन्! | ४६७ | १७ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
| --- | --- | --- | --- |
| स्वकीयाप्रमुखाश्चोत्तमाद्याश्च | स्वकीयाप्रमुखा मानिनी-ख्याताः | ४६८ | ४ |
| हासादीनामपि तथा विभावा ज्ञायतां स्वयम् । | हासादीनां विभावास्तु बोध्या बुधवरैः स्वयम्। | ४६८ | ६ |
| काव्यस्य च चमत्कारो | काव्यशोभाकरो धर्मो | ४६८ | १३ |
| संपुटं | संपुटः | ५०० | ७ |
| कन्तो | कान्तो | ५०० | ८ |
| शाम्यमानोऽ | शाम्यन्न | ५०५ | १५ |
| शाम्यमाना | शाम्यद | ५०५ | १६ |
| मानस्य | तोऽत्र भवे | ५१० | ८ |
| इति | इतिवत् | ५१३ | १८ |
| निकन्दनः ॥ | विमर्दनः ॥ | ५१४ | १३ |
| इमे लक्षणोदाहरणे दर्शयति | इमानि लक्षणोदाहरणानि दर्शयति | ५१५ | ३ |
| तदकदेशेन तदेकदशान्तरस्य | तदेकदेशेन तदेकदेशान्तरस्य | ५१५ | ५ |
| पुरुषस्य वामार्द्धापेक्षया दक्षिणार्द्धः प्रशस्तो भवति। स्त्रियाश्च दक्षिणार्द्धापेक्षया वामार्द्धः प्रशस्तो भवतीति सामुद्रिकशास्त्रे उक्तम् । तस्या एव नायिकाया दक्षिणार्द्धाङ्गस्य वामार्द्धाङ्गेन | तस्या एव नायिकाया वामार्द्धस्य दक्षिणार्द्धेन | ५१५ | २५ |
| ईत | इति | ५१५ | २८ |
| ऽके | केऽ | ५१६ | २२ |
| कृछ्रेण | कृच्छ्रेण | ५२१ | १२ |
| षाञ्छित | वाञ्छित | ५२२ | २ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| अत स्तत्र | अतस्तत्र | ५२४ | २५ |
| भजयुः | भजेयुः | ५२५ | १२ |
| इमे लक्षणोदाहरणे | इमानि लक्षणोदाह-रणानि | ५२५ | २३ |
| एतान्युदाहरणान्यप्रस्तुतप्रशंसासंकीर्णानि । | उक्तोदाहरणे अप्रस्तुतप्रशंसा-संकीर्णे । | ५२७ | १४ |
| प्रवृत्तेन | प्रवृत्तस्य | ५३० | २ |
| तथापि | तथाहि | ५३० | ४ |
| स्येमे लक्षणोदाहरणे | स्येमानि लक्षणोदाह-रणानि | ५३० | ११ |
| भाव | भावः | ५३० | १८ |
| खङ्गे | खग्गे | ५३१ | ८ |
| इमे लक्षणोदाहरणे आ | इमानि लक्षणोदाह-रणान्या | ५३५ | ६ |
| मध्यभागादिना | मध्यभागादिकृतः | ५३७ | २२ |
| श्रोणीबिम्बादिभिस्त्यागात्तनुतादेरङ्गी | श्रोणीबिम्बादिकृतत्यागा-त्तदनङ्गी | ५३८ | ८ |
| इमे लक्षणोदाहरणे | इमानि लक्षणो-दाहरणानि | ५५० | ६ |
| उत्तत्तोत्तर | उत्तरोत्तर | ५५० | ११ |
| तोऽक्षणे | तेक्षण | ५५५ | १२ |
| इमे लक्षणोदाहरणे | इमानि लक्षणोदा-हरणानि | ५५६ | १ |
| चण्डघात | चण्डघाते | ५६२ | ८ |
| “ठ्यति | ठ्याति | ५६२ | १७ |
| ऋजुमप्युदितं | ऋज्वपि व्या-हृतं | ५६३ | १३ |
| सुयशसो | सुमनसो | ५७० | ४ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| क्लीबाः | ० | ५७१ | २० |
| कोषकारेण | वाग्भटेन | ५७२ | २२ |
| संदिह्यमानेन | संदिहानेन | ५७३ | ७ |
| वैधर्म्यस्य व्यतिरेकः | वैधर्म्यव्यतिरेकः | ५७६ | ३ |
| मुञ्चति | मुञ्चन्ति | ५८० | २ |
| द्वितीयप्रकारं | द्वितीयप्रकारं प्रथम-प्रकारं | ५८० | २० |
| जालाङ्करः | जालाङ्कुरः | ५८१ | २८ |
| परित्यागो | परित्यागः। स च | ५९१ | ७ |
| सालिवन | सालिवना | ५९२ | ७ |
| वन्ती अपूसविदाइं ॥ | वन्तीअपूसविंदाइं ॥ | ५९२ | ७ |
| उज्जीवन्त्याः | उज्जीवयन्त्याः | ५९२ | २६ |
| इमे लक्षणोदाहरणे | इमानि लक्षणोदाह-रणानि | ५९७ | २० |
| वरम्भे | वारम्भे | ५९८ | ९ |
| "सारालंकारे | सारालंकारे | ५९८ | १७ |
| पङ्के न | पङ्केन | ६०२ | १८ |
| श्चोत्थाय युध्यन्ति | युध्यन्त उत्थाय | ६०५ | २ |
| वचः | गिरः | ६०५ | ४ |
| विषयो | विषयं | ६१० | ७ |
| यशः पयोधि | यशःपयोधि | ६१२ | ८ |
| समान्य | सामान्य | ६१८ | २३ |
| खलुयोगिनाम् ॥ | खलु योगिनाम् ॥ | ६२३ | ८ |
| प्रक्रम्यमानस्य | प्रक्रम्यमाणस्य | ६३० | १३ |
| पर्यायते | पर्याय्यते | ६३४ | ६ |
| सपत्तिः | संपत्तिः | ६३६ | २३ |
| इमां च कारिकामुपन्यस्य | ० | ६३८ | १० |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| वृत्तौ | इमां च कारिकामुपन्यस्य वृत्तौ | ६३८ | १४ |
| राजल्ली | राजँल्ली | ६४३ | ११ |
| राजल्ली | राजँल्ली | ६४४ | १६ |
| विरहिणीनां मरण | विरहिणीमरण | ६४८ | १४ |
| गर्जन्ते | गर्जन्ति | ६४८ | २४ |
| र्भवः | र्भावः | ६५३ | १८ |
| कपोले | कपोले बध्वा | ६५६ | २३ |
| मीक्ष्य भवेयुः | दर्शनतः स्युः | ६६६ | ११ |
| वाणी सुपर्व | वाणीसुपर्व | ६६६ | १६ |
| ॥ ११ ॥ | ॥ ११ ॥ चतुर्भिः कलापकम् ॥ | ६६६ | २३ |



| | | | |
|---|---|---|---|
| गौरवात् ॥ | गौरवात् ॥ तात्पर्यबाधमूललक्षणोपलक्षणमित्युच्यते । मम तु मतं, धुरंधरेणोपोपसर्ग उपादानलक्षणायामिव वाच्यार्थस्य सहभावप्रयोजनेन न प्रयुक्तः । अत्र विषये लक्षणेति कथनादियमुपादानलक्षणाऽस्तीति स्वयं बुधबोध्यत्वेनोपपुराण इव सादृश्यार्थे प्रयुक्तः । लक्षणा तु वाच्यार्थबाधे भवति । अत्र तस्याभावेऽपि तत्सदृशस्य तात्पर्यस्य बाधादुक्तलक्षणासदृशीयमपि लक्षणा । | २७ | ४ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|

## ॥ परिशिष्टे ॥

| | | | |
|---|---|---|---|
| राष्ट | राष्ट्र | १ | २० |
| ऽयुतानामष्टौ | ऽष्टायुतानि | २ | १६ |
| आत्मनेपदत्वा | आत्मनेपदित्वा | ४ | २१ |
| शताब्दौ | शताब्द्यां | ७ | ४ |
| नायं | नैनं | ७ | १८ |
| अलंकारवत्त्व | अलंकारवतीत्व | ६ | १० |
| " | " | " | १२ |
| " | " | " | १४ |
| लिखित ! | लिखित- | ११ | ३ |
| सदृशा | सदृशी | १४ | १४ |
| भयं ! | भयं | १४ | २६ |
| स्थयिता | स्थायिता | १७ | ७ |
| अनुशयना | अनुशयाना | १६ | २२ |
| वैडूर्य | वैडूर्य | २४ | ८ |
| तल्लक्षणं | मीलितलक्षणं | २४ | २८ |

## ॥ पत्रे ॥

| | | | |
|---|---|---|---|
| दयं ग्रन्थः शीघ्रं संमुद्रय | दस्य ग्रन्थस्य शीघ्रं संमु-द्रणेन | १ | ६ |
| मुद्रणं | मुद्रणेन | १ | ६ |
| पूज्यते | पूज्येत | १ | १३ |